॥ श्रीः ॥

चौखम्भा प्राच्यविद्या ग्रन्थमाला

१७



म० म० श्रीकौण्डभट्टकृत-

# वैयाकरणभूषणसारः

## ( दर्पणहिन्दीभाष्योपेतः )

अनुवादको हिन्दीभाष्यकारश्च

विद्यावाचस्पति-

**श्रीब्रह्मदत्तद्विवेदी**

भू० पू० आचार्यः श्रीरामनिरञ्जनदास मुरारका

संस्कृत महाविद्यालयस्य




**चौखम्भा ओरियन्टालिया**

प्राच्यविद्या तथा दुर्लभ ग्रन्थों के प्रकाशक एवं वितरक

वाराणसी दिल्ली

CHAUKHAMBHA PRACHYAVIDYA SERIES

NO. 17

# VAIYĀKARAṆABHŪṢAṆASĀRA

BY

M. M. ŚRĪ KAUṆḌA BHAṬṬA



( *with 'Darpaṇa' Hindi Commentary* )

By

Vidyavachaspati

ŚRĪ BRAHMA DATTA DVIVEDĪ

AUKHAMBHA ORIENTALIA

**House of Oriental and Antiquarian Books**

.RANASI DELHI



॥ श्रीः ॥

महामहोपाध्याय सर्वतन्त्रस्वतन्त्राणां

**स्व० श्री पं० श्रीहरिहरकृपालु द्विवेदिनां**

पूज्यचरण पितृचरणानाम्

अधिकरकमलं

सादरं

# समर्पयति

ख्यातो मे जनको महामहवता सूपाधिनालङ्कृतः।
जिह्वाग्रे सरसा सदा विलसिता शास्त्रार्णवोद्भासिनी ॥
वाणी यस्य विपक्षपक्षदलने दक्षा जयश्रीः पुरः।
सोऽयं सार्थकृपालुयुग् हरिहरः कृत्याऽनया प्रीयताम् ॥

**ब्रह्मदत्तद्विवेदी**

**सं० संस्कृतविश्वविद्यालय भू० पू० कुलपतीनां विद्वन्मूर्धन्यानां पं० श्रीबदरीनाथ शुक्ल महोदयानाम्**

# अभिमतम्

वैयाकरणशिरोमणेः श्री कौण्डभट्टस्यासाधारणप्रतिभातः प्राप्तजन्मा वैयाकरणभूषणसारो व्याकरणशास्त्रस्य मूर्धन्यग्रन्थेष्वन्यतमः। सम्यग्गृहीतार्थ एव वैयाकरणान् भृशं भूषयतीति निर्विवादम्। विद्वद्वर श्रीहरिबल्लभविरचितो दर्पण एतदीयं प्रतिबिम्बं तथा बिभर्ति यथास्य बिम्बं विस्पष्टं विद्योतमानमात्मनो विद्वज्जनान्तःकरण प्रीणनपाटवं स्फुटं व्यनक्ति। एवम्भूतस्यास्य महतो ग्रन्थस्य भारतस्य राष्ट्रभाषापदं प्रसाधयन्त्या हिन्दीभाषया भाष्यात्मकं व्याख्यानं विद्वन्निवहेन परमावश्यकममन्यत। सन्ति यद्यपि कतिपये ग्रन्थस्यास्य हिन्दीव्याख्याग्रन्थाः पूर्वमपि प्रकाशिताः, तथापि ते तथा न सन्ति यथा हिन्दीभाषयाऽन्यव्याख्याग्रन्थस्यापेक्षा क्षीयेत। अतो व्याकरणसिद्धान्तावबोधे बद्धश्रद्धैः विद्वद्भिः ग्रन्थस्यास्य विशिष्टतरं हिन्दीभाष्यात्मकं ग्रन्थान्तरं पर्याकुलतया प्रतीक्ष्यमाणमासीत्। सेयं प्रतीक्षा समग्रं व्याकरणशास्त्रं करतलामलकमिव कृतवद्भिरात्मनः शील-सौजन्य-पाण्डित्यादि-गुणैस्तद्गुणवतां विविधशास्त्रपारावार पारदर्शिनां महामहोपाध्याय स्वर्गीय श्रीहरिहरकृपालुद्विवेदिमहोदयानां तनुजन्मतां प्रमाणयद्भिः दर्शनशास्त्रस्यानेकशाखास्वपि समुपार्जितवैदुष्यैः पण्डितप्रवर श्रीब्रह्मदत्तद्विवेदिमहोदयैः ग्रन्थस्यास्य हिन्दीभाष्यप्रणयनेन निस्संशयं साफल्यं गमिता।

मया श्रीद्विवेदिप्रणीतं हिन्दीभाष्यं यत्र तत्रावलोकयतेदमन्वभावि यदत्र संस्कृतप्राचीनपण्डितानुरूपया हिन्दीभाषया मूलग्रन्थस्य गभीरा भागाः सम्यक् स्फुटीकृताः, यथास्थानं यथाप्रयोजनं च दर्पणे निर्दिष्टा विषया अपि स्पष्टमुपपादिताः। धातोः लकारस्य, सुपः,

नाम्नः, समासस्य, शक्तेः, नञः, निपातस्य, त्वादिभावप्रत्ययस्य, देवताप्रत्ययस्य, अभेदैकत्वसङ्ख्यायाः, सङ्ख्या-विवक्षायाः क्त्वादि-प्रत्ययस्य स्फोटस्य च सम्बन्धे दर्शनान्तराणां विरुद्धानि मतानि सुनिपुणमुपपाद्य व्याकरणसिद्धान्ताः युक्तिप्रमाणैः यथोचितं प्रतिष्ठापिताः ।

ईदृशस्य विशिष्टस्य हिन्दीभाषीयभाष्यग्रन्थस्य प्रणयनार्थं श्रीद्विवेदिमहोदयाः समेषां विदुषामनन्तान् साधुवादानर्हन्तीति मे सुनिश्चिता मतिः ।

२८-६-१९८५
वाराणसी

बदरीनाथशुक्लस्य

सम्पूर्णानन्द संस्कृत विश्वविद्यालयस्य
कुलपतीनां विविधोपाधिविभूषितानां
श्री रामकरणशर्मणां सम्मतिः

विपश्चिदपश्चिमानां पण्डितप्रकाण्डानां विलक्षणधिषणानामप्रतिमप्रतिभानां श्री ब्रह्मदत्तद्विवेदिमहोदयानामेषा व्याख्या नूनं कल्पिष्यते वैयाकरणभूषणसार रहस्योद्घाटनाय। आशास्महे विद्वांसो जिज्ञासवश्च नूनमभिनन्दिष्यन्ति विलक्षणां कृतिमिमामिति निवेदयते।

विदुषां वशंवदः
रामकरण शर्मा

**विश्रुतवैदुष्यप्रकर्षाणां**

**पण्डितमूर्धन्य श्री रामप्रसाद त्रिपाठिनां**

**व्या० वि० अध्यक्षचराणां**

**सं० सं० वि० विद्यालये, वाराणस्याम्**

# अभिमतम्

व्याकरणैकप्राणैः श्रीमद्भट्टोजिदीक्षितैः वैयाकरणसिद्धान्तप्रकाशकमतिविस्तृतं स्वनिर्मितं शब्दकौस्तुभं ग्रन्थरत्नमाधारीकृत्य शाब्दबोधप्रकारप्रकाशिका इतरमतोक्तापसिद्धान्तप्रदूषिका च सिद्धान्तावलीव कारिकावली विरचिता।

तामेवोपजीव्य कालमनुसरता विद्वद्वरेण श्रीकौण्डभट्टेन पटीयस्या दार्शनिकप्रणाल्या टीकारूपेण वैयाकरणभूषणसाराख्यो ग्रन्थो निरमायि।

हरिवल्लभादिविद्वन्मूर्धन्यविरचिताभिर्दर्पण–काशिकाप्रभाप्रभृतिटीकाभिः तत्र स्थितानां धात्वर्थवाद–नामार्थवाद–समासशक्तिवाद–स्फोटवादादिदुरूहसिद्धान्तानां तात्पर्यस्य सारल्येन प्रकाशनं न समजनि इतीमां महतीं न्यूनतामालोच्य व्याकरण-वेदान्त-न्यायादिसकलशास्त्रपारदृश्वना वादीन्द्रवारणविदारणकेसरिणा श्रद्धेय श्री ब्रह्मदत्तद्विवेदिना राष्ट्रभाषात्मकमातृभाषया निबद्धव्याख्यानेनोक्तं भूषणसाराभिधं ग्रन्थरत्नं समलङ्कृतम्।

अद्यत्वे—"ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयतामि"त्याचार्यवचनानुमोदितं मेधाह्रासमनुभूय हिन्दीभाष्यं यदिदं विद्वत्समक्षमुपस्थापितम्, तदत्यन्तमौचितीभावहति। मन्येऽनेन समीचीनप्रयासेन विदुषां विविदिषूणां च महानुपकारो भविष्यतीति स्वीयं हार्दं प्रकाशयति।

श्रावणेऽमायां
बुधे—२०४२ वैक्रमे

**रामप्रसाद त्रिपाठी**

# भूमिका

कस्यापि उन्मुक्तता न लोककल्याणाय कल्पते इति नियतिनिर्देशानुसारेण व्याकरणेन नियन्त्रिता संस्कृतवाग् अष्टादश विद्या अधिशय्य विभ्राजते । व्याकरणेन प्रकृतिप्रत्ययविभागद्वारा असाधुशब्देभ्यो विविच्य साधुशब्दा अनुशिष्यन्ते = अन्वाख्यायन्ते । अत एव महाभाष्यकृता "अथ शब्दानुशासनमि"ति वदता तस्य शब्दानुशासनं मुख्यं प्रयोजनं प्रत्यपादि । प्रयोजनञ्चैतद् व्याकरणमात्रस्याभिहितम् । ततश्च पाणिनिव्याकरणात् पूर्वं व्याकरणान्तरमासीन्नवेति प्रसङ्गायातं विचारपदवीमारोहति ।

इतिवृत्तान्वेषिणः केचन एतस्मात् व्याकरणात् प्राग् व्याकरणस्यानुपलब्धिरेव व्याकरणान्तरासत्त्वस्य मुख्यसाधिका । यच्च यत्र तत्र सूत्रे आचार्याणां नामनिर्देशः श्रूयते । यथा "लोपः शाकल्यस्य" "लङः शाकटायनस्यैव" "वासुप्यापिशलेः" अवङ् स्फोटायनस्य इत्यादि तत्तु तेषां व्याकरणे वैदुष्यं प्रख्यापयति ननु तै रचितं व्याकरणान्तरं बोधयतीत्यवगन्तव्यम् । क्वचित्तेषामाचार्यविशेषाणां नामनिर्देशः आदरातिशयद्योतनार्थः क्वचिच्च मतभेदप्रदर्शनार्थः कृतः । विश्रुतकीर्तीनां तेषामन्नार्थे सम्मतिं ध्वनयन् आचार्यः पाणिनिः स्वव्याकरणस्य प्रामाणिकत्वं व्याजहार । नातो नामग्रहणमात्रेण तेषां व्याकरणान्तरकर्तृत्वं सिध्यति । शब्दसाधुत्वज्ञानविशेषेणापि तदुपपादनस्य सम्भवात् । अत एव—

इन्द्रश्चन्द्रः काशकृत्स्नापिशलिः शाकटायनः ।
पणिन्यमरजैनेन्द्राः जयन्त्यष्टौ हि शाब्दिकाः ॥

इत्यभियुक्तोक्त्या शाब्दिकत्वमेतेषां निर्दिष्टं ननु व्याकरणकर्तृत्वमिति ।

"एवं हि श्रूयते बृहस्पतिरिन्द्राय दिव्यवर्षसहस्रं प्रतिपदोक्तानां शब्दानां पारायणं प्रोवाच नान्तं जगामे"ति महाभाष्यकारवचनेनापीदमनुमातुं शक्यते यन्नियमबद्धं सूत्रसूचितं साधुशब्दानुशासनं नासीत् । अन्यथा सूत्राणां सद्भावात् प्रतिपदपाठस्य कोऽवकाशः स्यात् । एवमादियुक्तिबलेन पाणिनीयमेव व्याकरणं लौकिकवैदिकोभयसाधारणं सर्वप्रथमं महर्षिः पाणिनिः अररचदिति विशङ्कं वदन्ति ।

अन्ये तु अन्यथा आमनन्ति । इतः पूर्वं व्याकरणान्तरं संस्कृतभाषानियामकमासीत् । अत एव प्राचीनैर्व्यवहृताभिः संज्ञाभिः भगवान् पाणिनिर्व्यवाहरत् । यथा "प्रथमाद्वितीयातृतीये"त्यादि संज्ञया निर्देशस्तत्र तत्रोपलभ्यते । नहि पाणिनीये व्याकरणे "सु" "औ" "जस्" इति प्रथमा "अम्" "ओट्" "शस्" इति द्वितीया "टा" "भ्याम्" "भिस् इति तृतीयेत्येतादृशबोधकं सूत्रं दृश्यते । किन्तु प्राचीनैः कृताभिरेव ताभिः संज्ञाभिरिहापि व्यवहार इति स्पष्टं व्याकरणविदाम् ।

एवमेव "औङ आपः" "आङि चाप" इत्यत्रापि प्राचीनाचार्यकृतसङ्केतेन औङ् आङादि पदेन व्यवहरन् आचार्यः पूर्ववर्ति व्याकरणान्तरमवगमयति ।

तथैव "तदशिष्यं संज्ञाप्रमाणत्वात्" (१।१।५३) "प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वात्" १।२।५६ । इत्यादिभिः सूत्रैः पूर्वाचार्यैः कृतानां सूत्राणां प्रत्याख्यानं सङ्गच्छते । अन्यथा सूत्राणामेवाभावे प्रत्याख्यानासङ्गतेर्दुष्परिहरत्वात् ।

किञ्च व्याकरणान्तराभावे "षडङ्गो वेदोऽध्येयोज्ञेयश्चे"त्यादिना प्रतिपाद्यमाना वेदस्य षडङ्गताऽपि इतः पूर्वं लोपं गच्छेत् । नहि वेदः कदाचिदपि पञ्चाङ्ग इष्टः ।

अस्य व्याकरणस्य प्राचीनव्याकरणापेक्षया लघुनोपायेन साधुशब्दानामन्वाख्यायकतया लौकिकवैदिकोभयविधप्रयोगाणां ज्ञापकतया च लोके प्रचारबाहुल्यात् कालान्तरे व्याकरणान्तराणि पूर्वतनानि अस्तं गतानीति न तदनुपलब्धिः तदसत्त्वं साधयितुमीष्टे ।

वस्तुतो व्याकरणान्तरस्य सद्भावः तत्र तत्र सूत्रे आचार्याणां नाम निर्देशेन प्रमाणीभवति । यत्रापि मतभेदेन रूपद्वयं भवति तत्र तस्य आचार्यस्य मतं क्व उपलब्धम् । तदर्थं व्याकरणं शरणीकरणीयम् । वाल्मीकीये रामायणेऽपि किष्किन्धाकाण्डे हनुमत्संवादे बहुव्याहरताऽनेन (सर्ग ३ श्लो. २९) इत्यादि प्रसङ्गे व्याकरणस्य नाम श्रूयते । नहि महर्षिवाल्मीकिसमये पाणिनीयव्याकरणस्योद्भव आसीत् । तदेतत्सर्वमाकलय्य द्वितीयस्य पक्षस्य युक्तत्वमवधारयामि ।

कियद्भिः सूत्रैः कियद्भिरध्यायैः कीदृशं व्याकरणमिति विवेकस्तु दुश्शकः प्रकृतानुपयोगी चेत्यस्तु यथा तथा ।

इदानीमुपलभ्यमानेषु व्याकरणेषु लौकिवैदिकोभयनियमप्रवणतया लाघवानुरोधिसाधुत्वज्ञानप्रक्रियया च महद्भिः विद्वभिः समादृतत्वेन पाणिनीयं व्याकरणं सर्वाणि व्याकरणान्तराणि अतिशय्य वर्तते इति नातिशयितं वचः ।

अत एव पराशरोपपुराणे उक्तम्—

पाणिनीयं महाशास्त्रं पदसाधुत्वलक्षणम् ।
सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यं न किञ्चन ।।

अथेदं चिन्त्यते व्याकरणेन कस्य संस्कारः यो हि व्याकरणप्रयोजनतया अभिमतः । वर्णाः किं संस्क्रियन्ते ? प्रत्याहारघटकानां वर्णानां सर्वेषां संस्कृतत्वेन सूत्राणामनारम्भ एव स्यात् । वर्णानामुत्पन्नध्वंसित्वेन अनित्यत्वात् तत्समूहरूपपदस्य पदसमूहात्मकस्य वाक्यस्य च निर्वक्तुमशक्यतया तत्रापि संस्कारासम्भवात् । वर्णाभिव्यक्ते स्फोटे संस्कारस्तु शशशृङ्गायितः । तस्य नित्यत्वेनाविकारित्वेन च तदसम्भवात् । ताल्वादि स्थानानि चेत् संस्क्रियन्ते तदा शब्दानुशासनं नाम शास्त्रस्य व्यर्थमेव कृतम् । एवमेव शिष्याणां मनसां वाऽनुशासने शब्दानुशासनकीर्तनं व्यर्थमेव ।

संस्कारोऽपि अदृष्टार्थो भवितुं नार्हति। दृष्टफलकानां विधीनां अदृष्टार्थकत्वाभावात्। "व्रीहीन् प्रोक्षति" "व्रीहीन् अवहन्ति" इत्यनेन प्रोक्षणावहननाभ्यां यथा अदृष्टमुत्पद्यते न तथा भोजनप्रयोजनकानां व्रीहीणां प्रोक्षणावहननाभ्याम् इति कुतः। दृष्टफलकत्वमेतेषां पूर्वोक्तक्रियया तण्डुलनिष्पत्तौ सत्यां क्षुन्निवृत्तिः स्यात्। यागे व्रीहीणां प्रोक्षणादिना न दृष्टं फलमतोऽदृष्टं फलं कल्प्यते। तथा च व्याकरणेन प्रकृतिप्रत्ययविभागद्वारा शक्तिग्राहकतया दृष्टार्थकत्वेन नाऽदृऽटार्थकल्पना-स्यात्। "शक्तिग्रहं व्याकरणोपमानकोशाप्तवाक्याद् व्यवहारतश्च इत्यादिना व्याकरणस्य शक्तिग्राहकत्वं सुप्रसिद्धम्।

यद्यपि शक्तिग्राहकेषु मुख्यो व्यवहारः परिगण्यते। अन्यानपेक्षतैव शक्तिग्रहे तस्य मुख्यता। तथापि समयेऽस्मिन् संस्कृतभाषया व्यवहारस्य अत्यल्पतया तेन बालानां शक्तिग्रहो दुर्घटः। कोशोऽपि केवलं नाम निर्दिशति। तथा च अद्यत्वे व्याकरणमेव प्राधान्येन शक्तिग्राहकमिति नानेन दृष्टप्रयोजनकेन अदृष्टं फलमुत्पत्तुमर्हति। अत्रायं समाधिः—

ध्वनिरूषिते स्फोटे ककारादिवर्णानामसत्त्वेऽपि आरोपेण प्रतीतिः तथैव स्फोटे संस्कार आरोप्यते प्रकृतिप्रत्ययान्वाख्यानद्वारा शब्दज्ञानं संस्कारः। तथाचोक्तं—सर्वत्रैव हि विज्ञानं, संस्कारत्वेन गम्यते।

यत्तूक्तं दृष्टार्थानां नादृष्टार्थकत्वम्। तन्न। अतिथिक्षुन्निवर्तकनया दृष्टप्रयोजनकेनाऽपि ओदनादिना भोजयितुरदृष्टोत्पत्तिदर्शनात्। विप्राय गां ददतो यजमानस्य दृष्टफलकतया कल्प्यमानमपि दानं पुण्याय प्रकल्पते इति सर्वमतसिद्धम्। यत्र शास्त्रसिद्धमदृष्टफलं तत्र सत्यपि दृष्टफले भवत्येवादृष्टम्। भोजनार्थं यत्र व्रीहयोऽवहन्यन्ते तत्रादृष्टफलोत्पत्तिबोधकं वाक्यं न श्रूयते। इह तु एकःशब्दः-शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग्भवतीन्यादिना फलश्रवणात् तदुत्पत्तौ न किञ्चित् बाधकम्। तथाच मीमांसासूत्रम्—एकस्य तूभयत्वेन संयोगपृथक्त्वम् (४।३।१)

शास्त्रत्वमप्यस्य—इष्टस्य साधुशब्दस्य शासनात् = प्रकृतिप्रत्ययव्युत्पादनद्वारा तदनुगमोपायाः शिष्यन्त इति शास्त्रत्वं हितशासनात् सिद्धम्।

तत्र साधुत्वबोधनस्य द्वयी विधा। एका च पदविभजनद्वारा लोपागमादेशादिभिः साधुत्वान्वाख्यानपरा। अपरा च अर्थानुसन्धानसाहित्येन तद्बोधनपरा। काशिका, प्रक्रियाकौमुदी, सिद्धान्तकौमुदी प्रभृतयो ग्रन्थाः प्राधान्येन पदानि वाक्यानि च संस्कुर्वन्ति। अर्थात् तत्तत् सूत्रेण संस्कारद्वारा कीदृग् रूपं साधु सम्पन्नमिति बोधयन्ति। (अर्थे तात्पर्यं नेति नाभिप्रायः) तादृशात् शब्दात् जायमानो बोधः कीदृशः कथं कस्य च प्राधान्यं दर्शनान्तरविवेचकानां किमिष्टमित्यादि निर्णये प्रथमा विधा न समर्था सर्वथा।

ततः प्रकृतिप्रत्यययोः कोऽर्थः कस्यार्थस्य प्राधान्यं कीदृशश्च शाब्दबोध इत्यादि विवेचयितुं द्वितीया विधा प्रावर्तत ।

भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम् ।
साधुत्वं, तदभावेऽपि बोधो नेह निवार्यते ।।

इत्यनेन अर्थसापेक्षं साधुत्वमिति स्पष्टं निर्दिष्टम् । अतः प्रक्रियाज्ञानमिव अर्थप्रत्ययमप्यावश्यकं मत्वा अंशमिमं पूरयितुं वैयाकरणसिद्धान्तज्ञानाय प्रकाण्डपण्डितेन भट्टोजिदीक्षितेन भाष्यमूला कारिका निरमायि । तासामेव कारिकाणां वैशद्येन तात्पर्यं बोधयितुं शब्दकौस्तुभाद् उद्ध्रित्य ता एवाश्रित्य च वैयाकरणभूषणसारनामकं ग्रन्थं व्यरचयत् श्रीकौण्डभट्टः । अनेन पूर्वं बृहद्वैयाकरणभूषणं विरचय्य ततः साराशं गृहीत्वा भूषणसारः निर्मित इति प्रतीयते । अत एव नाम्नि सारपदोपादानं तत्र तत्र च "स्पष्टञ्चेदं भूषणे" इति कथनञ्च सङ्गते भवतः ।

ग्रन्थेऽस्मिन् चतुर्दश प्रकरणानि अन्वर्थनामानि सन्ति । तथा हि धात्वर्थनिर्णयः १ लकारार्थनिर्णयः २ सुबर्थनिर्णयः ३ नामार्थनिर्णयः ४ समासशक्तिनिर्णयः ५ शक्तिनिर्णयः ६ नञर्थनिर्णयः ७ निपातार्थनिर्णयः ८ भावप्रत्ययार्थनिर्णयः ९ देवताप्रत्ययार्थनिर्णयः १० अभेदैकत्वसंख्यानिर्णयः ११ संख्याविवक्षानिर्णयः १२ क्त्वाद्यर्थनिर्णयः १३ स्फोटनिर्णयश्च १४ ।

तत्र सर्वं नाम धातुजमाहेत्यनुसारेण प्राधान्यात् प्रथमं धातूनामर्थं निरूपयितुं प्रारभत ग्रन्थकारः ।

फलव्यापारयोः धातूनां शक्तिरिति वैयाकरणाः । फलापेक्षया व्यापारस्य शाब्दबोधे कर्तरि कर्मणि च प्रत्यये उभयत्र प्राधान्यमिति प्राचीनवैयाकरणमतम् । नव्यमते तु "सुपः आत्मनः क्यच्" इति भाष्यपर्यालोचनया कर्तृप्रत्ययस्थले व्यापारस्य कर्मप्रत्ययस्थले फलस्य प्राधान्यम् ।

फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले च शक्तिरितिस्वीकारस्य कर्तृप्रत्ययकर्मप्रत्ययस्थलयोः विशेषणविशेष्यभावव्यत्यासस्य शाब्दबोधेऽभ्युपगमेन आवश्यकतया गौरवापत्तेः । अतः फले व्यापारे च एकवृन्तफलद्वयन्यायेन खण्डशः शक्ति मत्वा आपतितं गौरवं परिहरन्ति । यन्मते सर्वत्र व्यापारविशेष्यक एव बोधस्तन्मते फलावच्छिन्ने व्यापारे शक्तिकल्पनायामपि दोषाभावात् । तथा च खण्डशः शक्तिस्वीकारे कर्तृप्रत्ययस्थलकर्मप्रत्ययस्थलभेदेन विशेष्यविशेषणभावव्यत्यासमूलकः शाब्दबोधभेदः सौकर्येण उपपद्यते । फलावच्छिन्ने व्यापारे व्यापारावच्छिन्ने फले वा शक्तिकल्पनायां तु उभयविधो बोधो न स्यात् । तदुपपत्तये उभयविधशक्तिस्वीकारे गौरवम् । तस्मात् खण्डशः शक्तिरुचिता ।

मीमांसकमण्डनमिश्रस्य मते फलं धात्वर्थः व्यापारस्तु आख्यातस्य ( तिङः ) अर्थः । व्यापारमुख्यविशेष्यको बोधः ।

अन्येषां मीमांसकानां मते भावना आख्यातार्थः। शाब्दीभावना लिङर्थः व्यापारो धात्वर्थ एव ।प्रभाकरमतेऽपि भावना आख्यातार्थः

भावना मुख्यविशेष्यको बोधो भवति एषां मते ।

नैयायिकास्तु फलव्यापारयोर्धात्वर्थत्वं मन्यन्ते । कृतिश्चाख्यातस्यार्थः । शाब्द-बोध एतन्मते प्रथमान्तार्थमुख्यविशेष्यको भवति । कर्तृप्रत्ययस्थले कर्ता प्रथमान्तार्थः कर्मप्रत्ययस्थले कर्म इति ।

कालस्य व्यापारे अन्वयः । संख्यायाश्च कर्तृप्रत्ययस्थले कर्तरि कर्मप्रत्ययस्थले कर्मणि बोध्यः ।

प्राचीनवैयाकरणमते कर्तृप्रत्ययस्थले कर्मप्रत्ययस्थले च एकविधः शाब्दबोधः । सचेत्थम्—चैत्रस्तण्डुलं पचतीत्यतः—तण्डुलाभिन्नाश्रयनिष्ठविक्लित्त्यनुकूलो वर्तमानकालिक एकत्वविशिष्ट चैत्राभिन्नाश्रयवृत्तिर्व्यापारः । चैत्रेण तण्डुलः पच्यते इत्यतोऽपि एवमेव ।

नव्यमते— कर्तृप्रत्ययस्थले पूर्वोक्त एव । कर्मप्रत्ययस्थले च एकत्वविशिष्ट चैत्रा-भिन्नाश्रयवृत्तिवर्तमानकालिकव्यापारजन्या तण्डुलाश्रयाभिन्ननिष्ठा विक्लित्तिरिति फलविशेष्यको बोधः ।

नैयायिकमते कृतिराख्यातार्थः तत्र धात्वर्थोव्यापारो विशेषणम् । कृतिः संख्या च प्रथमान्तपदलभ्येऽर्थेऽन्वेति । तथा च—तण्डुलनिरूपिताधेयतावद्विक्लित्यनुकूल-व्यापारानुकूलकृतिमान् एकत्वविशिष्टश्चैत्रः । कर्मप्रत्यये च—एकत्वविशिष्टकृति-मच्चैत्रनिष्ठव्यापारजन्यविक्लित्त्याश्रयस्तण्डुलः । उभयत्र प्रथमान्तार्थमुख्यविशे-ष्यको बोधः ।

तदेतन्मतद्वयमपि वैयाकरणेभ्यो न रोचते । तथा हि—फलमात्रस्य धात्वर्थत्वे ग्रामः संयोगवानितिवत् "ग्रामो गमनवानि"त्यपि स्यात् 'भावार्थकल्युटा धात्वर्थ-मात्राभिधायितया संयोगरूप फलस्य ग्रामे सत्त्वात् तथा प्रयोगः प्रसज्येत ।

व्यापारस्य धात्वर्थत्वे प्रकृत्यर्थतया प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थः प्रधानम् इति न्यायेन व्यापारमुख्यविशेष्यको बोधो न स्यात् । अतो व्यापारो न धात्वर्थः इति तेषामभिप्रायः । तन्न शोभनम् ।

"प्रधानप्रत्ययार्थवचनमशिष्यमि"ति सूत्रयता सूत्रकारेणैव समाहितत्वात् । प्रत्ययार्थतया कस्यचित् प्राधान्यमिति नियमो नादरणीयः व्युत्पत्त्यनुसारित्वात् प्राधान्याप्राधान्यबोधस्य । "भावप्रधानमाख्यातमि"ति निरुक्ताच्च क्रियाप्राधान्य-मवसीयते ।

पचतीत्यस्य "पाकं करोति" इति क्रियासामान्यार्थकेन करोतिना विवरणस्य दर्शनाद् व्यापारस्याख्यातवाचित्वमिति नाशङ्कनीयम् । करोतिशब्देन पच्धात्वर्थ-स्यैव विवरणं न तु तिप्प्रत्ययार्थस्य । अन्यथा "पक्ववान्" इत्यस्य "पाकं कृतवान्" इति विवरणं न स्यात् । आख्यातस्य तत्रानुपलम्भात् ।

एवं फलमात्रस्य धात्वर्थत्वे क्रियावाचित्वाभावेन धातुसंज्ञा न स्यात्। "भूवादयः" इत्यनेन क्रियावाचिन एव धातुसंज्ञाविधानात्। न च तत्र सूत्रे क्रियापदेन फलमेव गृह्यते इति फलरूपक्रियावाचकत्वेन धातुसंज्ञा सुलभेति वाच्यम्। तथा सति धात्वर्थत्वं क्रियात्वं क्रियावाचित्वे सति भ्वादिगणपठितत्वं धातुत्वमिति क्रियात्वज्ञाने धातुत्वज्ञानस्य धातुत्वज्ञाने क्रियात्वज्ञानस्यापेक्षिततया अन्योन्याश्रयतापत्तेः। अस्मन्मते तु साध्यत्वेन प्रतीयमानत्वस्य तल्लक्षणस्य वक्तुं शक्यतया दोषाभावात्।

नैयायिकास्तु फलव्यापारौ धात्वर्थौ इत्यभ्युपगम्यापि आश्रयमाख्यातार्थं न मन्यन्ते। तस्य प्रथमान्तपदेन लाभात् अनन्यलभ्यस्यैवार्थस्य शब्दार्थत्वाभ्युपगमेन कृतिरेवाख्यातार्थः। "लः कर्मणी"ति सूत्रे कर्तृकर्मपदे भावप्रधाननिर्देशात् कर्तृत्वकर्मत्वपरे। यथा "द्व्येकयोर्द्विवचनैकवचने" इति सूत्रे द्व्येकयोरिति पदं द्वित्वैकत्वपरम्। अत एव द्वित्वसंख्यायां द्विवचनम् एकत्वसंख्यायामेकवचनं सिध्यति न तु द्वित्ववति एकत्ववति वा। तथेहापि कर्तृत्वं कृतिः कृत्याश्रयस्य कर्तृत्वेन तत्र प्रकारीभूतायाः कृतेः भावप्रत्ययेन वाच्यतया तल्लाभात्।

न च कर्तरिकृदिति सूत्रे कर्तृपदस्य धर्मिपरतैवेष्यते। अन्यथा पाचको देवदत्तः इत्यादौ अभेदान्वयबोधो न स्यात्। नहि कर्तृत्वदेवदत्तयोरभेदः कर्त्रा सह देवदत्तस्य तु तथा। तथा च अर्थाधिकारानुरोधेन कर्तृपदमिहानुवर्तमानं तादृशार्थकमेव स्यात् इति नाशङ्कनीयम्। शब्दाधिकाराश्रयणेन तादृशव्याख्याने बाधकाभावात्। शब्दाधिकारे पूर्वार्थापेक्षया भिन्नार्थकत्वमपि अनुवृत्तपदस्येष्यते।

वस्तुतः नेदं मतं युक्तम्। सत्येव प्रमाणे शब्दाधिकाराश्रयणम्। अत एव "ष्णान्ता षडि"ति सूत्रे नचान्यार्थं प्रकृतमनुवर्तनादन्यद् भवति। न हि गोधा सर्पन्ती सर्पणादहिर्भवतीत्युक्तं भाष्ये। यादृशार्थकं पदं पूर्वत्र तादृशार्थकमेवोत्तरत्रापि चेत् स्वीक्रियते उपस्थितेः योग्यतादिज्ञानस्य च वैचित्र्यं न कल्पनीयं भवतीति लाघवम्। अन्यादृशार्थकल्पनायान्तु अन्यादृशोपस्थित्यादिकल्पनाप्रयुक्तं गौरवमापद्येत। अतः अर्थाधिकारः प्रायेण स्वीक्रियते। तथाच "लः कर्मणी"ति सूत्रे कर्तृपदस्य कर्तृत्वपरतया व्याख्यानं नोचितम्।

किञ्च "पचन्तं चैत्रं पश्ये"त्यादौ लादेशाविशेषात् तिवादीनामिव शतृशानजादीनामपि कृतिवाचकत्वापत्तेः। शत्रन्तादेः देवदत्तादिना सममभेदान्वयस्यैव बोधादिष्टापत्तेः कर्तुमशक्यत्वात्।

एवमेव कृतिवाचकत्वे अभिधानामभिधानव्यवस्थापि उच्छिद्येत। देवदत्तः पचतीत्यादौ तिङा कृतेरुक्तत्वेऽपि कर्तुरनुक्तत्वात् तृतीयापत्तेः। न च "कर्तृकरणयोस्तृतीये"त्यत्रापि कर्तृपदस्य कर्तृत्वपरतां बुध्वा अनुक्तायां कृतौ तृतीयेत्यर्थाश्रयणेन आख्यातेन प्राधान्येन कृत्प्रत्ययस्थले च अप्राधान्येन कृतेरुक्ततया तृतीयापत्तेर्वारयितुं शक्यत्वात् इति युक्तम्।

"रथो गच्छति" "तण्डुलः पच्यते स्वयमेवे"त्यादौ रथादावचेतने कृतेर्बाधात् लक्षणया आश्रयो बोध्यते। तथा च कृतेरनुक्तत्वात् तृतीयाविभक्तेर्दुर्वारत्वात्।

तथैव कालस्य समानप्रत्ययोपात्तत्वात् क्वचित् कृतौ क्वचिच्च धात्वर्थव्यापारेऽन्वयो वाच्यः। एवञ्च आख्यातार्थकालनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति आख्यातजन्यकृत्युपस्थितिर्धातुजन्यव्यापारोपस्थितिश्चकारणम्। शाब्दबोधे परस्परव्यभिचारवारणाय अव्यवहितोत्तरत्वनिवेशे सुतरां गौरवम्।

प्रथमान्तार्थमुख्यविशेष्यको बोधोऽपि नैयायिकानां न युक्तिसहः। मृगस्य उत्कटधावनक्रियां दिदर्शयिषुः कश्चिदाह—पश्य मृगो धावति। अत्र वाक्ये त्वन्मते कृतिमन्मृगस्य प्रधानवाक्यार्थत्वेन प्रतीयमानस्य दर्शनकर्मतयाऽन्वये शतृप्रत्ययापत्तेः तदनुरोधिन्या द्वितीयायाश्चापत्तेः। न च तमिति पदमध्याहृत्य स दोषः परिहरणीयः। वाक्यभेदापत्त्या भाष्यसिद्धैकवाक्यताभङ्गापत्तेः। प्रतिपिपादयिषिताया उत्कटधावनक्रियायाः बोधयितुमशक्यत्वात् च

यद्यपि प्रथमान्तार्थमुख्यविशेष्यकबोधाभ्युपगमे—

"सुरथो नाम राजाऽभूत् समस्ते क्षितिमण्डले। तस्य पालयतः सम्यक्"—

इत्यत्र तच्छब्देन सुरथस्य राज्ञः शाब्दबोधे प्राधान्यात् आञ्जस्येन परामर्श उपपद्यते सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात्। क्रियाप्राधान्ये तु नैतद् युज्येत। तथापि अस्मिन् पक्षे—

हिमांशुमाशु ग्रसते तन्म्रदिम्नः स्फुटं फलम्।

इत्यत्र तच्छब्देन ग्रसनक्रियायाः अप्राधान्यात् परामर्शो न स्यात् इति समानमेव।

वस्तुतस्तु शाब्दबोधीया मुख्यविशेष्यता न गृह्यते किन्तु शक्त्यादिग्रहेषु मुख्यविशेष्यत्वेनाभिमतः। अत एव शब्दानुशासनम्, केषां शब्दानामित्याद्यपि सङ्गच्छते।

क्रियाप्राधान्यादेव "पचति भवति" अत्र पच्यादयः क्रियाः भवति क्रियायाः कर्त्र्यो भवन्तीति क्रियान्वयोऽभ्युपेतो भगवता भाष्यकृता।

अत एव च—

लिम्पतीव तमोऽङ्गानि वर्षतीवाञ्जनं नभः।
असत्पुरुषसेवेव दृष्टिर्निष्फलतां गता॥

इत्यादौ लेपनादितया व्यापनादि सम्भाव्य उत्प्रेक्षितम् सुसङ्गतं भवति। तस्मात् व्यापारमुख्यविशेष्यको बोध एव युक्तः।

धात्वर्थनिरूपणानन्तरं धातूत्तरविहितप्रत्ययानामर्थस्य निरूपणं प्रसङ्गप्राप्तमतो लकारार्थं निरूपयितुमुपक्रमते। लट् लिट् लुट् लृट् लेट् लोट् इत्येते षड् लकाराः टितः, लङ् लिङ् लुङ् लृङ् एते चत्वारो ङितः।

तत्र "वर्तमाने लडि"ति सूत्रात् लटो लकारस्य वर्तमानकाले प्रयोगः । वर्तमानत्वञ्च प्रारब्धापरिसमाप्तत्वरूपम् । क्रमजन्मनां समूहः कल्पितः क्रियापदव्यपदेश्यः । तत्र आद्यावयवस्य प्रागभावः तदुत्पत्त्या नष्टः अन्त्यस्तु अवयवः समाप्त्यभावात् अनुत्पन्नः इति विनष्टाद्यवयवप्रागभावकत्वे सति अनुत्पन्नध्वंसान्त्यावयवकत्वमिति लक्षणं पर्यवसन्नम् ।

परमिदं लक्षणं क्रियैव काल इति मते सञ्जाघटीति । यस्याः क्रियाया आद्यावयवो नष्टोऽन्त्यावयवश्च न नष्ट इति सैव क्रिया वर्तमानकालपदेन गृह्यते इत्येव स्थूलदृशा समायातम् । परमेतन्न युज्यते । "क्रियाभेदाय कालस्तु" "आख्यातार्थः कालः" इत्याद्यनुरोधेन कालो न क्रियारूपोऽपि तु क्रिया कालस्य उपाधिः । अखण्डस्याऽपि कालस्य क्रियोपाधिद्वारा दिनमाससंवत्सरादिभेदेन व्यवहारः । अतो वर्तमानत्वं कालगतं लक्षणीयम् । तथा च आरब्धतत्तत्फलानुकूलव्यापारध्वंसासमानकालिकतत्तत्फलानुकूलकृतिविषयीभूतो योऽपरिसमाप्तः तत्तत्फलानुकूलचरमक्रियाध्वंसानधिकरणकालवृत्तिरेतादृशो यः क्रियात्मकोऽर्थः तत्तत्फलानुकूलव्यापारसन्तानात्मकक्रियारूपः तदधिकरणत्वोपलक्षितसमयत्वं वर्तमानत्वम् अवसेयम् ।

भाष्येऽपि न्याय्या त्वेषा वर्तमानकालता आरम्भानपवर्गात् ।

अवश्यं भुञ्जानो हसति जल्पति पिबति निमिषति चेत्युक्तम् । नान्तरीयकत्वात्तासां क्रियाणामिति न विच्छेदकत्वम् । अतो हसनादिदशायामपि भुङ्क्ते इत्युपपन्नम् । अथवा मध्यवर्तिनीनां तासां क्रियाणामपि तत्तद्धात्वर्थफलानुकूलत्वेन भुज्यादिधात्वर्थतया विवक्षणात् न दोष इति कैयटरीत्या समाधिः । परन्तु कैयटमते बहूनां प्रतिकूलव्यापाराणामपि तद्धातुवाच्यत्वं स्वीकर्तव्यम् । यथा "संहितां पठति" अत्रानेकमाससाध्येऽध्ययने कदाचित् नदीसन्तरणमपि भवेत् इति तस्यापि पठधात्वर्थताभ्युपगमोऽनुभवविरुद्धः । तस्मात् पूर्वोक्त एवार्थः ।

प्रारब्धापरिमाप्तत्वं विशेषणं नतूपलक्षणम् । नातोऽतीतानागतक्रियामादाय दोषः शङ्कनीयः ।

केचित् क्रियामेव कालमाहुः । अन्ये तु अखण्डं कालं स्वीकुर्वन्ति । उपाधिवशात् खण्डकालः प्रतिभाति । या क्रिया प्रारब्धा सती समाप्ता नाभूत् तादृशक्रियाया अधिकरणकालो वर्तमानः काल इति स्थूलार्थः ।

भूतानद्यतनपरोक्षेऽर्थे लिट् विधीयते "परोक्षे लिडि"ति सूत्रात् । परोक्षत्वञ्च साक्षात् करोमीत्येतादृशविषयताशालिज्ञानाविषयत्वम् । अर्थात् यः कश्चित् "अयं पपाचे"ति विवक्षति तत्पुरुषसमवेतं साक्षात् करोमीत्येतादृश शब्दाभिलप्यमानविषयताशालि यद् ज्ञानं तदविषयत्वस्यैव परोक्षत्वात् । अपरोक्षक्रियायां तादृशज्ञानविषयत्वमेवास्तीति न दोषः ।

न च क्रिया नामेयं साध्यत्वेन प्रतीयमाना पचतीत्यादिव्यवहारविषया,

पूर्वापरीभूतावयवा = क्रमिकानेकव्यापारसमूहात्मिका अत्यन्ता परदृष्टा = परेण प्रत्यक्षादिप्रमाणेन अत्यन्तमदृष्टा-तज्जन्यज्ञानाविषया न शक्या पिण्डीभूता निदर्शयितुमिति भाष्यात् क्रियायाः सर्वस्याः परोक्षत्वप्रतिपादनेन "परोक्षे" इति क्रिया विशेषणस्य अव्यावर्तकतया वैयर्थ्यम् । कस्याश्चित् क्रियायाः परोक्षत्वे कस्याश्चिदपरोक्षत्वे व्यभिचारवारकतया स्यात् परोक्षपदसङ्गतिरिति वाच्यम् ।

अवयवानामाशुविनाशितया तेषां वास्तविकसमूहासम्भवात् अप्रत्यक्षत्वेऽपि अवयवशः साक्षात्करोमीत्यनुभवाद् अवयवभूतायाः क्रियायाः अपरोक्षत्वात् । अत एव पिण्डीभूता न शक्त्या निदर्शयितुमित्येव भाष्ये उक्तम् । अत एव उत्कटधावनक्रियां दिदर्शयिषुः पश्य मृगो धावतीति वाक्यं प्रायुङ्क्त । अन्यथा क्रियायाः परोक्षत्वात् तथा प्रयोगप्रसङ्गासङ्गतिः स्यात् ।

वस्तुतः समूहात्मनैव क्रियाणां धातुवाच्यत्वस्य "समूहः क्रमजन्मनामि"ति हर्युक्तेः स्वीकारात् । तथा च क्षणावच्छिन्नक्रियाया अवयवरूपेण धातुवाच्यता न सम्भवति । अतः "परोक्षे" इति न क्रियायां विशेषणं किन्तु व्यापारयुक्ते कर्तरि । तथा च व्यापाराविष्टस्य कर्तुः पारोक्ष्यमिह विवक्षितम् । अत एव केवलस्य क्रियारहितस्य कर्तुः प्रत्यक्षत्वेऽपि क्रियाविशिष्टस्य तस्य परोक्षत्वेन विशेषणाभावप्रयुक्तो विशिष्टस्यैवाभावः सम्पन्न इति न पूर्वोक्तदूषणावकाशः ।

एवमपि पूर्वोक्तदोषानुवृत्तिर्न निवर्तते । यत्रापि क्रियाविशिष्टः कर्ता प्रत्यक्षगोचरस्तत्रापि पूर्वोक्तदिशा क्रियाया अप्रत्यक्षत्वेन विशेषणाभावप्रयुक्तविशिष्टाभावस्य सत्त्वात् क्रियाविष्टकर्तुः पारोक्ष्यमेव । ततश्च भूषणकृतः समाधानान्तरं कथं सगच्छताम् । क्रियावैशिष्टचकाले कर्तुः पारोक्ष्यस्य विवक्षणान्न दोष इति तात्पर्यम् ।

"व्यातेने[1] किरणावलीमुदयनः सत्तर्कतेजोमयीम्" ।

"चक्रे[2] सुबन्धुः सुजनैकबन्धुः" इत्यादिस्थले "व्यातेने" "चक्रे" इत्यादिप्रयोगाणां का गतिः स्वक्रियायाः स्वविशिष्टकाले स्वस्य च परोक्षत्वाभावात् । कथञ्चित् व्यासङ्गादिना परोक्षत्वोपपादनेऽपि भूतत्वानद्यतनत्वयोरुपपादयितुमशक्यत्वेन प्रयोगासङ्गतेर्दुर्वारतामाह ग्रन्थकारः ।

"परोक्षे लिडि"ति सूत्रस्य भूते भविष्यति वर्तमाने च लुङ् लृट् लडादिभिर्यथाक्रमं बाधात् पारिशेष्यात् भूतानद्यतनपरोक्षे एव लिटः प्राप्त्या सूत्रे "परोक्षे" इति पदं भूतानद्यतनपरोक्षविवक्षायामित्यर्थकं न किन्तु भूतानद्यतनपरोक्षकालेतरकालाविवक्षायामित्यर्थकं लक्ष्यानुरोधात् परोक्षग्रहणसामर्थ्यादाश्रीयते । तथा च परोक्षकालेतरकालाविवक्षा—परोक्षकालविवक्षातदविवक्षा चेत्युभयरूपा भवितुमर्हति ।

१. प्रशस्तपादभाष्यटीका किरणावली, तत्रत्यः श्लोकः ।

२. वासवदत्तायां सुबन्धुकविकृतायामयं श्लोकः ।

एवमेवोभयरूपत्वम् अनद्यनातीतत्वयोरपि सम्भावनीयम्। तथा च व्यातेने" "चक्रे" इत्यादौ भूतानद्यतनत्वयोः परोक्षत्वस्य च अविवक्षितत्वात् तदभावेऽपि भवति लिट् प्रयोगस्य साधुता। यत्र तु वर्तमानकालादिर्विवक्षितस्तत्र न लिट्प्रयोगः परोक्षकालेतरः कालो वर्तमानादिः सच नाविवक्षितः किन्तुः विवक्षितस्तत्रेति न दोषः।

नेदं कल्पनामात्रमस्य भाष्येणापि समर्थयितुं शक्यत्वात्। तथाहि द्विबह्वोर्द्विवचनबहुवचने इत्यभिधाय ततः एकवचनम्, द्विबह्वोर्द्विवचनबहुवचने बाधके भविष्यतः, परिशेषात् एकत्वे तदभावे च एकवचनं सिध्यति। अत एव "एकवचनमुत्सर्गतः करिष्यते" इति सिद्धान्तः एतन्मूलकः संगच्छते। यथा रामादौ एकत्वे विवक्षिते अव्यये च तदभावेऽपि एकवचनमुत्पद्यते तथात्रापि भूतानद्यतनपरोक्षत्वविवक्षायां तदविवक्षायाञ्च लिटः प्रयोगात् पूर्वोक्तप्रयोगाणां नानुपपत्तिरिति। "स्थितेष्वेतत् समर्थनम्", "स्थितस्य गतिश्चिन्तनीये"ति मनसिकृत्य विभावनीयं सूरिभिः।

लिङर्थः—

विधिनिमन्त्रणामन्त्रणाद्यर्थेषु लिङ् विधीयते। विधिः स्वापेक्षया अपकृष्टस्य प्रेरणम्।

निमन्त्रणामन्त्रणयोः को विशेषः। यन्नियोगतः कर्तव्यम् = अवश्यकर्तव्यं नित्यं नैमित्तिकञ्च श्राद्धादि। निमन्त्रणस्य अवश्यकर्तव्यरूपस्य विषयः श्राद्धादिः इति निमन्त्रणविषयतया निमन्त्रणमित्युच्यते। सिद्धं भुज्यतामित्युक्ते निमन्त्रितस्य प्रत्याख्यातुः ब्राह्मणस्य अधर्मो भवति। आमन्त्रणे कामचारः। यत्र भोजनाद्यननुष्ठानेऽपि न प्रत्यवायः तद्विषया प्रवर्तना आमन्त्रणमिति विवेकः।

अधीष्टः=सत्कारपूर्वको व्यापारः। लोके एषा अभ्यर्थनापदेनोच्यते। एतेषां चतुष्टयानां लिङ् वाच्यत्वे गौरवात् चतुर्षु एतेषु अनुगता प्रवर्तनात्वेन प्रवर्तनैव लिङ् वाच्या स्वीक्रियतां पृथक् पृथग्रूपेण तेषां वाच्यत्वे फलाभावात्।

प्रवर्तनात्वञ्च प्रवृत्तिजनकज्ञानविषयतावच्छेदकत्वम्। सर्वो हि लोकः इदं मदिष्टसाधनमिति मत्वा प्रवर्तते। तस्मिन् इष्टसाधनताज्ञानं भ्रमः प्रमा वा भवेत्। प्रमात्वेन निर्णयो नापेक्षितः। यदनिष्टसाधनतयापि ज्ञातमस्ति तदपि तदानीं रागमोहक्रोधावेगवशात् इष्टसाधनत्वेन जानाति। तथाच प्रवृत्तिजनकं ज्ञानम् इष्टसाधनज्ञानम् तज्ज्ञानीयविषयता इष्टसाधने तद्विषयतावच्छेदकत्वमिष्टसाधनत्वे इति तदेव लिङर्थः।

यद्येवं कृत्यसाध्ये लोकप्रवृत्तिर्न दृश्यते। अत एव सुमेरुशृङ्गाहरणे चन्द्रबिम्बानयने वा प्रवृत्तिर्न भवति इति तदपि पूर्वोक्तदिशा लिङर्थः किन्न स्यात्। एवं विषसंपृक्तान्नभोजने इष्टसाधनेऽपि प्रवृत्तेरदर्शनात् बलवदनिष्टाजनकत्वमपि तदर्थो वाच्यः। मैवम्। तस्य लोकत एव सिद्धेः। द्वेषस्य कार्यप्रवृत्तिं प्रति प्रतिबन्धकतया प्रतिबन्धकाभावस्य कार्यं प्रति कारणता सिद्धैवेति न तदर्थं शब्देनानुकीर्तनमावश्यकमितिभावः। तस्मात् वैयाकरणानां मते इष्टसाधनत्वं लिङर्थः इति सिद्धम्।

नैयायिकास्तु इष्टसाधनत्वम् कृतिसाध्यत्वम् बलवदनिष्टाननुबन्धित्वञ्च लिङर्थमाहुः ।

मीमांसकमण्डनो मण्डनोऽपि प्रवर्तनापदेन इष्टसाधनत्वमेव लिङर्थं मन्यते । पार्थसारथिरपि अमुमेवार्थमभ्युपगच्छति प्रवर्तना अलौकिको व्यापार इति न्यायसुधाकारो मनुते ।

भाट्टास्तु—शाब्दी भावना आर्थी भावना इति भेदेन भावना द्विविधा । "दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत" इत्यत्र यजेतेति पदे प्रकृतिप्रत्ययात्मकौ द्वौ भागौ । तत्र प्रत्ययभागे लिङ्त्वम् आख्यातत्वञ्चेति भागद्वयं कल्पितम् । आख्यातत्वधर्मः सर्वेषु लकारेषु समानः लिङ्त्वं तु लिङ्लकारे एव । प्रवृत्तिः प्रवर्तना च द्वाभ्यामंशाभ्यां प्रतिपाद्यते । लोके उत्तमवृद्धो मध्यमवृद्धमुद्दिश्य कथयति—गामानय इति, तदाकर्ण्य अयं पुरुषः मामत्र कर्मणि प्रवर्तयतीति जानन् तथा करोति । पुरुषाभिप्रायविशेषः एव प्रवर्तना प्रवृत्त्यनुकूलव्यापाररूपा । वेदस्य अपौरुषेयत्वेन पुरुषकर्तृकत्वाभावात् अभिप्रायविशेषरूपा प्रवर्तना वक्तुमशक्येति तादृशलिङ्शब्द एव प्रवर्तकत्वात् प्रवर्तनापदेन गृह्यते । यथा लोके पुरुषोऽयं मां प्रवर्तयति अथवा अनेन पुरुषेण प्रेरितः करोमि तथैव वेदे विधिना प्रेरितः करोमि इत्यनुभवात् विधिशब्द एव प्रवर्तयति । अतः प्रवृत्त्यनुकूलव्यापाररूपा प्रवर्तना शब्दनिष्ठैव । प्रवर्तना भावना प्रेरणा इत्यादि शब्दाः पर्यायाः । शब्दनिष्ठतया शाब्दीभावनापदेन कथ्यते । शाब्दीभावना = प्रवर्तनात्मकव्यापार एव लिङर्थः ।

शाब्दभावनया या प्रवृत्तिः फलोत्पत्तये भवति सैवार्थी भावना उच्यते । फलोत्पत्तये यतः इयं प्रवृत्तिरिति आर्थी भावनेति अन्वर्थं नाम । अर्थशब्दोऽत्र प्रयोजनवाची । तथाह अमरकोशे अर्थोऽभिधेये रैवस्तु प्रयोजननिवृत्तिषु ।

भावना नाम भवितुर्भवनानुकूलो भावकव्यापारविशेषः । भवितुः उत्पद्यमानफलस्य उत्पत्त्यनुकूलोभावकस्य = प्रवर्तकस्यव्यापारः प्रवर्तना आर्थी भावना । जायमानप्रवृत्तेः भवनानुकूलोभावकस्य लोके पुरुषस्य वेदे लिङादिशब्दस्य व्यापारः प्रवर्तना सैव च शाब्दी भावना ।

शाब्दीभावनाया अनन्तरं या फलानुकूला प्रवृत्तिः सैव आर्थी भावना ।

द्वितीया-तृतीया-सप्तमी-विभक्तीनामाश्रयोऽर्थः । फलाश्रये कर्मणि, व्यापाराश्रये कर्तरि, कर्तृकर्मद्वारा व्यापाराश्रये च क्रमशः तासां विधानात् । तत्र च फलस्य व्यापारस्य च धातुनैव लाभादनन्यलभ्योऽर्थः शब्दार्थः इति नियमेन परिशेषात् आश्रयमात्रमर्थः सिद्धयति उक्तविभक्तीनाम् ।

ननु ईप्सिते कर्मणि कर्तुरीप्सिततममित्यनेन अनीप्सिते च कर्मणि "तथायुक्तमि"ति सूत्रेण कर्मसंज्ञाया विधानात् द्वितीयावाच्यत्वेन ईप्सितानीप्सितत्वयोरपि भानमावश्यकमिति नाशङ्कनीयम् ।

कर्मसंज्ञायां तयोरुपयोगेऽपि द्वितीयावाच्यत्वेन प्रवेशे फलाभावात् न शाब्दबोधे भानम् । यद्यपि क्रियाजन्यफलाश्रयः कर्म इत्येवं सूत्रप्रणयनेनापि ईप्सितानीप्सि-

तयोरुभयत्र कर्म संज्ञायाः सिद्धत्वेन तद्घटितं सूत्रद्वयं व्यर्थम्। तथापि अग्नेर्माणवकं वारयतीत्यत्र क्रियाजन्यफलाश्रयत्वेन कर्मतया इष्टस्यापि माणवकस्य "वारणार्था-नामि"ति सूत्रेण कर्मसंज्ञां वाधित्वा अपादानसंज्ञा स्यात्। कर्मसंज्ञाविधायकं सूत्रं तु ग्रामं गच्छतीत्यादौ चरितार्थमत्र विशेषविहितेन अपादानसंज्ञाविधायकेन बाध-प्रसङ्गात्। एतद्दोषनिराकरणाय ईप्सिततमघटितं सूत्रमारब्धम्। ततश्चानीप्सितस्य संज्ञाविधानाय उत्तरसूत्रमारब्धमिति सप्रयोजनं तथा सूत्रकरणमिति।

ग्रामं गच्छतीत्यादौ संयोगरूपफलाश्रयत्वात् ग्रामस्य कर्म संज्ञा। घटं जानाती-त्यादौ आवरणभङ्गरूपफलाश्रयत्वात् घटस्य कर्मता॥

यद्यपि अतीतस्य अनागतस्य च घटस्य आवरणभङ्गरूपफलाश्रयता नोपपद्यते वर्तमानस्यैव आश्रयत्वाभ्युपगमात् तथा च कर्म संज्ञा तत्र कथमिति शङ्का जागर्ति तथापि ज्ञानस्य विषयतासम्बन्धेन विषये सत्त्वं मन्यमाना नैयायिकाः यथा अतीत-स्य भविष्यतश्च विषयस्य विषयताश्रयतां स्वीकृत्य कर्मसंज्ञां विदधति तथैवास्म-न्मतेऽपि भविष्यतीति न शङ्कावसरः।

अथवा "नासतो विद्यते भावो नाभावो विद्यते सतः" इति भगवद्गीतानुसारेण सतः पदार्थस्य स्वकारणेषु सूक्ष्मरूपेण अवस्थानमेव विनाशो नतु सर्वथोच्छेदः। दध्नि सूक्ष्मरूपेण स्थितस्य सर्पिषो मन्थनेन अभिव्यक्तिरूपा उत्पत्तिर्भवति। अन्यथा जला-देर्मन्थनेऽपि तदुत्पत्तिं को वारयेत्। सिकताशतपेषणेनापि तैलं प्राप्तुं न शक्यते कुतः तत्र सूक्ष्मरूपेण तैलस्याभावात्। इत्येवं सत्कार्यवादमभ्युपेत्य अतीताना-गतस्थले फलाश्रयता उपपादनीया।

संयोगस्य उभयनिष्ठतया ग्रामे इव कर्तरि चैत्रादावपि सत्त्वात्ततो द्वितीया-पत्तिस्तु परत्वात् कर्तृसंज्ञया कर्मसंज्ञाया बाधात् द्वितीया नेति परिहर्तुं शक्यत्वात्।

"प्रयागात् काशीं गच्छती"त्यादौ गम् धात्वर्थव्यापारेण संयोग इव विभागोऽपि जायते। तथाच क्रियाजन्यविभागरूपफलाश्रयत्वात् प्रयागस्य कर्मत्वापत्तिः स्यात् इति न शङ्कनीयम्। तद्धात्वर्थव्यापारजन्यत्वे सति तद्धातुजन्योपस्थितीयविषयत्वरूपस्य फलत्स्य वनिर्वचनात् विभागस्य तद्धात्वर्थत्वाभावात् न तदात्मकफलाश्रयस्य कर्मत्व-प्रसङ्गः। इति वैयाकरणमतनिष्कर्षः।

नैयायिकास्तु परसमवेतक्रियाजन्यधात्वर्थफलशालि कर्म आहुः। परत्वञ्च न यत् किञ्चिदपेक्षया अपि तु द्वितीयाप्रकृत्यर्थापेक्षया। तेन च कर्तुश्चैत्रस्य संयोगा-श्रयत्वेऽपि असौ संयोगो न द्वितीयाप्रकृत्यर्थत्वावच्छिन्नप्रतियोगिताकभेदवत्समवेत-क्रियाजन्यः किन्तु द्वितीयाप्रकृत्यर्थत्वेनेष्टचैत्रादि समवेतव्यापारजन्यः अतो न कर्मत्व-प्रसङ्गः तस्य। फले धात्वर्थत्वस्य विवक्षणात् विभागस्य प्रकृतधातुवाच्यत्वाभावात्। नैतन्मतेऽपि प्रयागस्य कर्मसंज्ञा इति विभावनीयम्।

वस्तुतः एतस्य गुरुशरीरतया कर्मत्वलक्षणं न युक्तम्। परत्वस्य च पदार्थैक-

देशतया द्वितीयाप्रकृत्यर्थस्य तत्रान्वये "पदार्थः पदार्थेनान्वेति" इति व्युत्पत्तिविरोधः। परत्वस्य द्वितीयाप्रकृत्यर्थप्रतियोगिकस्य नान्यप्रतियोगिकस्य ग्रहणम्। एवं परसमवेतत्वं तादृशक्रियायामन्वेतीति द्विविधनियमनिर्वाहाय कार्यकारणभावकल्पनायां गौरवाच्च। द्वितीयाविभक्तौ कर्मसंज्ञा नियामिका तथा च कर्मसंज्ञाया उक्तरीत्या अभावादेव द्वितीयावारणसम्भवात् नेयं क्लिष्टकल्पना युज्यते। संज्ञाया द्वितीयाविभक्तेरनियामकत्वे पाचयति कृष्णं गोप इत्यपि स्यात्।

कर्म सप्तविधम्। एतच्च मूले एव स्फुटम्।

विकृतिकर्मणोऽभिधानानभिधानव्यवस्था चिन्त्यते—

"काष्ठं भस्म करोती"त्यत्र नाशः उत्पत्तिश्चैतद् द्वयं फलं तदनुकूलो व्यापारश्च कृधातोरर्थः। नाशरूपे फले प्रतियोगितया काष्ठस्य उत्पत्तिरूपे फले च भस्मनो वृत्तितया चान्वयः। तथा च काष्ठप्रतियोगिकनाशानुकूलो भस्मनिष्ठोत्पत्तिजनको वर्तमानकालिको व्यापार इति शाब्दबोधो वैयाकरणनये।

प्रकृति-विकृतिभावापन्नं काष्ठभस्मादि उभयं विकार्यं कर्म। "गौणे कर्मणि दुह्यादेः प्रधाने नीहृकृष्वहामि"त्याद्युक्तरीत्या द्विकर्मकाणां धातूनां मध्ये येषां धातूनां कर्मणोऽभिधानानभिधानव्यवस्था लक्ष्यते तद्भिन्नानां विनिगमनाविरहाद् उभयं कर्म कर्मप्रत्ययेनाभिधीयते। तथा च "काष्ठानि भस्मराशिः क्रियन्ते" अत्र उभयोरपि कमर्णोरभिहितयोः संख्यामनुरुध्य जायमाना विभक्तिः कमनुसरेदिति प्रश्नः सर्वेषां मनसि जागर्ति। तस्यायं समाधिः—"गृह्णाति वाचकः संख्यां प्रकृतेः विकृतेर्नहि" इत्यनुशासनेन प्रकृतिगतसंख्यानुसरणस्यैव उचितत्वेन काष्ठगतसंख्यामेव विभक्तिरनुसरतीति शोभनः पन्थाः।

एवमेवान्यत्रापि अनुसन्धेयम्। एकोऽपि त्रय इव भाति कन्दुकोऽयम्, काष्ठं पञ्च नौकाः भवति इत्यादि प्रयोगाः निर्वाह्याः।

नन्वेवं महाकवेः श्रीहर्षस्य प्रयोगो विरुध्यते। तथाहि "अमानि तत्तेन निजायशोयुगं, द्विफालबद्धाश्चिकुराःशिरःस्थितम्।"

अत्र चिकुराः निजायशोयुगममानि इत्यन्वयः अभिप्रेतः। तथा च चिकुराणामुद्देश्यत्वेन तदनुरोधिनी विभक्तिरिह युक्ता। अमानिषत इति वक्तव्ये अमानि इत्युक्तिः विरुध्यते।

एवमेव महाभाष्येऽपि—"पुनरावृत्तः सुवर्णपिण्डः खदिराङ्गारसवर्णे कुण्डले भवतः" इत्युक्तं तदपि विरुणद्धि। अत्र विकृतिभूतकुण्डलानुसारिणी संख्या गृहीता इति प्रकृतेः संख्यां गृह्णातीति नियमो न सार्वत्रिकः प्रतिभातीति।

अत्रेदं वक्तव्यम्—उद्देश्यविशेषणभावस्य ऐच्छिकत्वात् निजायशोयुगमेवोद्दिश्य द्विफालबद्धचिकुरत्वेन कल्पतें उक्तातिप्रसङ्गस्य दूरापास्तत्वात्। निजायशोयुगस्यानुरोधेन आख्यातनिर्देशः सङ्गत एव

एवं रीत्या भाष्यविरोधोऽपि परिहर्तुं शक्यते। खदिराङ्गार सवर्णे कुण्डले

अग्निसन्तापादिना पुनरावृत्तः सुवर्णपिण्डः सम्पन्नः। अत्रापि कुण्डलस्यैव प्रकृतित्वविवक्षायां तदनुरोधिनी संख्या साध्वी निर्दिष्टेति क्व भाष्यविरोधः। कुण्डलस्येदं सुवर्णम्, कुण्डलादुद्गतं सुवर्णमित्यादिव्यवहारेण कुण्डलादीनामपि प्रकृतित्वं दृश्यते। प्रकृतिविकृतिभावो वास्तविको नापेक्ष्यते इति दर्पणाभिप्रायः। प्रायेण उद्देश्यगतां संख्यामेव अनुरुणद्धि लोकः।

अथवा आख्यातेन प्रकृतिविकृत्युभयगता संख्या अभिधीयते। एकस्य एकतरस्य संख्याया अभिधाने विनिगमनाविरहः। एकदा एकेन अभिधातुं द्वयोरशक्यतया भगवता विकृतिसंख्यैव उक्ता। तस्मान्नायं नियमः प्रकृतेरेव सख्यां वाचको गृह्णाति न विकृतेरिति तस्मात् उभयविधः प्रयोगः साधुरिति।

नैयायिकानां मते—काष्ठं भस्मराशिः क्रियते इत्यस्मात् उत्पादकभस्मसम्बन्धिकृतिप्रयोज्यनाशप्रतियोगीनि काष्ठानीतिशाब्दबोधः। प्रकृतिकर्मोत्तरद्वितीयाया नाशकत्वमर्थः, विकृतिकर्मोत्तरद्वितीयायाः उत्पादकत्वमर्थः। तण्डुलान् ओदनं पचतीत्यतः तण्डुलनाशकः ओदनोत्पादको यो व्यापारः तदनुकूलकृतिमान् इत्याकारको बोधः।

ईदृशे स्थले एतन्मते कर्मप्रत्ययेन प्रकृतिगतं कर्मत्वमेवाभिधीयते न विकृतिकर्मत्वम्। अत एव प्रकृतिसंख्यानुरोधेन आख्यातप्रत्ययः। न च विकृतिकर्मत्वस्यानुक्तत्वे द्वितीयापत्तिरिति वाच्यम्। कर्मत्वान्तरविशेषणतानापन्नक्रियायां तस्य संसर्गत्वाभ्युपगमेन द्वितीयाया अप्राप्तेः। प्रातिपदिकार्थविशेषणतया कर्मत्वादि विवक्षायां द्वितीयाविधानात् इत्यलं परमतविवेचनेन।

धात्वर्थव्यापाराश्रयत्वं कर्तृत्वम्। यदा यत्र यदीयो व्यापारो धात्वर्थतया विवक्षितः तत्र तदा तस्यैव कर्तृत्वम्। एतेन कारकान्तराप्रयोज्यत्वे सति कारकचक्रप्रयोक्तृमिति कर्तृलक्षणं वैयाकरणसम्मतमित्युक्तिः केषाञ्चन न युक्ता।

नैयायिकास्तु कारकचक्रप्रयोक्तृत्वं कर्तृत्वमाहुः। तच्चाचेतने बाधितत्वादसङ्गतम्। अचेतनः कथमपि कारकाणां प्रयोजको भवितुं नार्हति। आश्रयमात्रं कर्तृतृतीयाया अर्थः। सप्तम्या अपि आश्रयोऽर्थः पूर्वोक्तयुक्तेः।

पञ्चम्या अवधिरर्थः। प्रकृतधात्वर्थविभागजनक तद्व्यापारानाश्रयत्वे सति प्रकृतधात्वर्थजन्यविभागाश्रयत्वमवधित्वम्। "वृक्षात् पर्णं पतती"त्यादौ विभागस्य उभयनिष्ठतया वृक्षस्येव पतनाश्रयस्य पर्णस्यापि विभागाश्रयतया नापादनत्वं पर्णस्य विभागजनकव्यापाराश्रयत्वात्।

चतुर्थी विभक्तेरुद्देश्यार्थकत्वम्। सम्प्रदानमिति महासंज्ञा प्राचामनुरोधेन। तथाच स्वस्वत्वध्वंसविशिष्टपरस्वत्वोत्पत्त्यनुकूलव्यापारार्थकदाधातुयोगे एव चतुर्थीतिनियमाभावात् अर्थान्तरवाचिदाधातुयोगेऽपि चतुर्थी। अत एव "रजकाय वस्त्रं ददाति", खण्डिकोपाध्यायः शिष्याय चपेटां ददातीत्यादयः प्रयोगाः सिध्यन्ति। अधीनीकरणार्थः क्वचिच्च संयोगानुकूलव्यापारार्थको ददातिः।

आश्रयस्य प्रकृत्यैवं लाभात् आश्रयत्वमात्रे शक्तिः पञ्चम्या अवधित्वमात्रम्, चतुर्थ्या उद्देश्यत्वमात्रमर्थः इति पक्षान्तरम् ।

षष्ठी विभक्तेः सम्बन्धमात्रमर्थः ।

ननु सम्बन्धस्य उभाभ्यां निरूपणात् सम्बन्धप्रतियोगि राजपदादिव सम्बन्धानुयोगिपुरुषपदादपि षष्ठी विभक्तिरापद्यते । इति चेन्न । सम्बन्धस्योभयनिष्ठत्वेऽपि राजपदार्थस्य विशेषणत्वेन विवक्षायां सम्बन्धं विना तदसम्भवात् तत्र राजपदार्थसम्बन्धः उद्बुद्धः । पुरुषस्य तु पदान्तरासमभिव्याहारे स्वरूपेण प्रतीयमानत्वात् न सम्बन्ध उद्बुद्धः । यदा पुरुषे विशेषणताविवक्षा तदा सम्बन्धस्य उद्भूततया पुरुषाणां राजेति भवत्येव । इत्यलम् ।

नामपदेन प्रातिपदिकमुच्यते । तस्यार्थो नामार्थः । एका जातिः नामार्थः । जातिरिति उपाधेरप्युपलक्षणम् । अन्यथा एकव्यक्तिनिष्ठतया आकाशत्वादीनां जातिपदेन सङ्ग्रहाभावात् नामार्थत्वानुपपत्तिः स्यात् । व्यक्तीनामानन्त्यात् सर्वासां व्यक्तीनां ग्रहणासम्भवेन सकलव्यक्तिनिरूपितशक्तिग्रहो दुर्घटः । यस्यां कस्याञ्चिद् व्यक्तौ शक्तिग्रहश्चेत् तदा तस्या एव व्यक्तेः शाब्दबोधे भानं स्यात् तत्रैव शक्तिग्रहात् । अशक्याया व्यक्तेरपि भानोपगमे अविशेषात् अन्यस्या अपि भानसम्भवे तत्र शक्तिकल्पनायाः वैयर्थ्यापातात् । तस्मात् न व्यक्तौ शक्तिरिति मीमांसकमतम् ।

जातिः व्यक्तिरित्युभयं नामार्थः । जलानयनादिकार्यस्य जातावसम्भवात् व्यक्तिशक्तिरावश्यकीति विशिष्टं नामार्थः । तथा चोक्तं महाभाष्यकारेण—"नह्याकृतिपदार्थस्य द्रव्यं न पदार्थ इति । मतमिदं नैयायिकेभ्यो रोचते । तथाच न्यायसूत्रं "जात्याकृतिव्यक्तयः पदार्थः" इति ।

केषाञ्चिन्मते जातिव्यक्तिसहितं लिङ्गं नामार्थः । टाप् ङीबादयो लिङ्गद्योतकाः । पूर्वोक्तत्रिकसहिता संख्या एवं पूर्वोक्तसहितं कारकमिति पञ्चकं नामार्थः । संख्यायाः कारकस्य च नामार्थत्वे विभक्तयो द्योतिकाः अन्यथा तु वाचिका इत्यवसेयम् ।

वस्तुतो लिङ्गादीनां नामार्थत्वमेव युक्तम् । प्रत्ययवाच्यत्वे तु "प्रत्ययार्थः प्रधानमि"ति न्यायविषयतया प्राधान्यापत्तिः । न्याये प्रत्ययार्थत्वेन वाच्यार्थस्यैव ग्रहणात् द्योत्यत्वपक्षे नोक्तन्यायावतारशङ्काकलङ्कः ।

"स्तनकेशवती नारी"त्यादिना निर्दिष्टं लौकिकं लिङ्गं नात्र शास्त्रे गृह्यते अचेतने काष्ठकुड्यादौ तादृशलिङ्गस्य वक्तुमशक्यत्वात् । दारान् इत्यत्र दारशब्देन स्त्रियाः बोधनेन पुंसि विहितो नकारादेशोऽपि न प्राप्नुयात् ।

तस्मादन्यादृशं लिङ्गं विवक्षितम् । संसारकारणभूता प्रकृतिः त्रिगुणात्मिका । गुणाश्च सत्त्वरजस्तमांसि । संसारस्य प्राकृतत्वात् सर्वस्मिन् पदार्थे गुणानामेषां सद्भावो मन्तव्यः । गुणानां न्यूनाधिकभावो लिङ्गव्यवहारहेतुः । कस्यचिद् गुणस्य आधिक्यं पुंस्त्वम्, कस्यचित् न्यूनत्वं स्त्रीत्वम्, गुणानां स्थितिमात्रं नपुंसकत्व-

मन्यथा साम्यावस्थायां सृष्टेरभावात् कोऽनेन व्यवहरेत् । सर्वं लिङ्गं सर्वेषु अर्थेषु वर्तते । कस्यचिच्छब्दस्य एकावस्थावैशिष्ट्येन बोधकत्वं कस्यचिदुभयावस्थावैशिष्ट्येन बोधकत्वमित्यादि स्वभावः कोशादितो निर्णयः ।

वस्तुतो लिङ्गस्यार्थनिष्ठत्वे स्वशब्दः ज्ञातौ पुंल्लिङ्गः धनेऽर्थे स्त्रीलिङ्ग इति व्यवस्था नोपपद्येत । तस्मात् शब्दनिष्ठं लिङ्गम् । अत एव पुंल्लिङ्गः स्त्रीलिङ्गः शब्द इत्यादि व्यवहार आञ्जस्येन उपपद्यते । समानानुपूर्वीकत्वेन एकस्य अनेकलिङ्गत्वव्यवहारः । एकः शब्दः एकस्मिन् एव लिङ्गे प्रयुज्यते ।

शब्दोऽपि शाब्दबोधे वैयाकरणमते भासते । शिवमुच्चारय विष्णुमुच्चारयेत्यादौ शब्दवाच्यस्यार्थस्य उच्चारणासम्भवात् शब्दस्यैव भानेन शाब्दबोधसङ्गतिः । अतएवोक्तं वाक्यमदीये--

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते ।
अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते ॥

अनुकार्यानुकरणयोर्भेदविवक्षापक्षे अनुकार्यस्य शब्दतया तन्निरूपितशक्तेरनुकरणे स्वीकारात् शब्दस्तावत् शाब्दबोधे तत्राभादिति सर्वानुभवसिद्धम् । अभेदपक्षे तु सादृश्यादेव अनुकरणेन उपस्थित्या तदुपस्थितये नातिरिक्ता शक्तिः कल्प्यते । अतएवास्मिन् पक्षे वृत्त्या अर्थोपस्थित्यभावेन नार्थवत्त्वनिबन्धना प्रातिपदिकसंज्ञा अनुकरणस्य । तत्र वृत्तिमत्त्वरूपार्थवत्त्वग्रहणात् । नव्यमतेऽपि वृत्तिद्वारैव बोधजनकतायास्तत्र ग्रहणात् । अतएव क्वचिदपि अनुकरणस्थले विभक्तिर्न श्रूयते । भू सत्तायाम् गवित्ययमाहेति यथा । नचैवं वृत्तिज्ञानाधीनपदार्थोपस्थितेरेव शाब्दबोधोपयोगित्वेनेष्टतया सादृश्येन अनुकार्योपस्थितिः कथमिह शाब्दबोधे उपकरिष्यतीति वाच्यम् । अनुकार्यस्य शाब्दबोधेभानं व्युत्पत्तिवैचित्र्यादिति शब्दरत्नकृतैव समाहितत्वात् । निरूपकताऽश्रयतान्यतरसम्बन्धेन वृत्तिमतः शाब्दबोधविषयतामङ्गीकृत्य परिहर्तुं शक्यत्वादिति तात्पर्यम् । अर्थवत्सूत्रे च निरूपकतासम्बन्धेन वृत्तिमत एवार्थवत्पदेन ग्रहणान्नाभेदविवक्षापक्षे प्रातिपदिकसंज्ञायाः प्रवृत्तिरिति व्युत्पत्तिवैचित्र्यमेव शरणम् ।

समासः षड्विधो मतः—तथाहि–सुबन्तं सुबन्तेन समस्यते । उभयं सुबन्तं, यथा राजपुरुषः । सुबन्तं तिङन्तेन–'अनुव्यचलत्" इति यथा । सुबन्तस्य नाम्ना ( प्रातिपदिकेन ) सह समासस्योदाहरणम्—कुम्भकारः । गतिकारकोपपदानामिति परिभाषया विभक्त्युत्पत्तेः प्रागेव कार इत्युत्तरेण सह समाससम्पादनात् । सुबन्तस्य धातुना सह समासो यथा—"कटप्रूः" "आयतस्तूः" । कटं प्रवते आयतं स्तौति इत्यर्थः । अत्र "क्विब्वचि प्रच्छयायतस्तू" इति वार्तिकनिपातनात् सुबन्तस्य धातुना समासः ।

कटप्रूः आयतस्तूः उभयत्र "क्विब्वची"त्यादिना क्विपि कृते कृदन्तत्वेन प्राति-

पदिकसंज्ञायां प्र स्तू इत्यनयोः प्रातिपदिकत्वेन सुबन्तस्य "नाम्ना समास" इति पूर्वोक्त-कल्पेनैव सङ्ग्रहे "सुपां धातुना सह समास" इति विभागस्तदुदाहरणञ्च नोपपद्यते इति नाशङ्कनीयम्। कटस्य आयतस्य च धात्वर्थेन समन्वयः क्विबन्तं हि प्रातिपदिकं तेन च कर्ता अभिधीयते न धात्वर्थः। तद्वाचकस्य धातोरप्रातिपदिकत्वेन सुबन्तस्य नाम्ना सह समास इति समासभेदेऽनन्तर्भावात् भेदान्तरकथनं युक्तमेव। तथा च सुबन्तस्य धातुना समास इत्यस्योदाहरणमिदं सङ्गच्छते। तिङन्तस्य तिङन्तेन सहोदाहरणं पिबतखादता। इत्येवं समासानां षड्विधत्वं निराबाधम्।

सामर्थ्यं द्विविधं—व्यपेक्षा एकार्थीभावश्च। वाक्ये व्यपेक्षा वृत्तिमात्रे समासादौ एकार्थीभावः। स च पृथगर्थानां पदानामेकार्थोपस्थिति जनकत्वरूपः। नानोपस्थिति-विषयाः अर्थाः येषां पदानां तान्येव पृथगर्थानि पदानि। घटस्यापि घटघटत्वसमवा-यानामुपस्थितिजमकत्वेन घटपदे दोषापादनं न सम्यक्। पृथगर्थानामिति विशेषणेन तद्दोषनिरासात्। वाक्ये तु आकाङ्क्षादिवशात् पृथग् पृथगुपस्थिताः पदार्थाः परस्पर-मन्वियन्ति न ते एकोपस्थितिविषयाः इति व्यपेक्षासामर्थ्यम्। स्वार्थपर्यवसायिनां पदानामाकाङ्क्षावशाद् यः परस्परं सम्बन्धः सा व्यपेक्षा। समासादिवृत्तौ समुदाय-शक्तिसहकृतया अवयवशक्त्या जायमाना पदार्थोपस्थितिरेव विशिष्टमर्थमवबोधयति अत एव "संसृष्टार्थं समर्थमि"तिभाष्ये उक्तम्। राजसम्बन्धवत्पुरुषे राजपुरुषपदस्य शक्तिर्गृह्यते। ततः प्राप्ताप्राप्तविवेकन्यायेन विशिष्टशक्तिः षष्ठ्याद्यर्थे सम्पद्यते। तथा च राजपदार्थस्य विशेषणतया पदार्थैकदेशत्वात् तत्र विशेषणान्तरान्वयसम्भाव-नाऽपि निरस्ता। देवदत्तस्य गुरुकुलमित्यादौ क्वचित् पदार्थैकदेशान्वयस्तु गुरुत्वरूपस्य किञ्चिन्निरूपितत्वेन नित्यसाकाङ्क्षतया "पदार्थः पदार्थेने"ति न्यायाविषयत्वात्।

जहत्स्वार्थां वृत्तिमाश्रित्य समासघटकपदानामानर्थक्यप्रतिपादनं न युक्तम् महा-बाहुरित्यादावात्वानापत्तेः। भूतपूर्वगत्याश्रयणं सत्यां गतौ अयुक्तम्।

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी।
समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्॥

इति वदतो मूलकृतोऽयमेव पक्षोऽभिमतः। पङ्कजशब्दे परैः योगरूढिः स्वीक्रियते। तस्य दृष्टान्तत्वेनोपन्यासोऽजहत्स्वार्थपक्षे एवोपपद्यते।

समासेऽतिरिक्तशक्तिसाधिका युक्तयो मूले विस्तरेण विवेचिताः। पुनरिह विवेचनं विस्तरसम्भावनैव रुणद्धि।

अस्माच्छब्दादयमर्थो बोद्धव्यः, इदं पदममुमर्थं बोधयतु इति क्रमशः अर्थविशे-ष्यिका पदविशेष्यिका वा ईश्वरेच्छा शक्तिरिति नैयायिकाः।

पदार्थान्तरं शक्तिरिति मीमांसकाः।
बोधजनकता शक्तिरिति प्राचीनवैयाकरणाः॥

वाच्यवाचकभावापरपर्याया शक्तिरिति नवीनवैयाकरणाः। ईश्वरेच्छायाः ईश्वरनिष्ठतया ईश्वरेच्छीयविषयतारूपैव सा वाच्या। यत्र गङ्गापदात् तीरार्थबोधो लक्षणया जातस्तत्रापीश्वरेच्छायाः सन्मात्रविषयावगाहितया तीरस्यापि तदीयेच्छीयविषयताश्रयत्वेन लक्षणोच्छेदापत्तेः तदीयेच्छाविषयता तदीयज्ञानविषयता वा शक्तिरिति विनिगमकाभावश्च। ईश्वरानभ्युपगन्तृमते ईश्वरेच्छाया एवासम्भवाच्च नैयायिकमतं न युक्तम्।

शक्तिः पदार्थान्तरमिति मीमांसकमतं गौरवग्रस्ततया नोपादेयतामर्हति।

तस्मात् बोधजनकत्वं शक्तिरिति वैयाकरणमतं युक्तिसहं प्रतिभाति। यथा च चाक्षुषादिज्ञानविषयनिरूपिता चक्षुरादीन्द्रियनिष्ठा अनादिभूता = पुरुषप्रयत्नानपेक्षा योग्यता = कारणता तथैव शब्दानामपि अर्थनिरूपिता बोधजनकता शक्तिरस्तीति। नागेशभट्टास्तु—नानुमन्यन्ते अमुमर्थम्। सम्बन्धस्य द्विष्ठत्वेन बोधजनकत्वस्य वाचक शब्दमात्रनिष्ठतया सम्बन्धरूपत्वासम्भवात् न सा शक्तिः किन्तु वाच्यवाचकभावस्वरूपा।

किञ्च वृत्तिज्ञानस्य शाब्दबोधहेतुत्वं सर्वमतसिद्धम्। शाब्दबोधहेतुतावच्छेदकत्वं, वृत्तित्वस्य शाब्दबोधजनकत्वरूपतया आत्माश्रयदोषपराहतत्वान्न सम्भवति। नहि स्वयमेव स्वस्यावच्छेदकं दृष्टमनुमतं वेति। तथाच इन्द्रियाणामिति पद्ये योग्यतापदेन कारणतावच्छेदकधर्मस्य ग्रहणं न तु शाब्दबोधकारणता। सच धर्मो वाच्यवाचकभावरूपः। कल्पेऽस्मिन् न पूर्वोक्तदोषप्रसरः। नात्र पक्षे शक्तिः बोधजनकता। अतः शाब्दबोधजनकतावच्छेदकतया वाच्यवाचकभावरूपशक्तिवृत्तित्वस्य वक्तुं शक्यत्वात्। विस्तरभिया विरम्यते।

"सम्बन्धिशब्दे सम्बन्ध" इत्यस्यायमभिप्रायः—शक्तिरूपसम्बन्धि घटादिशब्दे बोधजनकतयावच्छेदकधर्मरूपयोग्यतानिरूपितो यः सम्बन्धः तादात्म्यरूपः स एव योग्यता अर्थात् योग्यता ( शक्ति ) परिचायकः इत्यर्थः। समयात् = अनादि वृद्धव्यवहारपरम्पराप्राप्तास्मदादिव्यवहारेण गृहीतो य ईश्वरसङ्केतस्तेन निश्चीयते। यथा मातापुत्रयोर्जन्यजनकभावसम्बन्धस्य व्यवहारो निश्चायकस्तद्वत् इति।

भूषणकारमते कारिकाव्याख्यानमित्थम्—"सम्बन्धिशब्दे सम्बन्धः" इत्यस्य सम्बन्धिजन्यप्रतीतिविषयः सम्बन्धः एवं "योग्यतां प्रति योग्यता" इत्यस्य योग्यताजन्यप्रतीतिविषयो योग्यता। सम्बन्धशब्दयोग्यताशब्दयोरर्थप्रदर्शनस्योपयोगमाह—"समयादि"ति। एतस्य पदस्यास्मिन्नर्थे सम्बन्धः अयमर्थः एतद्योग्यतावान् इतिव्यवहारात् प्रथमं शक्तिग्रहो जायते। अत्र च सम्बन्धशब्दे शक्तिग्रहोऽपेक्षितः तत एवार्थप्रदर्शनम्। अयमस्य पिता इयमस्य मातेति व्यवहारेण जन्यजनकभावसम्बन्धो गृह्यते। तथात्राऽपि बोधजनकतारूपा योग्यता ज्ञायते।

वाच्यवाचकभावरूपायाः शक्तेर्ग्राहकं परस्पराध्यासमूलकं तादात्म्यम्। गौरिति शब्दः गौरयम् इत्यादि व्यवहारेण शब्दार्थयोस्तादात्म्यं स्वीक्रियते। नचाभेदे

शब्दार्थयोः वह्निशब्दोच्चारणे मुखे दाहापत्तिः मधुशब्दोच्चारणे माधुर्यापत्तिरिति शङ्कनीयम् । भेदसहिष्णुरभेदोऽभ्युपेयते इति न तत्प्रसङ्गः । उक्तशक्तेर्नियामकः सम्बन्धः तादात्म्यम् । शक्तेरपि नियामकः सम्बन्धो भवति इति विस्तरेण मञ्जूषायां निरूपितम् ।

आरोपितत्वं नञा द्योत्यते । "अब्राह्मणः" इत्यादिना आरोपितब्राह्मणत्ववान् इत्याद्यर्थस्य बोधात्, तादृशश्च क्षत्रियादिरिति स एव तत्पदेन प्रतीयते । तथा च अतिसर्वं इव असर्वेत्यत्र उपसर्जनत्वापादनमपि निरस्तम् । इतरपदार्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वस्य उपसर्जनपदार्थतया पूर्वपदार्थस्य नञर्थस्याभावस्य प्राधान्ये सर्वशब्दार्थस्य विशेषणत्वात् स्यादुपसर्जनत्वाशङ्का । तथा सति सर्वनामसंज्ञायाः "संज्ञोपसर्जनीभूतास्तु न सर्वादयः" इति प्रतिषेधः स्यात् ।

वस्तुत एतादृशबोधस्यानुभवविरुद्धत्वात् आरोपितत्वं नञा द्योत्यमिति पक्षं नाद्रियन्ते विद्वांसः । निवृत्तं पदार्थो यस्येत्यर्थकनिवृत्तपदार्थको नञिति महाभाष्यकारवचनात् अभावार्थकः सः । अभावश्च प्रतियोगिनि विशेषणम् । अत एव उत्तरपदार्थप्रधानोऽव्ययीभाव इत्यपि सङ्गच्छते । नापि उपसर्जनत्वशङ्कया सर्वनाम संज्ञायाः दौर्लभ्यमिति ।

अथवा । प्रतियोग्यपेक्षया अस्तु अभावो विशेष्यः । "एतत्तदोरि"ति सूत्रे अनञ् समासे इत्युपादानात् उपसर्जनेऽपि नञ्समासे सर्वनामसंज्ञाप्रवृत्तेर्ज्ञापनान्नदोष इत्याकलनीयम् । अयमेव पक्षोऽनुभवबलसिद्धतया समादरणीयः ।

प्रादयो द्योतकाः चादयो वाचका इति नैयायिकाः । निपातानां सर्वेषां द्योतकत्वं वाचकत्वं वा अस्तु । केषाञ्चित् निपातमध्यपतितानां द्योतकत्वं केषाञ्चित् निपातघटकचादीनां वाचकत्वमिति न युक्तं वैषम्ये बीजाभावात् इति वैयाकरणानां मतम् ।

इवार्थः सादृश्यम् । तद् भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं तत् । सादृश्यं न भेदघटितमिति केचिदिच्छन्ति । अतएव "रामरावणयोर्युद्धं रामरावणयोरिवे" त्यादौ स्वेनैव स्वस्योपमानं सङ्गच्छते ।

अन्येतु—नञ्युक्तमिवयुक्तं यत् किञ्चिद् दृश्यते तत् तद्भिन्ने तत्सदृशे पर्यवस्यतीत्यर्थिकायाः "नञिवयुक्तमि"ति परिभाषायाः जागरूकतया सादृश्यं भेदघटितं पर्यवस्यति । एकस्यैवोपमानत्वोपमेयत्वप्रतिपादनन्तु "आत्मानमात्मनावेत्सी"त्यादौ औपाधिकं भेदमादाय कर्तृत्व कर्मत्व करणत्वव्यवहारवत् उपपादनीयम् इति वदन्ति ।

एव शब्दस्यान्ययोगसम्बन्धव्यवच्छेदः, अयोग ( असम्बन्ध ) व्यवच्छेदः, अत्यन्तायोगव्यवच्छेदश्चेति त्रयोऽर्थाः । तत्र विशेष्यसङ्गतैवकारस्थले "पार्थ एव धनुर्धर इत्यत्र पार्थान्यतादात्म्यस्य व्यवच्छेदः । तथा च पार्थान्यतादात्म्याभाववद्धनुर्धरादभिन्नः पार्थः इति बोधः । विशेषणसङ्गतैवकारस्थले अयोगव्यवच्छेदः प्रतीयते । यथा "शङ्खः पाण्डुर एव" इत्यत्र शङ्खत्वावच्छेदेन पाण्डुरत्वासमवेत-

त्वाभावस्य व्यवच्छेदः । पाण्डुरत्वसम्बन्धाभावाभाववान् शङ्खः इति ततो बोधः । शङ्खस्य विभिन्नवर्णकस्याप्युपलम्भेन गौः द्विशफादिमानेवेत्याद्युदाहार्यम् । केचित्तु "अस्यैव वेदाङ्गत्वमि"त्यत्रय विशेषणसङ्गतमेवकारमुदाहरन्तो विशेष्यसङ्गतं किमुदाहरिष्यन्तीति त एव जानन्ति । विशेषणवाचकपदोत्तरं यत्र एवकारः श्रूयते तत्र एवकारस्यायोगव्यवच्छेदार्थकत्वं नतु वैपरीत्मेन श्रूयमाणस्थलेऽपि अतिप्रसङ्गात् इत्यवधेयम् ।

तृतीयोदाहरणं यथा "नीलं सरोजं भवत्येव" । अत्र क्रियासङ्गतैवकारस्थले अत्यन्तायोगव्यवच्छेदोऽर्थः । तथा च सरोजवृत्त्यभावप्रतियोगिनीलभवनाभावः । सर्वमेतन्मञ्जूषायां प्रपञ्चितम् ।

प्रहारः, आहारः, संहारः, विहारः, परिहारः, अध्याहारः, इत्यादौ एकस्यैव हृधातोः उपसर्गभेदेन अर्थभेदस्य प्रतीतेरुपसर्गाणां द्योतकतया वाचकतया वा महानुपयोगः सिध्यति ।

नामार्थे सामान्ये तद्विशेषरूपे निपातार्थे च निरूपिते नामघटककृत्तद्धितानामर्थेषु निरूपयितव्येषु प्रकृत्यर्थे प्रकारत्वादादो भावप्रत्ययो विचार्यते ।

रूढेः, अभिन्नरूपात् अव्यभिचरितसम्बन्धादन्यत्र त्वतलादिभावप्रत्ययेन प्रकारीभूतः सम्बन्धोऽभिधीयते । रूढिस्थले कृष्णसर्प इत्यत्र त्वप्रत्यये कृते सर्पविशेषजातेरवगतिर्भवति । नीलो धटइत्यत्र अभिन्नरूपस्थले गुणवचनेभ्यो मतुपो लुगिष्ट इति वचनात् नीलपदोत्तरं मतुपो लुकि गुणे गुणाश्रये च नीलशब्दः समानरूपेण प्रयुक्त उभयविधमर्थमाह । तस्मात् भावप्रत्यये नीलत्वपदेन नीलगुणः प्रतीयते न समवायसम्बन्धः । एवमेव अव्यभिचरितसम्बन्धोदाहरणं सत्तेति । तत्र सच्छब्दात् तल् प्रत्ययेन सत्ताशब्दो निष्पाद्यमानः सत्ताजातिमेव बोधयति । सद्वस्तुना सह सत्ताजातेः सम्बन्धो यद्यप्यस्ति तथापि न सम्बन्धमाह किन्तु जातिमेव । अन्यत्र राजपुरुषादौ भावप्रत्यये कृते राजसम्बन्ध एव त्वादिप्रत्ययार्थ इति निर्गलितोऽर्थः ।

मीमांसकानां मते दण्डित्वमित्यत्र सम्बन्धस्य प्रकारतया भानं न स्यात् । तन्मते सम्बन्धस्य दण्डिपदवाच्यत्वाभावेन प्रकृतिजन्यबोधे प्रकारः प्रकृत्यर्थसमवेतः तदुत्तरभावप्रत्ययार्थं इति नियमात् तदनुपपत्तेः । शब्दोऽपि क्वचित् त्वादिप्रत्ययार्थ इति मूले एव स्फुटम् ।

देवतार्थकतद्धितप्रत्ययार्थो, देवताविशिष्टं देयं द्रव्यम् । "ऐन्द्रमि"त्यादौ इन्द्रत्वेन इन्द्रस्योपस्थितावपि देवतात्वेन तदुपस्थितये शक्तिस्वीकार आवश्यकः । तथाचोक्तं तन्त्रवार्तिके—

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः । इति

देवतात्वेन बोधाय इन्द्रपदस्य तत्र निरूडा लक्षणा । तथा च देयद्रव्यमात्रे शक्तिरिति पक्षान्तरम् ।

वृत्तिमात्रे अतिरिक्तायाः शक्तेः स्वीकारात् एतत् सर्वं शास्त्रान्तररीत्या विचारितमित्याकलनीयम् ।

यथा "कपिञ्जलान् आलभेत" अत्र वहुवचनविभक्तिश्रुत्या वहूनामालम्भने प्राप्ते प्रथमोपस्थितत्वरूपप्राधान्यात् त्रित्वसंख्याया ग्रहणेन त्रयाणामेव तेषामालम्भनं शास्त्रविहितमिति निर्णीतम् । तथा अन्यसंख्यापेक्षया प्रथमोपस्थितत्वात् एकत्वसंख्याया एव समासादिवृत्तौ ग्रहणमिष्यते । अभेदो भेदाभावः, एकत्वत्वभेदस्याभावो यत्र । तथा च संख्यात्वेन एकत्वं प्रतीयते । अभेदेन अविरोधेन सत्त्वमिति । संख्याविशेषाणामविभागेनेति मूले निर्देशात् एकत्वातिरिक्तानां द्वित्वबहुत्वानामपि संख्यात्वेन प्रतीतिरिष्यते । तथा च विरोधपरिहारेण सर्वेषां संख्याविशेषाणां भानम् । परमस्मिन् कल्पे कपिञ्जलालम्भोदाहरणस्य सङ्गतिश्चिन्तनोया । तत्र प्राधान्यात् त्रित्वसंख्याया एव भानं भवति । अभेदैकत्वसंख्याघटकमेकत्वपदमपि द्वित्वादिसंख्याविशेषवोधने नानुकूल्यं भजते । तस्मादिदमपि पक्षान्तरतया नेयम् । अत्र विशेषे कृते तु सख्यान्तरमपि प्रतीयते वृत्तौ । यथा त्वत्पुत्रः युष्मत्पुत्र इति ।

यथा दूरात् दृष्टे रूपवान् इति प्रतीतिः जायते शुक्लादिरूपविशेषो नावधार्यते । तथेहापि समासादिवृत्तौ असति निमित्तविशेषे संख्यात्वेन संख्यासामान्यं गृह्यते न तु तद्विशेषरूप एकत्वादिः । तथा च राजपुरुष इत्यादौ संख्यावद् राजपदार्थ इत्येतावानर्थो भासते । भेदानां परित्यागात् संख्यात्मा स तथाविधः इत्यादि वाक्यपदीयवचनमत्रार्थे प्रमाणमिति मूले स्पष्टन् ।

उद्देश्यगता संख्या न विवक्ष्यते । यथा "ग्रहं संमर्ष्टि" इत्यत्र ग्रहपदोत्तरया अम् विभक्तया एकत्वसंख्याया अविवक्षणेन अनेकेषामपि यज्ञीयपात्राणां संमार्जनं सिध्यति । अन्यथा एकत्वसंख्याया विवक्षया एकस्यैव पात्रस्य तत्स्यात् । परमेष नियमो व्याकरणे नाश्रीयते । तथाहि—

"धातौ"रित्यत्र एकत्वविवक्षणेन एकस्मादेव कस्माचिद् धातोः प्रत्ययः स्यात् । एवं "पशुना यजेत" इत्यत्र टाविभक्त्यर्थं एकत्वं विवक्षितम् । अत एव अनेकैः पशुभिः यागो न शास्त्रविहितः । व्याकरणे तु नैष नियमः । अतएव "रदाभ्यां निष्ठा" इत्यनेन "भिन्न" इत्यादौ नकारद्वयविधानमुपपद्यते तस्मात् विधेयगता संख्या विवक्ष्यते इत्यपि नियमो नाभ्युपेयते ।

"अव्ययकृतो भावे" इतिवार्तिकात् क्त्वा तुमुन्नादि प्रत्ययाः भावे जायन्ते । भावश्च धात्वर्थः क्रिया । तथा तुमुन्नादयः धात्वर्थमेवानुवदन्ति । "समानकर्तृकयोरि"ति सूत्रे पूर्वकाल इत्युपादानात् पूर्वकालस्य प्रत्ययवाच्यता लाभेन कथं भावार्थकत्वमुक्तम् इति नाशङ्कनीयम् । समानः कर्ता ययोः धात्वर्थयोः तयोः समानकर्तृकयोरित्येवं निर्धारणे षष्ठी । पूर्वकाल इत्तत्र पूर्वः कालो यस्येति षष्ठचर्थे बहुव्रीहिः । तथा च समानकर्तृकयोः क्रिययोः मध्ये पूर्वकालसम्बन्धो यः क्रियारूपोऽर्थः तद्वाचकात् धातोः क्त्वा भवतीत्यर्थो [illegible] कर्तरि अनुशासनात् तद्रूपार्थस्य प्रसक्तौ

भावेऽर्थे विधानं पूर्वोक्तवार्तिकेन क्रियते। तस्मात् भावार्थकत्वं तेषां प्रत्ययानां नानुपपन्नम्।

समानकर्तृकत्वं समानकालिकत्वञ्च संसर्गतया यथा क्त्वादिद्योत्यं तथा सम्बन्धान्तरमपि। तात्पर्यग्राहकत्वरूपमत्रद्योतकत्वं नतु समभिव्याहृतपदनिष्ठशक्त्युद्बोधकत्वरूपम्। अत एव "पूर्वं भुङ्क्ते पश्चाद् गच्छती"त्यत्र न क्त्वाप्रत्ययः पूर्वशब्देनैव द्योत्यार्थस्योक्तत्वात्। यद्येवं पूर्वकालस्य पूर्वादिशब्दादभिधाने "पूर्वं भुक्त्वा पश्चाद् व्रजती"ति प्रयोगानुपपत्तिः। भाष्यकृतैव समाहितत्वात्। तथा च भाष्यम् नैतत् क्रिययोः पौर्वकाल्यं, किं तर्हि, कर्तुः पौर्वकाल्यमेतत्। पूर्वमसौ भुक्त्वा अन्येभ्यो व्रजितृभ्यः पश्चात् व्रजतीति। अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वा अन्येभ्यो व्रजितृभ्यः पश्चात्, व्रजतीत्यर्थः। "विभाषा ग्रह" इत्यादिना क्त्वाप्रत्ययः।

अन्येतु पूर्वकाल इत्यत्र पूर्वश्चासौ काल इति कर्मधारयं मन्यन्ते। तथा च पूर्वकालविशिष्टार्थवृत्ति र्यो धातुः तस्मात् क्त्वा। क्त्वार्थः पूर्वकालः धात्वर्थे प्रकारः। अतएव समानकर्तृकत्वेन पूर्वं भुङ्क्ते पश्चाद् व्रजतीत्यत्र क्त्वाप्रत्ययमाशङ्क्य स्वशब्देनोपात्तत्वान्नेति समाहितम्। अन्यथा पूर्वकालसम्बन्धिनः क्त्वाप्रत्ययार्थत्वे पूर्वशब्देन पूर्वकालमात्रस्याभिधानात् विशेष्यार्थाभिधानविषयकस्य "उक्तार्थानामि"ति न्यायस्याप्राप्त्या भाष्यासङ्गत्यापत्तेः। कर्मधारयाभ्युपगमे "पूर्वकाले" इत्यस्य स्थाने भूते इति वक्तव्यम् इति नोद्भावनीयम्। पर्यायवाचकशब्दानां लाघवगौरवचर्चाया अनादरात्। अत एव "भूतपूर्वेचरडि"ति सूत्रेऽपि भूते इति किन्नोक्तमिति यदि स्यात् शङ्का तदा साऽपि समाहिता। भूतत्वेन रूपेण बोधानंनुभवाच्च उभयत्र भूते इति नोक्तम्। भूतपूर्वे इत्यत्र तु पूर्वनिपातबोधकत्वेनापि तदुपादानस्य वक्तुं शक्यत्वात्।

यदि क्त्वा प्रत्यये सर्वत्र समानकर्तृकत्वमावश्यकम् तदा—

अवजानासि मां यस्माद् अतस्ते न भविष्यति।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा॥ ( रघु० १ स० ७७ )

अत्र मत्प्रसूतिमनाराध्य प्रजा न भविष्यीत्यर्थस्य सद्भाभावात् आराधनक्रियाया कर्ता अन्यः भवनक्रियायाश्चान्य इति विभिन्नकर्तृकत्वेन क्त्वाप्रत्ययो न स्यात्। तथैव एवं विचिन्त्य मनः प्रसीदतीत्यादावपि क्त्वाप्रत्यानुपपत्तिरिति शङ्कायां अयं समाधिः। स्थित्यादिक्रियामध्याहृत्य, अनाराध्य स्थितस्य एवं चिन्तयित्वा स्थितस्य इत्येवं कल्पयित्वा दोषः परिहरणीयः इत्यलम्।

पदकदम्बश्रवणानन्तरं विदितपदतदर्थसङ्गतिकस्य तदर्थविषया बुद्धिरुदेतीति सर्वसम्मतम्। परं तद्बुद्धेरुदये किं निमित्तमित्यत्र विवदन्ते वादिनः।

तत्र वैयाकरणाः अखण्डं वाक्यस्फोटं सिद्धान्तरूपेण शाब्दबोधकारणं निश्चिन्वन्ति। तदुक्तम्—

पदे वर्णा न विद्यन्ते वर्णेष्ववयवा न च।
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन॥

वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः ।

ननु वर्णानां तत्समूहभूतपदानाञ्चानुभवात् तद्व्यतिरिक्तस्य चाननुभवात् कथं तदतिरिक्तं वाक्यमिति नाशङ्कनीयम् । पदमेकं वाक्यमेकमित्येकत्वावगाहिनी प्रतीतिरेकस्य वस्तुतः उपारोहादेव जायमाना पदस्य वाक्यस्यचाखण्डतां प्रमाणयति । वर्णान् पदानि वा विषयीकृत्य नैषा बुद्धिरुपपद्यते । तेषां बहुत्वेन एकत्वप्रतीतेर्व्याकोपप्रसङ्गात् । एकत्वबहुत्वयोरेकत्र पर्याप्तत्वस्यादृष्टचरत्वात् । तस्मात् वाक्यस्फोटोऽखण्डोऽङ्गीक्रियते ।

एकार्थबोधजनकत्वेन पदैकत्वादिव्यवस्थापनन्तु अज्ञातार्थपदश्रवणेऽपि एकं पदमित्यनुभवेन पराहतम् ।

वर्णसंमूहस्य पदस्य पदसमूहस्य वाक्यस्य च वाचकत्वं सम्भावयितुमपि न शक्यते । तथाहि—समस्ता वर्णा वाचकाः प्रत्येकं वा ? यदि प्रत्येकं वर्णा वाचकाः तर्हि पूर्वोच्चारितैः वर्णैरभिमतार्थप्रतीतिसम्भवे उत्तरोत्तरवर्णोच्चारणवैयर्थ्यापातात् ।

अथ समस्ता वर्णाः वाचका इति मन्यसे तदा वर्णानां क्रमेणोत्पत्तिविनाशशालिनां युगपदवस्थानासम्भवेन तेषां समूहस्यैवानिष्पत्तेरिति समस्तानां वाचकत्वकथा वृथा ।

यद्येवं मन्यसे—पूर्वपूर्ववर्णानुगृहीतश्चरमो वर्णो बोधं जनयिष्यति । न च पूर्वं पूर्ववर्णानां वैयर्थ्यमपि, चरमवर्णानुग्रहाय तेषामावश्यकत्वात् ।

अत्रेदं वक्तव्यम्—पूर्वपूर्ववर्णानामुत्तरोत्तरवर्णे कीदृशोऽनुग्रहः । किं पूर्वपूर्ववर्णानां चरमवर्णं प्रति जनकत्वम् किं वा अर्थावबोधे सहकारित्वम्। न प्रथमः । वर्णस्य वर्णान्तरोत्पत्तिं प्रति जनकत्वासम्भवात् । न द्वितीयः, अविद्यमानानां वर्णानामर्थबोधोत्पत्तिं प्रति सहकारित्वानुपपत्तेः । विद्यमान एव पदार्थः कस्यचिद् उत्पत्तौ सहकारी भवितुमर्हति नाविद्यमानः । तथाच प्रत्येकस्य समस्तस्य च वाचकत्वं खपुष्पायितम् । अतो वाक्यस्फोटो मन्तव्यः ।

अथात्र कश्चित् शङ्कते—अभिव्यक्तः स्फोटोऽर्थं प्रत्याययति उत अनभिव्यक्तः । यदि अनभिव्यक्त एव अर्थबोधजनकस्तदा स्फोटस्य नित्यत्वात् सर्वदा बोधप्रसङ्गात् सति कारणे कार्यावश्यंभावात् । अथाभिव्यक्तोऽर्थबोधकः इति मतम्, तदा किं प्रत्येकस्मात् वर्णात् स्फोटस्याभिव्यक्तिः अथवा तत्समूहात् । नाद्यः । आद्येन वर्णेन स्फोटाभिव्यक्त्या वर्णान्तरोच्चारणवैयर्थ्यात् । यदि द्वितीयो विकल्प आश्रीयते तदा वर्णानां क्षणप्रध्वंसितया विनाशात् कथमप्येकदाऽवस्थानासम्भवेन समूहस्य स्फोटाभिव्यञ्जकत्वेनेष्टस्य दूरोत्सारितत्वात् । तथाच अतिदरिद्रदम्पत्योर्वसनमिवैकेनापकृष्यमाणमपरं परिहरतीतिन्यायोऽत्र सुतरामवकाशमासादयति ।

तथाचोक्तं श्लोकवार्तिके—

यस्यानवयवः स्फोटो व्यज्यते वर्णबुद्धिभिः ।
सोऽपि पर्यनुयोगेन नैकेनापि वियुज्यते ॥

अत्राभिधीयते—प्रथमवर्णोच्चारणेन व्यक्तस्यापि स्फोटस्य स्फुटतरस्फुटतम-बोधोपपत्तये द्वितीयादिवर्णानामुच्चारणस्य सार्थक्यात् । तद्यथा रत्नपरीक्षकाः प्रथम-दर्शने सर्वथा रत्नं न परिचिन्वन्ति । तस्मात् पौनः पुन्येन परीक्षन्ते । ततः परमेव विशुद्धमविशुद्धं वेति निर्णयन्ति । तथैवात्रापि विलोडनीयम् । तदुक्तम्—

नादैराहितबीजायामन्त्येन ध्वनिना सह ।
आवृत्तपरिपाकायां बुद्धौ शब्दोऽवधार्यते ॥

अयमाशयोऽन्तिमेन ध्वनिना स्फोटात्मकशब्दस्य स्फुटपरिच्छेदानुकूला स्फोटा-भिव्यक्तिर्भवति । ततश्चान्तिमो ध्वनिः स्फुटतरस्फुरतमावधारणहेतूनां सहकारेण स्फोटात्मकशब्दपरिच्छेदानुकूलां योग्यतामादधानः स्वधर्मरूषितं स्फोटरूपमर्थबोधक-मभिव्यनक्ति । तथा च पूर्वपूर्ववर्णानुभवजन्यस्फुटस्फुटतराभिव्यक्तिसचिवोऽन्तिमो ध्वनिस्तद्रूपो वर्णो वा स्फुटतमं स्फोटं द्योतयतीति कोऽत्र विस्मयः ।

यद्येवं कश्चिन्मन्येत—पूर्वपूर्ववर्णानुभवजन्यसंस्कारसहितोऽन्तिमो वर्णोऽर्थं बोध-यिष्यतीति नापूर्वस्फोटकल्पना ज्यायसी ।

तत्रेदं प्रष्टव्यम्—कोऽत्र संस्कारः ? किं स्मृतिकारणीभूतः उतान्यः प्रोक्षणादि प्रभवो व्रीह्यादिनिष्ठ इव इष्यते । नाद्यः, वासनारूपः स्मृतिहेतुः संस्कारः स्मरणेन फलेन कल्प्यमानशरीरो वर्णान्तरेणार्थबोधजनने सहकारीति कल्पना न शोभते, स्वभावभेदस्यायुक्तत्वात् । योहि संस्कारः यद्विषयकानुभवेन जायते, स स्व-जनकस्य अनुभवस्य विषये धियमादधातीति तस्य स्वभावः । विपरीतकल्पनेऽन्य-विषयकानुभवेन जातः संस्कारो विषयान्तरेऽपि धियमुत्पादयेत् । तथा च पूर्वानु-भूतवर्णाहितसंस्कारः पूर्ववर्णान् स्मारयिष्यति न वर्णान्तरेण बोधे जनयितव्ये साहाय्यमाचरिष्यति । एवमन्तिमस्य वर्णस्य पूर्ववर्णानां साहाय्येन बोधकत्वे प्राति-पदिकसंज्ञापत्तिरपि "अर्थवत्सूत्रेण सुवचा स्यात् ।

न द्वितीयोऽपि, क्रमिकाणां वर्णानामेकस्मिन् काले स्थितेरसम्भवेन सम्भूय संस्कारस्यैकस्योत्पादने सामर्थ्याभावात् ।

यदि चेदं भवतामभिमतं यत् पूर्वपूर्ववर्णैः क्रमेण उत्पन्नैः संस्काराः यथाक्रम-मुत्पाद्यन्ते, ते च जायमानाः संस्काराः स्थिराश्चरमवर्णस्यार्थबोधने सहायका भविष्यन्तीति चेत् । अहो स्वपक्षसाधनपक्षपातः । एकस्यापि तादृशसंस्कारस्या-प्रामाणिकत्वेन नानासंस्कारकल्पनाया दूरापास्तत्वात् ।

"दर्शपूर्णमासाभ्यां यजेत" इति श्रुत्या स्वर्गफलाय बोधितस्य यागस्याङ्गभूता आग्नेयादयः समिदादयो भिन्नकालभाविनो यथाऽवान्तरापूर्वद्वारा परमापूर्वं जनयित्वा सफला भवन्ति, तथेहापि अवान्तरं संस्कारं क्रमभाविनो वर्णाः जनयिष्यन्ति । ततश्चैकः संस्कारः उत्पत्स्यते इति तव मनोरथमात्रम् ।

स्वतः प्रमाणभूतायाः श्रुतेः प्रामाण्यस्य निरस्तविषया विभिन्नकालानुवर्तिनां

यागानामङ्गभूतानामवान्तरापूर्वजननद्वारा परमापूर्वजनकत्वेऽपि इहैकगोचरानुभवादेवार्थप्रतीत्युपपत्तेरप्रामाणिकानां नानासंस्काराणां कल्पने मानाभावात् ।

किञ्च एकैकवर्णानुभवजन्यसंस्काराः प्रतिवर्णविषयाः अपरमेकं संस्कारमुत्पादयितुं न प्रभवन्ति, संस्कारोत्पादं विनाऽपि स्मृतिजनकतया तेषां चारितार्थ्यात् ।

एवमेव स्मृतिसमारूढाः वर्णा बोधं जनयिष्यन्तीति मतप्ययुक्तम् । अनुभवक्रमेण स्मृतिरित्येवन्नियमाभावात् । पूर्वानुभूतस्य पश्चात् पश्चादनुभूतस्य पूर्वं स्मृतिदर्शनात् । तथाच विपरीतक्रमेण स्मरणे सरोरसः नदीदीन इत्यादौ विपरीतार्थबोधप्रसङ्गो वज्रलेपायितः । इत्यलं बहूक्त्या ।

पूर्वोक्ताभिर्युक्तिभिः सिद्धः स्फोटो नित्यो निरवयवः शब्दब्रह्मापरनामधेयः जगदुपादानकारणतया व्यवस्थितः । तदाह भर्तृहरिः—

अनादिनिधनं ब्रह्म शब्दतत्त्वं यदक्षरम्
विवर्ततेऽर्थभावेन प्रक्रिया जगतो यतः ॥

तस्मिन्नेव शब्दब्रह्मणि ध्वनिधर्मानध्यस्य लोका एकमपि भिन्नरूपतया अनुभवन्ति । तस्मात् तत्र वर्णभेदप्रतीतिरध्यासमूलैव ।

मीमांसकास्तु वर्णानां नित्यत्वं मन्यमाना नातिरिक्तं स्फोटं वाचकत्वेन कल्पयन्ति । गकारम् उच्चारयामि नतु उत्पादयामीत्यनुभवसमर्थिता स एवायं गकार इत्यादि प्रतीतिराञ्जस्येन उपपद्यते एतन्मते । अत एव यथा कश्चित् कुम्भकारकुलं गत्वा आह—कुरु घटं कार्यमनेन करिष्यामि तथा वैयाकरणकुलं गत्वा न कश्चिदाह कुरु शब्दान् प्रयोक्ष्ये इत्याशयकं महाभाष्यमपि तत्पक्षे अनुकूलम् । पदवाक्ययोरेकत्वप्रतीतिस्तु सेनावनादाविव समर्थनीया ।

वस्तुतो वर्णानां सर्वेषां नित्यत्वं सदोपलब्धिप्रसङ्गादिबाधितत्वादप्रामाणिकम् । बहूनां तेषां नित्यत्वकल्पनापेक्षया एकस्य स्फोटात्मकशब्दस्य नित्यत्वं ध्वनिधर्माणाञ्चारोपात् प्रतीते विभिन्नरूपत्वमित्येतत्कल्पनायां लाघवात् । वर्णानां नित्यानित्यत्व विचारः शास्त्रान्तरे स्फुटः इति नेह वितन्यते । तस्मात् प्रकाशात्मकं शब्दब्रह्मैवानाद्यविद्यावासनोपप्लवमानभेदमर्थभावेन विवर्तते, नतु वाचकात् पृथग्भूतं वाच्यं किञ्चिदप्यस्ति । यत् किञ्चित् प्रतिभासते तत्सर्वं काल्पनिकमाविद्यिकम् । तत्र सर्वत्र शब्द एव तत्त्वं, सर्वत्र वाग्रूपताया अनपायात् । तदुक्तम्—

वाग्रूपता चेदुत्क्रामेत् अवबोधस्य शाश्वती ।
न प्रकाशः प्रकाशेत साहि प्रत्यवमर्शिनी ॥ वाक्य प०

यथा प्रकाशकत्वमग्नेः स्वरूपं यथा वा चैतन्यमन्तर्यामिणः तथा सर्वं ज्ञानमपि वाग्रूपताऽनुगतम् । याप्यसञ्चेतिताऽवस्था सुषुप्तिरूपा तस्यामप्यवस्थायां सूक्ष्मो वाग्धर्मोऽस्यावर्तत इत्यादि स्वोपज्ञव्याख्यायां स्पष्टम् । अवबोधस्य सार्वकालिकी वाग्रूपता वाक्तत्त्वरूषितता उत्क्रामेत् उद्गच्छेत् तदा प्रकाशो ज्ञानं न प्रकाशेत ।

अर्थवदान्तरं ज्ञानं परस्याज्ञेयं प्रकाशकस्य शब्दस्याभावात् अग्राह्यमेव परस्य स्यात्। यस्मात् सा वागरूपता प्रत्यवमर्शिनी शब्देन ज्ञानाभिलाप एवात्र प्रत्यवमर्शः स अस्या अस्तीति प्रत्यवमर्शिनी। शब्दोपग्राहितां विना न ज्ञानस्याभिलापः।

अर्थक्रियासु वाक् सर्वान् समीहयति देहिनः।
तदुत्क्रान्ते विसंज्ञोऽयं दृश्यते काष्ठकुडचवत्॥
आम्नाता सर्वविद्यासु वागेवप्रकृतिः परा।

इत्यनेन पराया वाच एव विवर्तः

अविभागा तु पश्यन्ती सर्वतः संहृतक्रमा।
स्वरूपज्योतिरेवान्तः सूक्ष्मा वागनपायिनी॥

ग्राह्यग्राहकभेदक्रमरहिता स्वप्रकाशा संविद्रूपा वाक् पश्यन्तीत्युच्यते। मध्यमावैखरीभेदयोर्मेलनेन त्रैविध्यम् लभ्यतेभर्तृहरिमते। नागेशभट्टमते परापश्यन्ती मध्यमा, वैखरीतिभेदनिर्देशात् चातुर्विध्यं प्रतीयते। "वाचं धेनुमुपासीत" वाग्वै समुद्रो न वैवाक् क्षीयते न समुद्रः क्षीयते, यद्वै वाङ्नाभविष्यत् न धर्मो नाधर्मो व्यज्ञपयिष्यत्"। "न सत्यं नानृतं वागेवैतत्सत्यं विज्ञापयति वाचमुपास्व," इत्यादि प्रमाणानां वहुत्वाद् वाचः शब्दब्रह्मणोजगदुपादानत्वं सिद्धम्।

तदेवं सिद्धस्य स्फोटस्य अष्टौ भेदाः। तेषु वाक्यस्फोटो मुख्यः। इत्यलं विस्तरेण।

व्याकरणशास्त्रार्णवतलस्पर्शिप्रतिभस्य न्यायमीमांसादिशास्त्रावगाहनलब्धवैदुष्य प्रकर्षस्यास्य ग्रन्थकर्तुः श्रीकौण्डभट्टस्य जीवनवृत्तं नातितिरोहितम्। जीवनवृत्तनिर्देश आधुनिकी मर्यादा। यश्च न निर्दिशति स मर्यादामतिशेते इति मन्यन्ते आधुनिकाः शिक्षाविदः।

ग्रन्थेऽस्मिन् भूषणसारे कारिकाभागः श्रीमता वैयाकरणमूर्धन्येन विश्रुतयशोराशिना श्रीभट्टोजिदीक्षितेन विरचितः। तासां कारिकाणां व्याख्यानं भाष्यवाक्यपदीयादिवचनोपोद्वलितं गम्भीराशयं व्याकरणसिद्धान्तबोधकं कौण्डभट्टकृतं केवलमुपलभ्यते।

अस्य ग्रन्थस्य प्रारम्भे "प्रणम्य पितरं रङ्गोजिभट्टाभिधमित्युक्त्या एतस्य रङ्गोजिभट्टनामा पिता इति निरचिनवम्। भ्रातृव्यतया श्रीभट्टोजिदीक्षितं निरदिशत् तत्रैव ग्रन्थारम्भे। तेन च भट्टोजिदीक्षितस्य भ्रातुष्पुत्रोऽयम् इति प्रत्येमि। श्रीभट्टोजिदीक्षितस्य समयः १६८० तमो वैक्रमाब्दो निर्धारितः। एतत्समानकालः पण्डितराजो जगन्नाथः। भट्टोजिदीक्षितः कदाचित् पण्डितराजं सभायां म्लेच्छपदेन संबोधितवान्। जनसंसदि तादृशं कटुवचनं श्रुत्वा पण्डितराजः अग्लासीत्। ग्लायन्नसौ दण्डादिप्रहारं दुर्वचनं वा प्रतीकारोपायं विगणय्य दीक्षितेन विरचितां "मनोरमां सिद्धान्तकौमुदीटीकां यत्र तत्र दूषयामास। मनोरमाकुचमर्दिनीति नाम्ना प्रणीते ग्रन्थे च तानि दूषणानि निर्दिश्य विदुषां समक्षमुपस्थाप्य स्वस्य म्लेच्छतामनया

दिशा प्रासाधयत् । यथा लोके यः परकीयां मनोरमां स्त्रियं तथा करोति सः म्लेच्छ एव इत्येवं तद्वचनं सत्यापितवान् पण्डितराजः । तथा च अनयोरेककालकत्वं सिध्यति ।

"दिल्लीवल्लभपाणिपल्लवतले नीतं नवीनं वयः" । इति पण्डितराजोक्त्यनुसारेण दिल्लीश्वरस्य सभायामेतस्य स्थितिरासीत् दिल्लीश्वरः तदानीं शाहजहान आसीत् इति इतिहासविदां मतम् । अयं राजसिंहासनं १६८४ शत तमे विक्रम वत्सरे आरुरोह । अयमेव कालः पण्डितराजस्य तथा दीक्षितस्य च निश्चीयते । दीक्षितस्य भ्रातृष्पुत्राणां श्रीकौण्डभट्टानां समयः पूर्वापेक्षया स्वल्पीपानेव अधिकः सम्भाव्यते । तथाच विक्रमस्य सप्तदशशताब्दयाः अन्ते एवास्य स्थितिकालः इत्यवलेशेन वक्तुं शक्यते ।

द्वैतध्वान्तनिवारणादिफलिकां पुंभाववाग्देवताभिति ग्रन्थादावुल्लेखात् अद्वैतमतावलम्बित्वं पितुर्गम्यते । विश्वस्य मिथ्यात्वात् हरिहरयोः सत्यत्वें द्वेतापत्तिरन्यतरस्य सत्यत्वे प्रचण्डकोलाहल इति भिया द्वयोरभेदं मङ्गलश्लोकेन दर्शयित्वा शैववैष्णवयोः परस्परं विरोधं परिहरन् वंशानुगतमद्वैततत्त्वमिष्टं श्रद्दधे ।

महाराष्ट्रीयो दाक्षिणात्यो वेति अन्यतरसाधकदृढतरप्रमाणानुपलम्भात् न निरचैषम् । प्रमाणेन यथाकथञ्चित् कालनिर्णये कृते न काचिद् विसङ्गतिरुपजायते । इत्यस्तु यथा तथा । देशविशेषनिर्धारणन्तु औत्कण्ठ्यमात्रमवसादयति । नातः परं प्रयोजनमाकलयामि । भारतीयकल्पनाव्यतिरेकेण प्रान्तीयभावना न साधीयसी कल्पते इति समेषामक्षिसमक्षमतो न विशिष्य वचनार्हम् ।

एभिः पण्डितमण्डनैरेते ग्रन्था निरमायिषत ।—वैयाकरणभूषणसारः वृहद्वैयाकरणभूषणम्, तर्कप्रदीपः, न्यायपदार्थदीपिका, वैयाकरणसिद्धान्तदीपिका, स्फोटवादश्च । तत्र तर्कप्रदीपः सिद्धान्तदीपिका स्फोटवादश्च इति ग्रन्थत्रयी न प्राकाश्यं नीता ।

अस्य भूषणसारस्य सारौ निगूढतया तत्त्वतोऽवगन्तुमशक्य इति कृत्वा सारल्येन स्फुठार्थावबोधाय बहुभिः पण्डितैः विविधा व्याख्या व्यरच्यत । यथा हरिवल्लभकृता दर्पणटीका, श्रीहरिशास्त्रिकृता काशिका भैरवमिश्रकृता परीक्षा गोपालदेवकृता कान्तिः रुद्रनाथकृता विवृतिः श्रीकृष्णमित्रकृता भूषणव्याख्या पञ्चोलीकृता प्रभा इत्याद्याः सन्ति । परमेतासु न्यायमीमांसादिविचारमांसला विस्तृताभिप्रायप्रकाशिका दर्पणसभा नान्याः टीकाः समुट्टङ्कन्ते । अतएवात्र मूलेन सह दर्पणः सन्निवेशितः ।

दर्पणकारो विद्वन्मूर्धन्यो हरिवल्लभः श्रीवल्लभस्य पुत्रः कूर्मगिरिवासी आसीत् । अस्य स्थितिः १८०० अष्टादश शताब्द्याः आरम्भे । १८५० तमे वैक्रमाब्दे निर्मितायां काशिकायां यत्र कुत्रचित् स्थले दर्पणकारस्य मतमुपस्थापितं दृश्यते । अत एव दर्पणकारस्य उक्तः समयो निश्चीयते ।

अस्य सर्वतोमुखी प्रतिभा न्यायमीमांसादिपदार्थविलोडनप्रसङ्गे स्फुटतरं प्रतिभाति। श्लाघनीयः एतस्य वैदुष्यप्रकर्षः। अत एव टीकान्तरमतिशय्य वर्तते दर्पण इति नातिशयितं वचः।

हिन्दीभाषाविदामपि भूषणसाररसास्वाद आञ्जस्येन स्यादिति धिया हिंन्दीभाषयाऽनूद्याऽपि विषमस्थलग्रन्थग्रन्थिः न श्लथीकृत इत्यवगत्य हिन्दीभाष्यमारचय्य तत्र शैथिल्यभानायि। आशास्यते च उभयत्र विषयप्रकाशनप्रयासेन सारग्रहणे सौविध्यं भवेदिति। क्वचित् केषाञ्चित् पदार्थानां पौनः पुन्येन बोधनायासो मे स्फुटीकरणायैवेति न दोषाय भंस्यन्ते विद्वांसः।

अध्ययनाध्यापने काठिन्यं विचिन्त्य पूर्वमेव निरचैषं यत् हिन्दीभाषया यद्यस्य विवरणं भवेत्तदाऽन्तेवासिनां सुखेन विषयो हृदयङ्गमो भवेत्। ततश्च यथासमयं प्रोद्बुद्धसंस्कारेण मया तथा विवरीतुमुपाक्रमि। जाते हि विवरणे प्रकाशनचिन्ता मामतूतुदत्। अस्मिन्नेवावसरे मम भूतपूर्वान्तेवासिना विविधविधेयावधाननिपुणेन सदाचारविचारनिष्ठेन स्व-श्रीदेवनारायणझाशर्मणा प्रबोधितः प्रवर्तितश्चाऽहं प्रकाशनभारमेतस्य चौखम्बा विश्वभारतीसञ्चालकाय श्रीमते मोहनदासगुप्ताय प्रायच्छम्। तेन च प्रकाशकमहोदयेन त्वरितमेव मुद्रणकार्यं प्रारप्स्यते इत्याश्वास्य प्रकाशनकाठिन्यं दूरमकारि। परं पाटलिपुत्रस्थोऽहं प्रूफसंशोधनविधिं कथं विधास्यामीति विषमस्थितौ मीमांसापारदृश्वा विद्वच्चक्रचूडामणिः स्व० पं० श्री अ० सुब्रह्मण्य शास्त्री भाग्यवशात् स्मृतिपथमारूढः कार्यमिदं साधुविधास्यतीति मनसि निरधारयम्। यथासमयं सफलमनोरथश्चाभवम्। अयञ्च विद्वन्मूर्धन्यो मम पितृचरणेभ्यो वेदान्तादिशास्त्रं सश्रममधीतवान्। अत आवयोः स्नेहपूर्णः सद्भावः पूर्वत एवासीत्।

सुरेषु विघ्नैकपरेषु को नरः।
करस्थमप्यर्थमवाप्तुमीश्वरः ॥

इति नैषधीयपद्यानुसारेण प्रकाशकमहोदयो बहुशः प्रेरणयापि मन्थरामेव गतिमवालम्बत। श्रीदेवनारायणझाः स्वल्पे एव वयसि अस्मान् विहाय स्वर्लोकं प्रतस्थे। एतस्य न्यायप्रियस्य हितैषिणः परलोकगमनेन अपूरणीयां क्षतिमनुभूय "मरणं प्रकृतिः शरीरिणां विकृतिर्जीवितमुच्यते बुधैरित्यादिवचनैरात्मनि सन्तोषं यावदावहामि "तावद् द्वितीयं समुपस्थितं मे" इत्यपरं श्रीशास्त्रिमहोदयाः शिवसायुज्यं प्राप्ताः इति अनभ्रे वज्रपातसमं वृत्तमश्रौषम्। प्रतीकारानर्हे विधिविधेये किमस्माभिः शक्यं कर्तुमिति शनैःशनैरात्मानं प्रबोध्य अनाकुलीभावमासादितवान्। कीर्तिमात्रशरीरयोस्तयोः स्मरणमेव आत्मनः कृत्यशेषं मन्ये।

धात्वर्थनिर्णयस्य कतिचित् पत्रपुटकानि शास्त्रिमहोदयैरक्षिगोचरीकृतानि। ततः परं संशोधनव्यवस्था मुद्रणालयविहिता न सन्तोषावहा। अथ कालान्तरे ममात्मजस्य डा० श्रीवाचस्पतिद्विवेदिनः वाराणसेयसंस्कृतविश्वविद्यालये शिक्षाशास्त्रविभागे

उपाध्यक्ष पदे नियुक्तिर्जाता। अतो निवासादिसौविध्येन ममापि काशीवासाभिलाषः पूर्णतामगात्। ततः परं संशोधनभारे मयेव उह्यमाने पुस्तकप्रकाशनं प्रारभत।

प्रकाशनेऽधिकविलम्वभीत्या, विघ्नैः पुनः पुनरपि प्रतिहन्यमानतया च क्वचित् विषयं विशेषेण स्फुटीकर्तुं वच्छन्नपि तथाकर्तुं नापारयम्। विद्वज्जनानां मनसि यदि मनागपि तोषमाधास्यति तदा संस्करणान्तरे तथा कर्तुं यतिष्ये।

प्रकाशने विलम्बातिशयं विभाव्य विषीदन्नपि प्रकाशितमेतत्प्रकाशकमहोदयैरिति ज्ञात्वा प्रसीदामि शुभाशीर्वचनैः तं योजयामि च। एभिः सह पारम्पर्यक्रमागतः स्नेहानुबन्धी परिचयो दिने दिने वर्धिष्यते इति विश्वसिमि।

प्रकाशने योग्यप्रतिलिपेः सम्पादकाय पं० श्रीकेशवप्रपन्नशर्मणे प्रयागस्थविद्यापीठे प्राध्यापकपदमलङ्कृतवते मम भू० पू० च्छात्राय शुभाशीर्वचनं हृदयेन प्रयच्छामि। अयं सुन्दराक्षरेण प्रतिलिपिं सम्पाद्य प्रकाशने सौविध्यं व्यधात्।

पं० श्रीमहाप्रभुलालगोस्वामी तुलनात्मकधर्मदर्शनविभागाध्यक्षः समये समये सत्परामर्शेन मां प्रोत्साहितवान् इति तदीयोपकारभावं स्मरन् शुभाशिषा तं संयोजयामि।

मदीय आयुष्मान् पौत्रः श्रीश्यामकुमारद्विवेदी शुभाशिषा हार्दिकेन योज्यते। यः समये समये प्रकाशनानुकूलं विधिं प्रकाशकस्य सविधे उपस्थाप्य साहाय्यं कृतवान्।

अन्ते च भगवन्तमनाथनाथं श्रीविश्वनाथं मनसा स्मरामि। यस्य भगवतः प्रसादात् कार्यमिदं पूर्णतां प्राप्तम्।

ममानवधानतया अक्षरयोजकानां प्रमादाद् वा जाताः त्रुटीः "सर्वथा व्यवहर्तव्ये कुतो ह्यवचनीयतै"तिपद्यमनुसरन्तो भवन्तः गुणैकपक्षपातिनो निर्मत्सरा विद्वांसः क्षाम्यन्तु इति प्रार्थयते।

आषाढ कृष्णस्य एकादशी
२०४२ वि० सं०

विदुषामाश्रवः—
ब्रह्मदत्त द्विवेदी

# अथ भूषणसारस्थप्रकरणानामनुक्रमणिका



इति भूषणसारस्थप्रकरणानामनुक्रमणिका।



# वैयाकरणभूषणसारस्य सटीकस्य विषयानुक्रमणिका

इति धात्वर्थनिर्णयः ।

**अथ लकारार्थनिर्णयः ।**

इति सुवर्थनिर्णयः ।

**अथ नामार्थनिर्णयः ।**

## अथ समासशक्तिनिर्णयः।



## अथ शक्तिनिर्णयः।

इति शक्तिनिर्णयः ।

**अथ नञर्थनिर्णयः ।**



इति नञर्थनिर्णयः ।

**अथ निपातार्थनिर्णयः ।**

# अथ भूषणसारस्थमूलकारिकासङ्कलनम् ।

फणिभाषितभाष्याऽब्धेः शब्दकौस्तुभः उद्धृतः ।
तत्र निर्णीत एवार्थः सङ्क्षेपेणेह कथ्यते ॥ १ ॥
फलव्यापारयोर्धातुराश्रये तु तिङः स्मृताः ।
फले प्रधानं व्यापारस्तिङर्थस्तु विशेषणम् ॥ २ ॥
फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः ।
व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयाऽन्वयम् ॥ ३ ॥
उत्सर्गोऽयं कर्मकर्तृविषयादौ विपर्ययात् ।
तस्माद् यथोचितं ज्ञेयं द्योतकत्वं यथागमम् ॥ ४ ॥
व्यापारो भावना सैवोत्पादना सैव च क्रिया ।
कृञोऽकर्म्मकतापत्तेर्नहि यत्नोऽर्थ इष्यते ॥ ५ ॥
किन्तूत्पादनमेवातः कर्म्मवत्स्याद्यगाद्यपि ।
कर्म्मकर्त्तर्य्यन्यथा तु न भवेत्तद् दृशेरिव ॥ ६ ॥
निवर्त्त्ये च विकार्य्ये च कर्मवद्भाव इष्यते ।
नतु प्राप्ये कर्मणीति सिद्धान्तोऽत्र व्यवस्थितः ॥ ७ ॥
तस्मात् करोतिर्धातोः स्याद् व्याख्यानं, नत्वसौ तिङाम् ।
पक्वान् कृतवान् पाकं किं कृतं पक्वमित्यपि ॥ ८ ॥
किं कार्य्यं पचनीयं चेत्यादि दृष्टं हि कृत्स्वपि ।
किञ्च क्रियावाचकतां विना धातुत्वमेव न ॥ ९ ॥
सर्व्वनामाव्ययादीनां यावादीनां प्रसङ्गतः ।
नहि तत्पाठमात्रेण युक्तमित्याकरे स्फुटम् ॥ १० ॥
धात्वर्थत्वं क्रियात्वञ्चेद्धातुत्वं च क्रियार्थता ।
अन्योऽन्यसंश्रयः स्पष्टस्तस्मादस्तु यथाकरम् ॥ ११ ॥
अस्त्यादावपि धर्म्यंशे भाव्येऽस्त्येव हि भावना ।
अन्यत्राशेषभावात्तु सा तथा न प्रकाशते ॥ १२ ॥
फलव्यापारयोरेकनिष्ठतायामकर्म्मकः ।
धातुस्तयोर्धर्म्मिभेदे सकर्म्मक उदाहृतः ॥ १३ ॥
आख्यातशब्दे भागाभ्यां साध्यसाधनरूपता ।
प्रकल्पिता यथाशास्त्रे स घञादिष्वपि क्रमः ॥ १४ ॥
साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना ।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥ १५ ॥

सम्बोधनान्तं कृत्वोऽर्थाः कारकं प्रथमो वतिः ।
धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनञ् ॥ १६ ॥
तथा यस्य च भावेन षष्ठी चेत्युदितं द्वयम् ।
साधुत्वमष्टकस्यास्य क्रिययैवावधार्य्यताम् ॥ १७ ॥

यदि पक्षेऽपि वत्यर्थः कारकञ्च नञादिषु ।
अन्वेति त्यज्यतां तर्हि चतुर्थ्याः स्पृहिकल्पना ॥ १८ ॥
अविग्रहा गतादिस्था यथा ग्रामादिकर्म्मभिः ।
क्रियासम्बध्यते तद्वत्कृतपूर्व्यादिषु स्थिता ॥ १९ ॥

कृत्वोऽर्थाः क्त्वातुमुन्वत्स्युरिति चेत् सन्ति हि क्वचित् ।
अतिप्रसङ्गो नोद्भाव्योऽभिधानस्य समाश्रयात् ॥ २० ॥

भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम् ।
साधुत्वं तदभावेऽपि बोधो नेह निवार्य्यते ॥ २१ ॥
वर्त्तमाने परोऽक्षे श्वो भाविन्यर्थे भविष्यति ।
विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः ॥ २२ ॥

ह्योभूते प्रेरणादौ च भूतमात्रे लङादयः ।
सत्यां क्रियातिपत्तौ च भूते भाविनि लृङ् स्मृतः ॥ २३ ॥
आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा ।
यथायथं विभक्त्यर्थाः सुपां कर्मेति भाष्यतः ॥ २४ ॥

एकं द्विकं त्रिकं चाथ चतुष्कं पञ्चकं तथा ।
नामाऽर्थ इति सर्व्वेऽमी पक्षाः शास्त्रे निरूपिताः ॥ २५ ॥
शब्दोऽपि यदि भेदेन विवक्षा स्यात् तदा तथा ।
नोचेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थोऽवभासते ॥ २६ ॥

अत एव गवित्याह भूसत्तायामितीदृशम् ।
न प्रातिपदिकं नापि पदं साधु तु तत् स्मृतम् ॥ २७ ॥
सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा ।
सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः ॥ २८ ॥
समासस्तु चतुर्द्धेति प्रायोवादस्तथापरः ।
योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च ॥ २९ ॥

भौतपूर्व्यात्सोऽपि रेखागवयवदाश्रितः ।
जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा ॥ ३० ॥

भेदः संसर्ग उभयं वेति वाच्यव्यवस्थितेः ।
समासे खलुभिन्नैव शक्तिः पङ्कजशब्दवत् ॥ ३१ ॥

बहूनां वृत्तिधर्म्माणां वचनैरेव साधने ।
स्यान्महद्गौरवं तस्मादेकार्थीभाव आश्रितः ॥ ३२ ॥
चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम् ।
कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः ॥ ३३ ॥
अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना ।
क्लृप्तत्यागश्चास्ति तव तत् किं शक्तिं न कल्पयेः ॥ ३४ ॥
आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः ॥ ३५ ॥
पर्यवस्यच्छाब्दबोधाऽविदूरप्राक्क्षणस्थिते ।
शक्तिग्रहेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम् ॥ ३६ ॥
इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥ ३७ ॥
असाधुरनुमानेन वाचकः कैश्चिदिष्यते ।
वाचकत्वाविशेषे वा नियमः पुण्यपापयोः ॥ ३८ ॥
सम्बन्धिशब्दे सम्बन्धो योग्यतां प्रति योग्यता ।
समयाद् योग्यतासंविन्मातापुत्रादियोग्यवत् ॥ ३९ ॥
नञ्समासे चापरस्य प्राधान्यात् सर्वनामता ।
आरोपितत्वं नञ्द्योत्यं नह्यसोऽप्यतिसर्ववत् ॥ ४० ॥
अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात् ।
विशेषणं विशेष्यो वा न्यायतस्त्ववधार्य्यताम् ॥ ४१ ॥
द्योतकाः प्रादयो येन निपाताश्चादयस्तथा ।
उपास्येते हरिहरौ लकारो दृश्यते यथा ॥ ४२ ॥
तथान्यत्र निपातेऽपि लकारः कर्म्मवाचकः ।
विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः ॥ ४३ ॥
पदार्थः सदृशाऽन्वेति विभागेन कदापि न ।
निपातेतरसङ्कोचे प्रमाणं किं विभावय ॥ ४४ ॥
शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ।
इत्यादावन्वयो न स्यात् सुपाच्च श्रवणं ततः ॥ ४५ ॥
नञ्समासे चापरस्य द्योत्यं प्रत्येव मुख्यता ।
द्योत्यमेवार्थमादाय जायन्ते नामतः सुपः ॥ ४६ ॥
निपातानां वाचकत्वमन्वयव्यतिरेकयोः ।
युक्तं वा नतु तद्युक्तं परेषां मतमेव नः ॥ ४७ ॥

निपातत्वं परेषां यत्तदस्माकमिति स्थितिः ।
व्यापकत्वाच्छक्तताथास्त्ववच्छेदकमिष्यते ॥ ४८ ॥
कृत्तद्धितसमासेभ्यो मतभेदनिबन्धनम् ।
त्वतलोरर्थकथनं टीकायां हरिणा कृतम् ॥ ४९ ॥

अत्रार्द्धजरतीयं स्याद् दर्शनान्तरगामिनाम् ।
सिद्धान्ते तु स्थिते पक्षद्वयं त्वादिषु तच्छृणु ॥ ५० ॥
प्रयोगोपाधिमाश्रित्य प्रकृत्यर्थप्रकारताम् ।
धर्म्ममात्रं वाच्यमिति यद्वा शब्दपरा अमी ॥ ५१ ॥

जायन्ते तज्जन्यबोधप्रकारे भावसंज्ञिते ।
प्रत्ययार्थस्यैकदेशे प्रकृत्यर्थौ विशेषणम् ॥ ५२ ॥
अभेदश्चात्र संसर्ग आग्नेयादाविवयं स्थितिः ।
देवतायां प्रदेये च खण्डशः शक्तिरस्तु वा ॥ ५३ ॥

प्रदेय एव वा शक्तिः प्रकृतेर्वास्तु लक्षणा ।
देवतायां निरूढेति सर्वे पक्षा अमी स्थिताः ॥ ५४ ॥
क्रीडायां णस्तदस्यास्तीत्यादावेषैव दिक् स्मृता ।
वस्तुतो वृत्तिरेवेति नात्रातीव प्रयत्यते ॥ ५५ ॥

अभेदैकत्वसङ्ख्याया वृत्तौ भानमिति स्थितिः ।
कपिञ्जलालम्भवाक्ये त्रित्वं न्यायाद् यथोच्यते ॥ ५६ ॥

लक्ष्यानुरोधात् सङ्ख्यायास्तन्त्राऽतन्त्रे मते यतः ।
पश्वैकत्वादिहेतूनामाश्रयणमनाकरम् ॥ ५७ ॥
विधेये भेदकं तन्त्रमन्यतो नियमो नहि ।
ग्रहैकत्वादिहेतूनामाश्रयणमनाकरम् ॥ ५८ ॥

रदाभ्यां वाक्यभेदेन नकारद्वयलाभतः ।
क्षतिर्नैवास्ति तन्त्रत्वे विधेये भेदकस्य तु ॥ ५९ ॥
अव्ययकृत इत्युक्तेः प्रकृत्यर्थे तुमादयः ।
समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिः ॥ ६० ॥
वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः ।
साधुशब्देऽन्तर्गता हि बोधका नतु तत्स्मृताः ॥ ६१ ॥

व्यवस्थितेर्व्यवहृतेस्तद्धेतुन्यायतस्तथा ।
किञ्चाख्यातेन शत्राद्यैर्लडेव स्मार्यते यदि ॥ ६२ ॥

कथं कर्तुरवाच्यत्ववाच्यत्वे तद्विभावय ।
तरबाद्यन्ततिङ्क्ष्वस्ति नामता कृत्स्विव स्फुटा ॥ ६३ ॥

नामार्थयोरभेदोऽपि तस्मात्तुल्योऽवधार्य्यताम् ।
अथादेशा वाचकाश्चेत् पदस्फोटस्ततः स्फुटः ॥ ६४ ॥
घटेनैत्यादिषु नहि प्रकृत्यादिभिदा स्थिता ।
वस्त्रसादाविवेहापि सम्प्रमोहो हि दृश्यते ॥ ६५ ॥
हरेऽवेत्यादि दृष्ट्वा च वाक्यस्फोटं विनिश्चिनु !
अर्थे विशिष्य सम्बन्धाग्रहणं चेत् समं पदे ॥ ६६ ॥
लक्षणादधुनाचेत्तत्पदेऽर्थेऽप्यस्तु तत् तथा ।
सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः ॥ ६७ ॥
भाट्टास्तेऽपीत्थमेवाहुर्लक्षणाया ग्रहे गतिम् ।
पदे न वर्णा विद्यन्ते वर्णेष्ववयवा नच ॥ ६८ ॥
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ।
पञ्चकोशादिवत्तस्मात् कल्पनैषा समाश्रिता ॥ ६९ ॥
उपेयप्रतिपत्त्यर्था उपाया अव्यवस्थिताः ।
कल्पितानामुपाधित्वं स्वीकृतं हि परैरपि ॥ ७० ॥
स्वरदैर्घ्याद्यपि ह्यन्ये वर्णेभ्योऽन्यस्य मन्यते ।
शक्यत्व इव शक्तत्वे जातेर्लाघवमीक्ष्यताम् ॥ ७१ ॥
औपाधिको वा भेदोऽस्तु वर्णानां तारमन्दवत् ।
अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृतः ॥ ७२ ॥
कैश्चित् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ।
सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ॥ ७३ ॥
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः ।
इत्थ निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम् ।
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः ॥ ७४ ॥

इति भूषणसारस्थमूलकारिकासङ्कलनम् ।



# वैयाकरणभूषणसारस्थकारिकाणामकारादिक्रमेणानुक्रमणिका

इति वैयाकरणभूषणसारस्थकारिकाणामकारादिक्रमेणानुक्रमणिका



॥ श्रीः ॥

# वैयाकरणभूषणसारः

## दर्पणहिन्दीभाष्योपेतः



श्रीलक्ष्मीरमणं नौमि गौरीरमणरूपिणम् ।
स्फोटरूपं यतः सर्वं जगदेतद् विवर्तते ॥ १ ॥

### दर्पणः

रमाप्रेमाऽऽमज्जज्जगदवनदक्षं मधुहृत-
श्रुतिस्तोमाऽऽहृत्या परिजनितवेदाननमुदम् ।
अखण्डानन्दाढ्यं निखिलजनहृत्कञ्जनिलयं
हयग्रीवं वन्दे प्रकृतकृतिविघ्नक्षतिकृते ॥ १ ॥

सत्येकस्मिन्नपि बाधके समवहितसाधकसहस्रादपि कार्योत्पत्तेरदर्शनादपेक्षितप्रारिप्सितप्रत्यूहापोहायानुष्ठितं भगवत्स्तुतिरूपं मङ्गलं ग्रन्थकृच्छिष्यशिक्षार्थमादौ निबध्नाति—*श्रीलक्ष्मीरमणमिति* । अधिकरणव्युत्पन्नल्युडन्त'रमण'शब्देन कर्तृषष्ठ्यन्त'लक्ष्मी'पदस्य समासः । तेन च श्रीसहितशब्दस्य मध्यमपदलोपी समासः । शाकपार्थिवादेराकृतिगणत्वात् । तदुपादानञ्च सशक्तिकस्यैव भगवतो जगन्निर्माणकारणत्वमिति ध्वनयितुम् । *नौमीति* । 'णु स्तुतौ' इति धातोरस्मच्छब्दाप्रयोगेऽपि गम्यमानतदर्थसामानाधिकरण्यस्य लकारार्थकर्त्तरि सत्त्वाद् वर्त्तमानक्रियाद्योतकलडुत्तमपुरुषः । 'अस्मद्युत्तमः' (पा.सू. १–४–१०७) इत्यत्र पूर्व्वसूत्रात् स्थानिनीत्यस्यानुवृत्तेः । स्तुतिश्चोत्कृष्टगुणवत्त्वप्रकारकबोधानुकूलो व्यापारः । स एव च प्रकृतधात्वर्थः । बोधरूपधात्वर्थफलाश्रयत्वाल्लक्ष्मीरमणस्य कर्मता । एवञ्च वैयाकरणमते प्रकृते श्रीसहितलक्ष्मीरमणाश्रयकोत्कृष्टगुणवत्त्वप्रकारकबोधानुकूलो मदभिन्नाश्रयको वर्त्तमानशब्दप्रयोगरूपो व्यापार इति वाक्यार्थः । नन्वेतच्छास्त्रप्रवर्त्तकत्वेन शिवस्याभ्यर्हिततरत्वात्तत्स्तुत्यात्मकमङ्गलमपि कुतो नाचरितमत आह—*गौरीरमणरूपिणमिति* । स्वरूपपररूपपदेन गौरीरमणपदस्य षष्ठीसमासस्ततोऽदन्तत्वनिबन्धनो मत्वर्थीय इनिः । गौरीरमणो रूपं स्वरूपं यस्येति षष्ठ्यर्थबहुव्रीहिणोक्तार्थ-

लाभेऽपि लाघवमूलक—'न कर्मधारयाद्' इतिन्यायस्य 'प्रत्ययस्थात्' ( पा.सू.७–३–४४) इति सूत्रे 'असुब्वतः' इति प्रयोगमुदाहरता भाष्यकृताऽनादृतत्वान्न मत्वर्थीयानुपपत्तिः। दृश्यते चेदृशस्थले प्रयोगद्वैविध्यम्—

'शिवाय विष्णुरूपाय विष्णवे शिवरूपिणे।'

इत्यादि। तथा च तदभिन्नमित्यर्थः। प्रमाणं चात्रोक्तपुराणवाक्यमेव। एवञ्च कार्यवैचित्र्यस्य कारणवैचित्र्यनियम्यत्वाज्जगदवनादिकार्यवैचित्र्योपपत्तये तत्तद्गुणप्रधानमूर्तिपरिग्रहो भगवतो, न पारमार्थिको भेद इति स्तुतिकर्मता शिवस्य नानुपपन्नेति भावः। उत्कृष्टगुणवत्त्वमेवाविष्करोति—*यत इति*। वेदान्तिमते-मायाशबलस्य ब्रह्मणो जगदुपादानत्वात् 'जनिकर्त्तुः' ( पा. सू. १–४–३० ) इत्युपादानहेतावपादानसंज्ञानिबन्धना पञ्चमी। 'गुण' इत्युक्तेः 'विभाषा' ( पा. सू. २–३–२५ ) इत्यस्य न प्रसक्तिः। तथाच यस्मादुपादानहेतोरित्यर्थः। सर्वं जगत् स्फोटरूपं विवर्त्तत इति योजना। स्फुटत्यभिव्यक्तीभवत्यर्थोऽस्मादिति स्फोटो नामाद्यात्मकः शब्दः। बाहुलकादपादाने घञ्। रूप्यते निरूप्यते इति रूपमर्थः। तयोः समाहारद्वन्द्वे नपुंसकैकवचनान्तम्। वाच्यवाचकस्वरूपमिति तदर्थः। 'नामरूपे व्याकरवाणि' ( छान्दोग्ये ६।३।२ ) इति श्रुतेः। *एतत्*—अत्यन्तसान्निध्येन बुद्धया विषयीक्रियमाणम्। *विवर्त्तते*। उत्पद्यत इत्यर्थः। धातोरुपसृष्टत्वात्। ननु नामरूपात्मकस्य, 'सदेव सोम्येदमग्र आसीत्' ( छान्दोग्ये ६।२१ ) इति श्रुत्या सनातनत्वबोधनात् कथमुत्पत्तिशालित्वमत आह—*जगदिति*। 'वर्त्तमाने पृषत्' ( उणादिसू. पा. २ सू. २५० ) इति निपातनात्साधु। तथा च गच्छति तिरोधत्त इति व्युत्पत्त्या तिरोधाने उक्ते यत्तिरोधत्ते तदाविर्भवतीति नियमेनाविर्भावस्य लाभात्स एवात्रोपसृष्टार्थः। एवञ्च सत्त्वेनैतस्य सनातनत्वेऽपि नामत्वादिनाविर्भावाद्यभ्युपगमान्नोक्तश्रुतिविरोधो; नापि 'तस्मादेतस्माद्वा आत्मन आकाशः सम्भूतः' ( तैत्तिरीयके २।१ ) इत्याद्युत्पत्तिबोधकतद्विरोधः। यत्किञ्चिन्नामरूपात्मकस्यान्यतोऽपि सम्भवादाह—*सर्वमिति*। यावदर्थकम्। उत्पत्तिरुपलक्षणमवनादेः। तेन जगत्कर्तृत्वादिरूपोत्कृष्टधर्मस्य स्तुत्यतावच्छेदकस्य लाभः। अत्र च 'यतो वा इमानि भूतानि जायन्ते; येन जातानि जीवन्ति; यत् प्रयन्त्यभिसंविशन्ति' ( तैत्तिरीयके ३।१ ) इत्याद्याः श्रुतयः प्रमाणम्।

मतान्तरे—'यत' इति पञ्चमी निमित्तहेतुतायाम्। व्युपसृष्टवृतुधातोराद्यक्षणसम्बन्धरूपोत्पत्तिरर्थः। ननु सर्वान्तर्गतवियदाद्यात्मकपदार्थस्यानादितया कथमुत्पत्तिमत्त्वमत आह—*जगदिति*। स्थावरजङ्गमात्मकमित्यर्थः। तथा च गच्छति नश्यतीति व्युत्पत्त्या विनाशित्वे बोधिते विनाशिभावस्य जन्यत्वनियमेन तस्योत्पत्तिर्न विरुद्धेतिभावः। एतत्कल्पे स्फोटपदं शास्त्रानुमानप्रतीतपरम्। तादृशं रूपं यस्येति-व्युत्पत्त्या स्फोटरूपमिति भगवतो विशेषणं बोध्यम्। शेषं पूर्ववत्। यद्वा स्तुत्यता-

वच्छदेकरूपं प्रदर्शयितुं विशिनष्टि—*स्फोटरूपमिति*। वक्ष्यमाणव्युत्पत्त्या समस्तार्थप्रकाशकस्वरूपमित्यर्थः। तदुपपादयन्नेव स्तुत्यतावच्छेदकान्तरमपि दर्शयति—*यत इति*। यस्मादुपादानादिति सार्वविभक्तिकतसिना यस्मिन्नधिष्ठाने इति वाऽर्थः। विवर्तश्चातात्त्विकोऽन्यथाभावः। अपरित्यक्तपूर्वरूपस्य रूपान्तरप्रकारकप्रतीतिविषयत्वमिति यावत्। जगच्छब्दश्च रूढ्या नामरूपपरः। तथा च यस्मिन्नधिष्ठाने एतत्सर्वं जगद् भूतेन्द्रियादि तत्तद्रूपेण प्रतिभातीत्यर्थः। 'नेह नानास्ति' (काठके २।४।११) इति श्रुत्या बोधितबाधस्यापि जगतः प्रतिभासे अधिष्ठानसत्ताया एव नियामकत्वात् समस्तार्थप्रकाशकत्वोपपत्तिः, अप्रच्युतस्वरूपस्यैव ब्रह्मणो जगद्रूपेण विवर्तनादविकारित्वरूपोत्कृष्टधर्मावगतिश्च। अत्र च 'तमेव भान्तमनुभाति सर्वम्' (काठके २।५।१५, मुण्डके २।२।१२) इत्याद्याः कूटस्थस्वरूपप्रतिपादिकाश्च श्रुतयः प्रमाणत्वेनानुसन्धेया इति भावः। अत्र भगद्विषयकरतिभावस्य हेत्वलङ्कारोऽङ्गम् ॥ १ ॥

### भाष्यकर्तृमङ्गलाचरणम्

यत्प्रसादान्महाम्भोधिं प्रस्तरस्तीर्णवान् सुखम्
नौमि तं जगतामीशं रामं सर्वार्थसाधकम् ॥ १ ॥

गुणाभिरामां सन्मूर्तिं लोककल्याणकारिणीम्।
गुरुस्वरूपां श्रेयोऽर्थी वन्दे हरिहरात्मिकाम् ॥ २ ॥

यस्याशयो मतिमताप्यसुखावबोधः
तस्यानुवादमहमल्पमतिः समीहे।
शङ्कासमाधिसहितं सुगमावगत्यै
श्रीमद्गुरोश्चरणमत्र शरण्यमस्तु ॥ ३ ॥

अर्थ—मैं शिवस्वरूप लक्ष्मी सहित भगवान् विष्णु की स्तुति करता हूँ। जिन से शब्द और अर्थ रूप यह समस्त संसार विवर्त रूप से भासित होता है।

हिन्दीभाष्य—सभी कार्यों के आरम्भ में मङ्गलाचरण शिष्टाचार परम्परा से प्राप्त है। एक भी बाधक रहने पर कारण कलाप के रहते हुये भी कार्योत्पत्ति नहीं होती। प्रतिबन्धक के अभाव रहने पर ही कारण समूह कार्योत्पत्ति में समर्थ होता है। अतः 'श्रीलक्ष्मीरमणं नौमि' इत्यादि श्लोकों से प्रतिबन्धक निवृत्ति के लिये मङ्गलाचरण किया गया है।

शङ्का—यदि ऐसा कहें कि ग्रन्थकार के स्वयं माङ्गलिक श्लोकों का पाठ एवं इष्टदेवता का स्मरण पूजन कर ग्रन्थारम्भ करने पर भी बाधक का प्रशमन हो सकता था। पुनः ग्रन्थ में मङ्गलश्लोकों के उल्लेख की क्या आवश्यकता थी।

इसका समाधान यह है कि अध्ययन और अध्यापन करने वालों का भी मङ्गल हो तथा विघ्नविघात के लिये ग्रन्थारम्भ में मङ्गलाचरण आवश्यक है इस प्रकार की शिक्षा देने के लिये मङ्गल श्लोकों का उल्लेख किया गया है।

श्री = लोकोत्तर शोभा, उसके सहित लक्ष्मी = निखिलप्रपञ्च का कारण माया प्रकृति उसके रमण = प्रिय। अथवा लक्ष्मी = सम्पत्ति की अधिष्ठात्री देवता उनके पति भगवान् विष्णु। इन में जगत् के निर्माण का सामर्थ्य शक्ति सहित होने पर ही होता है। अतः लक्ष्मीरमण पद का प्रयोग है।

'शिवस्य हृदयं विष्णुः विष्णोश्च हृदयं शिवः।
विष्णुरुद्रान्तरं यच्च यो ब्रूते मूढधीस्तु सः॥'

कुर्याद् हरिहरार्चनम्' इत्यादि प्रमाणों से पारस्परिक अभेद तथा समानरूप से उपासना शास्त्रसम्मत है। 'रुचीनां वैचित्र्यात्' के अनुसार भिन्न-भिन्न रूपकी कल्पना से दोनों का भेद कल्पित किया गया है। पाणिनीय व्याकरण के प्रथम मार्गदर्शक होने के कारण आशुतोष शङ्करजी की अपेक्षित स्तुति गौरीरमणरूपिणम् इस पद से हरिहरात्मक मूर्ति के द्वारा की गई है। 'शिवायविष्णुरूपाय विष्णवे शिवरूपिणे' इत्यादि वचनों से दोनों की एकरूपता सिद्ध है।

शङ्का—गौर्या रमणः तस्य रूपमस्ति अस्य इति गौरीरमणरूपी। [1]बहुव्रीहि समास से अपेक्षित अर्थ का बोध यदि सम्भव हो तो, कर्मधारय से मत्वर्थ प्रत्यय नहीं होता। 'गौरीरमणो रूपं यस्य' इस प्रकार बहुव्रीहि से अभीष्ट शिवरूपता की सिद्धि हो जाने से गौरीरमणस्य रूपं तदस्ति अस्य इस प्रकार तत्पुरुष और तद्धित (इनि) दो वृत्तियों के द्वारा प्रयोग उक्त न्याय के विरुद्ध है।

समाधान—प्रत्ययस्थात् कात् (७।३।४४) इस सूत्र के भाष्य में असुब्वतः ऐसा प्रयोग देखने से उक्तन्याय लाघवमूलक प्रतीत होता है। अन्यथा न सुप् यस्मिन् इस प्रकार असुपः के निर्देश मात्र से विवक्षितार्थ का लाभ हो जाता है। पुनः नञ् समास के अनन्तर मतुप् प्रत्यय करने का क्या प्रयोजन था। इससे यह प्रमाणित होता है कि लाघव के अनादर पक्ष में उक्त प्रयोग शुद्ध है।

यतः—जिससे उपादान हेतु से। अथवा यस्मिन् इस अर्थ में सार्वविभक्तिक तसि प्रत्यय होने से जिस में यह अर्थ है। शाङ्कर वेदान्त मत में शुद्ध सत्त्व प्रधान माया प्रतिविम्बित चैतन्य ईश्वर, मलिन सत्त्व वाली अविद्या प्रतिविम्बित चैतन्य जीव है। ईश्वर जगत् का उपादान और निमित्त कारण है। शुद्ध ब्रह्म कारण नहीं है।

'आश्रयत्व विषयत्व भागिनी निर्विभाग चितिरेव केवला' इस संक्षेप शारीरक वचन के अनुसार शुद्ध ब्रह्म ही उपादान कारण है। वही अविद्या का आश्रय एवं विषय है। 'कार्योपाधिरयं जीवः कारणोपाधिरीश्वरः'—अविद्या में चित्प्रतिविम्बित ईश्वर और अन्तःकरण में चित्प्रतिविम्बित जीव है इत्यादि विचार अन्यत्र स्पष्ट है।

मन्दान्धकार आदि दोष के कारण जिस प्रकार रज्जु (रस्सी) भ्रान्ति दशा में सर्पाकार प्रतीत होती है। उसी प्रकार अविद्या दोष से आवरण शक्ति से ब्रह्मस्वरूप का आवरण और विक्षेप शक्ति के द्वारा नाना रूप उसमें प्रतिभासित होता है। अर्थात् एक ही चैतन्य संसार रूपसे प्रतिभासित हो रहा है। अधिष्ठान (आधार) के विना भ्रम नहीं होता। अतः अधिष्ठान ब्रह्म में ही जगत् का अध्यास (भ्रम) है। रज्जु में सर्पप्रतीति

१. न कर्मधारयान्मत्वर्थीयो बहुव्रीहिश्चेत्तदर्थप्रतिपत्तिकरः यह न्याय का स्वरूप है। कर्मधारय पद तत्पुरुष का उपलक्षण है।

एवं शुक्ति में रजत ज्ञान से जिस प्रकार रज्जु एवं शुक्ति में किसी प्रकार की विकृति नहीं होती, उसी प्रकार अध्यस्त पदार्थों से ब्रह्म में भी विकृति नहीं होती। इस दृष्टि से यतः का यस्मिन् अर्थ सुसङ्गत है। इससे उसके स्वरूप समस्तोपाध्यनवच्छिन्न उदासीन निर्विकार तथा चिदानन्द में बाधा भी नहीं है।

स्फोटरूपम्—'स्फुटति अर्थो यस्मात्' अर्थात् जिससे अर्थ का बोध होता है, वह स्फोट है। अर्थ का बोध शब्द द्वारा होने से शब्दात्मक स्फोट है। रूप्यते बोध्यते इति रूपम्। अर्थात् बोध्य समस्त अर्थ = रूप है। नाम (शब्द) रूप (अर्थ) एतदुभयात्मक जगत् स्फोटरूप शब्द से कहा गया है। 'नामरूपे व्याकरवाणि' (छा० उ० ६) इस श्रुति से भी इसी अर्थ की पुष्टि की गई है।

साधारण वस्तु की सृष्टि मनुष्य से भी होती ही है। अतः सर्वम् कहा है। समस्त जगत् का सर्जन असर्वज्ञ तथा अल्प शक्ति वाले मानव से नहीं हो सकता। अतः सर्वज्ञ परमेश्वर ही जगत् का कारण है।

न्यायवैशेषिक मत में दो परमाणुओं के संयोग से द्व्यणुकादि क्रम से सृष्टि होती है। ईश्वर कुम्भकार के समान जगत् की उत्पत्ति में निमित्त कारण है।

सांख्य के अनुसार जगत् अचेतन प्रकृति का परिणाम है। ईश्वर की सत्ता नहीं मानते। अन्य मतों का निरूपण विस्तार के भय से नहीं किया जा रहा है।

विवर्तते—प्रतिभासित होता है। सतत्त्वतोऽन्यथाभावः परिणामः–वस्तुतः वस्तु का अन्यथाभाव परिणाम है। जैसे दुग्ध का दधि रूप में अन्यथाभाव परिणाम है। अतत्त्वतोऽन्यथाभाव विवर्त है–वस्तु का अवास्तविक अन्यथाभाव विवर्त है। जिस प्रकार रज्जु में सर्प और शुक्तिखण्ड में चाँदी। यहाँ रज्जु में सर्प शुक्ति में रजत (चाँदी) की उत्पत्ति, अथवा सर्पाकार रजताकार परिणाम नहीं है किन्तु तथा प्रतिभान होने पर भी अवास्तविक रूपान्तर का भानमात्र है। उस भान से अधिष्ठान शुक्ति आदि में किसी प्रकार का विकार नहीं होता। निर्विकार रहता हुआ रूपान्तर से प्रतीत होता है। इसी अन्यथाभाव को विवर्त कहा है। यतः जिससे या जिसमें नामरूपात्मक स्थावर जङ्गम समस्त संसार अतात्त्विक रूप से भासित होता है—यह विवर्तते का अभिप्राय है।

न्यायमत में यतः जिस निमित्त कारण परमेश्वर से विवर्तते अर्थात् उत्पन्न होता है।

परिणामवादियों के मतमें विवर्तते का अर्थ परिणमते करना चाहिये। 'शब्दस्य परिणामोऽयम्' (वा० १ का०) इस वाक्यपदीय के अनुसार परिणाम और विवर्त का संकीर्ण व्यवहार देखने से परिणाम अर्थ भी सम्भव है।

'स्फोटरूपम्' यह विशेषण लक्ष्मीरमण का भी दिया जा सकता है। स्फोट, शब्द ब्रह्म तदात्मक भगवान् विष्णु हैं ॥ १ ॥

अशेषफलदातारं भवाब्धितरणे तरिम्।
शेषाशेषार्थलाभार्थं प्रार्थये शेषभूषणम् ॥ २ ॥

जगदुपादानत्वेन स्तुत्वा अपवर्गसाधनज्ञानविषयत्वेनैतच्छास्त्रव्याख्यातृशेषभूषणत्वेन च स्तुवञ्छेषोक्तसमस्तसिद्धान्तप्रतिपत्तये प्रार्थयते—*अशेषेति*। फलं—प्रवृत्त्युद्देश्यम्। स्वर्गादियत्किञ्चित्फलदातृत्वस्य देवतान्तरसाधारण्यादाह—*अशेषेति*। तथा चापवर्गरूपफलस्याप्यशेषपदेन कुक्षीकृतत्वात् तद्दातृत्वस्यानन्यसाधारण्यात् प्रार्थ्यतावच्छेदकधर्मलाभः; तदेव विशदयति—*भवाब्धीति*। भव एवाब्धिरिति रूपकम्। अब्धीयग्राहादिसदृशकामलोभाद्याक्रान्तत्वाद् दुरवगाहत्वेन भवे तदारोपः। तेन च भवस्य दुस्तरत्वं व्यज्यते। तस्य तरणं पारदेशप्राप्तिस्तस्मिन्नित्यर्थः। *तरिम्* साधनम्। यद्यपि तरन्त्यनया इति व्युत्पत्त्या तरणसाधनं तरिपदार्थस्तथाऽपि तद्घटकीभूततरणस्य सन्निहितपदेनैव लाभात् द्विरुक्तिर्मा भूदिति विशेष्यमात्रपरतया व्याख्यातम्। मुक्तिसाधनज्ञानविषयमिति यावत्। मुक्तिश्च वेदान्तिमतेऽज्ञाननिवृत्तिसमकाला स्वरूपप्राप्तिः। नन्वज्ञाननिवृत्तेरधिकरणाऽनतिरिक्तायाः, स्वरूपस्याऽपि च सिद्धत्वात्तद्रूपायास्तस्यास्तत्त्वज्ञानसाध्यत्वानुपपत्तिरिति चेत्; न। परेषां प्रागभावस्येव सिद्धाया एवाज्ञाननिवृत्तेर्योगक्षेमसाधारण्याः साध्यतायाः सम्भवात्। अधिकमन्यतोऽवधेयम्।

नैयायिकास्तु—आत्यन्तिकदुःखध्वंसो मोक्षः। ध्वंसे आत्यन्तिकत्वञ्च—स्वसमानाधिकरणदुःखासमानकालिकत्वम्। अत्रैव तत्त्वज्ञानस्योपयोगः। विशेष्यांशस्य स्वासाधारणसामग्र्या एव सम्भवात्, नित्यसुखाभिव्यक्तिर्वा स इत्याहुः।

*शेषाशेपेति*। कर्मधारयोत्तरपदः षष्ठीतत्पुरुषः। तस्य च लाभपदेन समासः। लाभायेदमिति विग्रहे चतुर्थ्यन्तलाभपदस्यार्थपदेन सः। शेषः—पतञ्जलिः, शेषांशत्वात्तस्य। तथा च शेषोक्तभाष्यप्रतिपादितनिखिलसिद्धान्तज्ञानायेत्यर्थः। *शेषभूषणमिति*। शेषोऽनन्तः, स भूषणं यस्येत्यर्थः। यतोऽस्थ—भूषणं शेषोऽतोऽस्य शेषोक्तसिद्धान्तलब्ध्यै प्रार्थनमिति साभिप्रायविशेष्यस्योपादानात्परिकराङ्कुरोऽलङ्कारोऽत्र भगवद्विषयकरत्यङ्गम्॥ २॥

जगदुपादान रूप से भगवान् की स्तुति के अनन्तर रूपान्तर से स्तुति करते हैं:—अशेष इति।

अर्थ—शेषः-शेषावतार=पतञ्जलि इनके अशेष=समग्र सिद्धान्तों को जानने के लिये सम्पूर्ण फल के दाता तथा संसार सागर के संतरण में नौकास्वरूप शेषभूषण-शिव तथा विष्णु की प्रार्थना करता हूँ।

हिन्दीभाष्य—यत् किञ्चित् फलकी प्राप्ति अन्य देवता से भी हो सकती थी। अतः समग्र फलों के दाता यह विशेषण दिया।

अथवा अन्य की स्तुति से अन्यगत अर्थ का लाभ नहीं होता। अतः शिव की स्तुति से शेष=पतञ्जलि के अर्थ का लाभ नहीं होगा इस शङ्का की निवृत्ति के लिये 'अशेषफलदातारं' विशेषण है।

'अशेषाणि यानि फलानि, तेषां दाता' यह अशेषफलदाता की व्युत्पत्ति है। यद्यपि दाता तृच्प्रत्ययान्त होने से 'तृजकाभ्यां कर्तरि' (२।२।१५) इससे षष्ठीसमास का निषेध

प्राप्त है तथापि तृच् के स्थान में तृन् करने से समास निषेध नहीं होगा। यदि कहें कि तृन् के योग में 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (२।३।६९) इस सूत्र से षष्ठी का ही निषेध हो जाने से उक्तरूप की असिद्धि होगी तो उक्त प्रयोग में 'शेषे षष्ठी' (२।३।५०) से सम्बन्ध सामान्य में षष्ठी होने से दोष नहीं है 'न लोकाव्यय' (२।३।६९) इस सूत्रसे कर्त्ता कर्म में होने वाली कारक षष्ठी का निषेध होता है। तृजन्त के साथ भी शेषषष्ठी मानने पर समास हो सकता है। 'तृजकाभ्यां' इससे कारक षष्ठी समास का ही निषेध माना गया है।

भवाब्धितरणे—भव; संसारः एव अब्धिः समुद्रः। भयङ्कर हिंस्र ग्राह आदि के समान काम-क्रोध-लोभ-मोह आदि से आक्रान्त संसार को समुद्र कहा गया। (इसमें रूपकालङ्कार है) इससे संसार की दुस्तरता व्यक्त होती है। इसके पार करने की तरि अर्थात् नौका—साधन है। यद्यपि 'तरति अनया' इस व्युत्पत्ति से निष्पन्न तरि शब्दमात्र से भी तरण अर्थ गतार्थ हो जाता है तथापि उसका पृथक् उपादान योगार्थ की अविवक्षा कर रूढसाधन अर्थ में तरि शब्दका प्रयोग मानकर किया गया है। वायु से पूर्ण छिद्र वाला बाँस ही कीचक है। फिर भी मारुत पूर्णरन्ध्र विशेषण कीचक में 'सकीचकैर्मारुत पूर्णरन्ध्रैः' इस पद्य में दिया गया है। यहाँ विशेषणांश का त्यागकर बाँसमात्र में कीचक का प्रयोग है।

संसार के सकल दुःखों की निवृत्ति के अर्थ में तरण का प्रयोग तरति शोकमात्मवित् छा० ३७–२ इत्यादि श्रुति में प्रसिद्ध है।

'शेषः भूषणं यस्य' शेष नाग भूषण हैं जिसके एवं भूत शिव अथवा शेष, शय्यारूप से भूषण है जिसके ऐसे विष्णु इस प्रकार श्लेष से दोनों अर्थ है। शेषावतार पतञ्जलि के सिद्धान्त ज्ञान के लिये शेषभूषण की प्रार्थना उपयुक्त है ॥ २ ॥

[1]वाग्देवी यस्य जिह्वाग्रे नरीनर्ति सदा मुदा।
भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये ॥

जिसकी जिह्वा के अग्रभाग में भगवती वागीश्वरी देवी पुनः पुनः नृत्य करती हैं अर्थात् सदा धाराप्रवाह रूपसे प्रकाश फैलाती हैं उन पितृव्यचरण भट्टोजिदीक्षित की स्तुति अभीष्ट सिद्धि के लिये करता हूँ।

पाणिन्यादिमुनीन् प्रणम्य पितरं रङ्गोजिभट्टाभिधं
द्वैतध्वान्तनिवारणादिफलिकां पुम्भाववाग्देवताम्।
ढुण्ढि गौतमजैमिनीयवचनव्याख्यातृभिर्दूषितान्
सिद्धान्तानुपपत्तिभिः प्रकटये तेषां वचो दूषये[2] ॥ ३ ॥

---

१. भूषणसार के सभी संस्करणों में यह श्लोक उपलब्ध नहीं हैं। दर्पण में भी यह अव्याख्यात है अतः कुछ लोग इस को क्षेपक मानते हैं।

२. अस्याग्रे-'नत्वा गणेशपादाब्जं गुरूनथ सरस्वतीम्।
श्रीकौण्डभट्टः कुर्वेऽहं वैयाकरणभूषणम् ॥'
क्वचिदयं श्लोक उपलभ्यते।

प्रेक्षावत्प्रवृत्तये इतरग्रन्थेभ्यः स्वग्रन्थस्योत्कर्षं प्रदर्शयन्नेव दर्शनीयविषयप्रयोजनसम्बन्धाधिकारिणां मध्येऽवश्यप्रदर्शनीयं विषयं दर्शयति—*पाणिन्यादीति* । पुम्भाववाग्देवतामिति पितुर्विशेषणम् । पुंसो भावो यस्या इति व्यधिकरणबहुव्रीहिपूर्वंपदकः कर्मधारयो वाग्देवतापदेन । अथवा—पुम्भावशब्दोऽर्शआद्यजन्तः । तथा चाऽऽविष्कृतपुंविग्रहां सरस्वतीमित्यर्थः । *द्वैतध्वान्तेति* । द्वाभ्यां प्रकाराभ्यामितो ज्ञातो विरुद्धोभयधर्मप्रकारकज्ञानविषयो धर्मीति यावत् । यद्वा—द्वयोर्भावो द्विता । स्वनिष्ठैकविशेष्यतानिरूपितप्रकारतासम्बन्धेन विरुद्धनानाधर्मांशे धर्मिणोऽपि भावत्वसम्भवाद् द्वितापदार्थोऽपि धर्म्येव । तत्र भवं द्वैतं संशयात्मकज्ञानम् । अथवा—द्वयोरनेकस्य भावो द्विता—नानात्वं, तत्सम्बन्धिज्ञानं द्वैतम्, परमार्थदशायामद्वितीयस्यैव ब्रह्मणोऽङ्गीकारेण श्रुतिबाधितनानात्वावगाह्यन्तःकरणवृत्तिविशेषरूपम्—अविद्यापरपर्यायं—मिथ्याज्ञानम् । तदेव ध्वान्तम्—तमः, तत्त्वाऽऽच्छादकत्वात्तन्निवारणमेकं मुख्यं फलं यस्यास्तामित्यर्थः । अनधिकारिणां स्वाश्रितानामेकतरकोटिकज्ञानोत्पादकत्वेनाधिकारिणां सन्मात्रावलम्बनज्ञानप्रदत्वेन पुम्भाववाग्देवतायास्तन्निवर्तकत्वमिति भावः । *ढुण्ढिं* । गणपतिं, प्रणम्येत्यनुषज्यते । *सिद्धान्तानिति* । भाष्यकारादिनिर्णीतार्थाः सिद्धान्तास्तानित्यर्थः । *उपपत्तिभिः* । साधकप्रमाणोपन्यासरूपाभिर्युक्तिभिरित्यर्थः । *दूषये* । उपपत्तिभिरेव बाधकप्रमाणोपन्यासरूपाभिरित्यर्थः ।

एतेनाऽन्यग्रन्थेभ्यः स्वग्रन्थस्योत्कृष्टत्वं ध्वनितम् । तथाच वैयाकरणसिद्धान्तोऽत्र विषयः प्रदर्शितः । तेनैव तज्ज्ञानं प्रयोजनं, प्रतिपाद्यप्रतिपादकभावः सम्बन्धः, सिद्धान्तजिज्ञासुरधिकारीति त्रयोऽन्येऽपि दर्शितप्राया इति भावः ॥ ३ ॥

**अर्थ**—पाणिनि, कात्यायन, पतञ्जलि, द्वैतरूपी अन्धकार की निवृत्ति के लिये पुरुष रूपापन्न सरस्वतीरूप पिता रङ्गोजिभट्ट एवं ढुण्ढिराज गणेश को प्रणाम कर गौतम तथा जैमिनि वचनों के व्याख्याकारों के द्वारा दूषित व्याकरण सिद्धान्तों का प्रमाणभूत युक्तियों के द्वारा समर्थन करता हूँ । साथ ही साथ व्याख्याकारों के वचनों को दूषित भी करता हूँ ।

**हिन्दीभाष्य**—ग्रन्थ के प्रारम्भ में विषय, प्रयोजन, सम्बन्ध, तथा अधिकारी का निर्देश आवश्यक होता है । प्रस्तुत ग्रन्थ का महाभाष्य से निर्णीत सिद्धान्त विषय, उसका ज्ञान प्रयोजन, सिद्धान्त और ग्रन्थ के साथ-प्रतिपाद्य प्रतिपादक भाव सम्बन्ध तथा व्याकरण सिद्धान्त का जिज्ञासु अधिकारी है । इस प्रकार उक्त अनुबन्ध चतुष्टय इस श्लोक से सूचित किया गया है ।

पाणिन्यादि पदसे कात्यायन और पतञ्जलि का ग्रहण है । इस व्याकरण में उक्त तीन मुनियों की प्रधानता है । 'त्रिमुनि व्याकरणम्' ऐसा लिखा है । पितृ देवो भव इस वचन के अनुसार पिता भी देवता होने से प्रणम्य हैं । रङ्गोजिभट्टः अभिधा नाम यस्य । अर्थात् रङ्गोजिभट्ट नाम वाले पिताजी को प्रणाम कर यह अर्थ है । 'द्वैत ध्वान्त

निवारणादिफलिकाम्' पुंभाववाग्देवताम् यह पिता का विशेषण है। द्वाभ्यां प्रकाराभ्यामितः = जड़ और अजड़ रूप से ज्ञात। जीव अजड़ और जगत् जड़ है। इस प्रकार से द्वित है। जड़ और अजड़ (जीव) ये दोनों ही ब्रह्म के शरीर हैं। तत्र भवं द्वैतम् अर्थात् दो प्रकार से ज्ञात जो धर्मी उसका संशयात्मक ज्ञान। अथवा द्वयोर्भावो द्विता नानात्व एतत्सम्बन्धी ज्ञान द्वैत अर्थात् नानात्वावगाही अन्तःकरण वृत्ति विशेषरूप मिथ्याज्ञान यही ध्वान्त, तत्त्व का आच्छादक होने से अन्धकार इसका निवारण आदि फल है जिसका ऐसे जो पुंभाववाग्देवतास्वरूप पिता। निवारणादि में आदि पद से तत्त्वज्ञान विवक्षित है। 'एकमेवाद्वितीयम् नेह नानास्ति किञ्चन' इत्यादि श्रुतियों का द्वैतवाद आच्छादक होने से उसमें ध्वान्त का आरोप है।

पुंसो भावः—आकारविशेषो यस्याः सा इस प्रकार व्यधिकरण बहुव्रीहि के बाद पुंभावा चासौ वाग्देवता कर्मधारय समास है। देवता नित्य स्त्रीलिङ्ग होनेसे पितरम् के साथ भिन्नलिङ्गक सामानाधिकरण्य का निर्देश युक्त है। पुरुषरूप में अवतीर्ण सरस्वती स्वरूप का बोधन पिता में इससे किया गया है।

नत्वा गणेशपादाब्जं गुरूनथ सरस्वतीम्।
श्रीकौण्डभट्टः कुर्वेऽहं वैयाकरणभूषणम्॥

अर्थ—मैं कौण्डभट्ट विघ्ननाशक गणेशजी के चरण कमल, गुरु तथा सरस्वती को प्रणाम कर वैयाकरण भूषण नाम का ग्रन्थ बनाता हूँ।

हिन्दीभाष्य—गणानां शिवगणानाम् ईशः = शिवगणों के नियन्ता।

अथवा गणानां शत्रुगणानाम् ईः लक्ष्मीः तां श्यति तनूकरोति अर्थात् शत्रुगणों की लक्ष्मी का ह्रास करने वाले यह गणेश का अर्थ है। शो धातु से आत्व होने पर कप्रत्यय और आकार लोप से उक्त पद की सिद्धि होती है। (पादौ एव अम्बुजं कमलम्) इस प्रकार चरणों में अत्यन्त संश्लिष्टता बोधन करने के लिये एकवचनान्त अम्बुज का निर्देश है।

गुरून्—अत्यन्तं निगूढमर्थं गृणाति-कथयति इति गुरुः। गृशब्दे धातु से 'कृग्रोरुच्च' इससे कु प्रत्यय होने से निष्पन्न होता है।

अथवा गुम् अन्धकारं रावयति नाशयति इस व्युत्पत्ति से भी उक्त प्रयोग की सिद्धि होती है। निगूढ अर्थ कथन करने वाले अथवा आन्तर अन्धकार को मिटाने वाले गुरु होते हैं।

सरस्वतीम्—सरः-अमृतसरः तदस्ति अस्याः इस विग्रह में सरस शब्द से मतुप् और ङीप् होने से इसकी सिद्धि होती है।

अथवा सर्तेः सरः इस निरूक्त के अनुसार सर उदक का नाम है। तद्वती सरस्वती। 'श्रीकौण्डभट्टः' नवनवोन्मेषशालिनी प्रतिभारूपी श्री से युक्त यह भाव है। यद्यपि 'आत्मनाम गुरोर्नाम' इस वचन से नाम ग्रहण का निषेध किया गया है तथापि गृह्णीयात् से उच्चारण का निषेध होने पर भी लिखने का निषेध नहीं है। इस तात्पर्य से प्रकृत श्लोक में नाम निर्देश उक्त वचन से विरुद्ध नहीं है।

वैयाकरण भूषण—व्याकरणमधीयते विदन्ति वा वैयाकरणाः तेषां भूषणम्। जिस प्रकार भूषण उपादेय होता है उसी प्रकार यह ग्रन्थ भी संग्राह्य है। यद्यपि ग्रन्थ का पूर्ण

१. यह श्लोक क्षेपक है।

नाम वैयाकरणभूषणसार है तथापि सत्या, भामा, के समान नाम के एक देश का ग्रहण किया गया है।

शङ्का—वैयाकरणानां भूषणं इसमें 'उभयप्राप्तौ कर्मणि' (२।३।६६) से षष्ठी होनेसे षष्ठी समास का कर्मणि च (२।२।१४) से प्रतिषेध होना चाहिये।

समाधान—कर्ता और कर्म दोनों के उपादान रहने पर ही 'उभयप्राप्तौ कर्मणि' इस सूत्र से षष्ठी होती है। यहाँ दोनों का उपादान नहीं है अतः 'कर्तृकर्मणोः कृति' (२-३-६५) इस सूत्र से षष्ठी होने के कारण षष्ठी समास का निषेध नहीं हुआ। उक्त सूत्र से 'उभयप्राप्तौ कर्मणि' से विहित षष्ठी के समास का निषेध होता है। अत एव अथ शब्दानुशासनम् अथातो ब्रह्मजिज्ञासा इत्यादि वचन उपपन्न होते हैं।

**प्रारिप्सितप्रतिबन्धकोपशमनाय कृतं श्रीफणिस्मरणरूपं मङ्गलं शिष्यशिक्षार्थं निबध्नन् चिकीर्षितं प्रतिजानीते—**

**फणिभाषितभाष्याब्धेः शब्दकौस्तुभ उद्धृतः।**
**तत्र निर्णीत एवार्थः सङ्क्षेपेणेह कथ्यते ॥ १ ॥**

**उद्धृत इति। अत्र 'अस्माभिः' इति शेषः। भाष्याऽब्धेः शब्दकौस्तुभ उद्धृत इत्युक्तिस्तु शब्दकौस्तुभोक्तानामर्थानामाधुनिकोत्प्रेक्षितत्वनिरासाय। अन्यथा तन्मूलकस्यास्य ग्रन्थस्याप्याधुनिकोत्प्रेक्षितसारत्वापत्तौ पाणिनीयानामनुपादेयतापत्तेः। तत्र निर्णीत इत्युक्तिरितोऽप्यधिकजिज्ञासुभिः शब्दकौस्तुभे द्रष्टव्यमिति ध्वनयितुम् ॥ १ ॥**

ग्रन्थादावनुष्ठितस्य मङ्गलस्य तन्निबन्धनस्य च प्रयोजनमाह—*प्रारिप्सितेत्यादिना*। समाप्तये इति विहाय 'प्रतिबन्धकोपशमनाय' इत्युक्त्या अलौकिकाऽविगीतशिष्टाचारानुमितमङ्गलस्य विघ्नध्वंस एव फलम्। जन्मान्तरीयसमाप्तिमुद्दिश्य शिष्टानां मङ्गलाननुष्ठानान्मङ्गलसमाप्त्योः शरीरनिष्ठप्रत्यासत्त्यैव कार्यकारणभावस्य कल्पनीयतया तस्य च नास्तिकसमाप्तौ व्यभिचारेण समाप्तेस्तत्त्वासम्भवात्, किन्तु कार्यमात्रे प्रतिबन्धकाभावस्य हेतुतया दुरितरूपप्रतिबन्धकनिरास एव मङ्गलस्योपयोगो; न तु समाप्तावपि, विघ्नध्वंसेनान्यथासिद्धत्वात्, समाप्तिस्त्वन्यत्र क्लृप्ततत्कारणकलापादिति सूच्यते। *फणिस्मरणेति*। फणी—शेषः। 'शेषाख्यं धाम मामकम्' इति भगवदुक्तेस्तत्स्मरणस्य विघ्ननिवारकत्वात्। मङ्गलस्य नतिस्तुत्यादिभेदेन नानात्वमिति सूचयितुं स्मरणेत्युक्तम्। *प्रतिजानीत इति*। प्रतिज्ञाफलं तु शिष्यावधानं बोध्यम्।

उद्धरणकर्त्राकाङ्क्षायामाह—*अस्माभिरिति*। मूले—*कथ्यत इति*। हर्यादिनिबद्धकारिकाभिरिति शेषः ॥ १ ॥

**अर्थ—प्रारब्ध ग्रन्थ प्रतिबन्धक (विघ्न) के निवारणार्थ फणी=पतञ्जलि स्मरणरूप मङ्गल का शिष्यों को मङ्गल आचरण की शिक्षा देने के हेतु ग्रन्थ में निर्देश**

हिन्दी भाष्य—फल और व्यापार धातु से प्रतीत हो जाने से (फल और व्यापार का) आश्रयमात्र तिङ् का अर्थ वैयाकरणों ने माना है। शाब्दबोध में शब्दशक्ति (वृत्ति) से उपस्थापित पदार्थ का भान होता है। इसलिये उसके बोध के लिये पदनिष्ठ शक्ति मानी जाती है। इसी आधार पर आश्रय के बोध के लिये तिङ् की शक्ति मानी गई है।

शङ्का—मुख्य[1] अर्थ के साथ अन्वय के बाध होने पर मुख्यार्थ के सम्बन्ध रहने पर, तथा प्रयोजन विशेष या रूढि के कारण वाच्यार्थ से भिन्न अर्थ की बोधिका लक्षणा होती है। जिस प्रकार (गङ्गायां घोषः) इस स्थल में गङ्गा पदार्थ प्रवाह के साथ घोष का अन्वय नहीं हो सकता। गङ्गा के लक्षणीय तीरार्थ के साथ सामीप्यरूप सम्बन्ध है तथा शैत्य-पावनत्वादिधर्म की प्रतीति रूप प्रयोजन के कारण गङ्गा पद की तीरार्थ में लक्षणा होती है। लक्षणा द्वारा उपस्थापित अर्थ का भी शाब्दबोध में भान होता है। इसी प्रकार तिङ् की भावना में शक्ति और आश्रय में लक्षणा स्वीकार करने से आश्रय की प्रतीति हो सकती है। अतः तिङ् की आश्रय में शक्ति व्यर्थ है।

यदि कहें कि एक काल में एक पद की दो वृत्तियों से बोध नहीं होता। इसीलिये वाच्यार्थ प्रवाह और लक्ष्यार्थ तीर इन द्विविध अर्थ में क्रमिक अन्वय बोध तात्पर्य से गङ्गायां मीनघोषौ (गङ्गा में मछली और घोष है) ऐसा प्रयोग नहीं होता। (शक्ति द्वारा प्रवाह और लक्षणा द्वारा तीर की उपस्थिति एक पद से एक समय नहीं होती यह इससे प्रमाणित होता है।) तो तिङ् की भावनाश्रय में लक्षणा मान कर उक्त दोष का निवारण करना चाहिये।

भावनाश्रय में लक्षणा स्वीकार करने से भावना की प्रधानता शाब्दबोध में नहीं होगी। अतः भावनाश्रय में लक्षणा द्वारा समाधान अकिञ्चित्कर है। अतः पक्षान्तर का उपन्यास है।

आक्षेपात्—[2]आक्षेप=अर्थापत्ति से आश्रय की प्रतीति होगी। 'येन विना यदनुपपन्नं, तेन तस्याक्षेपः' अर्थात् जिसके विना जो अनुपपन्न हो उससे उपपादक की कल्पना आक्षेप (अर्थापत्ति) है। उदाहरण—पीनोऽयं देवदत्तो दिवा न भुङ्क्ते (स्थूल देवदत्त दिन में भोजन नहीं करता) यहाँ प्रतीयमान देवदत्त की स्थूलता भोजन के विना अनुपपन्न है। क्योंकि भोजन नहीं करने वाला व्यक्ति मोटा नहीं हो सकता। अतः अनुपपन्न स्थूलता की उपपत्ति के लिये उपपादक रात्रि भोजन की कल्पना होती है। इसी प्रकार आश्रय के विना निराधार भावना नहीं रह सकती। अतः स्वोपपादक आश्रय की कल्पना से बोध हो जाने के कारण उसको तिङ् का वाच्य मानना अनावश्यक है।

न्यायमत में अर्थापत्ति अनुमान में अन्तर्भूत है। उनके अनुसार आख्यातवाच्या भावना, क्वचिदाश्रिता, गुणत्वात् रूपादिवत्=आख्यातवाच्य भावना गुण होने से रूपादि के समान किसी में आश्रित है। भावना यत्न रूप होने से आत्मगुण है।

---

१. 'मुख्यार्थबाधे तद्योगे रूढितोऽर्थप्रयोजनात्।
अन्योर्थो लक्ष्यते यत् सा लक्षणाऽरोपिता क्रिया॥' (काव्यप्रकाश उ० २)

२. 'आक्षेपश्च-अर्थापत्तिः, अनुमानं वा' (श० वा० पृ० २०६)।

अथवा भावना क्वचिदाश्रिता धर्मत्वात् घटत्ववत् इस प्रकार का अनुमान विवक्षित है।

आक्षेप से लभ्य अर्थ का प्रधानतया भान माना गया है। जिस प्रकार मीमांसकों ने व्यक्ति में शक्ति नहीं मानकर जाति में मानी है। घटादि व्यक्ति के विना घटत्वादि-जाति नहीं रह सकती। अतः जाति से व्यक्ति की कल्पना होती है तथापि शाब्द-बोध में आक्षिप्त व्यक्ति की ही प्रधानता मानी गई है। उसी प्रकार भावना से आक्षिप्त के प्राधान्य होने से भावना मुख्य विशेष्यक शाब्दबोध नहीं होगा।

आक्षिप्त का शाब्दबोध में भान नहीं होता। वृत्ति से उपस्थित पदार्थ का ही शाब्द-बोध होता है। इस प्रकार आक्षिप्त आश्रय का भान नहीं होगा यह भी दोष है।

न्यायमत में जातिविशिष्ट व्यक्ति में शक्ति होने से व्यक्ति का आक्षेप नहीं होने के कारण इस मत में पूर्वोक्त उदाहरण सङ्गत नहीं होगा। इस लिये इसमत में व्यक्ति परामर्श आदि प्रतिसन्धान के विना भी आश्रय की प्रतीति का निर्वाह अनुमान से नहीं हो सकता इत्यादि दोष से पक्षान्तर का निर्देश है—

"प्रथमान्तपदाद् वा" वाक्य घटक प्रथमान्त देवदत्त आदिपद से आश्रय का बोध हो जाने से तिङ् का उस अर्थ में शक्ति स्वीकार व्यर्थ है। देवदत्त आदि प्रथमान्त पदों से कहीं कर्ता और कहीं कर्म के बोध से आश्रय का बोध हो जाता है। फलाश्रय कर्म और व्यापाराश्रय कर्ता होता है। इस प्रकार प्रथमान्त पद से आश्रय का लाभ होता है। यहाँ तक के विचार से तिङ् की आश्रय में शक्ति नहीं है इस मत का निरूपण किया गया है।

यद्यपि आश्रयत्व रूप से आश्रय की प्रतीति प्रथमान्त देवदत्त आदि पद से नहीं हो सकती, क्योंकि देवदत्तत्व चैत्रत्वादि रूप से देवदत्त चैत्र आदि का बोध उन पदों से होता है आश्रयत्व रूप से नहीं। इसलिये आश्रयत्व रूप से आश्रय के बोधार्थ तिङ् की शक्ति उसमें आवश्यक है। इस प्रकार पूर्वोक्त शङ्का के निराकरण हो जाने से समा-धानान्तर की आवश्यकता नहीं थी, तथापि जाति शक्तिवादी मीमांसक आश्रयत्व में ही तिङ् की शक्ति मानेंगे, व्यक्ति रूप आश्रय में नहीं। आश्रय का भान आश्रयत्व जाति द्वारा आक्षेप से सिद्ध होने से आश्रय में शक्ति की सिद्धि नहीं होगी। इस शङ्का के निवारण के लिये समाधानान्तर करना ही है। अतः दोनों आशङ्काओं का एक ही समाधान 'लः कर्मणि' इत्यादि से दे रहे हैं।

'लः कर्मणि च भावे चाकर्मकेभ्यः' इस सूत्र में 'कर्तरि कृत्' इस सूत्र से 'कर्तरि' का अनुकर्षण होने के कारण सकर्मक धातुओं से कर्ता और कर्म, अकर्मक धातुओं से भाव तथा कर्ता में लकार का विधान होता है। यह सूत्रार्थ है। सूत्र में कर्तृपदानु-कर्षण के लिये ही चकार का उपादान है।

लोक में तिङादि से आश्रय का बोध होता है उसके स्थानिभूत लकारादि से नहीं। अतः आदेश तिप् के बोधजनकत्व रूप शक्ति का स्थानी में आरोप कर लकार का कर्तृकर्म आदि अर्थों में विधान होने से वस्तुतः तिङादि का ही उस अर्थ में शक्ति बोधन होता है। अतः तिङ् की शक्ति आश्रय में सूत्र बोधित होने से वैयाकरणों के मत में आश्रय ही तिङ का अर्थ है।

न च सूत्रे कर्तृकर्मपदे कर्तृत्व-कर्मत्वपरे । तथा च–कर्तृत्वं-कृतिः, कर्म्मत्वञ्च फलमेवार्थोऽस्त्विति शङ्क्यम् । फलव्यापारयोर्धातुलभ्यत्वेन लकारस्य पुनस्तत्र शक्तिकल्पनाऽयोगात् ।

*कर्तृत्वकर्मत्वपरे इति* । आकृतिशक्तिवादमभिप्रेत्य भावप्रधाननिर्देशाद्वेति भावः । *कर्तृत्वं–कृतिरिति* । कृञो यत्नवाचकत्वेन तत्प्रकृतिककत्रर्थकतृजन्तकर्तृ-शब्दस्य कृत्याश्रयवाचकतया तदुत्तरभावप्रत्ययेन प्रकृत्यर्थप्रकारीभूतकृतिरूपधर्म-बोधनादिति भावः । *कर्मत्वं च फलमिति* । कर्मशब्दस्य धात्वर्थफलाश्रये पारि-भाषिकत्वादिति भावः । *शङ्क्यमिति* । तथा च तत्सूत्रबलान्न कर्तृकर्मणोराख्यात-शक्तिः सिद्ध्यतीति भावः ।

सूत्र में अनुवृत्त कर्तृ और कर्म पद क्रमशः कर्तृत्व तथा कर्मत्व तात्पर्य से उच्चरित हैं। इस प्रकार कर्तृत्व से ( कर्ता में विशेषण ) कृति, कर्म में विशेषण फल अर्थमें तिङ् की शक्ति सूत्र से गृहीत होती है ।

धातु से ही फल और व्यापार ( कृति व्यापार में अन्तर्गत है ) का लाभ हो जाने से इस अर्थ में लकार की शक्ति कल्पना व्यर्थ है ।

हिन्दीभाष्य—जिसप्रकार 'स्त्रियाम्' ( ४।१।३ ) 'द्व्येकयोर्द्विवचनैकवचने' ( १।४।२२ ) इत्यादि स्थल में भावार्थक त्व या तल् थे न रहने पर भी स्त्री से स्त्रीत्व, एक से एकत्व और द्वि से द्वित्व की प्रतीति मानी जाती है। उसी प्रकार कर्तृ-कर्मपद से भी कर्तृत्व-कर्मत्व का बोध होगा। भावार्थक त्व आदि प्रत्ययों से प्रकृत्यर्थ में प्रकारीभूत ( विशेषणीभूत ) का भान होता है। घटत्व पटत्व आदि स्थलों में त्व प्रत्यय से घटादि में विशेषण जाति रूप घटत्व की प्रतीति अनुभव सिद्ध है। यहां भी कर्तृत्व से कर्ता में विशेषण व्यापार, कर्मत्व से कर्म में विशेषण फल की प्रतीति होगी। अतः लकारार्थ आश्रय नहीं होगा किन्तु फल तथा कृति ( व्यापार ) लकारार्थ सूत्र से सिद्ध होता है। कृत्याश्रय कर्ता, फलाश्रय कर्म होता है।

कृत्याश्रय और फलाश्रय में शक्ति मानने में गौरव है। दूसरा भी दोष है। शक्यता आश्रय में उसकी अवच्छेदकता कृति और फल में होगी। व्यक्ति भेद से कृति और फल का अनन्त भेद होने से अवच्छेदकता का भी अनन्त भेद होगा। अतः शक्ति का आनन्त्य प्राप्त होगा। कृति में शक्ति मानने से कृतित्व के शक्यतावच्छेदक होने के कारण लाघव है क्योंकि कृति में एक धर्म है कृतित्व। फल के सम्बन्ध में इस युक्ति को किसीने नहीं माना है। न्याय मत में फल और व्यापार धात्वर्थ है तिङर्थ कृति होने में "लः कर्मणि" इस सूत्र के कर्तृपद को कर्तृत्व परक मानकर उक्तार्थ में इसी सूत्र को प्रमाण दिया है।

वस्तुतः चेतन और अचेतन दोनों के व्यापार को धात्वर्थ मानने से ही चेतनवृत्ति कृति भी धात्वर्थ में अन्तर्गत हो जाती है। अतः उसकी प्रतीति के लिये तिङ् में शक्ति कल्पना निरर्थक है।

अथ दर्शनान्तरीयरीत्या व्यापारस्य धात्वर्थत्वाभावात्तत्र लकारविधिः स्यादिति चेत् ? तर्हि कृतामपि कर्तृकर्म्मादिवाचित्वं न सिध्येत् । 'कर्त्तरि कृद्' इति च 'लः कर्मणि' इत्यनेन तुल्ययोगक्षेमम् ।

*दर्शनान्तरीयेति*। दर्शनं-शास्त्रं न्यायादिः, अन्यद्दर्शनं दर्शनान्तरम्; तत्र भवा दर्शनान्तरीया। गहादित्वाच्छः। 'पचति' इत्यस्य पाकं करोतीति विवरणात् फलं पच्याद्यर्थः, तिङ् तु व्यापारवचन इति मीमांसका मन्यन्ते। तन्मते व्यापारस्यान्यलभ्यत्वाभावात्तत्र लकारविधौ न किञ्चिद् बाधकम्। यद्यप्युक्तरीत्या व्यापारे शक्तिसिद्धावपि फलशक्तिबोधकं कर्मणीत्यनुपपन्नमेव, तथाप्यभिधानाऽनभिधानव्यवस्थार्थं तदप्यावश्यकमेव, द्वेधा भानं तु कथञ्चित् परिहरणीयमिति भावः। *कृतामिति*। कृत्संज्ञकानां ण्वुल्तृजादीनामित्यर्थः। ननु 'कर्त्तरि कृत्' (पा. सू. ३।४।६७) इत्येव तत्र शक्तिसाधकमत आह– *कर्तरि कृदिति*। तत्सूत्रादेव च कर्तरीति अत्रानुवर्त्तते। तथा च पूर्वसूत्रस्थकर्तृपदस्य धर्मिपरत्वेऽत्राप्यनुवर्त्यस्य तस्य धर्मिपरत्वमेव। अत्र धर्मपरतायां तु तत्रापि धर्मपरतैव स्यात्। तदेवाह *तुल्ययोगक्षेममिति*। अलब्धलाभो योगः, लब्धरक्षणं क्षेमम्। एवञ्च 'लः कर्मणि' इत्यस्यान्यलब्धभावनाया आख्यातार्थत्वप्रतिपादकत्वोपगमे न्यायसाम्यात्, 'कर्तरि कृत्' (पा. सू. ३।४।६७) इत्यस्यापि कृतां भावनार्थत्वप्रतिपादकत्वम्। तस्या आक्षेपादेव लाभान्न कृतां तच्छक्तिप्रतिपादकं तदिति यदि, तर्हि 'लः कर्मणि' (पा. सू. ३।४।६९) इत्यपि नाऽख्यातस्य भावनाशक्तिप्रतिपादकमिति समानमित्यर्थः।

अर्थ—न्यायदर्शन[1] से भिन्न जो मीमांसा दर्शन उसकी रीति से लकार का विधान भावना अर्थ में स्वीकार करने पर उक्त दोष नहीं है क्यों कि इस मत में भावना धात्वर्थ नहीं है ऐसा यदि मानें तो कृत्प्रत्यय भी कर्ता कर्म आदि के वाचक सिद्ध नहीं होंगे। क्यों कि कर्तरि कृत् (३।४।६७) यह सूत्र 'लः कर्मणि च' (३।४।६९) इत्यादि सूत्र के साथ तुल्य योगक्षेम अर्थात् दोनों सूत्र के कर्तृपद समानार्थ के प्रतिपादक हैं।

हिन्दीभाष्य—शङ्का—मीमांसादर्शन की रीति से फलमात्र, धातु का अर्थ है। भावना=व्यापार तिङ् का अर्थ है। इस मत में भावना अन्य से लभ्य नहीं है। अतः उक्त सूत्र में पूर्वोक्त रीति के द्वारा कर्तृपद कर्तृत्व परक होने से तिङ्पद की शक्ति भावना में प्रमाण से सिद्ध है। इसलिये आश्रय की तिङ्वाच्यता अप्रामाणिक है।

इस मत में भावना के तिङर्थ होने से लाघव है। धातु की अपेक्षा प्रत्ययों की संख्या अल्प होने से कतिपय प्रत्ययों की ही भावना में शक्तिकल्पना करनी पड़ती है। प्रत्ययापेक्षया धातु की संख्या अत्यधिक है। अतः उसमें भावना की शक्ति मानने में गौरव है।

'पाकं करोति' में करोति से पचति के तिङर्थ का विवरण किया जाता है। इससे भी तिङ् का अर्थ भावना सिद्ध होती है।

समाधान—जो शब्द जिस अर्थ में प्रयुक्त है उसकी अन्यत्र अनुवृत्ति होने पर भी वही होगा। 'नहि गोधा सर्पन्ती सर्पणादहिर्भवति'—(गोह सर्पाकार चलने से साँप नहीं हो जाती है–) इस न्याय से भी पूर्वोक्तार्थ संमत है। अतः "लः कर्मणि च" तथा कर्तरि कृत् इन दोनों में कर्ता का समान अर्थ है तिङन्त स्थल में भावना, कृदन्त स्थल में आश्रय ऐसा विभिन्न अर्थ नहीं हो सकता। तुल्ययोगक्षेम का प्रयोग मूल में इसी अभिप्राय से किया गया है। अलब्ध का लाभ योग तथा लब्ध का संरक्षण क्षेम है।

१. अन्यद् दर्शनं दर्शनान्तरं तत्र भवा रीतिः।

'लः कर्मणी च' इस सूत्र में अनुवृत्त कर्तृपद को अनन्य लभ्य भावना का प्रतिपादक मानने पर न्यायसाम्य से "कर्तरि कृत्" इस सूत्रस्थकर्तृपद को भी भावना प्रतिपादक मानना होगा। यदि कृत्प्रत्ययस्थल में भावना आक्षेप से लब्ध है। अतः आश्रय कृत्प्रत्ययार्थ है ऐसा कहें तो तिङन्त स्थल में भी ऐसा ही माना जायगा। एसी दशा में "लः कर्मणि' यह भी आख्यातार्थ भावना का साधक नहीं होगा यह भाव है।

शङ्का—शब्दाधिकार और अर्थाधिकार के भेद से अधिकार के दो भेद हैं। शब्दाधिकार से अर्थ रहित शब्दमात्र का अधिकार विवक्षित है। इसलिये 'लः कर्मणि च' इस सूत्र में कर्तृपद कर्तृत्वपरक होने में पूर्वोक्त व्यवस्था हो सकती है। (शब्दमात्र की अनुवृत्ति से 'लः कर्मणि' इस सूत्र में कर्तृपद कर्तृत्व (भावना) और कर्तरि कृत् इस सूत्र में आश्रयवाची मानने में किसी प्रकार की असङ्गति नही है। न्याय विरोध अर्थाधिकार में है शब्दाधिकार में नहीं।

समाधान—शब्दाधिकार में उभय सूत्र के कर्तृपदों से विभिन्न रूप से उपस्थिति, योग्यताज्ञान, तथा तात्पर्यज्ञान को बोध में कारण मानना होगा। अर्थाधिकार में उभयत्र समान अर्थ होने के कारण उपस्थिति योग्यता ज्ञान आदि में विभिन्नता न होने से लाघव है। अतः अर्थाधिकार होने से दोनों सूत्रों में कर्तृपद एकार्थ ही है।

यद्यपि शब्दाधिकार में गौरव होनेसे अर्थाधिकार का आश्रयण होना चाहिये। तथापि 'शक्तिः कारकम्' 'शक्तिमत् कारकम्' ये दोनों पक्ष भाष्य में देखे जाते हैं। तिङन्त स्थल में शक्ति तथा कृदन्तस्थल में शक्तिमान् कारक विभक्ति का अर्थ है। इस प्रकार पक्षद्वय व्यवस्थित होने से यहाँ भी तिङन्तस्थल में कर्तृत्व और कृदन्तस्थल कर्ता का बोध हो सकता है। अतः कोई अनुपपत्ति नहीं है। इस आशय से दूसरा समाधान देते हैं—अपि च।

**अपि च मीमांसकानां कृतामिवाऽऽख्यातानामपि कर्तृवाचित्वमस्तु, भावनाया एवाऽऽक्षेपेण कृदादिवत् प्रतीतिसम्भवे वाच्यत्वं माऽस्तु। तथा सति प्राधान्यं तस्या न स्यादिति चेत्? न। घटमानयेत्यादावाक्षिप्तव्यक्तेरपि प्राधान्यवदुपपत्तेः। पचतीत्यादौ पाकं करोतीति भावनाया विवरणदर्शनाद्वाच्यत्वमिति चेद्? न। पाकानुकूलव्यापारवतः कर्त्तुरपि विवरणविषयत्वाविशेषात्।**

ननु पूर्वसूत्रस्थकर्तृपदस्य धर्मिपरत्वेऽप्यनुवृत्तस्य तस्य शब्दाधिकाराऽऽश्रयणेन धर्मपरत्वसम्भवान्नोक्तदोषः। यदि च शब्दाधिकाराऽऽश्रयणं सत्येव गमके, प्रकृते च तदाश्रयणे प्रमाणाभाव इति विभाव्यते, तदाऽपि 'शक्तिः कारकं' 'शक्तिमत्कारकम्' इति पक्षद्वयस्याप्याकरसिद्धतया तद्विकल्पस्य तिङ्कृतोर्व्यवस्थितत्वाश्रयणादर्थाधिकाराश्रयणेऽप्यभिमतार्थलाभोऽक्षत एवेत्यत आह—*अपि चेति*। तथा च विकल्पव्यवस्थाया एवाप्रामाणिकत्वेनैकार्थपरतैव न्याय्येति भावः। नन्वाख्यातस्य व्यापारावाचकत्वे कथं ततस्तद्बोधोऽत आह—*भावनाया इति*। *कृदादिवदिति*। 'तत्र तस्येव' (पा. सू. ५। १।११६) इति वतिः। कृदादिस्थल इवेत्यर्थः। आदिपदात् कर्तृविहिततद्धित इत्यादेः परिग्रहः। तथा च यथा भवन्मते धातोर्व्यापारावाचकत्वेन

कृदर्थकर्त्राक्षिप्तभावनाया बोधविषयत्वं; तथाऽऽख्यातेऽपीति भावः । *तथा सतीति* भावनाया आख्यातावाच्यत्वे सतीत्यर्थः । *तस्याः*–भावनायाः । *प्राधान्यम्*–मुख्यविशेष्यत्वम् । *घटमानयेति* । 'जातिः पदार्थः' इति मते जात्याक्षिप्तव्यक्तेर्यथा प्राधान्यम्; तथा कर्त्राक्षिप्तभावनाया अपि प्राधान्यमुपपत्स्यत इत्यर्थः । शक्तिग्राहकेषु परिगणिताद्विवरणाद्भावनावाचकत्वमाख्यातस्याऽऽयास्यतीत्याशङ्कते—*भावनाया इति* । *विवरणेति* । तत्समानाऽर्थकपदाऽन्तरेण तदर्थकथनस्य विवरणतया, प्रकृते पचतीत्यस्य पाकभावनेत्याख्यातस्य भावनापदेन विवरणात्तस्य भावनावाचकत्वमित्यर्थः । विवरणस्य स्वस्वबोधानुसारितया, न तेनाऽर्थनिर्णयः इत्याह–*पाकानुकूलेति* ।। पचतीत्यस्यैककर्तृका पचिक्रियेति कर्तृविवरणस्याऽपि दर्शनेनाऽऽख्यातस्य भावनायां शक्तिरुत कर्तरीत्यत्र विनिगमकाभावादिति भावः ।

अर्थ—जिसप्रकार मीमांसक मत में कृत्प्रत्यय से आश्रय का और आक्षेप से व्यापार का बोध होता है उसी प्रकार तिङन्तस्थल में भी तिङ् से आश्रय और आक्षेप से व्यापार का बोध हो जाने से तिङ्वाच्य भावना सिद्ध नहीं हो सकती है ।

यदि कहें कि तिङन्तस्थल में भावना आक्षिप्त मानने पर शाब्दबोध में उसकी (मुख्यविशेष्यता) नहीं होगी तो ठीक नही है । जाति में शक्ति मानने वाले के मत में जाति से व्यक्ति का आक्षेप द्वारा ही बोध माना गया है । फिर भी उसकी प्रधानता (मुख्य विशेष्यता) शाब्दबोध में रहती है । उसी प्रकार भावना आक्षेप लभ्य होने पर भी उसका प्राधान्य हो सकता है ।

यदि कहें कि पचति का पाकं करोति ऐसा विवरण देखने से व्यापार तिङ् का वाच्य है तो यह ठीक नहीं है । क्यों कि पाकानुकूल व्यापारवान् कर्ता में भी विवरण विषयत्व का अविशेष है अर्थात् विवरण विषयत्व समान है ।

हिन्दीभाष्य—मीमांसक मत में घटादि पद की घटत्वादि जाति मात्र में शक्ति है । व्यक्ति अनन्त होने से सकल व्यक्तियों का ज्ञान नहीं हो सकने के कारण सकल व्यक्ति निरूपित शक्ति का ग्रहण नहीं होसकता । किसी एक व्यक्ति निरूपित शक्ति के स्वीकार करने पर अन्य व्यक्ति का शक्ति के अभाव से शाब्दबोध में भान नहीं होगा यदि अशक्य व्यक्त्यन्तर का भी भान मान लें तो अशक्य व्यक्त्यन्तर के समान शक्य व्यक्ति का भी भान सिद्ध होने से उसमे शक्ति स्वीकार व्यर्थ ही सिद्ध होगा । विशेषण के ज्ञान कराने में क्षीण सामर्थ्या शक्ति, विशेष्य घट पटादि का बोधन नहीं करा सकती । अतः व्यक्ति के विना जाति नहीं रह सकती इस अनुपपत्ति परिहार लिये व्यक्ति का आक्षेप से लाभ होता है । ऐसे स्थलों में जिस प्रकार जाति से आक्षिप्त व्यक्ति का प्राधान्य होता है । उसी प्रकार यहाँ भी आक्षेप से लभ्य भावना का प्राधान्य हो सकता है ।

शङ्का—विवरण—समानार्थक पदान्तर से तदर्थ कथन और विव्रियमाण–जिसका विवरण किया जाय इन दोनों का अर्थ समान होता है जैसे विव्रियमाण चन्द्र का विवरण, समानार्थक शशी से किया जाता है इसी प्रकार पचति का विवरण पाकं करोति से होता है । व्यापारार्थक करोति से तिङर्थ का विवरण होने से लिङ् में व्यापार के बोधकत्व की सिद्धि होती है ।

समाधान—पाकं करोति इससे जिस प्रकार फल और व्यापार का विवरण होता है उसी प्रकार तिप् पद से कर्ता (आश्रय) का विवरण एकाश्रयिका विक्लित्त्यनुकूला भावना इस प्रकार का बोध होता है। अतः भावना के समान आश्रय का भी विवरण देखने से किसी एक की वाच्यता की सिद्धि में यह प्रमाण नहीं हो सकता।

न च कर्त्तुर्विवरणं तात्पर्याऽर्थविवरणं, पाकं करोतीत्यशब्दार्थकर्मत्व-विवरणवद्, इतरेतरयोगद्वन्द्वे समुच्चयांशविवरणवद्वा, न तदर्थनिर्णायक-मिति वाच्यम्, भावनायामपि तुल्यत्वात्।

*इतरेतरयोगद्वन्द्व इति* ।। समाहारद्वन्द्वे उत्तरपदलक्ष्याऽर्थसमाहारस्य चशब्देन विवरणादुक्तमितरेतरेति। धवखदिरावित्यादिद्वन्द्वघटकपदाऽशक्यसाहित्यस्य विग्रहवाक्यस्थचशब्देन विवरणवदित्यर्थः। इदं चाऽन्वयप्रयोजकरूपवत्त्वं योग्यता। एवञ्च 'घटेन जलमाहर' इत्यत्र जलाऽऽहरणप्रयोजकतया छिद्रेतरत्ववत् प्रकृते द्वित्वाऽन्वयप्रयोजकतयाऽपदार्थसाहित्यस्याऽपि भानमित्यभ्युपेत्योक्तम्। तत्र साहित्यस्य द्वित्वाद्यतिरिक्तस्याऽननुभवात्तस्य द्विवचनादिनैवोपस्थितेर्न तत्र समासघटकप्रत्येक-पदवृत्तिः। तस्यैव तेन विवरणमिति मतान्तरन्तु वक्ष्यते। *तुल्यत्वादिति*। भावनापदेनाऽऽख्यातस्य विवरणमप्यपदार्थविवरणमित्यस्यापि वक्तुं शक्यत्वादित्यर्थः। स्वस्वबोधाऽनुसारिविवरणस्य नाऽर्थनिर्णायकत्वमित्युभयोः समानमिति भावः।

अर्थ—कर्ता का विवरण तात्पर्य विषय अर्थ का विवरण है। जिस प्रकार पाकं करोति इस में अम् विभक्ति द्वारा पचति से अप्रतीत कर्मत्व का विवरण तात्पर्यार्थ का विवरण माना गया है। या घटश्च पटश्च घटपटौ इत्यादि इतरेतरयोगद्वन्द्व स्थल में समुच्चय की प्रतीति नही होती, किन्तु घटश्च पटश्च इस विवरण में समुच्चय की प्रतीति होती हैं। यहां शब्दार्थ का विवरण न होकर तात्पर्यार्थ माना जाता है। अतः अशब्दार्थ का भी विवरण देखने से विवरण मात्र से किसी अर्थ का वाच्यत्व निर्णय नही हो सकता।

समाधान—कर्ता के तिङर्थ होने का निर्णय विवरण से नहीं होने पर भावना की तिङर्थता का भी विवरण के द्वारा निर्णय नही होगा (कर्ता के समान भावना का विवरण की अशब्दार्थ ही क्यों न माना जाय)

हिन्दीभाष्य—पचति इस विव्रियमाण पद में कर्मत्व बोधक पद न रहने पर भी पाकं करोति इस विवरण में कर्मत्व के बोध होने से शब्दार्थ का ही विवरण बोध होता है ऐसा नियम नहीं है किन्तु तात्पर्यार्थ का भी बोध उससे होता है। ऐसी अवस्था में पाकं करोति से कर्ता का विवरण तात्पर्यार्थ होने से कर्ता के तिङर्थ होने में विवरण सहायक नहीं है।

समाधान—जिस प्रकार कर्ता का विवरण तात्पर्यार्थ माने हैं उसी प्रकार भावना का करोति विवरण भी तात्पर्यार्थ है शब्दार्थ नहीं है ऐसी स्थिति में भावना के आख्यातार्थ होने में भी विवरण सहायक नहीं होगा।

कृत्प्रत्यय के समान आख्यात भी कर्ता का वाचक है भावना की प्रतीति आक्षेप से होती है ऐसा नहीं मानने का कारण यह है—कर्ता भावनाश्रय होता है। कर्ता अपने स्वरूप के उपपादन के लिये भावना का आक्षेपक होता है भावना के बिना कर्ता हो ही नहीं

सकता। कर्ता के स्वरूप में भावना अप्रधान है। उसके आक्षेप होने पर उसका अप्राधान्य ही होगा। क्यों कि आक्षिप्त भावना अप्रधान होकर ही कर्ता के स्वरूप की उपपत्ति कर सकती है। व्यक्ति के विना जाति नही रह सकती अतः जाति से व्यक्ति का आक्षेप होता है। परन्तु यहाँ जाति से परिच्छिन्न होकर ही व्यक्ति का आक्षेप होता है। अतः जाति से परिच्छिन्न व्यक्ति की प्रधानता होती है। पाचकः इत्यादि कृत्स्थल में कृदर्थ कर्ता का प्रधान्य होने से अप्रधान भावना को आक्षेप लभ्य मानने पर भी कोई दोष नहीं है। तिङन्त स्थल में कर्ता के स्वरूपोपपादक भावना का आक्षेप से अन्वय होने पर उसका अप्राधान्य हो जायगा। अतः भावना को तिङर्थ मानते हैं। इस आशय से दोषान्तर किञ्च से देते हैं।

**किञ्च—'पचति देवदत्तः' इत्यत्राऽभेदान्वयदर्शनात्तदनुरोधेन कर्त्तुर्वाच्यत्वमावश्यकम्। पक्ता देवदत्त इतिवत्। न चाऽभेदबोधे समानविभक्तिकत्वं नियामकम्। तच्च तत्र नास्तीति वाच्यम्। 'सोमेन यजेत' 'स्तोकं पचति' 'राजपुरुष' इत्यादावप्यभेदबोधाऽनापत्तेः।**

नन्वाख्यातस्य कर्तृवाचित्वे तदाक्षिप्तभावनायाः प्राधान्याऽनुपपत्तिः। नचाऽकृतिवादे जात्याक्षिप्तव्यक्तिवत् प्राधान्यमुपपादितमेवेति वाच्यम्। दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात्, तथा हि कर्त्रा स्वस्वरूपनिरूपकतया भावनाऽऽक्षेप्तव्या, भावनाविरहिणः कर्तृत्वासम्भवात्। ततश्च धर्मिग्राहकमानसिद्धगुणत्वेन प्राधान्याऽसम्भवः, कृतीव, जात्या तु परिच्छेद्यतयाऽवगतस्य द्रव्यस्य तथैवाऽऽक्षेपाद् भवति तस्य प्राधान्येन भानमिति प्राधान्याऽनुरोधाद्भावनाया वाच्यत्वमावश्यकमित्यतो दूषणाऽन्तरमाह— *किञ्चेति*। *अभेदाऽन्वयदर्शनादिति*। देवदत्ताऽभिन्नैककर्तृको वर्त्तमानो व्यापार इत्याकारकबोधस्याऽऽकरसम्मतत्वादित्यर्थः। *तदनुरोधेनेति*। अभेदाऽन्वयाऽनुरोधेनेत्यर्थः। *आवश्यकमिति*। अन्यथाऽनुभूयमानतादृशबोधाऽपलापाऽऽपत्तिरिति भावः। *नियामकमिति*। तद्विभक्त्यन्तनामार्थनिष्ठाऽभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति तद्विभक्त्यन्तपदजन्योपस्थितिहेतुत्वस्य, 'नीलो घटः' इत्यादौ क्लृप्तत्वादित्यर्थः। *तच्चेति*। अभेदान्वयबोधप्रयोजकसमानविभक्तिकत्वं चेत्यर्थः। *तत्र*—देवदत्तः पचतीत्यादौ। तादृशनियमे व्यतिरेकव्यभिचारस्थलानि दर्शयति—*सोमेनेत्यादिना*।

नन्वत्र यागे सोमस्य करणत्वेनैवान्वयात् कथमुक्तनियमस्य व्यभिचार इति चेद्? न। सोमस्य यागभावनायां करणत्वेनाऽन्वये यागस्याऽपि तत्र करणत्वेनैवाऽन्वयात् 'सोमेन यागेनेष्टं भावयेद्' इत्युभयविधाने वाक्यभेदप्रसङ्गः। सोमस्य यागवत् फलभावनाकरणत्वेन प्राधान्यापत्तिः, यागार्थत्वानुपपत्तिः, प्रत्ययवाच्यफलभावनायाः समानपदोपात्तयागेनैव करणाकाङ्क्षानिवृत्तेर्विभिन्नपदोपात्तस्य सोमस्य करणत्वेनाऽन्वयानुपपत्तिश्च। 'सोमेन यागम्' इत्यन्वयाभ्युपगमे यद्यपि सोमस्य न यागार्थत्वानुपपत्तिः; करणत्वेनैवान्वयात्। तथापि प्रत्ययार्थभावनाकरणत्वेन उपस्थितस्य साध्यत्वेनाऽन्वयानुपपत्तिर्दुष्परिहरैवेति सोमपदस्य मत्वर्थलक्षणया सोमवता यागेनेष्टं

भावयेत्' इति विशिष्टार्थविधानाद्वाक्यभेदप्रसङ्गो नेति मीमांसकसिद्धान्तः। तत्र चोक्तनियमे व्यभिचारो दुर्वार इति भावः। *स्तोकं पचतीति*। अत्रापि धात्वर्थ-व्यापारजन्यफलसम्बन्धिनि फले विभिन्नविभक्तिकस्तोकपदार्थस्याभेदान्वयादित्यर्थः। ननु समानविभक्तिकत्वं नामाऽर्थयोरेवाऽभेदाऽन्वयबोधे प्रयोजकम्। अत एव व्युत्पत्तौ द्विवचनस्यैवोल्लेखः। नामत्वं च वक्ष्यते। प्रकृते चाऽनुयोगिप्रतियोगिनोर्नामार्थत्वाभावान्नोक्तदोषोऽत आह—*राजपुरुष इति*।

यद्यपि 'सोमेन यजेत' इत्यत्रेव 'देवदत्तः पचति' इत्यत्रापि समानविभक्तिकत्व-स्याऽतन्त्रतयाऽभिमतबोधान्वयानुरोधात् कर्तृवाचित्वं सिद्धमेव, तथाऽपि व्युत्पत्ते-र्नामार्थद्वयविषयकत्वेऽपि व्यभिचारो दुरुद्धर एवेत्याशयेन नामार्थद्वयस्थलमुपात्तम्। नैयायिकमतेन चेदम्। तैः कर्मधारये षष्ठीतत्पुरुषे च पूर्वपदशक्यलक्ष्यान्यतरस्योत्तर-पदार्थेऽभेदान्वयोपगमात्। स्वमते तु जहत्स्वार्थवृत्त्यभ्युपगमेन पूर्वोत्तरपदार्थयोरन्वय-स्यैवाऽभावेनोक्तव्युत्पत्तेरप्रसरादिति बोध्यम्। इदमुपलक्षणं षष्ठ्यर्थबहुव्रीहेरपि॥

अर्थ—'पचति देवदत्तः' इत्यादि स्थल में अभेदान्वय देखा जाता है। इसलिये अभेदान्वय के अनुरोध से तिङ् का वाच्य कर्ता मानना 'पक्ता देवदत्तः' इसके समान आवश्यक है।

शङ्का—अभेदान्वय के प्रति दोनों पदों का समान विभक्तिक होना आवश्यक है। एक से सुप् और एक से तिङ् विभक्ति होने से समान विभक्तिकत्व उक्तस्थल में नहीं है।

समाधान—'सोमेन यजेत' 'स्तोकं पचति' 'राजपुरुषः' इत्यादि स्थल में भी अभेद बोध की उपपत्ति नहीं होगी। (क्यों कि समान विभक्तिकत्व यहां भी नहीं है)

हिन्दीभाष्य—'पचति देवदत्तः' इस वाक्य से देवदत्ताभिन्न एक कर्ता का जो वर्तमान कालिक विक्लित्त्यनुकूल व्यापार ऐसा बोध होता है। भाष्य सम्मत होने से इसकी उपेक्षा नहीं की जा सकती। अतः अभेदान्वय के अनुरोध से कर्ता को तिङ् वाच्य मानना आवश्यक है।

शङ्का—अभेदान्वय उसी स्थल में होता है. जहाँ विशेषण और विशेष्य वाचक पद से समान विभक्ति आती है। जिस प्रकार 'नीलं कमलम्' 'सुन्दरो देवदत्तः' इन स्थलों में विशेषण नील और विशेष्य कमल इसी प्रकार विशेषण सुन्दर और विशेष्य देवदत्त इन से समान सुविभक्ति के आने से अभेदान्वय होता है। राज्ञः पुरुषः इत्यादि स्थल में राजन् शब्द एवं पुरुष शब्द से समान विभक्ति उत्पन्न न होने से अभेदान्वय नहीं होता। प्रत्युत भेद सम्बन्ध से राजा का पुरुष इस प्रकार का अन्वय होता है। इस नियम के अनुसार 'पचति देवदत्त' यहाँ सुप् और तिङ् विभक्ति उत्पन्न होने के कारण [1]समानविभक्तिकत्व नहीं होने से अभेदान्वय बोध दुर्घट है।

---

१. समान तुल्य विभक्ति जिन पदों में वे ही समान विभक्तिक है। समानता विभक्तिविभाजकप्रथमात्व धर्म से लिया गया है। इसीलिये वेदाः प्रमाणम् इत्यादि में जस् त्व और सुविभक्ति के भेद होने पर भी अभेदान्वय होता है तथोविध बोध समास शक्ति से ही उपपन्न होता है। अतः परास्परान्वय नहीं होता।

समाधान—'सोमेन यजेत' यहाँ सोमपद की सोमवान् में लक्षणा है। यज् धात्वर्थ याग में सोमवान् का अभेदान्वय होने से सोमवान् से अभिन्न याग ऐसा बोध मीमांसको ने माना है। इसी प्रकार राजपुरुष में भी राज सम्बन्धी से अभिन्न पुरुष ऐसा बोध होता है। यदि समान विभक्ति वालों का ही अभेद बोध माना जायगा तो पूर्वोदाहरणों में सोमेन तृतीयान्त और यजेत तिङन्त होने से समान विभक्तिक नहीं हैं। अतः अभेदबोध के असम्भव होने से उक्त नियम असङ्गत है। एवं राजपुरुषः इसमें विशेषण विभक्ति के लुप्त होने से समानविभक्तिकत्व असम्भव है।

शङ्का—उक्त स्थल में सोम तथा याग इन दोनों परस्पर अन्वय न होकर करणत्व रूप से पृथक् पृथक् भावना में अन्वय स्वीकार करने से उक्त नियम का व्यभिचार नहीं है। राजपुरुषः इसमें अतिरिक्त समास शक्ति होने से अभेदान्वय होना ही नहीं है।

समाधान—उक्त रीति से अन्वय मानने पर सोमेन (सोम से) तथा यागेन (यागसे) इष्ट की भावना इस प्रकार के बोध होने से वाक्यभेद हो जायगा।

दूसरा दोष यह होगा सोम और याग दोनों का करणतया भावना में अन्वय मानने पर याग के समान सोम भी भावना में करण होने से प्रधान हो जायगा। साथ ही साथ सोम याग के लिये नहीं होगा। तिङ् वाच्य-भावना की करणाकाङ्क्षा समान पद से उपात्त याग से ही शान्त हो जाने से करणान्तर की आकांक्षा न होने के कारण विभिन्नपदोपस्थापित सोम का निराकांक्ष भावना में अन्वय भी नहीं होगा। अतः सोमवान् में सोम की लक्षणा द्वारा याग में अभेदान्वय बोध ही मानना उचित है।

इसी प्रकार 'स्तोकं पचति' में स्तोक (स्वल्प) का पच् धात्वर्थ फल में अभेदान्वय होने से स्तोकाभिन्न पाक ऐसा बोध होता है। यहाँ भी स्तोक द्वितीयान्त और पचति तिङन्त होने से समान विभक्ति वाला न होने पर भी अभेदान्वय होता है अतः उक्त नियम अमान्य है।

यदि कहें कि नामार्थ का नामार्थ के साथ अभेदान्वय बोध में समान विभक्तिकत्व नियम है। उक्त [1]दोनों स्थलों में नामार्थ का धात्वर्थ में अन्वय होने से नियम का व्यभिचार नहीं है तो राजपुरुषः इस स्थल में राजपद की सम्बन्धी में लक्षणा करने के बाद राजसम्बन्धी से अभिन्न पुरुष ऐसा अभेद बोध होता है किन्तु वहाँ राजपदोत्तर किसी विभक्ति के श्रवण न होने से समान विभक्तिक न होने पर भी तथाविध बोध होने से उक्त नियम व्यभिचारी है। ऐसी अवस्था में पचति देवदत्तः इस में अभेदान्वय होने से आश्रय को तिङ् वाच्य मानना चाहिये।

राजपुरुषः यह उदाहरण वैयाकरणों के मत में से नहीं है क्यों कि इस मत में राज-सम्बन्धी पुरुष इस अर्थ में राजपुरुष की शक्ति होने से लक्षणा और पदार्थों की पृथक उपस्थिति न होने से परस्पर अभेदान्वय नहीं होता। न्यायमत में सम्बधी में लक्षणा से परस्पर अभेदान्वय होता है क्यों कि इस मत में राजपुरुष समुदाय में पृथक् शक्ति नहीं है।

न च लक्षणया कर्तुरुक्तत्वात्सामानाधिकरण्यम्। पिङ्गाक्ष्यादियौगि-

---

१. सोमेन यजेत तथा स्तोकं पचति।

कानामपि द्रव्यवाचित्वाऽनापत्तेः । एवं वैश्वदेवीत्यादितद्धितान्तानामपि । 'अनेकमन्यपदार्थे' साऽस्य देवता' इत्यनुशासनेन पिङ्गे अक्षिणी यस्याः, विश्वे देवा देवता अस्याः, इति विग्रहदर्शनात् प्रधानषष्ठ्यर्थ एव अनुशासनलाभात् ।

तथा च 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति वाक्ये द्रव्याऽनुक्तेरारुण्यस्य स्ववाक्योपात्तद्रव्ये एवाऽन्वयप्रतिपादकाऽरुणाधिकरणोच्छेदापत्तिः । 'द्रव्यवाचकत्वसाधकमूलयुक्तेः सामानाधिकरण्यस्योक्तरीत्योपपत्तेरिति प्रपञ्चितं विस्तरेण बृहद्वैयाकरणभूषणे ॥

अपरे तु—उक्तव्युत्पत्ती नामांशेऽसमस्तत्वस्यापि विशेषणान्नोक्तस्थले व्यभिचार इत्याहुः; अधिकमग्रे वक्ष्यते ।

*सामानाधिकरण्यमिति* । पदयोरेकार्थाऽभिधायित्वमित्यर्थः । *यौगिकानामिति* । योगः—अवयववृत्तिस्तन्मात्रपुरस्कारेण प्रवृत्तानामित्यर्थः । *द्रव्यवाचित्वानापत्तेरिति* धर्मिशक्तत्वाऽनापत्तेरित्यर्थः । *एवमिति* । लक्षणयैव सामानाधिकरण्योपपादने इत्यर्थः । इत्थमेवेति वार्थः । *वैश्वदेवीत्यादीति* । द्रव्यवाचित्वाऽनापत्तेरित्यनुषज्यते । तथा च बलाबलाऽधिकरणोच्छेदाऽपत्तिरिति भावः ।

तथाहि—'तप्ते पयसि दध्यानयति, सा वैश्वदेव्यामिक्षा, वाजिभ्यो वाजिनम्' इति श्रूयते । अत्रायं संशयः—किमनया श्रुत्याऽऽमिक्षावाजिनोभयगुणकमेकं कर्म विधीयते,? अथवा तत्तद्गुणदेवताभिन्नं कर्मद्वयम् ? इति । वाजेनाऽन्नेनाऽऽमिक्षारूपेण सम्बन्धाद्वाजिनो विश्वे देवाः,ताननूद्य वाजिनगुणो विधीयते । तेनोभयगुणकं वैश्वदेवमेकं कर्मेति पूर्वपक्षः । वैश्वदेव्यामिक्षा' इत्यत्र तद्धितस्य देवतासम्बन्ध्यर्थकतया श्रौतः सम्बन्धः, 'वाजिभ्यो वाजिनम्' इत्यत्र तु वाक्येन सः । सत्यामपि पदान्तरापेक्षायां स्वाभिन्नाऽर्थकपदस्यैवापेक्षणान्न श्रौतत्वबाधः सम्बन्धस्य । यत्र तु भिन्नाऽर्थकपदापेक्षा; तत्रैव वाक्यस्य विनियोजकत्वात् । एवञ्च 'वैश्वदेव्याऽऽमिक्षा' इत्येतद्विहितवैश्वदेवयागानुवादेन न वाजिनगुणविधानम्, श्रौतद्रव्येण निराकाङ्क्षत्वात् । किन्तु कर्मान्तरविधिः । 'वाजिभ्यः' इति चापूर्वदेवताविधानमिति राद्धान्तः । यदि च तद्धितस्य देवतासम्बन्धे एव शक्तिस्तदा वाजिनाऽऽमिक्षयोर्वाक्यविनियोज्यस्य साम्यादामिक्षाद्रव्ये देवतासम्बन्धस्य श्रौतत्वमिति सिद्धान्तव्याकोपः । लक्षितद्रव्यमादाय देवतासम्बन्धे श्रौतत्वसम्बन्धात्तदनुपपत्त्यभावेन तद्धितस्य द्रव्यार्थकत्वकल्पनमत्ययुक्तं स्यादिति ।

*अनुशासनलाभादिति* । उपलक्षणमिदं, युक्तेरपि । तथाहि—घटपदाद् घटत्व प्रकारकबोधवद्दण्डयादिपदाद्दण्डसम्बन्धवानिति प्रतीतिः सर्वसिद्धा । तत्राऽऽकृत्यधिकरणन्यायेन सम्बन्धमात्रं मतुबादिवाच्यं स्यात् । अत एव 'देवदत्तस्य गोमत्त्वम्' इत्यत्र त्वप्रत्ययस्य सम्बन्धबोधकत्वं सङ्गच्छते । घटत्वमित्यादौ प्रकृत्यर्थघटत्वबोधकत्ववत् प्रकृतिजन्यबोधकप्रकारस्य भावप्रत्ययार्थत्वाद् ; विशेषस्य संसर्गस्य कथं ततो

बोध इति तु नाऽऽशङ्कनीयम् । यतस्तस्य स्वाक्षिप्तव्यक्त्यंशे प्रकारतयैव भानात् । एवं मत्वर्थविहितबहुव्रीहेरप्येकं हायनमस्था इति विग्रहे, देवतार्थकतद्धितस्यापि विश्वे देवा देवता अस्या इति विग्रहे च प्रत्ययार्थसम्बन्धस्यैव प्राधान्यदर्शनात् तस्यैव वृत्तिवाच्यत्वनिर्णयः । उक्तञ्च—

'यस्मिन्नन्यपदार्थे च बहुव्रीहिर्विधीयते ।
तत्राऽपि प्रत्ययार्थत्वात् सम्बन्धस्य प्रधानता ॥' तं. वा. पृ. ६७४ इति ।

नच गोमानित्यादौ सम्बन्धिप्रतीत्यनुपपत्तिः । उभयाऽऽश्रितेन सम्बन्धेनाऽऽक्षेपात्तदुपपत्तेः । तव कर्तृवत् सम्बन्धवच्च । नचाऽसत्त्वभूतसम्बन्धस्यैव विभक्त्यर्थतया तद्विहितमतुबादेस्तादृशसम्बन्धबोधकत्वे तत्र लिङ्गसंख्याऽनन्वयाऽऽपत्त्या सत्त्वभूतसम्बन्धे एवानुशासनाऽऽदरेण शक्तिरभ्युपेया । एवञ्च द्रव्यमेवार्थो मत्वर्थीयस्यास्तु, सम्बन्ध आक्षेपलभ्य एव किं न स्यात् । किञ्च मतुबादेः सम्बन्धसामान्यार्थकत्वे तस्य सम्बन्धादिपदपर्य्यायताऽऽपत्त्या सम्बन्धविशेषार्थकत्वमेवोररीकरणीयम् । तत्त्वं चाऽनुयोगिप्रतियोगिविशेषनिरूप्यत्वम् । तथाचैकस्य निरूपकस्य प्रकृत्या लाभेऽप्यनुयोगिरूपनिरूपकभानार्थं तत्र शक्तिकल्पने त्वतीव गौरवमिति वाच्यम् । मतुबादेर्ह्यसत्त्वभूतसम्बन्ध एव वाच्यः । अत एव सम्बन्धिनामनेकत्वेऽलिङ्गकत्वेऽपि च दण्ड्यादिशब्दानामेकवचनान्तत्वं नानालिङ्गकत्वं च । सम्बन्धिनां तथात्व एव तादृशप्रयोगदर्शनात् । तथाच मतुबर्थसम्बन्धे लिङ्गाद्यन्वयासम्भवात्तैरेवाऽऽक्षेपः सम्बन्धिनः, आख्यातार्थसंख्ययेव कर्त्रादिः ।

वस्तुतस्तु लिङ्गसङ्ख्याऽनन्वयित्वरूपासत्त्वभूतत्वमपि षष्ठ्यर्थादावार्थसिद्धम् । प्रत्ययार्थलिङ्गसङ्ख्यादेः प्रत्ययार्थ एवाऽन्वयायोगात् 'प्रत्ययानाम्—' इति व्युत्पत्तेश्च । तस्मान्नासत्त्वभूतसम्बन्धः षष्ठीवाच्यः ।

यत्तु—अनुयोगिरूपनिरूपकभानार्थं द्रव्ये शक्तिकल्पने गौरवमिति; तदपि न । सम्बन्धप्रत्यक्षे हि यावदाश्रयभानापेक्षा न शाब्दे, येन तच्छक्तिकल्पनागौरवं सम्भाव्येत । तस्मात् तत्र मतुबादेः शक्तौ न किञ्चिद् बाधकमिति । प्रपञ्चितं चैतदधिकमन्यत्र ।

एवञ्चैकहायन्यादिपदानां सम्बन्धवाचकतायामनुशासनस्य तदुपष्टम्भानेकयुक्तीनां च सत्त्वात्तत्रैव शक्तिः सिद्ध्येत्तं सम्बन्धिनीत्यखण्डार्थः ।

*तथाचेति* ॥ सामानाधिकरण्यस्य लक्षणयैवोपपादन इत्यर्थः ॥ *अरुणाधिकरणेति* ॥ तथाहि 'अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति' इति श्रूयते । तत्र किमरुणिमा वाक्यं भङ्क्त्वा प्रकरणे निवेशनीयः ? किं वा क्रीणातिना सम्बध्यते ? इति संशये, क्रीणातिना सम्बध्यमानस्तद्योगात् क्रयणकरणं स्याद्, न चाऽमूर्तस्य न युक्तमिति नास्य क्रयणसम्बन्ध इति पृथगेव प्रकरणे निवेशनीय इति पूर्वपक्षः ।

सिद्धान्तस्तु—सम्भवति सन्निहितपदार्थान्वये प्रकरणनिवेशानौचित्यात् । पिङ्गाक्ष्यादिपदानां द्रव्यवाचकतया तत्सिमानाधिकरण्येन प्रत्यक्षेण क्रीणात्यर्थेनाऽपि

समन्वयलाभाद् वाक्यघटकत्वमेव तस्येति। स चाऽनुपपन्नः पिङ्गाक्ष्यादियौगिकानां पदानामुक्तयुक्त्या सम्बन्धार्थकतया द्रव्यस्य तैरनुपादानात्।

किञ्च—पूर्वपक्षोऽप्यनुपपन्नः। पिङ्गाक्ष्यैकहायनीशब्दार्थसम्बन्धस्याप्यमूर्त्तत्वात् क्रीणातिकरणत्वाऽसम्भवेन क्रीणातिकरणत्वस्यैतद्वाक्यादलाभादरुणस्यैव वाक्यभेद-शङ्कायां मूलशैथिल्याच्च। बहुव्रीह्योररुणपदस्य च लाक्षणिकद्रव्यविधायकताया अवि-शिष्टत्वेन बहुव्रीह्यादेरेव द्रव्यविधायकत्वं, नारुणपदस्येत्यत्र विनिगमकाभावात्। अधिकमग्रे वक्ष्यते।

अर्थ—शङ्का–लक्षणा द्वारा कर्ता के कथन से [1]सामानाधिकरण्य की उपपत्ति हो जायगी पुनः इससे कर्ता में तिङ् की शक्ति कल्पना अयुक्त है।

समाधान—लक्षणा से सामानाधिकरण्योपपादन द्वारा अभेदान्वय मानने पर पिङ्गाक्षी आदि यौगिक तथा वैश्वदेवी इत्यादि तद्धितान्त पद भी द्रव्य (धर्मी) के वाची नहीं होंगे। क्यों कि पिङ्गे अक्षिणी यस्याः=पीली आँख जिसकी है, इसी प्रकार विश्वे-देवा देवता अस्या=विश्वदेवा देवता जिसके है इस प्रकार के विग्रह देखने से प्रधानी-भूत षष्ठ्यर्थ में ही 'अनेकमन्यपदार्थे' सास्य देवता, इन सूत्रों से उक्त प्रयोगों का साधुत्वान्वाख्यान का लाभ होता है।

यदि सामानाधिकरण्य का लक्षणा द्वारा उपपादन किया जायेगा तो ज्योतिष्टोम प्रकरण में "अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति" इस श्रुति में अरुणपद आकृत्यधिकरणन्याय से अन्वयव्यतिरेक से गुणवाची है। अतः आरुण्यरूप गुणमात्र वाची होने से द्रव्यवाची नहीं है। आरुण्य गुण से क्रयण नहीं हो सकता। अतः आरुण्य-वाचक अरुणा का प्रकरणस्थ द्रव्यान्वय की अपेक्षा श्रौत वाक्यघटकपिङ्गाक्ष्यादि से प्रतीत द्रव्य के साथ अन्वय प्रतिपादक मीमांसादर्शन का अरुणाधिकरण समाप्त हो जायगा क्यों कि पिङ्गाक्षी आदि [1]यौगिक के द्रव्यवाची होने में सामानाधिकरण्य को साधक माना गया है। लक्षणा द्वारा सामानाधिकरण्य का पचति देवदत्तः के समान उपपादन हो जाने से उक्तपदों की द्रव्यवाचिता में एकधर्मिबोधकत्व रूप सामानाधिकरण्य साधक नहीं होगा। वैयाकरणभूषण में इसका विस्तृत विवेचन देखिये।

हिन्दीभाष्य—पचति देवदत्तः इत्यादिस्थल में लक्षणा के द्वारा आश्रयार्थ की प्रतीति होने से एकधर्मिबोधकत्वरूप सामानाधिकरण्य की उपपत्ति हो जाने के कारण आश्रय में तिङ की शक्ति अनावश्यक है। यह मीमांसक मत युक्तियुक्त नहीं है—पिङ्गाक्षी आदि यौगिक पदों के सामानाधिकरण्य देखने से उक्तपदों में धर्मि(द्रव्य)वाचकत्व नहीं सिद्ध हो सकता। क्यों कि सामानाधिकरण्य का उपपादन धर्मी में शक्ति के विना लक्षणा से भी हो जायगा। इसी प्रकार 'वैश्वदेवी' इस तद्धितान्त स्थल में भी आमिक्षा के साथ

---

१. पदों का एकार्थभिधायित्व। दर्पण। मूलस्य "अनुशासनेन" इसमें अनुशिष्यते अनेन इस अर्थ में उसका प्रयोग है। अनुशासनलाभात् इस में भाव ल्युडन्त अनुशासन शब्द अन्वाख्यान अर्थ में है।

१. प्रकृति और प्रत्ययों के अर्थ का सम्बन्ध योग है उससे निर्वृत्त अर्थ में "तेन-निर्वृत्तम्" इस सूत्र से ठक् होने से यौगिक की निष्पत्ति होती है।

सामानाधिकरण्य होने से धर्मी का वाचक तद्धित अण् को माना। जैसा कि लिखा है॥ 'अमिक्षां देवतायुक्तां वदत्येवैष तद्धितः' इति। सम्बन्धी में लक्षणा द्वारा समानाधिकरण्य की उपपत्ति हो जाने से द्रव्य (धर्मी) वाचिता वैश्वदेवी शब्द का मानना अयुक्त हो जायगा।

'अनेकमन्यपदार्थे साऽस्यदेवता' इन सूत्रों से षष्ठी के सम्बन्धार्थ में ही साधुत्व का अनुशासन अर्थात् अन्वाख्यान किया गया है। पिङ्गे अक्षिणी यस्याः इस विग्रह में पिङ्गाक्षी की समास साधुता है। समासार्थ का अभिधान विग्रह से होता है। अतः विग्रह में सम्बन्धरूप षष्ठ्यर्थ की प्रधानता से समास भी तादृशार्थ में ही माना जायगा। इसी प्रकार विश्वेदेवा अस्याः ऐसा विग्रह देखने से प्रधान षष्ठ्यर्थ में अण् का विधान होने के कारण सम्बन्ध में नकि सम्बन्धी में साधुत्व होता है। इस प्रकार व्याकरण के सूत्रों से तथा विग्रह वाक्य से उन पदों का धर्मिवाचित्व सिद्ध नहीं होता जिस सामानाधिकरण्य से धर्मिवाचकत्व सिद्ध होता था। उसका उपपादन लक्षणा से ही हो जाता है। एवं व्याकरण सूत्र भी द्रव्यवाचकत्व के प्रतिकूल ही हैं। यह भाव है।

वैश्वदेवी—'तप्ते पयसि दध्यानयति', सा वैश्वदेवी आमिक्षा ? तप्त दूध में दधि डालने से (दूध फटकर घनीभूत और कुछ पानी तरल हो जाता है) घनीभूत आमिक्षा (लोक प्रसिद्ध छेना) है जिसके देवता विश्वदेव है। जो तरल भाग होता है वह वाजिन जिसके देवता वाजी अर्थात् विश्वदेव हैं। वाज अन्न को कहते हैं तदस्ति अस्य इति वाजी। वाजी देवता अस्य इति वाजिनः। यहाँ सन्देह है कि—आमिक्षा तथा वाजिन उस उभय गुण वाले एक ही कर्म का विधान है अथवा उनसे भिन्न-भिन्न गुण देवता वाले कर्मान्तर का विधान है। ऐसा पूर्व पक्ष होने पर सिद्धान्त है वैश्वदेवी यहाँ तद्धित अण् प्रत्यय से देवता सम्बन्धी अर्थ की प्रतीति होने से सम्बन्धिविशेष की आकाङ्क्षा होने पर समानार्थक सन्निहित आमिक्षा के साथ श्रौत अन्वय होता है। "वाजिभ्यो वाजिनम्[1]" यहाँ पर वाजवान् इस अर्थ के उपस्थापक वाजिपद से उपस्थित वाजपदार्थ का वाजिन=वाजिनो देवता अस्य इति वाजिनः इस व्युत्पत्ति से वाजिन का वैश्वदेव के साथ वाक्य से सम्बन्ध है अतः श्रौत[2] सम्बन्ध वाक्यीय सम्बन्ध से प्रबल होने से आमिक्षा सम्बन्ध से वैश्वदेवी की सम्बन्धाकाङ्क्षा शान्त हो जाने के कारण वाजिन गुणक देवतान्तरोद्देश्यक कर्मान्तर की विधि है यह निर्णय किया गया है। यदि लक्षणा के द्वारा तद्धित अण् सम्बन्धी कर का बोधक होता तो आमिक्षा के साथ वैश्वदेवी के श्रौत सम्बन्ध का कथन असङ्गत हो जायगा। क्योंकि विना अन्य की अपेक्षा के प्रतीयमान अर्थ श्रौत है। इस कथन से गुणाधिकरण से विरोध होगा। तथा—श्रुति लिङ्ग-वाक्य-प्रकरण स्थान-समाख्यानां पारदौर्बल्यमर्थविप्रकर्षात् ३. ३। इस जैमिनि सूत्र के आधार पर स्थित बलाबलाधिकरण का उच्छेद ही समझना चाहिये।

यद्यपि आमिक्षा पद की अपेक्षा करके ही वैश्वदेवी पद विश्वदेव देवता सम्बन्धी आमिक्षा का बोधक होने से वाक्य के द्वारा सम्बन्ध प्रतीति उभयत्र समान ही होती है तथापि वैश्वदेवी में स्वाभिन्न अर्थ वाले आमिक्षापद की अपेक्षा से सम्बन्ध की श्रौतता

---

१. वाजिन = आमिक्षा से निकला तरल भाग पानी है।

२. निरपेक्षोरवः श्रुतिः। किसी की अपेक्षा के विना जो बोध कराता है वह श्रुति है। इससे होनेवाला सम्बन्ध श्रौत है।

बाधित नहीं हुई। भिन्नार्थक पद की अपेक्षा होने पर ही सम्बन्ध के श्रौतत्व का बोध होता है और उस स्थल में वाक्य विनियोजक माना गया है।

अरुणाधिकरण का संक्षिप्त स्वरूप इस प्रकार है। 'अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति = लालरङ्ग की पीली आँख वाली तथा एक वर्ष की गऊ से सोमलता का क्रयण करना। यहाँ अरुणा शब्द अरुण गुण मात्र का बोधक होने से क्रयण क्रिया के साथ करणत्वरूप से अन्वित नहीं होगा क्यों कि अरूण गुण (लाल रङ्ग) अमूर्त होने से क्रयण का साधन नहीं हो सकेगा। अतः द्रव्य के द्वारा क्रयण क्रिया में अन्वय होना चाहिये। ज्योतिष्टोम प्रकरण का यह 'अरुणया पिङ्गाक्ष्या' इत्यादि वचन होने से प्रकरण प्राप्त द्रव्य के द्वारा क्रियान्वय की अपेक्षा वाक्य में सन्निहित द्रव्यवाचक पिङ्गाक्ष्यादि के द्वारा क्रीणाति के साथ सम्बन्ध करना युक्ति सिद्ध है। समीपस्थ पदार्थ के साथ सम्बन्ध सम्भव रहने पर प्रकरणपर्यन्तानुधावन व्यर्थ होने से पिङ्गाक्ष्यादि के साथ सम्बन्ध होकर ही परम्परया क्रीणाति के सम्बन्ध होने का औचित्य मीमांसकों ने स्वीकार किया है।

यदि लक्षणा द्वारा सामानाधिकरण्य की उपपत्ति मानी जाय तो पिङ्गाक्षी पद भी अरुणापद के समान शक्ति से द्रव्यवाची नहीं होगा किन्तु सम्बन्धवाची होगा। 'अनेकमन्यपदार्थे' (२।२।२४) 'साऽस्य देवता' (४।२।२४) इन पाणिनि सूत्रों से भी उक्त पदों का सम्बन्ध अर्थ में साधुत्व का विधान होता है। इस प्रकार पिङ्गाक्षी एकहायनी आदि पद भी द्रव्यवाची न होने से अरुण के समान ही इनका भी क्रीणाति के साथ अन्वयासम्भव दिखाना चाहिये था। एवं स्ववाक्योपात्त पिङ्गाक्षी आदि द्रव्यवाची के द्वारा क्रीणाती के साथ सम्बन्ध प्रतिपादन असङ्गत होने से उक्त अरुणाधिकरण का ही उच्छेद होगा यह भाव है।

प्रकृत में इन अधिकरणों के उल्लेख का तात्पर्य यह है कि लक्षणा द्वारा सामानाधिकरण्य के उपपादन करने पर पूर्वोक्त अधिकरणों के साथ विरोध प्राप्त होने से सामानाधिकरण्य का उपपादन पिङ्गाक्ष्यादिपद को द्रव्यवाची मान कर ही करना चाहिये लक्षणा के द्वारा वैसी कल्पना अयुक्त है। अतः सामानाधिकरण्य प्रयुक्त अभेदान्वय के अनुरोध से यहाँ भी तिङ्वाच्यकर्ता मानना युक्तियुक्त है। फल और भावना (व्यापार) धातु के अर्थ है।

*तिङः इति*। बोधकतारूपा शक्तिस्तिङ्क्ष्वेवेत्यभिप्रेत्येदम्। पदार्थं निरूप्य वाक्यार्थं निरूपयति—*फले इत्यादि*। विक्लित्त्यादिफलं प्रति। तिङर्थः—कर्तृ—कर्म—संख्या—कालाः। तत्र कर्तृकर्मणी फलव्यापारयोर्विशेषणे। संख्या—कर्तृप्रत्यये कर्तरि, कर्मप्रत्यये कर्मणि; समानप्रत्ययोपात्तत्वात्। तथाच—आख्यातार्थसंख्याप्रकारकबोधं प्रति आख्यातजन्यकर्तृकर्मोपस्थितिर्हेतुरिति कार्यकारणभावः फलितः।

---

१. द्रव्यवाचकत्व—धर्मिवाचकत्व, साधक मूलयुक्ति साधिका असाधारण युक्ति, सामानाधिकरण्यं पिङ्गाक्षी गौः वैश्वदेवी आमिक्षा इत्यादि अनुभवसिद्ध एकधर्मिबोधकत्व इस प्रकार मूलपङ्क्ति का अर्थ है।

नैयायिकादीनामाख्यातार्थसंख्यायाः प्रथमान्तार्थ एवाऽन्वयादाख्यातार्थसंख्याप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिर्हेतुरिति कार्यकारणभावो वाच्यः । सोऽपि 'चन्द्र इव मुखं दृश्यते, 'देवदत्तो भुक्त्वा व्रजति' इत्यादौ चन्द्र-क्त्वाऽर्थयोराख्यातार्थानन्वयादितराऽविशेषणत्वघटित इत्यतिगौरवम् । इदमपि कर्त्तृकर्मणोराख्याताऽर्थत्वे मानमिति स्पष्टं भूषणे ॥

कालस्तु व्यापारे विशेषणम् । तथा हि-'वर्त्तमाने लट्' (पा० सू० ३।२।१२३) इत्यत्राऽधिकाराद् धातोरिति लब्धम् । तच्च धात्वर्थं वदत् प्राधान्याद् व्यापारमेव ग्राहयतीति, तत्रैव तदन्वयः । न च सङ्ख्यावत् कर्त्तृकर्मणोरेवान्वयः शङ्क्यः । अतीतभावनाके कर्त्तरि 'पचति' इत्यापत्तेः । 'अपाक्षीत्' इत्यनापत्तेश्च । पाकानारम्भदशायां कर्त्तृसत्त्वे 'पक्ष्यति' इत्यनापत्तेश्च । नापि फले तदन्वयः, फलाऽनुत्पत्तिदशायां व्यापारसत्त्वे, 'पचति' इत्यनापत्तेः, पक्ष्यति' इत्यापत्तेश्चेत्यवधेयम् ।

*उक्तरीत्येति* । सम्बन्धिलक्षणाकल्पनेनेत्यर्थः । *प्रपञ्चितमिति* । प्रपञ्चस्तूक्तप्रायः । *भूषणे इति* । प्रकृतस्थले, समासशक्तिनिरूपणाऽवसरे चेत्यर्थः ।

'पदार्थं निरूप्य' इत्यनेन पदार्थनिरूपणानन्तरं वाक्यार्थनिरूपणे तयोः सङ्गतिः सूच्यते । तत्फलं तु पूर्वापरग्रन्थैकवाक्यप्रतिपत्तिरेकप्रयोजनवती ज्ञानफलिका ।

केचित्तु उन्मत्तप्रलपितेत्याशङ्कानिदानासङ्गतत्वज्ञाननिरासः प्रयोजनमित्याहुः । सा चाऽनन्तर्याऽभिधानप्रयोजकजिज्ञासाजनकतावच्छेदकधर्मरूपा षड्विधा । तदुक्तम्—

'सप्रसङ्ग उपोद्घातो हेतुताऽवसरस्तथा ।
निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते ॥' इति ।

तत्र प्रकृतसिद्धयनुकूलचिन्ताकालावच्छिन्नप्रकृतानुकूलत्वमुपोद्घातः । अनुकूलत्वं चात्र घटकत्वज्ञापकत्वादिरूपं यथायथं ग्राह्यम् । तत्राऽवच्छेदकांशः स्वरूपः सन्, इतरांशश्च ज्ञाने उपयोगी, एवमग्रेऽपि । स्मृतिकालावच्छिन्नोपेक्षानर्हतावच्छेदकधर्मवत्त्वं प्रसङ्गः । हेतुता-प्रसिद्धा । प्रतिबन्धकीभूतशिष्यजिज्ञासानिवृत्तिकालावच्छिन्नावश्यवक्तव्यत्वमवसरः । निर्वाहकत्वम्—एककार्यजनकत्वं कारण-तदवच्छेदकसाधारणप्रयोजकत्वरूपम् । 'एककार्यत्वम्'-एकस्य कार्यता सा च जन्यता, जन्यज्ञानविषयत्वरूपा चेति । उदाहरणानि कानिचित्त्वत्रैव वक्ष्यन्ते । अन्यानि तु स्वयमूह्यानि । आक्षेपोदाहरणादीनां तु तन्त्रान्तरे सङ्गतित्वेन प्रसिद्धानामेष्वेवान्तर्भाव इति न तेषामाधिक्यसम्भावना । प्रकृते च पदार्थ-तत्संसर्गविशेषरूपवाक्यार्थयोः प्रसङ्गसङ्गतिः । तथाहि-निरूपितेषु पदार्थेषु प्रायशोऽसंसृष्टपदार्थाऽभावेन तत्संसर्गस्य सामान्यरूपेण स्मरणम् । ततः सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाजनकत्वा-

च्छिष्यस्य 'क एषां संसर्ग' इत्याकारा विशेषधर्मजिज्ञासा। ततस्तद्बोधनाय शिष्यस्य शब्दप्रयोगः। ततः शिष्यजिज्ञासाज्ञानं गुरोः। ततो जिज्ञासाविषयज्ञाने इष्टसाधनताज्ञानात् कण्ठताल्वाद्यभिघातादिसम्पादनेन गुरोः शिष्यजिज्ञासानिवृत्तिफलकं विशेषसंसर्गरूपवाक्यार्थाभिधानमिति। संसर्गगतसामान्यस्योपेक्षाऽनर्हतावच्छेदकत्वात्तद्वत्वस्य तत्र संत्त्वाल्लक्षणसङ्गतिः। इत्थमन्यत्राऽपि लक्षणानि योज्यानि।

*विशेषणे इति*। आधाराऽऽधेयभावसम्बन्धेन प्रकारावित्यर्थः। सङ्ख्यायाः आख्याताऽर्थकर्तृकर्माऽन्वयित्वे प्रयोजकमाह-*समानप्रत्ययोपात्तत्वादिति*। एतेन समानाभिधानश्रुतेर्वाक्याऽपेक्षया बलवत्त्वात् समानपदोपात्तान्वयित्वं विहाय प्रथमाऽन्तार्थेऽन्वयोऽनुचित इति व्यज्यते। एकप्रत्ययजन्योपस्थितिविषयत्वादिति तदर्थः। लडादीनां वाचकत्वकल्पे, आख्यातजन्योपस्थितिविषयत्वस्य कालेऽपि सत्त्वात्तत्र व्यभिचारवारणाय कर्तृकर्मत्रिषयत्वेन तां विशिनष्टि—*तथाचेति*। घट इत्यादावेकत्वादिसङ्ख्याप्रकारकबोधे व्यभिचारो मा भूदिति कार्य्यतावच्छेदककोटौ—*आख्याताऽर्थेति*। तदर्थकालप्रकारकबोधे तन्निरासाय-*सङ्ख्येति*। स्वोक्तमाख्यातस्य कर्तृकर्मार्थकत्वं दर्शयितुं प्रसङ्गान्न्यायमतं निराकरोति—*नैयायिकानामित्यादिना*। *अन्वयादिति*। एकपदोपात्तयोरेकार्थान्वयित्वस्य न्याय्यत्वादिति भावः। आख्यातार्थकालप्रकारकबोधे प्रथमान्तपदजन्योपस्थितेरनपेक्षणादाह—*सङ्ख्येति*।

*इतराविशेषणत्वेति*। प्रथमान्तार्थेतरविशेषणत्वाघटित इत्यर्थः। तथाचेतरविशेषणताऽनापन्नार्थविषयकोपस्थितिः कारणमित्यर्थः। एवञ्च चन्द्र-भोजनादीनां प्रथमान्तार्थत्वेऽपि इवार्थसादृश्य-व्रजनादिविशेषणत्वान्न व्यभिचार इति भावः। *घटित इति*। तदविषयकप्रतीत्यविषयः स इत्यविषय इत्यर्थः। तदवच्छिन्नावच्छेदकताककारणताग्रहविषय इति यावत्। इतराविशेषणत्वं चेतरविशेषणत्वतात्पर्य्याविषयत्वम्। नातश्चैत्र इव पचतीत्यादौ खले कपोतन्यायेन बोधे चैत्रीयं सादृश्यमित्यवान्तरबोधाऽभावेन चैत्रस्येतरनिरूपितप्रकारताशून्यत्वरूपेतराऽविशेषणत्वसत्त्वेऽपि क्षतिः; अविशेषणत्वेऽपि विशेषणत्वतात्पर्य्यविषयत्वसत्त्वात्। तथाचाऽऽख्यातार्थसङ्ख्याप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति इतरविशेषणत्वतात्पर्याविषयार्थवृत्तिविशेष्यतासम्बन्धेन प्रथमान्तपदजन्योपस्थितिर्हेतुरिति पर्यवसितोऽर्थः। 'चैत्रेण सुप्यते' इत्यादिभावाऽख्यातस्थले, 'चैत्रकर्तृकः स्वापः' इत्यादिबोधाद्यथोक्तविशेषणकधात्वर्थस्वापे तदनन्वयाद्व्यभिचारपरिहाराय प्रथमान्तेति पदविशेषणम्। यद्येवमपि 'चैत्र एव पचति न मैत्रः' इत्यादावन्ययोगव्यवच्छेदरूपैवकारपदार्थैकदेशेऽन्यत्वे चैत्रस्य विशेषणत्वात् तत्र संख्याऽऽन्वयाऽनुपपत्तिरिति विभाव्यते, तदा प्रथमान्तार्थो विशेषणत्वमात्रतात्पर्याविषयत्वेन विशेषणीयः। अवशिष्टांशस्यापि निवेशे प्रयोजनाऽभावादुक्तस्थले च चैत्रस्य मुख्यविशेष्यत्व-विशेषणत्वाभ्यां तात्पर्यविषयत्वान्न सङ्ख्याऽन्वयाऽनुपपत्तिरिति तन्मतनिष्कर्षः।

*अतिगौरवमिति*। अन्यलभ्यकृतौ शक्तिकल्पने सङ्ख्यान्वयबोधहेतूपस्थितौ विभिन्नपदजन्यत्वनिवेश एव गौरवम्। प्रथमान्तपदार्थस्य विशेषणत्वमात्रतात्पर्याविषयत्वेन निवेशे त्वतिगौरवमित्यर्थः। *इदमपीति*। उपदर्शितकार्यकारणभावे दर्शितलाघवमपीत्यर्थः।

यद्यपि तन्मते भावनान्वयिनी सङ्ख्यान्वयनियमादाख्यातेन भावनाऽविषयकसङ्ख्यान्वयबोधस्य क्त्वाप्यजननाद्भावनान्वयबुद्धित्वस्य सङ्ख्यान्वयबुद्धित्वव्यापकतया व्याप्यधर्मावच्छिन्नसामग्र्या फले जननीये व्यापकधर्मावच्छिन्नसामग्र्या अपेक्षणाद्विशेषणत्वमात्रतात्पर्याऽविषयत्वविशेषणविशिष्टप्रथमान्तार्थोपस्थितिरूपायास्तस्यास्तत्राऽभावादेवोक्तस्थले व्यभिचाराप्रसक्तेर्न तद्व्यावृत्तये सङ्ख्यान्वयकारणतावच्छेदककोटावुक्तविशेषणप्रवेशाऽवसरः, तथाऽपि कृतिशक्तिवादिमते उक्तस्थले तदापत्तिवारणाय भावनान्वयबोधकारणतावच्छेदककोटावेवोक्तविशेषणविवरणप्रयुक्तगौरवम्। अस्मन्मते तु प्रथमान्तपदार्थस्य आख्यातार्थे विशेषणतयैवान्वयेन चन्द्रादेरेकत्र विशेषणतयाऽन्वितस्य नैराकाङ्क्ष्येणाऽपरत्र विशेषणतयाऽन्वयाऽयोगादुक्तव्यभिचाराऽभावेन तन्निवारकविशेषणोपादानप्रयुक्तगौरवमितीदमेवाभिप्रेत्योक्तम्—*इदमपीति*। अधिकमन्यत्रानुसन्धेयम्।

अत्राऽऽहुर्नव्याः—लाघवोपबृंहितोक्तयुक्तिकदम्बेनाऽऽख्यातस्य धर्मवाचकत्वसिद्धावुत्तरकालकल्प्यतादृशकार्य्यकारणभावप्रयुक्तगौरवं, निषादस्थपत्यधिकरणन्यायेनाकिञ्चित्करम्, फलमुखत्वात्। किञ्च चन्द्राद्युपमाने आख्यातार्थसङ्ख्याद्यन्वयोपगमः आवश्यकः। तत्र तदन्वयाऽनुपगमे सादृश्यप्रयोजकधर्माऽलाभेन वाक्यस्याऽपरिपुष्टार्थतापत्तेः। क्त्वान्तार्थभोजनादौ तु सङ्ख्यादीनामयोग्यत्वादेवानन्वयेनाऽनतिप्रसङ्गात्। एवञ्च नास्मन्मते दोषलेशोऽपीति।

कर्तृकर्मणोः सङ्ख्यायाश्च विशेषणतां व्यवस्थाप्य कालस्यापि तां प्रतिपादयति—*कालस्त्वित्यादिना*। *व्यापारे इति*। धात्वर्थव्यापारे इत्यर्थः।

नन्वाख्यातस्य कालशक्तिपरिच्छेदकेषु 'वर्तमाने लट्' (पा० सू० ३।२।१२३) इत्यादिषु व्यापारवाचकपदानुपादानात् कथं कालस्य धात्वर्थव्यापारविशेषणतेत्यतस्तत्सूत्रप्रामाण्येनैव तां साधयति—*तथाहीति*। तच्च*—धातुपदं चेत्यर्थः। *धात्वर्थमिति*। फल—व्यापारोभयात्मकमित्यर्थः। सत्तायामित्याद्यर्थनिर्देशाद् भ्वादिसूत्रप्रामाण्याच्चेति भावः। *वदतु*—बोधयतु। सन् ब्राह्मण इतिवच्छता। *प्राधान्याद्*। धातुजन्यबोधे विशेष्यतया भासमानत्वादित्यर्थः। व्यापारमेवेत्येवकारेण फलव्यवच्छेदः। प्राधान्यादित्युक्त्या यन्मते कर्माऽऽख्याते फलस्य प्राधान्यं, तन्मते फल एवान्वय इति ध्वनितम्। *ग्राहयतीति*। आख्यातार्थकालविशेष्यतया बोधयतीत्यर्थः। 'गुणानां च परार्थत्वाद्' इति न्यायात्, प्रत्ययार्थस्य साक्षात्प्रकृतिजन्यबोधविशेष्याऽन्वयित्वनियमाच्चेति भावः। *कर्तृकर्मणोरिति*। समानप्रत्ययोपात्तत्व-

प्रत्यासत्तेरिति भावः । *पचतीत्यापत्तेरिति* । कर्त्तुर्विद्यमानत्वादिति भावः । एवमग्रेऽपि–*नापि फल इति* ।

केचित्तु–फलव्यापारयोर्धातोः पृथक् शक्तौ तयोरुद्देश्यविधेयभावेनाऽन्वयाऽऽपत्तिः। पृथगुपस्थितयोस्तथाऽन्वयस्यौत्सर्गिकत्वात् । तत्तद्धातुजन्यतादृशबोधस्य तथाऽन्वयबोधे प्रतिबन्धकताकल्पने तु गौरवम् । तस्माद् फलाऽवच्छिन्नव्यापारे, व्यापारावच्छिन्नफले च धातूनां शक्तिः । कर्त्तृकर्मार्थकतत्तत्प्रत्ययसमभिव्याहारश्च तत्तत्बोधे नियामकः । गौरवञ्च प्रामाणिकत्वान्न दोषाय । इत्थञ्च कर्त्राऽऽख्याते व्यापारस्य प्राधान्यम्, कर्माख्याते तु फलस्य । यदा यस्य प्राधान्यं, तदा तस्मिन् कालाऽन्वयः । सूत्रस्थधातुपदादुभयोरपि प्राधान्येनोपस्थितत्वान्नोक्तविषयाऽनवकाशः । फलानुत्पत्तिदशायामारब्धे पाके फले वर्त्तमानत्वारोपाद्वा । पच्यते इत्यस्योपपत्तिरेकाऽवयवेऽपि समूहाऽऽरोपादधिश्रयणकाले पचतीति प्रयोगवत् । 'आरोपे च प्रतीतिरेव मानम् । व्यापारविगमे फलसत्त्वे 'अपाचि देवदत्तेन' इत्यादिप्रयोगास्तु भूतत्वस्योत्पत्तिघटितत्वादित्याहुः ।

तदपरे न क्षमन्ते । पृथगुपस्थितयोस्तथान्वयबोधाभ्युपगमे नानार्थहर्य्यादिपदोपस्थितानामश्वसूर्यादीनामप्युद्देश्यविधेयभावापत्तिः । अतो विभिन्नपदजन्योपस्थितेरेव तन्त्रता तत्राऽनुसर्त्तव्या । तदभावाच्च प्रकृते कथं तदन्वयबोधाऽऽपादनम् । तादृशफलव्यापारयोर्धातुशक्तौ मानाभावः, गौरवं च । विशिष्टधर्मस्य शक्यतावच्छेदकत्वे उक्तप्रयोगाणाम् आरोपेणोपपादनं त्वगतिकगतिरिति स्पष्टमेव विवेकिनाम् । एतदनुरोधेन भूतत्वस्योत्पत्तिघटितत्वाऽभ्युपगमे परमताऽनुसृतिरपीति ।

अर्थ—बोधकतारूप शक्ति तिङ् में है, लकार में नहीं, इस अभिप्राय से आश्रय में तिङ् पद की शक्ति कही गई है ।

पदों के अर्थों का प्रतिपादन करने के अनन्तर वाक्य के अर्थ का निरूपण करते हैं— फले इत्यादि से । विक्लित्ति आदि फल की अपेक्षा व्यापार प्रधान है । तिङ् प्रत्यय के कर्ता, कर्म, संख्या, काल ये चार अर्थ हैं । इन में से कर्ता व्यापार में, और कर्म फल में विशेषण होता है । संख्या तिङ् प्रत्यय का कर्ता में विधान होने पर कर्ता और कर्म में विधान होने पर कर्म में विशेषण है । इसमें हेतु है एक पद से उपस्थापित होना ।

इस प्रकार आख्यातार्थ (तिङर्थ) संख्या जिस शाब्दबोध में कर्ता का प्रकार (विशेषण) होती है वहाँ आख्यात ( तिङ् ) से उत्पन्न कर्ता की उपस्थिति, एवं संख्या जिस शाब्दबोध में कर्म का विशेषण होती है वहाँ आख्यातजन्य कर्म की उपस्थिति कारण है ऐसा कार्यकारणभाव वैयाकरणों के मत में होता है ।[1]

नैयायिकों के मत में आख्यातार्थ संख्या का प्रथमान्त पदार्थ में अन्वय होने से तिङर्थ संख्या प्रकार वाले शाब्दबोध के प्रति प्रथमान्त पद से उत्पन्न देवदत्तादि विषयक उपस्थिति कारण है । इस प्रकार का कार्यकारणभाव मानना होगा । किन्तु यह भी "चन्द्र

---

१. कर्तृ-कर्मोपस्थिति इसका अन्यतरोपस्थिति में तात्पर्य है । क्योंकि एक स्थान में उभय की उपस्थिति सम्भव नहीं है । अतः उभयोपस्थिति का व्याख्यान अयुक्त है ।

इव मुखं दृश्यते" = चन्द्रमा के समान मुख दिखाई पड़ता है एवं "देवदत्तो भुक्त्वा व्रजति" = देवदत्त भोजन कर जाता है यहाँ पर मुख के समान प्रथमान्त पद से बोध्य अर्थ चन्द्रमा तथा देवदत्त के समान प्रथमन्तार्थ भुक्त्वा में भी आख्यातार्थ संख्या का अन्वय होने लगेगा। अतः इतर विशेषण से अघटित अर्थात् प्रथमान्तपदार्थ किसी का विशेषण न हो ऐसा कार्यकारणभाव में निवेश करने पर अधिक गौरव होगा।

नैयायिक मत में कार्यकारणभाव के द्वारा गौरव का होना भी कर्ता और कर्म के आख्यातार्थ होने में प्रमाण है। अधिक विवेचन बृहद् वैयाकरण भूषण में है।

अर्थ–आख्यातार्थ काल व्यापार में विशेषणतया अन्वित होता है 'वर्तमाने लट्' इस सूत्र में धातु का अधिकार है। धातु के फल और व्यापार दो अर्थ हैं। इनमें व्यापार की प्रधानता होने से इसी में काल का अन्वय होता है।

संख्या के समान काल का भी कर्ता और कर्म में अन्वय की आशङ्का नही करनी चाहिये। क्योंकि कर्ता का व्यापार समाप्त हो गया है किन्तु कर्ता स्वयं विद्यमान है ऐसी दशा में अपाक्षीत् इस भूतकाल की क्रिया के स्थान में पचति का प्रयोग प्राप्त होगा। क्योंकि कर्ता वर्तमान है। इसी प्रकार पाक के अनारम्भ दशा में भी कर्ता के रहने से पक्ष्यति के स्थान पर पचति का प्रयोग हो जायगा।

फल में भी काल का अन्वय नहीं हो सकता। फल की उत्पत्ति न होने पर व्यापार के रहने पर भी पचति का प्रयोग नहीं होगा प्रत्युत उसके स्थान पर पक्ष्यति[1] का प्रयोग प्राप्त होगा ( अतः काल व्यापार में विशेषण होकर अन्वित है )।

हिन्दीभाष्य–शङ्का—"लः कर्मणि च" (३।४।६९) इत्यादि सूत्र से लकार की शक्ति का कर्ता और कर्म में प्रतिपादन होने से तिङ् की शक्ति का उन अर्थों में कथन सूत्र से विरुद्ध है।

समाधान— लोक में पचति से अर्थ बोध होता है। पच् ल से अर्थावबोध नहीं होता। अतः बोधकता रूप शक्ति तिङ् में मानी गई है, लकार में नहीं। तिङ् में ही है। इस आशय से कारिका द्वारा तिङ् की आश्रय में शक्ति का प्रतिपादन किया गया है।

किसी विषय के निरूपण के अनन्तर विषयान्तर के निरूपण में सङ्गति होनी चाहिये। पूर्व कथनानन्तर विषय निरूपण के कारण स्वरूप की जिज्ञासा के जनक जो जनकता उसके अवच्छेदक धर्म को सङ्गति कहते हैं। अर्थात् इसके अनन्तर इसका निरूपण में क्या प्रयोजक हैं इस प्रकार प्रयोजक की जिज्ञासा के जनक ज्ञान का विषय।

'सप्रसङ्ग उपोद्घात हेतुताऽवसरस्तथा।
निर्वाहकैककार्यत्वे षोढा सङ्गतिरिष्यते॥'

इस प्रकार सङ्गति के छह भेद हैं। प्रकृत में पदार्थ निरूपण के अनन्तर वाक्यार्थ-निरूपण में प्रसङ्ग सङ्गति है। स्मरण का विषय होकर जो उपेक्षा के योग्य न हो, यह प्रसङ्ग सङ्गति का स्वरूप है।

यहाँ पदार्थ निरूपणानन्तर संसर्ग के विना पदार्थ का भान प्रायः नहीं होता। क्योंकि जाति विशिष्ट व्यक्ति के भान में सम्बन्ध का भान अनिवार्य है। इस प्रकार सम्बन्ध

---

१. काल का फल में अन्वय होने से फल की अनुत्पत्तिदशा में वर्तमान काल का फल में अन्वय असम्भव होने से भविष्यत् काल का प्रयोग होगा।

सामान्य के ज्ञान होने पर विशेप सम्बन्ध की जिज्ञासा होना स्वाभाविक है। इसलिये विशेष संसर्गरूप वाक्यार्थ का निरूपण स्मरण का विषय तथा उपेक्षा का अनर्ह (अयोग्य) होने से प्रसङ्ग सङ्गति के द्वारा वाक्यार्थ का निरूपण है।

'देवदत्तः पचति' यहाँ पच् धातु का फल और व्यापार अर्थ है। तिप् का कर्ता एकत्व संख्या और वर्तमान काल अर्थ है। फल और व्यापर का धातु से लाभ हो जाने के कारण तिङर्थ आश्रय के साथ देवदत्त का अभेद से अन्वय होता है। एकत्व संख्या का आश्रय वर्तमान काल का धात्वर्थ व्यापार में अन्वय होना है। इसके अनुसार 'देवदत्ताभिन्नैका-श्रयनिष्ठो वर्तमानकालिको विक्लित्यनुकूलो व्यापारः' ऐसा बोध होता है। देवदत्तेन तण्डुलः पच्यते इत्यादि कर्मप्रत्यय स्थल में फल विशेष्य होता है इसमें व्यापार विशेषण है। तिङर्थ (फल का) आश्रय एवं संख्या का तण्डुलादि कर्म तथा काल का व्यापार में अन्वय होता है। देवदत्तनिष्ठ वर्तमानकालिक व्यापारजन्या एकत्वाश्रयिका तण्डुलनिष्ठा विक्लित्तिः ऐसा बोध [1]नव्यवैयाकरणों के मत में होता है।

तिङर्थ संख्या का कर्तृप्रत्यय स्थल में कर्ता (आश्रय) कर्म प्रत्यय स्थल में कर्म (फलाश्रय) अन्वय का कारण एक ही तिङ् पद से संख्या और कर्ता कर्म की उपस्थिति है। अन्ततः समीपस्थ में अन्वय सम्भव होने पर किञ्चित् दूरस्थ धात्वर्थ में अन्वय नहीं करना चाहिये। अतः आख्यातार्थ संख्या जिस शाब्दबोध में विशेषण तथा कर्तृकर्मान्तर विशेष्य होकर भासित होता हो, वहाँ के लिये उस संख्या की आख्यात से कर्ता या कर्म की उपस्थिति आवश्यक है। यही आख्यातार्थ संख्या प्रकारक इत्यादि पंक्ति का भाव है।

संख्या में आख्यातार्थ विशेषण न देने पर 'घटः पटः' इत्यादि स्थल में एकत्वविशिष्ट घट तथा एकत्वविशिष्ट पट इस प्रकार का बोध आख्यात जन्य उपस्थिति के न रहने पर भी होता है। अतः उक्त कार्यकारणभाव का व्यभिचार हो जायगा। इसके निवारण के लिये आख्यातार्थ का निवेश है। घटः इत्यादि स्थल में संख्या आख्यातार्थ नहीं है, किन्तु सुविभक्ति का अर्थ है। संख्या प्रवेश के बिना ही आख्यातार्थ प्रकारक शाब्दबोध कहने से काल भी आख्यातार्थ होने से उसके प्रकारतया अन्वयबोध में आख्यात जन्य कर्तृ-कर्मान्यतरोपस्थिति कारण हो जायगी। अतः संख्या के प्रवेश करने से काल प्रकार बोध में उक्त कार्यकारणभाव का प्रसङ्ग नहीं हुआ।

कर्ता और कर्म आख्यातार्थ है। इस स्वमत की पुष्टि के लिये न्याय मत सिद्ध कार्य-कारणभाव का उल्लेख किया गया है। इस मत में आख्यातार्थ एकत्वादि संख्या का प्रथमान्तपदोपस्थाप्य अर्थ में अन्वय होता है। क्यों कि कर्ता कर्म आख्यातार्थ नहीं है। आख्यातार्थ कृति है। अतः आख्यातार्थ संख्या प्रकारक शाब्दबोध में प्रथमान्त (देवदत्तादि) पदजन्योपस्थिति को कारण माना गया है।

परन्तु इस नैयायिकों के कार्यकारणभाव में 'चन्द्र इव मुखं दृश्यते' इस वाक्य में चन्द्र और मुख इन दो प्रथमान्तपदों से उपस्थित एक ही किसी अर्थ में अन्वय होने का कोई कारण निर्दिष्ट नहीं है अतः संख्या का अन्वय चन्द्रपदार्थ में भी हो जायगा। इसी प्रकार

---

१. प्राचीन वैयाकरण के मत में कर्तृ प्रत्यय, तथा कर्म प्रत्यय दोनों स्थलों में "फले प्रधानं व्यापारः" इस कारिका के अनुसार व्यापार की प्रधानता मानी गई है। पर यह मत 'सुपः आत्मनः क्यच्' इस सूत्र के भाष्य से विरुद्ध होने से नव्य वैयाकरणों के निकाय में मान्य नहीं है।

'देवदत्तो भुक्त्वा व्रजति' इसमें भुक्त्वा भी देवदत्त के समान प्रथमान्त होने से इसमें भी संख्या का अन्वय प्राप्त होगा। अन्वय से चन्द्र इव मुखे दृश्येते यहाँ चन्द्र में संख्या के अन्वय होने पर एकवचनान्त क्रिया होनी चाहिये। इस प्रकार दृश्यते का वहाँ प्रयोग भी साधु हो जायगा। चन्द्रादि के साथ उक्त स्थल में अन्वय अनुभव सिद्ध भी नहीं है। इस दोष के निराकरणार्थ दूसरे में विशेषण न रहने वाले प्रथमान्तार्थ की उपस्थिति का कार्यकारणभाव में प्रवेश करना होगा। इस प्रकार आख्यातार्थ संख्या प्रकारक शाब्दबोध के प्रति इतर (दूसरे) में विशेषण होने के तात्पर्य का अविषय जो अर्थ तद्विषयक प्रथमान्त पद जन्य उपस्थिति कारण है। सोऽपि=कार्यकारणभाव भी। यह भाव है।

'चन्द्र इव मुखं दृश्यते' यहाँ इवार्थ सादृश्य में चन्द्रपदार्थ (जो प्रथमान्तार्थ है) प्रतियोगिता सम्बन्ध से विशेषण है, एवं भुक्त्वा[1] व्रजति में प्रथमान्तार्थ भोजन के अव्यवहितोत्तर कालोत्पन्न व्रजन (गमन) क्रिया में विशेषण है। क्यों कि भोजनोत्तर काल में व्रजन है। अतः पूर्वोक्त दोष नहीं।

कार्यकारणभाव में तात्पर्यविषय के निवेश का प्रयोजन यह है। 'चैत्र इव मैत्रः पचति' इसमें खले[2] कपोत न्याय से सभी पदार्थों का परस्परान्वय विना एक क्रिया में अन्वय मानने पर चैत्र इवार्थ सादृश्य में अन्वित न होकर पाकक्रिया में अन्वित होने के कारण इतर में प्रथमान्तार्थ विशेषण नहीं है। अतः यहाँ चैत्र में संख्यान्वय का वारण हुआ है। तात्पर्य के निवेश करने पर भी यद्यपि चैत्र का अन्वय इवार्थ में नही होता है। तथापि इवार्थ में सम्बन्ध करना वक्ता के तात्पर्य का विषय है। अत एव शाब्दबोध के अनन्तर चैत्र का इवार्थ में मानस बोध माना जाता है। इस प्रकार अन्वय तात्पर्य विषय होने से व्यावृत्ति होती है। नैयायिकों के कार्यकारणभाव में पूर्वोक्त निवेश प्रयुक्त गौरव होने से उनका मत मान्य नहीं है।

हिन्दीभाष्य—आख्यातार्थ काल का लक्ष्यानुरोध एवं फलापेक्षया प्रधान होने से व्यापार में अन्वय होता है। यदि आख्यातार्थ कर्ता कर्म के साथ काल का अन्वय मानें तो, पाकानुकूल व्यापार के समाप्त होने के अनन्तर कर्ता के वर्तमान होने के कारण वर्तमान काल के पचति प्रयोग की आपत्ति हो जायगी। व्यापार में अन्वय करने पर व्यापार समाप्त हो जाने से अतीत काल का अपाक्षीत् ऐसा प्रयोग होता है। इसी प्रकार फल में कालान्वय करने पर विक्लित्ति रूप फल उत्पन्न नहीं हुआ है, व्यापार हो रहा है फिर भी पक्ष्यति का प्रयोग होगा। पचति का प्रयोग नहीं होगा। क्योंकि फल उत्पन्न न होने से उसकी वर्तमानता नहीं है। अतः काल का धात्वर्थ व्यापार में ही अन्वय है।

---

१. भुज् धातुसे क्त्वा प्रत्यय करने से भुक्त्वा निष्पन्न होता है। 'क्त्वा' तो (१।१।४०) इससे इसको अव्यय संज्ञा होने से 'एकवचनमुत्सर्गतः करिष्यते' इस भाष्यसिद्धान्त के अनुसार एकवचनविभक्ति के उत्पन्न होने से प्रथमान्त है। 'अव्ययादाप् सुपः' (२।४।८२) इससे सुविभक्ति का लोप है।

२. खले कपोतन्याय—

'वृद्धा युवानः शिशवः कपोताः खले यथामी युगपत्पतन्ति।
तथैव सर्वे युगपत्पदार्थाः परस्परेणान्वयिनो भवन्ति॥'

इसका सारांश— तिङर्थ कर्ता कर्म संख्या तथा काल इन चार अर्थों में कर्ता तथा कर्म का धात्वर्थ व्यापार एवं फल में क्रमेण अन्वय है। संख्या का कर्तृप्रत्यय स्थल में कर्ता एवं कर्म प्रत्यय स्थल में कर्म में अन्वय होता है। न्याय मत में उक्त संख्या का प्रथमान्त पदार्थ देवदत्तादि में अन्वय होता है। काल का फल की अपेक्षा प्रधान व्यापार में अन्वय माना जाता है कर्ता कर्म एवं फल में नहीं।

न चाऽऽमवातजडीकृतकलेवरस्योत्थानाऽनुकूलयत्नसत्त्वाद् 'उत्तिष्ठति' इति प्रयोगाऽऽपत्तिः। परयत्नस्याज्ञानादप्रयोगात्। किञ्चिच्चेष्टादिना तदवगतौ च 'अयमुत्तिष्ठति, शक्त्यभावात् फलन्तु न जायते' इति लोकप्रतीतेरिष्टत्वात्। एवञ्च तिङर्थौ विशेषणमेव, भावनैव प्रधानम्।

यद्यपि 'प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यमन्यत्र दृष्टं, तथाऽपि "भावप्रधानमाख्यातं, सत्वप्रधानानि नामानि" ( नि अ० १ ख० १ ) इति-निरुक्ताद्, भूवादिसूत्रादिस्थक्रियाप्राधान्यबोधकभाष्याच्च धात्वर्थभावना-प्राधान्यमध्यवसीयते।

अपि च आख्यातार्थप्राधान्ये तस्य देवदत्तादिभिः सममभेदान्वयात् प्रथमान्तस्य प्राधान्यापत्तिः। तथाच 'पश्य मृगो धावति' इत्यत्र भाष्यसिद्धैकवाक्यता न स्यात्। प्रथमान्तमृगस्य धावनक्रियाविशेष्यस्य दृशिक्रियायां कर्म्मत्वापत्तौ द्वितीयापत्तेः।

व्यापारे आख्यातार्थकालाऽन्वये दूषणमाशङ्क्य निराचष्टे—*नचेति*। *यत्नसत्त्वादिति*। यत्नरूपव्यापारस्य वर्त्तमानत्वेन विषयाबाधात्। मम तु इदानीं फलाऽनुत्पत्त्या न तादृशप्रयोगाऽऽपत्तिरित्यर्थः। *अप्रयोगादिति* ननु परयत्नस्य विजातीयमनःसंयोगाश्रयसमवायरूपहेत्वभावादप्रत्यक्षत्वेऽपि चेष्टादिपक्षकेण, तल्लिङ्गकेन वाऽनुमानेन तदवगतावुत्तिष्ठतीति प्रयोगाऽऽपत्तिर्दुःसमाधेयैवेत्याशङ्क्य चेष्टापत्त्या परिहरति—*किञ्चिच्चेष्टादिनेति*। यत्किञ्चिच्छरीरावयवावच्छिन्नक्रिययेत्यर्थः। *तदवगतौ*-यत्नावगतौ। अनुमानप्रयोगश्चैवम्—देवदत्तीयचेष्टा प्रयत्नजन्या। चेष्टात्वात्। मच्चेष्टावत्। अथवा—अयमुत्थानाऽनुकूलयत्नवान्। विजातीयचेष्टावत्त्वात्, अहमिवेति। चेष्टा-प्रयत्नयोः कार्यकारणभावश्च प्रकृतेऽनुकूलस्तर्कः। स्वाश्रयावच्छेद्यत्वस्य हेतुतावच्छेदकसम्बन्धत्वान्न स्वरूपासिद्धिरिति।

परे तूक्तापत्तिमन्यथैव परिहरन्ति। तथाहि—आमवातजडीकृतकलेवरप्रयत्नस्योत्थानोद्देश्यकत्वेऽपि तदजनकत्वेऽपि तदजनकत्वान्नोक्तप्रयोगापत्तिः। अत एव 'उत्थानाय यतते' इत्येव तत्र प्रयोगः। यागपाकाद्युद्देश्यककुण्डादिनिर्माण-तण्डुलक्रयणादिदशायां, यजति; पचति इत्यादिप्रयोगवारणाय स्वरूपसम्बन्धरूपप्रयोजकताविशेषस्यैव सम्बन्धताया अभ्युपेयत्वादिति।

तच्चिन्त्यम्; तदुद्देश्यकत्वं हि तदिच्छाऽधीनेच्छाविषयत्वम्। उपायेच्छायाः फलेच्छाधीनत्वात्। उपायत्वं च प्रयोजकत्वमेव। कथमन्यथा तत्रेच्छति, प्रकृते यजती-

त्यादिप्रयोगो दुर्वार एव। तस्मात् साक्षाज्जन्यजनकभाव एव फल-व्यापारयोः सम्बन्धः— इत्येवाभ्युपेयम्। तावतैवोक्तप्रयोगवारणात्। प्रकृते शक्तिरूपसहकारिकारणत्वाभावेन तदनुत्पत्तावपि तदीययत्ने साक्षाज्जनकत्वस्य निराबाधत्वेनोत्तिष्ठतीतिप्रयोगस्यैवेष्टत्वात्। प्रकृतधात्वर्थतयाऽवगते तस्मिन् साध्यत्वस्यैव सत्त्वेन, उद्देश्यत्वस्य तदानीमसम्भवाच्च। एतभिप्रेत्यैव सारकृता—'उत्थानानुकूलयत्नसत्त्वे' इत्युक्तम्। अत एव पाकानुकूलप्रकृतधात्वर्थयत्नसत्वे पचतीत्येव प्रयोगः, अन्यदा तु 'पाकाय यतते' इति।

वस्तुतस्तु कृतिरूपव्यापारमात्रस्य धात्वर्थत्वविवक्षायामुत्तिष्ठतीतिप्रयोगः। प्रयत्नसामर्थ्यचेष्टादिघटितस्य तस्य समुदायस्य तद्विवक्षायान्तु नेति सारकाराशयः। अत एव तदोत्थानाय यतते इति प्रयोगोऽपि सूपपाद इति बोध्यम्।

उपसंहरति—*एवञ्चेति*। विशेषणमेवेत्येवकारेण तिङर्थस्य विशेष्यत्वव्यवच्छेदः। *भावनैवेति*। धात्वर्थभावनैवेत्यर्थः। अत्राप्येवशब्देन फलस्य, तिङर्थकर्त्रादेश्च व्यवच्छेदः।

'प्रकृतिप्रत्ययार्थयोः' इति व्युत्पत्तिविरोधमाशङ्कते- *यद्यपीति*। *अन्यत्*— पक्तेत्यादौ। *दृष्टमिति*। तथाच प्रकृत्यर्थभावनायाः प्राधान्योपगमे तद्विरोध इति भावः। *भावप्रधानमिति*। नामाऽऽख्यातोपसर्गनिपातभेदेनोद्दिष्टं चतुर्विधं पदं प्रकल्प्य, नामाऽऽख्यातलक्षणप्रतिपादके इमे वाक्ये। अत्राऽऽख्यातं भावप्रधानमिति, योजना। यथाश्रुते—'यच्छब्दयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्।'

(श्लो० वा० अनु० श्लो० १०६)

इत्यभियुक्तोक्तेः। शाब्दबोधे प्राङ्निर्दिष्टस्यैवोद्देश्यतया विवक्षितार्थाऽलाभात्। अत एव 'वृद्धिशब्दस्य प्राङ्निर्देशो मङ्गलार्थः' इत्याऽऽकरोक्तं सङ्गच्छते। एवमग्रेऽपि। आख्यातत्वाऽवच्छिन्ने प्रधानभावार्थप्रतिपादकस्वरूपलक्षणे तात्पर्यावधारणाच्च लक्षणवाक्याच्छब्दमर्यादया प्रकृतपदद्वयार्थाभेदस्याऽधिकस्य भानेऽपि न क्षतिः। लक्ष्यताऽवच्छेदकं च तिङन्तत्वरूपाख्यातत्वम्। 'आख्यातमाख्यातेन' (वा० ग० सू० २।१।७२) इत्यादौ, तत्रैवाऽऽख्यातपदस्य शक्त्यवधारणात्। 'भाव-काल-कारक-संख्याश्चत्वारोऽर्था आख्यातस्य, तत्र 'भावः प्रधानम्' इति प्रकृतनिरुक्तभाष्याच्च। एतेन तिङः प्रधानभावार्थकत्वस्य प्रतिपादकमेव तदिति वदन्तः प्रत्युक्ताः।

तच्छब्दपरामृश्यभावादिचतुष्टयस्यैकदा तिङा प्रतिपादनाऽसम्भवाच्चाभावत्वंनिष्पाद्यत्वम्। नातः कर्माऽऽख्यातस्य फलविशेष्यकबोधकतावादिमते तत्राऽप्रसक्तिः। प्रधानप्रतिपादकत्वस्य नाममात्रे, भावप्रतिपादकत्वस्य भुक्त्वेत्यादिनाम्न्यतिप्रसक्तत्वात्; तद्वारणाय विशिष्टमुपात्तम्।

प्राधान्यं चोपस्थितत्वात् स्ववाचकप्रकृतिकप्रत्ययार्थनिरूपितमेव। नातः 'काष्ठैः पाकः' इत्यादौ प्रत्ययार्थकरणनिष्ठप्रकारतानिरूपितविशेष्यताशालिबोधजनके पाकादिनाम्न्यतिप्रसङ्गः। नवौत्सर्गिकैकवचनान्तभावविहिततव्याद्यन्तनाम्नि सः। तथाच तिङ्बोध्यार्थनिष्ठप्रकारतानिरूपितविशेष्यतातात्पर्यप्रतिपादकत्वं तत्पर्यवस्यति।

इतराविशेषणत्वरूपं तु न तत्। 'पचतिभवती'त्यादिवाक्यघटकपच्याद्यर्थक्रियायां तदसत्त्वेन पचतीत्याख्यातेऽव्याप्तेः। क्त्वः पूर्वकालार्थकत्वस्य निराकरिष्यमाणत्वान्नोक्तलक्षणस्यालक्ष्येऽतिप्रसङ्गः। 'कृदभिहितो भावो द्रव्यवत् प्रकाशते' सू. ३-१-६७ इति भाष्येण पाक इत्यादाविव तस्य सत्त्वाऽतिदेशेन साध्यत्वरूपभावत्वाऽभावादेव नाऽतिप्रसङ्ग इति तु न सत्। यतः साधुत्वान्वाख्यापकव्याकरणस्मृत्या यत्कृदर्थभावे लिङ्गाद्यन्वयोऽनुभवसिद्धः, तस्मिन्नेव तदतिदिश्यते। यथा पाक इत्यादौ घञर्थभावे। क्त्वार्थे तु लिङ्गाद्यननुभवेन तत्र तदतिदेशविषयत्वस्यान्याय्यत्वात्। अव्ययकृत्त्वेन तस्य धात्वर्थानुवादकत्वस्य वक्ष्यमाणत्वाच्च।

तथाच भावप्रधानकत्वं तिङर्थनिष्ठप्रकारतानिरूपितविशेष्यताशालिभावप्रतिपादकत्वं पर्यवस्यति। एतेन 'पचतिभवती'त्यादिवाक्यघटकाख्यातसंग्रहाय क्वचित् क्रियान्तरनिष्ठविशेष्यतानिरूपितविशेषणत्वाभाववत्त्वं तत्। पच्याद्यर्थक्रियाया भवत्यर्थविशेषणत्वेऽपि क्वचित्तदसमभिव्याहारे विशेष्यतयैव भानान्न तत्रातिप्रसङ्ग इत्युक्तं निरस्तम्। उक्तापेक्षया अभावघटितत्वेनास्य गुरुत्वात्। अग्रिमलक्षणे प्राधान्यस्य विशेष्यत्वरूपस्यैव वक्ष्यमाणतयाऽत्रापि तस्यैव न्याय्यत्वात्। तत्र 'भावप्रधानम्' इति भाष्येण मदुक्तार्थस्यैव लाभाच्च॥

*सत्त्वप्रधानानीति*। अत्रापि पूर्ववदुद्देश्यविधेयभावकल्पना। लक्ष्यतावच्छेदकं च कृदाद्यन्तप्रकृतिकविभक्त्यन्तत्वरूपं नामत्वम्। 'प्रकृतिः, प्रत्ययः, विभक्तिरित्येतन्नाम संज्ञा; सत्ता, द्रव्यं, लिङ्गं, संख्या च नामार्थं' इति तद्भाष्यात्। 'क्रियाप्रधानमाख्यातं, सत्त्वप्रधानं नाम। यतः क्रियां पृष्टस्तिङाचष्टे—किं करोति, पचतीति। द्रव्यं पृष्टः कृताऽऽचष्टे—कतरो देवदत्तो, यः पाचक' इति 'प्रशंसायाम्' इति सूत्रस्थमहाभाष्याच्च। तत्र कृतेत्यस्य तत्प्रकृतिकसुबन्तेनेत्यर्थः। कृता द्रव्याऽभिधानेऽपि 'न केवला' इति न्यायेन केवलस्य प्रयोगाऽनर्हत्वात्, निरुक्तभाष्यस्थविभक्तिपदस्वारस्याच्च। व्युत्पत्तिपक्षमवलम्ब्य चेदम्। नातोऽव्युत्पत्तिपक्षे नामाऽऽदिष्वतिप्रसङ्गः।

लक्षणमाह—*सत्त्वप्रधानानीति*। सत्त्वं-'द्रव्यं वक्ष्यमाणलक्षणं, तत् प्रधानं यत्रेति विग्रहाल्लिङ्गादिनिष्ठप्रकारतानिरूपितविशेष्यताशाल्यर्थप्रतिपादकत्वं नामलक्षणमित्यर्थः। विशेष्याऽर्थकत्वस्य निपाताऽऽख्यातादावतिप्रसक्तत्वात् तद्वारणाय प्रकारतानिरूपितत्वान्तं विशेषणम्। व्यक्तिबोधस्य धर्मविषयकत्वनियमेन जातिप्रकारतानिरूपितत्वस्यातिप्रसङ्गाऽवारकत्वात्तदनुपादानम्। लक्ष्यतावच्छेदकाऽनाक्रान्तेषु याहच्छिकेष्वतिप्रसङ्गस्तु लक्षणे तद्व्यतिरिक्तत्वविशेषणेनैव परिहरणीयः। एवं धात्वर्थाऽनुवादकप्रत्ययान्तेष्वतिप्रसङ्गोऽपि लक्ष्यतावच्छेदकसंकोचेनैव परिहार्यः। तत्र नामत्वव्यवहारोऽपि स्वाद्यन्तत्वनिबन्धनो भाक्त इति तद्भावः। उपसर्गादिलक्षणं तु वक्ष्यते।

*भूवादीति*। इत्थं हि तत्र भाष्यम्—'का तर्हीयं वाचो युक्तिः—'पचति भवति' त्वं पचसि भवसि, पक्ष्यति भवतीति ? सैषा वाचोयुक्तिः। पचादिक्रिया भवतिक्रियायाः कर्त्र्यो भवन्ति' इति। तेन चाऽऽहत्यैव पचाद्यर्थक्रियाकर्तृकभवनक्रियायाः प्राधा-

न्यं प्रतिपाद्यते। धात्वर्थक्रियाया आख्यातार्थविशेषणत्वाभ्युपगमे तु स्वस्वार्थविरुद्धत्वेन पदार्थान्तरे विशेषणतयाऽन्वये नैराकाङ्क्ष्येण भवत्यर्थक्रियायामाख्यातार्थविशेषणपचादिक्रियाणामन्वयाऽसम्भवेन तद्विरोधोऽप्रतिरोध एव स्यादिति भावः। *सूत्रादि* इत्यादिना 'प्रशंसायाम्' ( पा० सू० ५।५।६६ ) इति सूत्रपरिग्रहः।

ननु 'भावप्रधानमाख्यातम्' इति निरुक्तेन तिङन्ते भावनाऽपरपर्य्यायभावप्राधान्यं प्रतिपाद्यते। सा च नैयायिकमते कर्त्राख्याते कर्तृत्वं कृतिः, कर्माख्याते कर्मत्वं फलं, तन्निरूपिताऽऽश्रयत्वं वा। तैः सङ्ख्याकालातिरिक्ताऽऽख्यातार्थस्य भावनापदव्यपदेश्यत्वोपगमात्। भावाऽऽख्याते तु धात्वर्थव्यापार एव, अनुवादकत्वात् तदाख्यातस्य। प्राधान्यं च तस्याः प्रकृत्यर्थापेक्षम्।

समानप्रत्ययोपात्तत्वप्रत्यासत्त्या फलमात्रं धात्वर्थ इति वदतां मीमांसकानामेतदपि भाष्यं मूलम्। तत्र लडाद्यर्थकालान्वयोपगमे तु तदपेक्षमपि। उक्तभाष्येऽपि क्रियापदार्थस्तत्सम्मतभावनैव। अत एव 'क्रियां पृष्टस्तिङाऽऽचष्टे' इत्येवोक्तं, न तु तिङन्तेनेति।

कृत्यादिरूपभावनाया आख्यातार्थत्वे मानं तु भूवादिसूत्रस्थम्—'कथं ज्ञायते यं प्रकृत्यर्थः अयं प्रत्ययार्थः, इति प्रघट्टकेऽन्वयव्यतिरेकाभ्यां शक्तिग्राहकम्—'इह पचतीत्युक्ते कश्चिच्छब्दः श्रूयते, पच्शब्दश्चकारान्त अतिश्च प्रत्ययः श्रूयते प्रत्ययार्थोऽपि कश्चिद्गम्यते, विक्लित्तिः कर्तृत्वमेकत्वम्। पठतीत्युक्ते कश्चिच्छब्दो हीयते, कश्चिदुपजायते, कश्चिदन्वयी। पच्छब्दो हीयते, पठ्शब्द उपजायते, अतिशब्दश्चान्वयी। अर्थोऽपि कश्चिद्धीयते, कश्चिदुपजायते, कश्चिदन्वयी। विक्लित्तिर्हीयते, पठिक्रियोपजायते, कर्तृत्वमेकत्वं चान्वयि। तेन मन्यामहे यः शब्दो हीयते तस्याऽसावर्थो, योऽर्थो हीयते, यः शब्द उपजायते, तस्याऽसावर्थो योऽर्थ उपजायते, यः शब्दोऽन्वयी, तस्याऽसावर्थो योऽर्थोऽन्वयी' इति भाष्यम्। तत्राऽतेः प्रत्ययस्य कैश्चित्पूर्वाचार्यैः कल्पनाद् अतिश्च प्रत्यय इत्युक्तमिति कैयटः। पच्यते पठ्यते इत्यादावप्युक्ताऽन्वयव्यतिरेकोद्देशेन कर्मत्वस्याप्याख्यातार्थत्वं न्यायसाम्यात्तत एवाऽवधार्य्यते।

किञ्च 'भावप्रधानम्' इति निरुक्तम्। तद्भाष्यस्वरसात्। सकलकारकसङ्ख्याविशिष्टभावनाया धात्वर्थत्वमाश्रित्य प्रवृत्तम्। अत एव नामलक्षणनिर्वचनेन कारकस्य तत्र नामार्थत्वेनोल्लेखः। तस्य धातुलभ्यत्वेन नामार्थत्वाभावादिति तदाशयात्।

नच रूपप्सूत्रस्थभाष्यप्रामाण्यात् क्रियाया एकत्वसत्त्वेऽपि द्वित्वाऽऽदिसत्त्वे मानाऽभावात्कथं तथोक्तसङ्गतिरिति वाच्यम्। परेत्वित्यादिना वक्ष्यमाणरीत्या कारकगतायास्तस्यास्तत्राऽऽरोपसम्भवात्। काल-सङ्ख्ययोर्द्योत्यत्ववत् कारकस्याऽपि द्योत्यत्वं—न्यायसाम्यात्। तस्य प्रत्ययार्थत्वोपगमे 'पाचकः पक्वः' इत्यादाविव प्राधान्यापत्तेः। जात्यतिरिक्तपदार्थस्य विशेषणताया द्योत्यत्वस्यैव तन्त्रत्वात्। अत एव 'स्त्रियाम्' ( पा० सू० ४।१।३ ) इति सूत्रे भाष्ये प्राधान्याऽऽपत्तिभिया लिङ्गस्य वाच्यतापक्षः—उपेक्षितः। वाच्यस्याऽपि प्रकृत्यर्थविशेषणत्वे तदसङ्गतिः स्पष्टैव।

न चोक्तकल्पे 'ग्रामं गच्छति' इत्यत्र कर्मबोधवद्धातोरपादानादिकारकविशिष्ट-

क्रियाबोधाऽऽपत्तिः। पञ्चम्यादिरूपसमभिव्याहृतद्योतकविभक्तेरभावात् । तत्र कर्त्तृकर्मणोस्तिङ्समभिव्याहृतद्वितीयादिविभक्तिश्च द्योतिका, अन्येषां त्वन्याः । न हि स्वप्रकृतिकप्रत्ययत्वमेव स्वार्थद्योतकतायां तन्त्रम् । उपसर्गाणां तदनापत्तेः । किन्तु स्वसमभिव्याहृतप्रत्यय-निपातान्यतरत्वम् । तच्च तण्डुलादिपदोत्तरविभक्तेरप्यक्षतम् । द्रव्यस्य संख्याऽविशेषितस्य तत्वे नाम्नः संख्याभानाऽऽपत्त्या तदर्थकत्वमावश्यकमिति तद्भावः । अत एव 'भाव-काल-कारक-सङ्ख्याश्चत्वारोऽर्था आख्यातस्य' इति भाष्यस्थकारकपदस्याऽसङ्कुचितवृत्तिताऽपि सङ्गच्छते ।

यदि चान्यप्रकृतिकविभक्तेरन्यप्रकृत्यर्थद्योतकतायाः क्वाप्यदृष्टचरत्वान्नोक्ताऽऽशयवर्णनं साधीय इति विभाव्यते, तदापि संख्या-काल-कर्त्तृ-कर्मकारकविशिष्टक्रियाया धात्वर्थत्वमादाय तत्प्रवृत्तिः । आख्यातस्यैव तादृशक्रियाद्योतकत्तासम्भवात् ।

न चास्त्वेवमेवाऽऽशयः । वाच्यताकल्पोक्तकार्यकारणभावकल्पनप्रयुक्तलाघवस्योपोद्बलकत्वादिति वाच्यम् । यत् तादृशमतं प्रक्रियादशायां चक्षुःश्रुत्युक्तिविश्वस्तैरप्याश्रयितुमशक्यम्, प्रागेव तु प्रकृतिप्रत्ययाऽर्थविवेचनचतुरैरक्षपादैः । तथाहि—कारकविशिष्टक्रियाया धात्वर्थत्वे 'लः कर्मणि' इति विधिवैयर्थ्यापत्तिः । नच तस्य द्योतकत्वप्रतिपादकता । शानजादेरपि तथात्वाऽऽपत्त्या, तत्रापि कर्त्रादीनां क्रियाविशेषणतया भानापत्तेः ।

किञ्च-'चैत्रौ पचतः' इत्यादौ चैत्रादिगतसंख्यायास्तत्रारोपे मानाभावः । वाचकतामते कर्त्राद्यंशे तद्भानोपगमेन प्रयोगप्रामाण्योपपत्तावप्रामाण्याऽभ्युपगमस्याऽन्याय्यत्वात् । स्वाश्रयाऽऽधेयत्वसंबन्धेन द्वित्वादेस्तत्र सत्त्वेऽप्यव्यावर्त्तकतया विशेषणत्वाऽभावेन तद्वैशिष्टयस्य तत्राऽसम्भवाच्च । न हि द्वित्वाश्रयाश्रितं घटाऽऽदिरूपं, क्रिया वा द्वे इति व्यवह्रियते । अधिकमग्रे वक्ष्यते ।

किञ्च कर्त्तृकर्मणोः पदार्थैकदेशतया तत्र देवदत्तादीनामन्वयाऽसम्भवः । 'पदार्थः पदार्थेनाऽन्वेति' इति व्युत्पत्तेः । तदन्वयाऽभ्युपगमेऽपि धात्वर्थेऽभेदेन विशेषणतया स्तोकादिपदवन्नपुंसकत्वाऽऽपत्तिश्च । अपि च क्रियाविशेषणत्वेनोपस्थितस्य कर्त्तुर्विशेषणाऽऽकाङ्क्षाविरहात्, पचतीत्युक्ते, कः कीदृगिति प्रश्नानुपपत्तिः । वक्ष्यति हि ग्रन्थकृत्—'नही गुणभूतः कर्त्ता निषेधं स्वाङ्गत्वेन ग्रहीतुमलम्' इति । अत एवैतत्प्रामाण्यात् प्रत्ययवाच्यत्वं कर्तुर्धात्वर्थविशेषणत्वं चेति गर्ज्जन्तः परास्ताः । प्रत्ययस्य द्योतकतायामेव तन्नियमस्य दर्शितत्वात् । प्रत्ययार्थप्राधान्यस्यैव-ततो लाभाच्च ।

नच भावनाया प्रत्ययवाच्यतापक्षेऽप्युक्तप्रश्नाऽनुपपत्तिर्दुःसमाधेयैवेति वाच्यम् । शक्तिभ्रमात्, लक्षणया वोपस्थितस्य कर्त्तुः साकाङ्क्षत्वसम्भवात् ।

किञ्च 'प्रत्यायानां प्रकृत्यर्थाऽन्वितस्वार्थबोधकत्वम्' इति व्युत्पत्तिसिद्धविभक्त्यर्थसङ्ख्याप्रकारकबोधं प्रति विशेष्यतया प्रकृतिजन्योपस्थितेर्हेतुत्वस्य कर्त्रादावभावेन सङ्ख्याऽन्वयाऽसम्भवः । आख्यातार्थसङ्ख्याप्रकारकबोधे आख्यातार्थकर्तृकर्मोपस्थितेः-

हेतुत्वकल्पनमप्याग्रहमूलकमेव । पदार्थयोराधाराधेयभावेनाऽन्वये विभिन्नपदजन्योपस्थितेस्तन्त्रत्वात् । विभक्त्यर्थकर्तुर्लिङ्गानन्वयिनोऽद्रव्यतया तत्र सङ्ख्यान्वयासम्भवात् । 'गुणानां च परार्थत्वाद्' मी. द-३-१-२२ इति न्यायाच्च । मन्मते अयोग्यतया तस्याः स्वप्रकृत्यर्थानन्वयेऽपि प्रकृत्यर्थान्वयनियमोऽक्षत एव । 'अणुरपि विशेषोऽध्यवसायकरः' इति न्यायात् ।

किञ्चाऽऽख्यातस्य कर्त्रर्थकत्वे राजसम्बन्धिपुरुषाऽभिन्नकर्तृकं गमनमित्यभिप्रायेण 'राज्ञः पुरुषो गच्छति' इतिवत् स्वस्वामिभावादिसम्बन्धेन राज्ञः कर्तृत्वेन विवक्षया राजा पुरुषो गच्छतीति प्रयोगापत्तिः । नच तत्र षष्ठीप्रसक्तिः । तदर्थस्य प्रातिपदिकार्थविशेष्यतया विवक्षायामेव तत्प्रसरात् । व्यक्तीभविष्यति चैतदुपरिष्टात् । आख्यातार्थकर्तुरनामधात्वर्थत्वेन 'नामार्थ-धात्वर्थत्वयोः' इति व्युत्पत्तिविषयताया—अप्यभावात् ।

नच तवापि 'चैत्रस्य पाकानुकूला कृतिः' इति चैत्रस्य पचतीति प्रयोगापत्तिरिति वाच्यम् । षष्ठ्यर्थस्य नामार्थसाकाङ्क्षतयाऽऽख्यातार्थकृतेश्च प्रथमान्तार्थसाकाङ्क्षतया परस्पराकाङ्क्षाविरहात् । 'गुरु-विप्र-तपस्वि-दुर्गतानाम्' इत्यादाविव पाकादिसम्बन्धितया चैत्रादिविवक्षायां षष्ठ्यन्तप्रयोगस्य सर्वैरेवोपगमाच्च । तस्माद्धात्वर्थक्रियायाः—आख्यातार्थं प्रति प्राधान्ये निरुक्तमानोपन्यसनं मुधैवेति कोविदा विदांकुर्वन्तु ।

'पचतिभवती'त्यादौ तु पाकानुकूलाऽऽख्यातार्थकृतौ भावनाश्रयत्वरूपभवतीति तिङन्ताऽर्थभावनाऽन्वयोपगमेन पाकविशिष्टकृतौ भवनकर्तृत्वेऽवगते तद्विशेषणपच्यर्थक्रियायामपि तल्लाभात्, "पचादयः क्रियाः भवतिक्रियायाः कर्त्र्यो भवन्ति" इति भाष्यस्थादिपदस्य हेतुपरतया, तेन व्यापाराऽर्थकपचादिशब्दस्य समासे पच्याद्यर्थहेतवः क्रियाः कृत्यात्मकव्यापारा भवनक्रियानिरूपितकर्तृत्ववत्यो भवन्तीत्यर्थस्य तस्माल्लाभाद् वा तादृशैकवाक्यत्वस्यास्माभिरभ्युपगमान्न भूवादिसूत्रस्थभाष्यविरोधोऽपि । तादृशभाष्यप्रामाण्यादेव च भवन्मते धात्वर्थप्रकारकबोधे धातुजन्योपस्थितेर्हेतुत्ववन्मन्मतेऽप्याख्यातार्थभावनाप्रकारकबोधे तिङ्जन्यभावनोपस्थितेरपि विशेष्यतासम्बन्धेन हेतुत्वस्य कल्प्यतयोक्तैकवाक्यत्वस्य सूपपादत्वात् ।

न चोक्तबोधाभ्युपगमे आख्यातेन कर्तुरबोधनाच्चैत्रादिपदोत्तरं तृतीयाऽऽपत्तिरिति वाच्यम् । तस्यां चैत्रस्याऽऽधेयतासम्बन्धेनाऽन्वयाभ्युपगमेन मुख्यविशेष्यतयैव तद्भानेन आश्रयातिरिक्तांशे विशेषणतया कृत्याश्रयबोधनरूपस्याभिधानस्य तत्र सत्त्वात्, तृतीयाऽऽपत्त्यसम्भवात् ।

नच 'चैत्रः पचती'त्येतावन्मात्रप्रयोगेऽपि चैत्रस्याऽऽधेयतासम्बन्धेनान्वयाऽऽपत्तिरिति वाच्यम् । प्रथमान्ताऽर्थप्रकारकबोधे तिङर्थविशेष्यतापन्नभावनोपस्थितेर्हेतुत्वस्यापि कल्पनेनोक्तदोषाऽप्रसक्तेः ।

नच चैत्रे पाकानुकूला कृतिरित्यत्रेव 'चैत्रः पचतिभवती'त्यादौ सप्तम्याऽऽपत्तिर्दुर्वारैवेति वाच्यम् । धात्वर्थविशेषणीभूताधेयत्वस्य प्रातिपदिकार्थविशेष्यतया विव-

क्षायामेव सप्तमीविधानात् । एवमाधेयत्वस्य प्रकारतयाऽविवक्षणाच्च । इदं चाख्यातार्थकृतिमुख्यविशेष्यकबोधमभिप्रेत्योक्तम् । वस्तुतस्तु 'चैत्रः पचतिभवति' इत्यादौ प्रथमान्तार्थविशेष्यकबोधाभ्युपगमेऽपि नैकवाक्यताक्षतिः । भवनकर्त्तृत्वाऽन्विताया एव पाकविषयकभावनायाश्चैत्रांशे प्रकारतया भानसम्भवात् ।

एतेन कृतिविशेष्यकबोधाभ्युपगमे प्रथमान्तार्थप्रकारकबोधे तिङर्थभावनोपस्थितेर्हेतुत्वकल्पने गौरवमिति दूषणमलग्नकम्, विशेषणतयैव तदन्वयाभ्युपगमादित्यरुचेराह–*अपि चेति* ।*अभेदान्वयादिति* । इदं च तन्मतेऽपि कर्त्राऽऽख्यातार्थं इति स्वीयवासनाऽनुसारेण । नैयायिकमते तु कृतेराख्यातार्थतया तस्या आश्रयत्वेनैव प्रथमान्तपदार्थेऽन्वयादित्यवधेयम् ।

*भाष्यसिद्धेति* । 'क्रियाऽपि कृत्रिमं कर्म, क्रियाऽपि हि क्रिययेप्सिता भवति, कया संदर्शनप्रार्थनादिक्रियया' इति 'कर्मणा यम्' (पा० सू० १।४।३२) इतिसूत्रस्यभाष्यसिद्धेत्यर्थः । त्वन्मते धावनाऽनुकूलकृतिमान्मृग इत्यवान्तरवाक्यार्थबोधस्य तत्र जायमानत्वेन धावनस्य कर्त्रवरुद्धतया विशेषणतयाऽन्यत्राऽन्वये नैराकाङ्क्षयेण, दर्शने कर्मतयाऽन्वयाऽयोगात् । किन्तु धावनाऽनुकूलकृतिमान् मृगो दर्शनाश्रयस्त्वमित्येव बोध एष्टव्यः । एवञ्चैकमुख्यविशेष्यकबोधजनकत्वरूपैकवाक्यत्वाऽभावात् तद्विरोधो दुर्वार इति भावः ।

ननु धावनाऽनुकूलकृतिमन्मृगस्यैव कर्मतया दृश्यर्थेऽन्वयान्नोक्तदोषः । अत आह— *प्रथमान्तेति* । *कर्मत्वापत्ताविति* । कर्मत्वेन प्रकारतापत्तावित्यर्थः । कर्मतासम्बन्धेन मृगस्य दर्शनक्रियायामन्वयस्त्वसम्भवी । 'नामार्थ-धात्वर्थयोः' इति व्युत्पत्तिविरोधात् वक्ष्यमाणद्वितीयाऽऽपादनविरोधाच्चेति भावः । *द्वितीयापत्तेरिति* । कर्मणोऽत्र तिङाऽनभिधानेन अनभिहिताधिकारीयं 'कर्मणि द्वितीया' (पा०सू० २।३।२) इत्यस्य जागरूकत्वादिति भावः ॥

शङ्का—काल का व्यापार में सम्बन्ध स्वीकार करने पर आमवात=रोगविशेष से स्तब्धशरीर वाले व्यक्ति का उत्थान (उठने) के अनुकूल यत्न के रहने पर 'उत्तिष्ठति' इस प्रकार का प्रयोग होना चाहिये ।

समाधान—दूसरे के आन्तर यत्न रूप (व्यापार) का ज्ञान अन्य व्यक्ति को नहीं होता है । इस कारण से उक्त प्रयोग नहीं होता । किसी प्रकार की चेष्टा द्वारा व्यापार (यत्न) का ज्ञान होने पर 'अयमुत्तिष्ठति' ऐसा प्रयोग इष्ट है । यह उठता है परन्तु शक्ति के अभाव से उत्थान रूप फल उत्पन्न नहीं होता । इस प्रकार तिङर्थ विशेषण है, भावना प्रधान है यह सिद्ध हुआ ।

यद्यपि [1]प्रकृतिभूत धातु का अर्थ प्रकृत्यर्थ है इसके साथ प्रत्ययार्थ का अन्वय, एवं प्रत्ययार्थ का प्राधान्य अन्यत्र देखा गया है तथापि भावप्रधानमाख्यातम्= (आख्यात=तिङन्त में भाव अर्थात् व्यापार की प्रधानता है) 'सत्त्वप्रधानानि-

१. 'प्रकृतिप्रत्ययौ सहार्थं ब्रूतः तयोः प्रत्ययार्थस्य प्राधान्यम्' यह नियम है ।

नामानि=प्रातिपदिक सत्त्वप्रधान होता है ) इस यास्क प्रणीत निरुक्त के आधार पर तथा भूवादि सूत्र के क्रिया ( व्यापार ) के प्राधान्य बोधक भाष्य से व्यापार की प्रधानता मानी गई है, मानी जाती है।

अर्थ—व्यापार की प्रधानता नहीं मानने पर दूषणान्तर देते हैं अपि च इत्यादि से। आख्यातार्थ=आश्रय की प्रधानता शाब्दबोध में स्वीकृत करने पर ( प्रथमान्तार्थ ) देवदत्तादि के साथ उसका अभेद से अन्वय होने के कारण प्रथमान्तार्थ की प्रधानता हो जायगी। ऐसी अवस्था में 'पश्य मृगो धावति'=मृग के धावन ( दौड़ को देखो इसमें भाष्याभिमत एकवाक्यता नहीं हो सकेगी। प्रथमान्त मृग का अर्थ जो कि धावन क्रिया का विशेष्य है। अतः मृग के कर्म होने से द्वितीया विभक्ति की आपत्ति हो जायगी।

हिन्दीभाष्य—शङ्का—व्यापार में काल का अन्वय होने पर वातव्याधि विशेष से पीडित मनुष्य उठने का यत्न तो करता ही है किन्तु उठ नहीं पाता है। यत्न ( व्यापार ) में वर्तमान काल का अन्वय अबाधित होने से 'अयमुत्तिष्ठति'=यह उठता है ऐसा प्रयोग भी सङ्गत हो जायगा। काल का फल में अन्वय मानने पर उत्थान ( उठ जाना ) रूप फल नहीं होने से वर्तमान काल का अन्वय असम्भव होने के कारण पूर्वोक्त प्रयोग का प्रसङ्ग नहीं है। अतः काल का व्यापार में अन्वय ठीक नहीं है।

समाधान—यत्न=कृति आत्मा का गुण है। जिस प्रकार दूसरे का ज्ञान/ इच्छा आदि किसी व्यञ्जक के विना नहीं जाना जाता है। उसी प्रकार भीतर का यत्न दूसरा व्यक्ति किस प्रकार जान सकेगा। इसी कारण से 'अयमुत्तिष्ठति' ऐसा प्रयोग नहीं होता। यदि हाथ पाँव की चेष्टा से यत्न का ज्ञान हो जाता है तो पूर्वोक्त प्रयोग इष्ट ही माना जाता है। इस सन्दर्भ से भी भावना की प्रधानता सिद्ध होती है।

शङ्का—प्रकृति=प्रत्यय विधान की अवधि का अर्थ तथा प्रत्ययार्थ का परस्पर अन्वय होता है; और उस में प्रत्ययार्थ का प्राधान्य होता है। इसके आधार पर प्रत्ययार्थ कर्ता तथा कर्म की प्रधानता होनी चाहिये।

समाधान—शाब्दबोध में भाव की प्रधानता यास्कमुनि प्रणीत निरुक्त के अनुसार मानी गई है। 'भावप्रधानमाख्यातम्' इसमें आख्यात से तिङन्त का ग्रहण होता है। "आख्यातमाख्यातेन क्रियासातत्ये' ( मयूरव्यंसकादिगण ( २।१।७२ ) पठित ) इस में आख्यात से तिङन्त का ग्रहण माना गया है। 'खादत मोदत यस्यां क्रियायाम्' इस विग्रह में तिङन्त का तिङन्त के साथ समास का विधान उक्त वचन से होता है। अतः निरुक्त के द्वारा प्रत्ययार्थ की प्रधानता का सामान्य नियम बाधित होने से प्रकृत्यर्थ व्यापार की ही प्रधानता होती है, प्रत्ययार्थ की नहीं।

व्यापार के प्राधान्य में दूसरी युक्ति 'पचति भवति' यह भाष्योक्ति[1] है। पाकानुकूल व्यापार होता है यह अर्थ है। यदि पचति से व्यापार की प्रधानता नहीं मानी जायगी तो भवति क्रिया का कर्ता पचति से प्रतीत व्यापार ( क्रिया ) नहीं हो सकेगा। अप्रधान

---

१. 'भूवादयो धातवः' इस सूत्र के महाभाष्य में पच्यादयः क्रियाः भवति-क्रियायाः कर्त्र्यो भवन्ति' इससे 'पचति भवति' का तात्पर्य वर्णन किया गया है।

रहने पर प्रधान में अन्वित होने से अनाकाङ्क्ष व्यापार भवति में कर्तृतया अन्वित्त नहीं होगा। इस प्रकार भाष्यासङ्गति होने से तत्परिहारार्थ व्यापार प्राधान्य अवश्यक है।

व्यापार प्राधान्य न होने पर भी भाष्य की असङ्गति नहीं है। भवन क्रिया में कर्तृत्व रूप से पच् धात्वर्थ विक्लित्यनुकूल व्यापार का अन्वय होने के अनन्तर प्रथमान्तार्थ; देवदत्तादि में अंशभूत कृति[1] में अन्वय होने से भवन क्रिया कर्ता जो विक्लित्यनुकूलव्यापार उसका जनक जो कृति उसका आश्रय देवदत्तादि इस प्रकार का बोध न्याय मत में होने से भाष्यासङ्गति का परिहार होजाता है। अतः 'अपि च' से दूषणान्तर देते हैं—

न्यायमत में आख्यातार्थ कृति तथा फल और व्यापार धात्वर्थ माना गया है। कृतिका प्रथमान्तार्थ देवदत्तादि के साथ अभेद नहीं होता; किन्तु आश्रयता रूप भेद सम्बन्ध से अन्वय होता है। अतः अभेदान्वय का मूल में प्रतिपादन वैयाकरण की वासना से है। क्यों कि उनके मत में आख्यातार्थ आश्रय है। न्याय मत में आख्यातार्थ कृति है। उसके साथ अभेदान्वय नहीं हो सकता।

'कर्मणा यमभिप्रैति' (१।४।३२) इस सूत्र के भाष्य में 'क्रियापि कृत्रिमं कर्म, क्रियाऽपि हि क्रियया ईप्सिता भवति कया संदर्शनप्रार्थनादिक्रियया' इति। क्रिया भी कृत्रिम= (पारिभाषिक कर्म है, क्रिया से क्रिया भी ईप्सित होती है। किस से—संदर्शन प्रार्थना आदि क्रिया से ऐसा लिखा है। इसका अभिप्राय यह है कि दर्शनादि क्रिया से जन्य फल का धावन क्रिया से सम्बन्ध कराने की इच्छा का विषय से धावन क्रिया भी कर्म है।

न्याय मत में 'पश्य मृगो धावति' से धावनानुकूलव्यापार जनक कृत्रिम मृग कर्म के प्रेरणाविषयीभूत दर्शनानुकूल व्यापार जनक कृतिमान् त्वम् ऐसा बोध मानने पर धावन क्रिया का जनकतया कृति में अन्वय द्वारा कर्ता से अवरुद्ध हो जाने के कारण। एवं विशेषणतया अन्वित कर अन्यत्र अन्वय की आकांक्षा शान्त होने से दर्शन क्रिया में कर्मता सम्बन्ध से अन्वय नहीं हो सकता।

'धावनानुकूलव्यापार जनक कृतिमान् मृगः' 'दर्शनानुकूल व्यापार जनक कृतिमान् त्वम्' इस प्रकार का पृथक्-पृथक् बोध होने से एकवाक्यता का भङ्ग हो जायगा। एक मुख्य विशेष्यक बोध जनकत्व रूप एकवाक्यता मानी गई है।

'पश्य मृगो धावति' इस प्रयोग से मृग विशेष्यक तथा त्वं पदवाच्य देवदत्तादि विशेष्यक बोध तथा विशेष्य के दो होने से एकार्थमुख्येत्यादि पूर्वोक्त रूप एकवाक्यता उक्त प्रयोग में नहीं होगी। अतः यह कल्पना भाष्य विरुद्ध है।

शङ्का—धावनानुकूल व्यापार जनक कृतिमान् मृगकर्मक प्रेरणाविषयीभूतदर्शनानुकूल व्यापार जनक कृतिमान् त्वम् ऐसा बोध मानने पर एक ही युष्मदर्थ (त्वं) के विशेष्य होने से एकवाक्यता हो जायगी।

समाधान—एकवाक्यता के निर्वाह के लिये मृगको दृशि क्रिया का कर्म स्वीकार कर युष्मद् शब्द के अर्थ (त्वम्) का ही प्राधान्य उक्त बोध में रहने पर मृग शब्द से द्वितीया विभक्ति की आपत्ति हो जायगी। क्योंकि मृग दर्शन क्रिया का कर्म तथा प्रातिपदिक है।

शङ्का—धावन क्रिया जनक कृति से विशिष्ट (युक्त) मृग दर्शन क्रिया का कर्म मानने से विशिष्टार्थ का बोधक मृगो धावति यह प्रातिपदिक नहीं है जो मृग प्रातिपदिक है। वह केवल कर्म नहीं है। इसलिये द्वितीया की आपत्ति उक्त प्रयोग में नहीं है।

---

१. कृत्याश्रय देवदत्त के होने से उसका एकदेश कृति है।

समाधान—धावनानुकूल व्यापार जनक कृतिमान् मृग इस विशिष्ट को कर्म स्वीकार करने पर भी प्रत्येक की कर्मता का त्याग नहीं किया जाता है। ऐसा न मानने पर नील-गुण विशिष्ट घट का आनयनादि क्रिया में अन्वय होने से प्रत्येक नील तथा घट के प्रातिपदिक होने पर भी कर्मता उसकी विवक्षा नहीं है। अतः विशिष्ट तथा विवक्षित होने से प्रत्येक से द्वितीया विभक्ति नहीं होगी। ऐसी दशा में नील घटमानय' इत्यादि प्रयोगों का विलय ही हो जायगा। अतः विशिष्ट को कर्म मानने पर भी प्रत्येक की कर्मता अक्षुण्ण रहती है। अत एव 'अनभिहिते' (२।३।१) इस सूत्र के महाभाष्य में 'भीष्मं कटं कुरु' इस स्थल में 'कटोऽपि कर्म, भीष्मादयोऽपि' ऐसा लिखा है। वैयाकरण मत में धावन क्रिया के विशेष्य होने से उसी का कर्मतया दृश धात्वर्थ में अन्वय होता है। इस प्रकार मानने से द्वितीया की आपत्ति नहीं हो सकती है। क्योंकि धावन रूप व्यापार का वाचक धातु है, प्रातिपदिक नहीं है। द्वितीया प्रातिपदिक से होती है। धातु भिन्न को प्रातिपदिक संज्ञा होती है। अतः व्यापार मुख्य विशेष्यक शाब्दबोध मानना उचित है।

**नचैवमप्रथमासामानाधिकरण्याच्छतृप्रसङ्गः। एवमपि द्वितीयाया दुर्वारत्वेन 'पश्य मृग' इत्यादिवाक्यस्य वाऽसम्भवापत्तेः।**

**न च पश्येत्यत्र तमिति कर्माध्याहार्य्यम्। वाक्यभेदप्रसङ्गात्। उत्कटधावनक्रियाविशेषस्यैव दर्शनकर्मतयाऽन्वयस्य प्रतिपिपादयिषितत्वाद्, अध्याहारेऽनन्वयापत्तेश्च। एवञ्च भावनाप्रकारकबोधे प्रथमान्तपदजन्योपस्थितिः कारणमिति नैयायिकोक्तं नादरणीयम्। किन्तु आख्यातार्थकर्त्तृप्रकारकबोधे धातुजन्योपस्थितिर्भावनात्वावच्छिन्नविषयतया कारणमिति कार्यकारणभावो द्रष्टव्यः। भावनाप्रकारकबोधं प्रति तु कृज्जन्योपस्थितिवद् धात्वर्थभावनोपस्थितिरपि हेतुः। 'पश्य मृगो धावति' 'पचति भवति' इत्याद्यनुरोधादिति दिक्।**

*एवमिति*। मृगपदोत्तरं द्वितीयाप्रसङ्ग इत्यर्थः। शतृ-शानज्विधौ लडर्थकर्तुः प्रथमान्ताऽर्थसामानाधिकरण्येन विशेषितत्वान्मृगपदस्य द्वितीयान्तत्वे तदापत्त्या द्वितीया न भविष्यतीति शङ्कितुराशयः। न हि शत्रापत्तिर्द्वितीयाप्रतिबन्धिका, किन्तु कर्मणोऽभिधानम्। तदभावसत्त्वाच्च द्वितीया दुर्वारेत्याशयेन समाधत्ते—*एवमपीति* *असम्भवापत्तेरिति*। मृगस्य कर्मतया दृश्यर्थेऽन्वयोपगमे 'धावन्तं मृगं पश्य' इति वाक्यस्यैवोचितत्वादित्यर्थः।

ननु 'अर्थैकत्वादेकं वाक्यं साकाङ्क्षञ्चेद्विभागे स्याद्' (पू० मी अ० २ पा० १ सू० ४६) इति जैमिनिसूत्राद् विच्छिद्य पाठे साकाङ्क्षत्वे सत्येकार्थप्रतिपत्तिजनकत्वमेकवाक्यत्वमित्यर्थो लभ्यते। प्रकृते तमित्युक्ते कमित्याकाङ्क्षासत्त्वात् यथाकथञ्चिद्वाक्यद्वयस्य धावनाऽनुकूलकृतिमन्मृगकर्मकदर्शनरूपैकार्थप्रतिपादकत्वाच्च न वाक्यभेदप्रसङ्गोऽत आह—*उत्कटेति*। *अध्याहार इति*। पूर्वाऽनुपात्ताकाङ्क्षितपदस्याऽनुसन्धाने इत्यर्थः। *अन्वयापत्तेश्चेति*। तत्पदेन मृगस्य, धावनाऽनुकूलकृतिमन्मृगस्य वा परामर्शेऽपीप्सितस्य तादृशधावनक्रियाया दृश्यर्थकर्मत्वान्वयस्य तद्वा-

क्याद्बोधानाऽनुपपत्तेरित्यर्थः । उपसंहरति—*एवञ्चेति* । आख्यातार्थविशेष्यकबोधाऽङ्गीकर्तृनये एकवाक्यताऽनुपपत्तिरूपदूषणदार्ढ्यं चेत्यर्थः । *नादरणीयमिति* । उक्तदोषग्रस्तत्वादिति भावः ।

स्वमतनिष्कर्षमाह—*किन्त्विति* । फले व्यभिचारनिरासायोपस्थितिविशेष्यतां विशिनष्टि—*भावनात्वावच्छिन्नेति* । ननु त्वन्मतेऽप्याख्यातस्य धात्वर्थमुख्यविशेष्यकबोधजनकत्वनियमभङ्गप्रसङ्गोऽतः आह—*पश्येति* । तथाचोक्तनियम एतदतिरिक्तविषयक इति भावः ।

ननु धावनकर्तृत्वविशिष्टमृगरूपवाक्यार्थस्य कर्मतया दर्शनेऽन्वयः । तथाच न 'नामार्थयोः' इति व्युत्पत्तिविरोधः । वाक्यस्यानामत्वात् । अत एव न ततो द्वितीयापत्तिरपि । धावनविशिष्टस्य दर्शनकर्मत्वाऽवगतौ विशेषणीभूतधावनस्यापि कर्मतालाभाच्च न प्रतिपिपादयिषितान्वयालाभोऽपि । 'चैत्रः पचतिभवति' इत्यादौ तूक्तदिशैकवाक्यत्वमुपपादितमेव । तथाचोक्तकार्यकारणभावकल्पे कथं तदनुरोधो बीजम्? अत आह—*दिगिति* । तदर्थस्त्वेवं रीत्या वाक्यैकवाक्यताप्रतिपादने भाष्यकृत्सम्मतपदैकवाक्यतया प्रतिपिपादयिषितान्वयालाभ एव । किञ्चाभेदेन नीलविशिष्टघटस्य कर्मत्वे प्रतिपिपादयिषिते, 'नीलं घटं जानाति' इत्यादौ द्वितीयानुपपत्तिरिति ।

अत्र नैयायिकाः-धावनक्रियाकर्तृत्वावरुद्धमृगस्य कर्मतासम्बन्धेन दृश्यर्थेऽन्वयोपगमान् पदैकवाक्यताभङ्गः । तदवरुद्धत्वं च-तदन्वयितया तात्पर्यविषयत्वम् । नचैवं कर्मतासंसर्गेण तण्डुलस्याऽप्यन्वयसम्भवात् 'तण्डूलः पचति' इति प्रयोगापत्तिरिति वाच्यम् । यतो न वयं सामान्यतः कर्मत्वादिभेदसम्बन्धेन नामार्थस्य धात्वर्थेऽन्वयमभ्युपेमः, किन्तु क्रियान्तरकर्तृत्वाऽवरुद्धस्य । नच तण्डुलस्तथा, येन पच्याद्यर्थे तस्य कर्मतासंसर्गः स्यात् । अत एव 'काष्ठं भस्मराशिः करोति' इति न प्रयोगः । भस्मराशेः कर्तृत्वानवरुद्धत्वात् । 'काष्ठं भस्मराशिः क्रियते' इत्यादौ कर्मत्वान्तरावरुद्धक्रियायां तु तदनवरुद्धस्यापि व्युत्पत्तिवैचित्र्यात् । तस्य तत्र तत्संसर्गत्वाऽनभ्युपगमे वाक्याऽभेदाऽऽपत्त्या तद्वाक्यजबोधस्य 'काष्ठं नश्यते, भस्म क्रियते' इति वाक्यद्वयजबोधस्येव 'भस्म काष्ठविकृतिर्वा' इति संशयनिवर्त्तकत्वानापत्तेरित्याद्यन्यत्र प्रपञ्चितम् ।

एवं चाऽत्र पदैकवाक्यताया अनायासेनैवोपपत्तौ धात्वर्थभावनाप्रकारकबोधे भावनोपस्थितेर्हेतुत्वं निष्प्रमाणकमेव ।

नाऽपि मृगपदोत्तरं द्वितीयाऽऽपत्तिः । प्रातिपदिकार्थविशेष्यतया कर्मत्वस्याऽविवक्षणात् । अत एव न तत्र षष्ठीप्रसक्तिरपि । संसर्गस्य प्रातिपदिकार्थविशेष्यतया विवक्षायामेव 'षष्ठी शेषे' (पा० सू० २।३।५०) इत्यनेन तद्विधानात् । एवं 'घटो नास्ति' इत्यादावपि बोध्यम् । किन्तु प्रातिपदिकार्थे तत्र प्रथमैव । नाऽपि 'नीलं घटं जानाति' इति प्रयोगाऽनुपपत्तिः । घटस्य क्रियान्तरकर्तृत्वाऽनवरुद्धत्वेन कर्मत्वान्तरविशेषणतानापन्नायां जानात्यर्थक्रियायां कर्मतायाः संसर्गत्वाऽसम्भवात् ।

'पश्य लक्ष्मण पम्पायां बकः परमधार्मिकः' । वा. रा. कि.

इत्यादावस्तीत्यध्याहार्य्यम् । वस्तुतस्त्वत्र दृष्टान्तेन 'तण्डुलः पचति' इत्यादौ बोधाऽऽपादनं न विचारसहम् । कर्मताऽन्यसंसर्गकपच्यर्थविशेष्यकबोधस्याप्रसिद्धौ तथाऽऽपादनासम्भवात् । 'तण्डुलं पचति' इत्यादौ विभक्त्यर्थकर्मत्वसम्बन्धेन तादृशबोधः प्रसिद्ध इति चेत् ? तर्हि तादृशबोधे द्वितीयान्ततण्डुलपदसमभिव्याहृतपचतीत्यानुपूर्वीज्ञानस्य हेतुतया तदभावादेवाऽऽपाद्यस्याप्यऽसम्भवात् । तदुक्तम्–'यादृशं फलं क्वचित् प्रसिद्धं, तादृशस्यैवाऽऽपत्तिः सम्भवति' इति ।

एतेन 'पश्य लक्ष्मण' इत्यत्र 'अस्तिर्भवन्तीपरोऽप्रयुज्यमानोऽप्यस्ति' इति भाष्यस्थाऽपिशब्दस्वारस्येन वाक्यपरिपोषकक्रियान्तराऽभावेऽस्तेरध्याहार इत्यर्थलाभेन, प्रकृते वाक्यपरिपोषिकाया दर्शनक्रियायाः सत्त्वेन तदध्याहारे मानाभावात् कर्मतासंसर्गेणाऽन्वयोऽनुपपन्न इति दूषणमलग्नकम् । एवञ्चाख्याते प्रथमान्तपदसमभिव्याहारे •प्रायः प्रथमान्तार्थविशेष्यकबोधो निराबाधः । अत एव 'यो यः शूद्रस्य पचति द्विजोऽन्नं सोऽतिनिन्दितः' इत्यत्र प्रधानपरामर्शितदो द्विजपरामर्शकत्वमनायासेन सङ्गच्छते ।

ननु प्रथमान्तार्थविशेष्यकबोधवादिमते 'पचतिकल्पं चैत्रः' पचतःकल्पं चैत्रौ' इत्यादौ कल्पबाद्यन्तस्य नामतया, तद्विशेषणवाचकतया च प्रथामान्तचैत्रादिपदसमानलिङ्गवचनत्वाऽऽपत्तिराख्यातार्थकृतेः प्रथमान्तार्थचैत्रादावभेदान्वयापत्तिश्चेति चेद् ? न । स्वार्थिकानां प्रायशः प्रकृत्यर्थताऽवच्छेदकगतकुत्सादिद्योतकतया प्रकृते प्रकृत्यर्थताऽवच्छेदकक्रियागतेषदसमाप्तत्वस्य कल्पबा द्योतनात् सत्त्वासत्त्वाभ्यां प्रकृत्यर्थताव च्छेदकसमानस्य भावेषदसमाप्तत्वप्रतिपादककल्पबाद्यन्ते नपुंसकैकवचनान्तत्वयोरौचित्यात् । कल्पबाद्यन्तस्य नामत्वेन समानविभक्तिकत्वेन च तदर्थस्य चैत्रेऽभेदान्वयाऽऽपत्तिरिति तु मूर्खप्रलपितत्वादनादेयन् । लक्ष्यार्थकर्तुरभेदान्वयस्येष्टत्वात् । शक्यार्थस्य त्वयोग्यत्वादेवानन्वयात् । 'घटः पट' इत्यादौ व्यभिचारवारणाय व्युत्पत्तावसति बाधके इति विशेषणाच्चेत्याहुः ।

नैयायिकैस्तु कर्मतासम्बन्धेन तिङर्थभावनाविशेष्यकबोधे धातुजन्यभावनोपस्थितेस्तदिति सममेव । 'प्रकृतिप्रत्ययार्थयोः इति प्रवादानुरोधात्प्रथमान्तार्थकर्तृप्रकारकबोधे क्रियान्तरकर्तृत्वविशेष्यतापन्नतिङर्थभावनोपस्थितेरपि तत्कल्प्यते । तथाचोक्तस्थले आधेयतासम्बन्धेन मृगविशिष्टधावनाऽनुकूलकृतेः कर्मतया दृश्यर्थेऽन्वये मृगनिष्ठा या धावनाऽनुकूला कृतिः, तत्कर्मकदर्शनाऽऽश्रयस्त्वमिति वाक्यार्थबोधः । धावनविशिष्टकृतौ च बोधितकर्मत्वस्य 'सविशेषणे हि' इति न्यायाद्धावने पर्यवसानाच्च प्रतिपिपादयिषितार्थस्याऽपि लाभः । नाऽपि मृगपदोत्तरं द्वितीयाऽऽपत्तिः, मृगकर्मताया एतद्वाक्यादलाभाद् । एवञ्च 'पचतिभवति' इत्यत्राऽपि 'प्रथमान्तार्थकर्तृविशिष्टा पाककृतिर्वर्तमानभावनाऽऽश्रयिका' इति बोधात् तत्राऽप्येकवाक्यत्वमक्षतेरिति ।

एवञ्च 'प्रकृतिप्रत्ययार्थयोः' इतिन्यायाऽविरोधेनैव भाष्यकारोक्तपदैकवाक्यता न्यायनयेऽपि सूपपादेत्यलं परमताऽनुवर्णनेन।

शङ्का—मृगपदोत्तर द्वितीया की प्राप्ति होने पर [1]लटः शतृशानचौ (३।२।१२४) इत्यादि से अप्रथमान्तार्थ के साथ सामानाधिकरण होने से शतृप्रत्यय हो जायगा। इस प्रकार 'धावन्तं मृगं' ऐसा प्रयोग प्राप्त होगा, 'पश्य मृगो धावति' नहीं होगा अतः एकवाक्यता ठीक नहीं है।

समाधान—एकवाक्यता भाष्यसिद्ध होने से प्रामाणिक है। परन्तु आपके मत में एकवाक्यता होने पर 'पश्य मृगो धावति' यह प्रयोग ही दुर्लभ हो जाता है। इसके स्थान पर 'धावन्तं मृगं पश्य' ऐसा प्रयोग प्राप्त होता है।

शङ्का—मृगो धावति यह एकवाक्य है तम् का अध्याहार होने से तं पश्य यह दूसरा वाक्य होने से उक्त शतृप्रत्यय का प्रसङ्ग नहीं होगा।

समाधान—ऐसा मानने पर भाष्योक्त एकवाक्यता का भङ्ग हो ही जायगा। मृगो धावति यह एक वाक्य और तं पश्य यह दूसरा वाक्य होगा। दो वाक्य होना इष्ट नहीं है।

उक्त वाक्य से उत्कट धावन क्रिया विशेष को दिखाना विवक्षित है। तम् के अध्याहार द्वारा दर्शन क्रिया में मृग का कर्मतया अन्वय होने से प्रतिपाद्य उत्कट धावन का दर्शन प्रतीत नहीं होगा। अध्याहार=पूर्व में अश्रुत आकाङ्क्षित पद का अनुसन्धान है। अत एव परस्पर अन्वय न होने से एकवाक्यता का भङ्ग हो जायगा। मूल में च हेतु के अर्थ में है।

इस प्रकार दूषणों की दृढता से भावना प्रकारक शाब्दबोध में प्रथमान्त पदजन्य उपस्थिति कारण है ऐसा नैयायिकोक्त कार्य-कारणभाव अनादरणीय है। इसके स्थान पर आख्यातार्थ प्रकारक शाब्दबोध के प्रति भावनात्वेन अवच्छिन्न जो विषयता उससे धातुजन्या उपस्थिति कारण है। ऐसा समझना चाहिये।

कृदन्तस्थल में भावना कृत्प्रत्ययार्थ में अप्रधान होती है। कृत्प्रत्ययार्थ प्रधान होता है। इसी प्रकार भावना का अन्यधात्वर्थभावना में भी अप्रधानता रहती है। इसलिये भावनाप्रकारक शाब्द बुद्धित्वावच्छिन्न के प्रति कृत्प्रत्ययजन्य उपस्थिति के समान ही धातुजन्य भावना विषय की उपस्थिति भी कारण है। पश्य मृगो धावति, पचति भवति इत्यादि प्रयोगों के आधार से धात्वर्थ भावना की उपस्थिति को भावना प्रकारकबोध में कारण माना गया है।

इत्थञ्च—आख्यातार्थ कर्तृप्रकारकबोध में धात्वर्थभावना की उपस्थिति, आख्यातार्थ कर्म प्रकारक बोध में धात्वर्थ फलोपस्थिति के हेतु होने पर, पचति इससे एकाश्रय में रहने वाली पाकानुकूल भावना एवं पच्यते इससे 'एकाश्रयनिष्ठा जो विक्लित्ति तदनुकूला-

१. लटः शतृशानचाविति—प्रथमान्त से अतिरिक्तार्थ के साथ सामानाधिकरण्य (दोनों पदों से एक ही व्यक्ति का बोध) रहने पर लट् के स्थान में शतृ तथा शानच् होता है जैसे, पचन्तं चैत्रं पश्य। व्यापाराश्रय और चैत्र दोनों एक ही है। कृदन्त में प्रत्ययार्थ की प्रधानता है धात्वर्थ व्यापार की नहीं।

भावना' इस प्रकार का बोध होता है। देवदत्त आदि पदों के प्रयोग करने पर आख्यातार्थ कर्ता के साथ प्रथमान्तार्थ देवदत्तादि का अभेद से अन्वय होता है।

'घटो नश्यति' इस स्थल में 'घटाभिन्न जो आश्रय उसमें वृत्ति जो नाशानुकूल व्यापार' इस प्रकार का बोध होता है। नाशानुकूल व्यापार से प्रतियोगित्वविशिष्ट=प्रतियोगिता का निरूपक जो नाश उसकी सामग्री का अवस्थान विवक्षित है। इसी लिये नाश सामग्री के रहने पर नश्यति उस सामग्री के नष्ट होने पर नष्टः, उस सामग्री के अनागत होने पर 'नङ्क्ष्यति' ऐसा प्रयोग होता है।

'देवदत्तो जानाति इच्छति' इत्यादि स्थल में देवदत्ताभिन्नाश्रय वृत्ति (रहने वाला) ज्ञान इच्छा आदि के अनुकूल वर्तमान व्यापार इस प्रकार का बोध होता है। वह ज्ञानानुकूल इच्छानुकूल व्यापार उक्त स्थल में ज्ञान और इच्छा का आश्रय आत्मा है उसमें जो आश्रयता है वही व्यापार है।

शङ्का—मृगपदोत्तर द्वितीया की प्रसक्ति होने पर 'लटः शतृशानचौ' इस सूत्र में लट् के अर्थ का अप्रथमान्तार्थ के साथ सामानाधिकरण्य विशेषण देने से मृग के द्वितीयान्त होने पर अप्रथमान्त के साथ सामानाधिकरण्य हो जायगा। अतः शतृप्रत्यय की आपत्ति होने से द्वितीया विभक्ति नहीं होगी यह शङ्का करने वाले का आशय है।

समाधान—शतृप्रत्यय की आपत्ति द्वितीया की उत्पत्ति का प्रतिबन्धक नहीं है किन्तु कर्म का अभिधान उसका प्रतिबन्धक है। यहाँ कर्म का अभिधान नहीं होने से द्वितीया की आपत्ति दुर्वार है। द्वितीया के होने से शतृप्रत्यय का होना अनिवार्य होने के कारण धावन्तं मृगं पश्य ऐसा प्रयोग प्राप्त होने से 'पश्य मृगो धावति' इस प्रयोग का उच्छेद ही हो जायगा।

शङ्का—पश्य मृगो धावति इस वाक्य में तम् का अध्याहार है। मृग दौड़ता है उसको देखो यह अर्थ है अतः मृग से द्वितीया की आपत्ति नहीं होगी।

समाधान—ऐसा मानने पर भाष्यसिद्ध एकवाक्यता नहीं होगी क्योंकि एक मुख्य विशेष्यक बोधजनकत्व रूप एकवाक्यता मानी गई है। अर्थात् एक वाक्य में एक ही मुख्य विशेष्य होता है। अध्याहार करने पर मृगो धावति इस वाक्य में मृग मुख्य विशेष्य है तं पश्य इस वाक्य में दृशिक्रिया का कर्म त्वम् मुख्य विशेष्य है। इस प्रकार एक मुख्य विशेष्य नहीं होने से दोनों वाक्यों में एकवाक्यता नहीं होती। एकवाक्यता भाष्यसिद्ध होने से उसका परित्याग नहीं किया जा सकता।

शङ्का—"अर्थैकत्वादेकं वाक्यं साकाङ्क्षञ्चेद् विभागे स्यात्" (जैमिनिसूत्र अ. २।१ पा. सू. ४६) विभाग=विच्छेद कर पढ़ने से आकाङ्क्षा युक्त तथा एकार्थ के ज्ञान का जनक एक वाक्य होता है।

यदि विभागे साकाङ्क्षम् इतना ही लक्षण माना जाय तो 'स्योनं ते सदनं कृणोमि घृतस्य धारया सुपेवं कल्पयामि, तस्मिन् सीदामृते प्रतितिष्ठ व्रीहीणां मेध सुमनस्यमानः' इस स्थल में तस्मिन् इत्यादिपद समूह को विभक्त करने पर प्रकृतार्थबोधक तत् शब्द के अर्थ निर्णयार्थ पूर्व पद समूह की आकाङ्क्षा होती है क्योंकि 'यत्तदोर्नित्यसम्बन्धः' इसके अनुसार साकाङ्क्ष है अतः एकवाक्यता प्राप्त होगी इसके वारण के लिये अर्थैकत्वात् विशेषण दिया। 'स्योनं ते सदनं कृणोमि' इत्यादि पूर्वपद समूह से सदन का करण

( स्थान का बनाना ) है। तस्मिन् इत्यादि उत्तरपद समूह से पुरोडाश का प्रतिष्ठापन ( बैठाना ) होता है। अतः दोनों वाक्य एकार्थ के लिये नहीं होने से एकवाक्यता नहीं हुई। एकवाक्यता लक्षण में एकार्थमात्र कहने से "भगो वां विभजतु पूषा वां विभजतु" ये दोनों मन्त्रों का द्रव्य विभाग रूप एकार्थ ही तात्पर्य विषय होने से एकवाक्यता हो जायगी अतः साकाङ्क्षमित्यादि कहा गया। दोनों पदसमूहों के विभाग करने पर किसी को किसी की आकाङ्क्षा नहीं होने से एकवाक्यता का प्रसङ्ग नहीं है। इस प्रकार 'पश्य मृगो धावति' यहाँ तम् इस पद के अध्याहार होने पर मृगो धावति तं पश्य इस प्रकार पद-समूह रूप वाक्य को विभक्त करने पर तम् इस पद से कम् इसकी आकाङ्क्षा तथा पूर्वोक्त धावनानुकूल कृतिमान् मृग का दर्शन क्रिया में अन्वय भी है। अतः एकवाक्यता हो जायगी। इसलिये न्याय मत में भी एकवाक्यताभङ्ग रूप दोष नहीं है। इस अरुचि से दूषणान्तर देते हैं:—

'पश्य मृगो धावति' इसका प्रयोग मृग के धावन को उत्कट दिखाने के उद्देश्य से किया गया है। यह उद्देश्य तभी सफल हो सकता है जब व्यापार की प्रधानता होने से उसीका दर्शन क्रिया में अन्वय माना जाय। अन्यथा प्रथमान्तार्थ मृग का दर्शन क्रिया में अन्वय होने से उसके दर्शन की प्रतीति होगी जो इष्ट नहीं है। इस प्रकार अध्याहार करने पर भी इष्टान्वय लाभ के लिये व्यापार की ही प्रधानता माननी चाहिये।

इत्थञ्च—पचतीत्यत्रैकाऽऽश्रयिका पाकाऽनुकूला भावना। पच्यते इत्यत्रैकाऽऽश्रयिका विक्लित्तिस्तदनुकूला भावनेति बोधः। देवदत्तादिपद-प्रयोगे त्वाख्यातार्थकर्त्रादिभिस्तदर्थस्याऽभेदाऽन्वयः। 'घटो नश्यति' इत्य-त्राऽपि घटाऽभिन्नाऽऽश्रयको नाशाऽनुकूलो व्यापार इति बोधः, स च व्यापारः प्रतियोगित्वविशिष्टनाशसामग्रीसमवधानम्। अत एव तस्यां सत्यां नश्यति, तदत्यये नष्टः, तद्भावित्वे नङ्क्ष्यतीति' प्रयोगः। देवदत्तो जानाति, इच्छतीत्यादौ च देवदत्ताभिन्नाऽऽश्रयको ज्ञानेच्छाद्यनुकूलो वर्त्तमानो व्यापार इति बोधः। स चान्तत आश्रयतैवेति रीत्योह्यम्॥ २॥

फलितमाह—*इत्थञ्चेति*। आख्यातार्थकर्तृप्रकारकबोधं प्रति धात्वर्थभाव-नोपस्थितेस्तादृशकर्मप्रकारकबोधे तादृशफलोपस्थितेर्हेतुत्वे चेत्यर्थः। भावनेत्यस्य वर्त-मानेत्यादिः। कर्माऽऽख्याते भावनाविशेष्यकबोधोपवर्णनं तु प्राचामनुरोधेन।

नव्यास्तु—कर्मकृतिफलविशेष्यबोधस्य दृष्टत्वेन कर्माख्यातेऽपि तद्विशेष्यकबोध-एव न्याय्यः। एवञ्च प्रत्ययार्थे साक्षात्प्रकृत्यर्थविशेष्यान्वयित्वमिति व्युत्पत्तिरपि न विरुध्यते। अत एव 'इष्यते पुत्रः' इत्यर्थे, पुत्रीयतीति न। भिन्नार्थकत्वात्। किन्तु पुत्रमिच्छतीत्यर्थं एवेति "सुप आत्मनः" ( पा० सू० ३।१।८ ) इति सूत्रे भाष्ये उक्तम्। अन्यथोभयत्राऽपि व्यापारविशेष्यकबोधेन भिन्नार्थकत्वकथनाऽसङ्गतिः। अस्मन्मते त्वेकत्र व्यापारो विशेष्यः, अन्यत्रेच्छारूपं फलमिति भिन्नार्थकत्वं स्पष्टमेव। क्यजन्तात्तु कर्मणि प्रत्ययो दुर्लभोऽकर्मत्वात्। उक्तञ्च कैयटेन—'यदा क्रियाफलस्य प्राधान्यं तदा वाक्यमेव—'इष्यते पुत्रः, न तु क्यजन्तस्तस्याकर्मकत्वात् कर्मणि

प्रत्ययाऽनुत्पादात्' इति। इत्थञ्च 'भावनाजन्यैकाश्रयिका वर्त्तमाना विक्लित्तिः' इति बोध इत्याहुः।

भावाऽऽख्याते तु भावनैव विशेष्या। तथैवाऽनुभवात्। तिङ्त्वनुवादक एव, किन्तु लट्त्वादिना कालार्थकः। संख्या तु न तदर्थः कर्त्रादिरूपाऽर्थोपस्थित्याऽऽत्मकहेत्वभावेनैव तदर्थसंख्याया अन्वयाऽसम्भवात्। किन्तु 'न केवला' इत्यादिन्यायेन साधुत्वार्थमेकवचनमेव। 'एकवचनमुत्सर्गतः करिष्यते' इति सिद्धान्तात्।

'काले युक्ताभिसरणे मुह्यन्ते मृगमोहिकाः।
उष्ट्रासिकाः समास्यन्ते शय्यन्ते हृतशायिकाः॥'

इत्यत्र बहुवचनं तु भाष्यकारप्रयोगादेवेति प्राञ्चः।

नव्यास्तु—एकवचनस्यौत्सर्गिकत्वं सत्येव गमके, यथाऽव्ययात् तदुत्पत्तौ 'अव्ययादाप्सुपः' इति। अत एव, "ङ्याप्" (पा० सू० ४।१।१) इति सूत्राऽभावे तिङन्तेभ्यस्तदुत्पत्तिमाशङ्क्य तिङा संख्याया उक्तत्वान्नेति परिहृतं भाष्ये। त्वदुक्तरीत्या तिङा कारकगतायास्तस्या उक्तत्वेऽपि प्रकृत्यर्थगतायास्तस्या अनुक्ततयौत्सर्गिकतया वैकवचनस्याशक्यवारणत्वेन तदसङ्गतिः स्पष्टैव।

'द्व्येकयोः–' (पा० सू० ७।४।२२) इत्यादेः 'लः कर्मणि' इत्यनेनैकवाक्यताऽपि लकाराः कर्मादौ भवन्ति तेषां स्थाने चैकत्वादौ तिबादयो भवन्तीत्याकारैव। नहि तत्र द्वितीया कर्मत्वाद्यस्ति, येन संख्यायाः कारकविशेषणता प्रतीयेत। आवृत्तौ च न मानम्। तस्मात् सर्वत्र संख्यायाः प्रकृत्यर्थ एवाऽन्वयः।

कस्यैकत्वादौ, इत्याकाङ्क्षायामुपस्थितत्वात् प्रकृत्यर्थाऽन्वयस्यैवोचितत्वात्। कर्मणीत्यादेरपि विधेयं प्रति विशेषणत्वेन, 'गुणानां च परार्थत्वात्' इतिन्यायेन संख्यायामसम्बन्धात् कर्मणीत्यादेः कस्य कर्मणीत्याऽऽकाङ्क्षासत्त्वेन तत्र धात्वर्थान्वयस्य क्लृप्तत्वात्। क्रियायामप्येकत्वमस्त्यतः–'एका क्रिया' इति रूपप्सूत्रभाष्यात्। एवञ्च तस्य प्रकृत्यर्थेऽन्वयादेकवचनम्। द्वित्वादिकं तु स्वोत्तरतिङ्वाच्यकारकगतं तत्रारोप्य कर्तृकर्मकेषु तिङ्क्षु द्विवचनादिसिद्धिः। अत एव न साधने द्वित्वादिसंशयः। क्रियागत संख्यारोपस्य साधनज्ञाननिमित्तत्वात् अनेकः पचतीत्याद्यनुरोधेन साधनेऽपि संख्यारोपस्य तवाऽपि वाच्यत्वात् तस्याऽप्यन्वयः प्रकृत्यर्थ एव। प्रकृते हृतशायिकाः शय्यन्ते इत्यादौ हृतशयनसदृशानीत्यर्थे उपमाने बहुत्वोपपादनसामर्थ्येनोपमेये तिङन्तार्थक्रियारूपे उपमानगतबहुत्वारोपेण बहुवचनम्। तिङ्वाच्यकारकगताया एवारोपो, नाऽन्यगताया इत्यत्र धात्वर्थशक्तिस्वभाव एव बीजम्। अत एव भावे द्विवचनादि। तदुक्तम्—

'एकत्वेऽपि क्रियाऽऽख्याते साधनाश्रयसंख्यया।
भिद्यते न तु लिङ्गाख्यो भेदस्तत्र तदाश्रयः॥' इति॥

एवञ्चाख्यातार्थप्रकारकबोधे धातुजन्योपस्थितिः कारणमित्येक एव कार्यकारणभाव इति लाघवम्। 'प्रत्ययानाम्' इति व्युत्पत्तिपरिपालनं नेत्याहुः।

तदपरे न क्षमन्ते। औत्सर्गिकैकवचनस्य समयपरिपालनार्थकतया तत्र गमकाऽऽकाङ्क्षाया अभावेन 'सत्येव गमके' इत्युक्तिर्व्यर्था। यदपि गमकतया ङ्याप्सूत्रभाष्योपन्यसनं, तत् तथैव। यतस्तदेव भाष्यं क्रियायां संख्यासामान्याभावबोधकम्। तथाहि—ङ्याप्सूत्राऽभावे तिङन्तात् सुबुत्पत्तिशङ्का प्रत्ययार्थकारकसंख्यामादाय, प्रकृत्यर्थगतसंख्यामादाय वा वक्तव्या। तत्र प्रकृत्यर्थस्याऽसत्त्वरूपतया संख्यान्वयायोगात् कारकगतसंख्यामादायैव प्रसक्ता, सा तिङोक्तत्वादित्यनेन निराक्रियते। समयपरिपालनस्य तिङैव कृतत्वात् तदप्राप्त्यैव यन्निराकरणस्याऽप्रसक्तेः। 'सुप्तिङन्तं पदम्' 'तिङतिङः' इत्यादिसूत्रस्वारस्यादुक्तार्थज्ञापनापेक्षया तिङन्तादौत्सर्गिकैकवचनाभावस्यैव तेन ज्ञापयितुमुचितत्वाच्च।

'एका च क्रिया' इति भाष्यमपि न क्रियायामेकत्वं बोधयति, किन्तु संख्यासामान्याऽभावमेव। कथमन्यथा साधारणैकवचनेनैवोपपत्तौ वचनारम्भसार्थक्यम्। किञ्चोपमाने बहुत्वोपपादनसामर्थ्येनेति वदता कारके द्वित्वाद्युपपादनसामर्थ्येनेत्यऽप्युक्तप्रायम्। एवञ्च हतशायिका इत्यत्रोपमाने बहुत्वोपपादकबहुवचनवत् प्रकृते कारके कस्यचिद् द्वित्वाद्युपपादनस्याभावात् तदारोपासम्भवः।

नच चैत्रमैत्राविति द्विवचनादितस्तदवगतिः। चैत्रो मैत्रश्च पचत इत्यादौ तदभावात् कारकान्वयात्प्रागेव चैत्राद्यन्वितायास्तस्याः कारकानन्वितत्वाच्च। भावाख्याते स्वोत्तरतिङ्वाच्यकारकाऽप्रसिद्धया द्विवचनासम्भवाच्च। 'कस्यैकत्वे' इत्याकाङ्क्षाया योग्यजिज्ञास्यसम्बन्धिन्या एवौचित्यात्। क्रियाया असत्त्वेन परिच्छेदकाकाङ्क्षाया एवासम्भवेन तत्र तदन्वयोक्तेः पराहतत्वाच्च। पचतीत्यादिजन्यबोधानन्तरं जायमानस्य सर्वसिद्धैकत्वादिवैशिष्ट्येन जिज्ञास्यकारकबोधक 'कः कौ' इत्यादिप्रश्नस्याऽनुपपत्त्यासिद्धायाः कारकसंख्यान्वयप्रतीतेरनुपपत्तेरेव कर्मणीत्यादिपदानुवृत्तौ मानत्वात्। उक्तवाक्यपदीयस्याप्याख्यातार्थक्रियाया एकत्वेऽपि संख्यासामान्याभाववत्त्वेऽपि क्वचिन् कर्तृकर्मादिबाहुल्येन सा नानैव प्रतीयते इत्यर्थान्न तद्विरोधोऽपि। ततः शब्दमर्यादया धात्वर्थे तिङर्थसङ्ख्याऽन्वय इत्यर्थस्यालाभाच्च। 'गुणानां च परार्थत्वाद्' (जै० ३।१।१९) इति तु प्रधानस्यान्वययोग्यत्वे सत्येव। अत एव कैयटादिभिस्तिङर्थसंख्याया, कारक एवाऽन्वयः स्वीकृतः। एवञ्च भाष्यकारप्रयोगादन्यत्र भावाख्याते द्विवचनाद्यसाध्वेवेत्यधिकं स्वयमूह्यम्।

*आख्यातार्थकर्त्रादिभिरिति*। 'समानविभक्तिकयोरेवाऽभेदान्वयः' इति नियमस्य प्रागेव दूषितत्वादिति भावः। अकर्मकस्थलेऽपि फलव्यापारोभयार्थकत्वं धातोरन्यैरपि स्वीकार्य्यमिति सूचयञ्छाब्दबोधप्रकारमाह—*घटो नश्यतीति*। तद्व्यापाराऽऽकाङ्क्षायामाह—*प्र चेति*। *प्रतियोगित्वेति*। प्रतियोगित्ववैशिष्ट्यन्तु निरूपकतासम्बन्धेन बोध्यम्। तत्समवधानमेव तदनुकूलो व्यापार इत्यर्थः।

*अत एवेति*। यतो नाशमात्रं नार्थः, किन्तु प्रतियोगित्वविशिष्टनाशफलकतत्तत्सामग्रीरूपो व्यापारोऽप्यत एवेत्यर्थः। फलव्यापारयोरैकाधिकरण्याच्च न

सकर्मत्वम् । एतदर्थमेव प्रतियोगित्वविशिष्टेत्युपात्तम् । यन्मते नाशमात्रं न धातोरर्थः, तन्मते नाशोत्पत्त्यनन्तरं नाशस्य सदैव सत्त्वान्नश्यतीति प्रयोगापत्तिस्तस्य ध्वंसाऽप्रतियोगित्वाच्च नष्ट इति प्रयोगाऽनुपपत्तिरिति सूचनाय, तस्यां सत्यामित्यादिना त्रैकालिकप्रयोगप्रदर्शनम् । नैयायिकमतं तु लुङर्थनिरूपणे वक्ष्यते ।

जानात्यादिसविषयार्थकानां ज्ञानाद्यतिरिक्तव्यापाराद्यर्थकत्वानभ्युपगमे सकर्मत्वानुपपत्तिं सूचयन् स्वमते शाब्दबोधं दर्शयति—*देवदत्तो जानातीत्यादि* । आदिपदग्राह्यार्थमाह—*इच्छादीति* । क्वचिज्जानातीत्यादावित्येव पाठः । *स चेति* । ज्ञानानुकूलो व्यापारश्चेत्यर्थः । तदन्वेषणायात्ममनःसंयोगस्यैव सुलभत्वादाह—*अन्तत इति* । तदनुपस्थितावित्यर्थः । *आश्रयतैवेति* । तस्या अनवयवत्वेऽपि साऽवयवत्वारोपाद्व्यापारत्वं निर्वाह्यमिति भावः ॥ २ ॥

प्राचीन वैयाकरणों के मत में पचति तथा पच्यते दोनों स्थलों में भावना विशेष्यक ही शाब्दबोध होता है। नवीन मत में 'पचति' इत्यादि कर्तृ प्रत्ययस्थल में भावना की पच्यते इत्यादि कर्म प्रत्यय स्थल में फल की विशेष्यता मानी जाती है। यह विशेष है। पचति से प्राचीन मत में शाब्दबोध का स्वरूप यह है—तिप् का एकत्व संख्या वर्तमान काल तथा ( व्यापाराश्रय ) कर्ता-अर्थ है एक कर्तृ ( आश्रय ) निष्ठ वर्तमानकालिक विक्लित्त्यनुकूल व्यापार। देवदत्तेन तण्डुलः पच्यते इस कर्म प्रत्यय स्थल में एकत्व विशिष्ट जो तण्डुल तन्निष्ठ जो विक्लत्ति ( अवयव शैथिल्य ) तदनुकूल देवदत्तादि आश्रयनिष्ठ वर्तमान कालिक व्यापार।

इष्यते पुत्रः इष्टः पुत्रः इस अर्थ में "सुपः आत्मनः क्यच्" ( ३।१।८ ) इस सूत्र से क्यच् प्रत्यय नहीं होता है। क्यों कि पुत्रीयति से भिन्न प्रकार का बोध उक्त दोनों पदों से होता है। विवरण और विव्रियमाण को समान अर्थ वाला होना चाहिये[1]। विव्रियमाण पुत्रीयति और विवरण इष्यते तथा इष्टः पुत्रः है। इसीलिये 'विवरण-विव्रियमाणयोः समानार्थकत्वम्' ऐसी अभियुक्तोक्ति है। पूर्वोक्त इष्यते एवं इष्टः इष्यते अर्थों में अच् प्रत्यय की अप्रवृत्ति बोधन से यह स्पष्ट व्यक्त होता है कि पुत्रीयति के समानार्थक इष्टः इष्यते नहीं है। अर्थात् कर्मप्रत्ययान्त स्थल में कर्तृप्रत्ययान्तस्थल की अपेक्षा भिन्न प्रकार का बोध है। अतः दोनों स्थलों में समान भावना विशेष्यक बोध मानना ठीक नहीं है किन्तु कर्तृप्रत्ययस्थल में भावना तथा कर्मप्रत्ययस्थल में फल को विशेष्य मानना उचित है।

क्यजन्त से कर्म में प्रत्यय नहीं होता। क्योंकि पुत्र रूप कर्म धात्वर्थ में अन्तर्भूत होने से धातु अकर्मक है। यह 'सुप आत्मनः' इस सूत्र के कैयट में स्पष्ट है।

नव्य प्राचीन दोनों मतों में भावाख्यात स्थल में भावना का ही प्राधान्य है। वहां आख्यातार्थ संख्या नहीं है। संख्या का अन्वय कर्ता या कर्म में देखा गया है। उक्त स्थल में आख्यातार्थ कर्ता या कर्म नहीं है किन्तु भाव अर्थात् व्यापार अर्थ है। कर्ता कर्म की

---

१. इस आशय का 'सुप् आत्मनः क्यच्' ( ३।१।८ ) इस सूत्र का भाष्य इस प्रकार है—अथेह क्यचा भवितव्यम् इष्टः पुत्रः इष्यते पुत्रः। इह भवन्तस्तावदाहुः न भवितव्यम् इति। किं कारणम्। यच्चेहार्थो वाक्येन गम्यते इष्टः पुत्रः इष्यते पुत्रः इति नासौ जातुचित् प्रत्ययान्तेन गम्यते।

अनुपस्थिति से उसमें संख्यान्वय नहीं हो सकेगा। अतः संख्या यहाँ अर्थ नहीं है। केवल प्रकृति पर प्रत्यय का प्रयोग नहीं होने के कारण औत्सर्गिक एकवचन होता है।

शङ्का—'काले युक्ताभिसरणे मुह्यन्ते मृगमोहिकाः।
उष्ट्रासिकाः समास्यन्ते शय्यन्ते हतशायिकाः॥'

यहाँ भावप्रत्ययान्त 'मृगमोहिकाः, उष्ट्रासिकाः और हतशायिकाः' इन पदों से बहुवचन विभक्ति की उत्पत्ति के देखने से उक्त कथन असङ्गत है।

समाधान—भाष्योक्त वचन के कारण वहाँ बहुवचन विभक्ति की साधुता होने पर भी अत्यन्त भावप्रत्ययान्त में बहुवचन तथा द्विवचन विभक्ति का प्रयोग असङ्गत है।

किसी का कहना है कि प्रातिपदिक के अधिकार न मानने पर तिङन्त से भी सुप् विभक्ति की प्राप्ति हो जायगी। अतः उक्त अधिकार किया गया। इसके उत्तर में महाभाष्यकार ने तिङ् से संख्या उक्त हो जाने से सुप् विभक्ति नहीं हो सकेगी। अतः दोष नहीं है। आपके सिद्धान्त के अनुसार कारकगत संख्या का तिङ् से उक्त होने पर भी प्रकृतिभूत धातु के अर्थ की संख्या का अभिधान न होने से अनुक्त संख्या में विभक्ति प्राप्त है। एवं औत्सर्गिक एकवचन भी प्राप्त है ऐसी दशा में संख्या के तिङ् से उक्त होने से विभक्ति नहीं होगी यह भाष्योक्ति असङ्गत हो जायगी। अतः संख्या का प्रकृत्यर्थ में अन्वय सर्वत्र होता है। ऐसा मानने पर पचति आदि तिङन्त से आने वाली विभक्ति की प्रकृति पचति आदि तिङन्त है, धातु नहीं है। अतः तिङ् से संख्या का अभिधान हो जाने से पुनः उस संख्या में विभक्ति नहीं हो सकती। धात्वर्थ संख्या प्रकृत्यर्थ नहीं है। 'रूपम्' सूत्र के भाष्य में "एका क्रिया" इस वचन से क्रिया में एकत्व संख्या की प्रतीति इष्ट होने से धात्वर्थ क्रिया गत संख्या का बोधक विभक्ति को मानते हैं। द्विवचन और बहुवचन विभक्ति की उत्पत्ति के लिये तिङ् वाच्य कारकगत संख्या का क्रिया में आरोप है। अतएव द्विवचनान्त एवं बहुवचनान्त पदों के होने पर कारक की संख्या में सन्देह नहीं होता। क्योंकि कारकगत संख्या के ज्ञान होने पर ही उसकी संख्या का क्रिया में आरोप होता है।

'हतशायिकाः शय्यन्ते' इत्यादि भाव प्रत्ययान्त स्थल में हतशयनसदृश शयन अर्थ की विवक्षा होने से उपमानगत बहुत्व का उपमेय तिङन्तार्थ में आरोपकर बहुवचन विभक्ति होने से असङ्गति नहीं है।

'एकत्वेऽपि क्रियाख्याते साधनाश्रयसंख्यया।
भिद्यते नतु [1]लिङ्गाख्योभेदस्तत्र तदाश्रयः॥'

ऐसा लिखा है। आख्यात स्थल में क्रिया के एक होने पर भी साधन (कारक) गत संख्या से क्रिया में भेद होता है किन्तु क्रियाश्रय लिङ्ग नहीं होता। यह कारिका का भाव है। इस प्रकार आख्यातार्थ संख्या काल और आश्रय सभी का धात्वर्थ व्यापार में अन्वय होने से आख्यातार्थ प्रकारक शाब्दबोध में धातुजन्योपस्थिति कारण है। एवं भूत एक ही कार्य-कारणभाव मानना पड़ेगा अतः लाघव भी इस पक्ष में है। संख्या का अत्यन्त अन्वय मानने पर संख्या के बोध में धातुजन्य उपस्थिति के कारण न होने से पूर्वोक्त कार्यकारणभाव का व्यभिचार होगा। इसके परिहार के लिये दूसरा कार्यकारणभाव मानना होगा। अतः गौरव स्पष्ट है।

---

१. लिङ्गसंख्यानन्वयित्वमसत्त्वभूतत्वम्।

अन्य लोगों का मत इस प्रकार है—ङ्याप् सूत्र के भाष्य में प्रातिपदिकाधिकाराभाव में तिङन्त से सुप् की उत्पत्ति का सन्देह प्रत्ययार्थ संख्या को दृष्टि में रखकर किया गया है अथवा धात्वर्थ गत संख्या का इसका निर्णय करना आवश्यक है जहाँ तक व्यापार का प्रश्न है। उसमें संख्या का अन्वय नहीं हो सकता। क्योंकि "असत्त्वभूतो भावश्च" इत्यादि हरिकारिका से लिङ्ग संख्या में अनन्वयी व्यापार का बोधन होता है। अतः धात्वर्थ व्यापार में संख्या का अन्वय नहीं होगा। प्रत्ययार्थ कारक की संख्या तिप् से उक्त होने से उसमें सुप् की उत्पत्ति नहीं होगी। अतः प्रातिपदिकाधिकार अनावश्यक है। 'न केवला प्रकृतिः प्रयोक्तव्या' इत्यादि नियम का पालन तिङ् की उत्पत्तिमात्र से हो जाता है। इसलिये साधुत्वमात्रार्थक औत्सर्गिक एक वचन भी नहीं होगा।

"एका क्रिया" इस भाष्य वचन का संख्या सामान्याभाव रूप एकत्व बोधन में तात्पर्य होने से एकत्व संख्या में तात्पर्य नहीं है। अतः विरोध नहीं हुआ।

'हतशायिका' यहाँ 'हतशयन सदृशानि' ऐसा अर्थ होता है। उपमान हतशयन में बहुत्वोपपादन सामर्थ्य होने से उसके बहुत्व का उपमेयभूत क्रिया में आरोप कर बहुवचन विभक्ति का प्रयोग उचित है। इसी प्रकार अन्यत्र भाव प्रत्ययान्तस्थल में द्वित्वाद्युपपादक किसी के न रहने से क्रिया में द्वित्वादि के अभाव से द्विवचनादि विभक्ति नहीं होती। कर्तृकर्मादि स्थल में प्रत्यय से उपस्थित कर्ता कर्म का द्वित्व बहुत्व ही धातूत्तर द्विवचन तथा बहुवचन विभक्तियों का नियामक होता है। भावप्रत्यय स्थल में स्वोत्तर तिङ् वाच्य कारक कोई साधन नहीं है। अतः औत्सर्गिक[1] एकवचन ही होता है। भाष्यानुरोध से 'हतशायिकाः' इत्यादि प्रयोग में बहुत्व का आरोप मान कर बहुवचनान्त की साधुता होती है। इस प्रकार के प्रयोग अन्यत्र साधु नहीं है।

वस्तुतः क्रिया के असत्त्वभूत ( लिङ्ग संख्यानन्वयी ) होने से उसको परिच्छेदकरूप संख्या की आकाङ्क्षा न होने से क्रिया में संख्यान्वय असङ्गत है। किस की एकता, इस प्रकार की योग्य जिज्ञास्य सम्बन्धिनी आकाङ्क्षा ही उचित है। पचति इत्यादि पद से बोध होने पर कः कौ इत्यादि से संख्या विषयक जिज्ञासा नहीं होने से कारक में संख्यान्वय मानना चाहिये। भाव प्रत्ययान्त स्थल में कारक बोधक पद के अभाव से संख्या का अन्वय नहीं हो सकता।

पूर्वोक्त हरिकारिका का भी इसी में तात्पर्य है। धात्वर्थ क्रिया में संख्या सामान्याभाव द्वारा एकत्व रहने पर भी संख्या रूप एकत्व नहीं है। कहीं कर्ता या कर्म की बहुलता के कारण क्रिया में विभिन्न संख्या की प्रतीति होती है। इस प्रकार भाष्यकारादि के प्रयोग से अतिरिक्त भावप्रत्ययान्त स्थल में द्विवचन और बहुवचन का प्रयोग असाधु है।

---

१. 'द्व्येकयोर्द्विवचनैकवचने' ( १।४।२१ ) इस सूत्र में 'एकवचनम् इसके बाद द्वयोर्द्विवचनम्' ऐसा योग विभाग भाष्यकार ने किया है। किसी संख्या विशेष में एकवचन विभक्ति का विधान न होने के कारण एकत्व संख्या के न रहने पर भी एकवचन विभक्ति की उत्पत्ति उक्त सूत्र से हो जाती है। द्वित्व संख्या की विवक्षा में द्विवचन बहुत्व संख्या की विवक्षा में बहुवचन विभक्ति बोधक होनेसे वहाँ एकवचन नहीं होगा। यही औत्सर्गिक एकवचन का अभिप्राय है। इसी तात्पर्य से 'एकवचनमुत्सर्गतः करिष्यते' यह भाष्यकार का वचन है।

अकर्मक धातु का फल और व्यापार दोनों अर्थ है। इसके स्फुटीकरण के लिये घटो नश्यति का शाब्दबोध प्रकार मूल में दिखाया गया है। नश् धातु का नाशानुकूल व्यापार अर्थ है। नाश की सामग्री का रहना ही व्यापार है। घट में आघात आदि ही नाश सामग्री है। प्रतियोगितासम्बन्ध से नाश घट में है और उसी में आघात भी है। अतः फल और व्यापार एक ही घट में रहने के कारण नश् धातु अकर्मक है। निरूपकता सम्बन्ध से प्रतियोगिता विशिष्ट नाश ऐसा बोध नश्यति से होता है। प्रतियोगिता स्वरूप सम्बन्ध से घट आदि प्रतियोगी में रहती है। प्रतियोगिता नाश से निरूपित है। अतः प्रतियोगिता का निरूपक नाश के होने से निरूपकता सम्बन्ध से प्रतियोगिता नाश में है।

नाश सामग्री समवधान रूप व्यापार के भावी होने पर भविष्यत् काल का उसके तादृश व्यापार के अतीत होने पर भूतकाल का प्रयोग उसी प्रकार वर्तमान में नश्यति का प्रयोग होता है।

यदि व्यापार धात्वर्थ, नश्यति इस स्थल में नहीं मानते तो काल के भेद से लकार भेद द्वारा प्रयोग भेद नहीं होता। नाश का दूसरा नाम ध्वंस है। नित्य होने से यह अविनाशी है। अतः नाश में कालान्वय न होने से वर्तमान का ही प्रयोग होगा। व्यापार को धात्वर्थ मानने पर उसके अतीत भविष्यत् तथा वर्तमान के भेद से लकार का भेद उत्पन्न होता है। इसी प्रकार "जानाति", "इच्छति" आदि स्थल में ज्ञान तथा इच्छा के अनुकूल व्यापार क्रम से अर्थ है। आत्मा का मन से संयोग होने पर ही किसी विषय का ज्ञान या इच्छा होती है।

अतः यहाँ मनःसंयोग को व्यापार मानते हैं। जिस स्थल में मनःसंयोग का अनुभव नहीं होता वहाँ आत्मा ज्ञानाश्रय होता है। अतः आश्रयता को तदनुकूल व्यापार मानते हैं।

यद्यपि आश्रयता निरवयव होने से अवयव समूहात्मकक्रिया (व्यापार) नहीं हो सकती तथापि अवयव के आरोप से उसका निर्वाह करना चाहिये ॥ २ ॥

नन्वाख्यातस्य कर्तृकर्मशक्तत्वे, पचतीत्यत्रोभयबोधापत्तिः। कर्तृमात्र-बोधवत् कर्ममात्रस्यापि बोधापत्तिरित्यतस्तात्पर्यग्राहकमाह—

फलव्यापारयोस्तत्र फले तङ्यक्चिणादयः।
व्यापारे शप्श्नमाद्यास्तु द्योतयन्त्याश्रयान्वयम् ॥ ३ ॥

तङादय फले आश्रयाऽन्वयं द्योतयन्ति। फलाऽन्वय्याश्रयस्य कर्मत्वात्, तद्द्योतकाः-कर्मद्योतकाः। व्यापाराऽन्वय्याश्रयस्य कर्तृत्वात्, तद्द्योतकाः-कर्तृद्योतका इति समुदायार्थः। द्योतयन्ति-तात्पर्यं ग्राहयन्ति ॥

नन्वेवं 'क्रमादमुं नारद इत्यबोधि सः' इत्यादौ, 'पच्यते ओदनः स्वयमेव' इत्यादौ च व्यभिचारः। कर्मणः कर्तृत्वविवक्षायां कर्त्तरि लकारे सति, "कर्मवत् कर्मणा तुल्यक्रियः" (पा० सू० ३।१।८७) इत्यतिदेशेन यगात्मने-पदचिण्चिण्वदिटामतिदेशाद्यगादिसत्त्वेऽपि कर्तुरेव बोधाद् व्यापारे एवाऽऽश्रयान्वयाच्च। अबोधीत्यत्रापि बुध्यतेः कर्त्तरि लुङ्। तस्य "दीपजन"

( पा० सू० ६।४।१०४ ) इति चिण्। "चिणो लुक्" ( पा० सू० ६।१०४ ) इति तस्य लुग् इति साधनादित्याशङ्कायामाह—

उपोद्घातसङ्गत्या शबादीनां द्योतकतां निरूपयितुमाह—*नन्विति*। ननु 'सकृदुच्चरितः शब्दः सकृदर्थं गमयति' इति व्युत्पत्तेर्नैकदाऽर्थद्वयबोधोऽत आह—*कर्तृमात्रबोधवदिति*। मात्रशब्दोऽवधारणे। *तात्पर्येति*। तत्तदर्थप्रतीतीच्छयोच्चरितत्वरूपतात्पर्यग्रहजनकमित्यर्थः। अत एव "कर्तरि शप्" इत्यादौ कर्त्रादिग्रहणं सार्थकम्। अन्यथा "लः कर्मणि" ( पा० सू० १।४।६९ ) इत्येतद्विहितलादेशैरेव कर्त्रादिबोधेनान्यलभ्यत्वात्तद्वैयर्थ्यं स्पष्टमेवेति भावः। मूले *फलव्यापारयोस्तत्रेति*। तत्रेति धातूपस्थाप्ययोरित्यर्थः। 'फलव्यापारयोः' इति निर्द्धारणे सप्तमीत्याशयेन व्याचष्टे सारे—*फल इति*॥ ३॥

अर्थ—कर्ता तथा कर्म इन दोनों का वाचक आख्यात है। ऐसा मानने पर पचति से कर्ता कर्म दोनों का बोध प्राप्त होगा। एवं उक्त प्रयोग में कर्तृमात्र बोध के समान कर्ममात्र के बोध की भी आपत्ति होगी। इस लिये तात्पर्य[1] ग्राहक का निर्देश करते हैं—

'फलव्यापारयोस्तत्र' इत्यादि से। धात्वर्थ फल व्यापार घटक में आश्रय के अन्वय का द्योतक तङ् यक् चिण् आदि हैं। तथा व्यापार में आश्रयान्वय का द्योतक शप् श्नम् प्रभृति होते हैं॥ ३॥

तङ् आदि फल ये आश्रयान्वय के द्योतक हैं। फलान्वित आश्रय ही कर्म होता है। ('तद् द्योतकाः' अर्थात् कर्म का द्योतक ) व्यापारान्वित आश्रय कर्ता होता है। ( तद् द्योतकाः = कर्ता के द्योतक ) यह ( समुदायार्थ श्लोकार्थ है ) द्योतक पद तात्पर्यग्राहक के अभिप्राय से प्रयुक्त है।

इस प्रकार तङादि के तात्पर्य ग्राहक मानने पर "क्रमादमुं नारद इत्यबोधि सः" मा० १ इत्यादि श्लोक में एवं 'पच्यते ओदनः स्वयमेव' इत्यादि कर्म कर्ता में उक्त तात्पर्यग्राहक का व्यभिचार है। कर्म की कर्तृत्व रूप से विवक्षा में कर्ता में लकार का विधान करने पर "कर्मवत् कर्मणा तुल्यक्रियः" ( ३।१।८७ ) इस अतिदेशसूत्र[2] से यक् आत्मनेपद चिण् और चिरावदिट् के अतिदेश से यक् आदि के रहने पर भी कर्ता का ही बोध देखने एवं व्यापार में ही आश्रयान्वय होने के कारण उक्त तात्पर्यग्राहक व्यभिचारी है। 'अबोधि' इसमें भी बुध् धातु से कर्ता में विहित लुङ् के स्थान में "दीपजन" ( ३।१।६१ ) इत्यादि सूत्र से चिण् होने पर "चिणो लुक्" ( ६।४।१०४ ) इस सूत्र से

---

१. उन उन अर्थों की प्रतीति निमित्तीभूत इच्छा से उच्चरित को तात्पर्यग्राहक कहते हैं।

२. "संज्ञा च परिभाषा च विधिर्नियम एव च।
अतिदेशोऽधिकारश्च षड्विधं सूत्रलक्षणम्॥"

इसके अनुसार छह प्रकार के सूत्रों में एक अतिदेश सूत्र भी है। साक्षात् सादृश्यग्राहक सूत्र अतिदेश पद से कहा जाता है। साक्षात् सादृश्यग्राहकत्वमतिदेशत्वम्। नागेशोक्ति है

चिण् के लुक् होने से उक्त प्रयोग की सिद्धि होती है। इस प्रकार व्यभिचार की आशङ्का है।

उत्तर—"उत्सर्गोऽयं कर्मकर्तृ" इत्यादि कारिका लिखी गई है।

**उत्सर्गोऽयं कर्मकर्तृविषयादौ विपर्ययात्।**
**तस्माद् यथोचितं ज्ञेयं द्योतकत्वं यथागमम् ॥ ४ ॥**

***कर्मकर्तृविषयादौ*—पच्यते ओदनः स्वयमेवेत्यादौ। अत्र ह्येकोदनाभिन्नाश्रयकः पाकानुकूलो व्यापार इति बोधः।**

**क्रमादिति आदिपदग्राह्यम्। अत्र सामान्यविशेषज्ञानपूर्वक एकनारदविषयकज्ञानाऽनुकूलः कृष्णाभिन्नश्रयकोऽतीतो व्यापार इति बोधः॥**

***यथोचितमिति*—सकर्मकधातुसमभिव्याहृतभावसाधारणविधिविधेयचिण्यगादि कर्मद्योतकमिति भावः॥ ४ ॥**

*व्यभिचार इति*। यगादीनामन्वये, शबादीनां व्यतिरेके चेत्यर्थः। यगादिसत्त्वेऽपि फले आश्रयाऽन्वयाऽबोधाच्छवाद्यभावेऽपि व्यापारे तिङर्थं आश्रयान्वयात् तदेवोपपादयति—*कर्मणः कर्तृत्वविवक्षायामित्यादि*। सौकर्य्यातिशयद्योतनार्था च तद्विवक्षा तण्डुलादिगताग्निसंयोगादिरूपव्यापारस्यैव फलजनकतया धात्वर्थत्वविवक्षायामित्यर्थः।

वस्तुतस्तु फलस्यापि जनकव्यापारगतपौर्वापर्य्यारोपेण व्यापारत्वेन भानादिति पूर्वमुक्तत्वात्तण्डुलगतफलस्यैव व्यापारत्वेन विवक्षायामित्यर्थः। *साधनादिति*। तथा च व्यभिचारान्न तङादीनां द्योतकतेति भावः।

*क्रमादित्यादि*। कर्मकर्तृविषयादाविति मूलस्थादिपदेनेत्यर्थः। सामान्येत्यादि—क्रमादित्यस्य विवरणम्। सविषयधात्वर्थनिरूपितकर्मत्वस्य विषयत्वे पर्य्यवसानमित्यभिप्रेत्याह—*विषयकेति*। सकर्मकधातुसमभिव्याहृतयगादीनां कर्मद्योतकत्वादाह—*सकर्मकेति*। पच्यते तण्डुलः स्वयमेवेत्यादौ। यगादि तु न तथा, किन्त्वातिदेशिकम्। "कर्मवत् कर्मणा" (पा० सू० ३।१।८७) इति विहितातिदेशे कार्यातिदेशत्वस्याऽऽकरे सिद्धान्तितत्वान्न तत्र व्यभिचार इति भावः। *भावसाधारणेति*। भावकर्मणोः "सार्वधातुके यक्" इत्यादिविहितेत्यर्थः। तेन "दीपजन" (पा० सू० ३।१।६१) इत्यादिविहितव्यावृत्तिः॥ ४ ॥

**कर्म की कर्तृत्व विवक्षा होने पर पच्यते ओदनः स्वयमेव इत्यादि स्थलों में तात्पर्यग्राहक पूर्वोक्त तङादि का विपर्यय=वैपरीत्य देखने से उसमें तात्पर्यग्राहकता उत्सर्ग=प्राथमिक अर्थात् असार्वत्रिक है। अतः शास्त्रानुसार द्योतकता=तात्पर्यग्राहकता समझनी चाहिये।**

**कर्मकर्तृ विषय में 'पच्यते ओदनः स्वयमेव' इत्यादि स्थल में एकत्व संख्या विशिष्ट ओदन से अभिन्न आश्रय निष्ठ विक्लित्त्यनुकूल व्यापार ऐसा बोध होता है।**

कर्मकर्तृ विषयादि में आदि पद से "क्रमादमुं नारदः" इस पद्य का[1] ग्रहण है। इससे सामान्य विशेष ज्ञान के साथ एक नारद सम्बन्धि ज्ञानानुकूल, कृष्णाभिन्न जो आश्रय तन्निष्ठ अतीत व्यापार ऐसा बोध होता है।

यथोचित से सकर्मकधातु से समभिव्याहृतभावसाधारण = "भावकर्मणोः" (१।३।१३) 'सार्वधातुके यक्' (३।१।६७) इत्यादि सूत्रों से विहित तङ् यक् आदि ही कर्म के द्योतक हैं।

हिन्दीभाष्य-अबोधि यह प्रयोग बुध् धातु से कर्ता में लुङ् लकार के प्रथमपुरुष के एकवचन में है। यहाँ कर्ता में लकार होने से व्यापार में आश्रय का अन्वय है। किन्तु चिण् के रहने से फल में अश्रय का अन्वय होना चाहिये। यहाँ ऐसा न होने से उक्त नियम का व्यभिचार है। इसी प्रकार 'देवदत्तः ओदनं पचति' यहाँ सौकर्य = सौलभ्य की विवक्षा से कर्म ओदन को कर्तृ रूप से कथन करने की दशा में कर्म कर्ता हो जाता है। इसीलिये इस को कर्म कर्ता कहते हैं। कर्म के कर्तृभाव प्राप्त होने पर "कर्मवत् कर्मणा" (३।१।८७) इत्यादि सूत्र से कर्मवद्भाव अर्थात् कर्म में लकार होने पर जो शास्त्र या कार्य होता है वह यहाँ भी होता है। अतः कर्म प्रत्यय स्थल के तुल्य ही तङ् यक् चिण् आदि के होने से कर्म प्रत्यय स्थल के समान कर्तृ प्रत्यय में भी उक्त रूप की सिद्धि होती है। किन्तु शाब्दबोध कर्म प्रत्यय स्थल के समान नहीं होता। तङ् यक् आदि के रहने पर भी आश्रय का व्यापार में अन्वय होने से फल में आश्रयान्वय का व्यभिचार यहाँ भी स्पष्ट है। इसी विषय को "उत्सर्गोऽयम्" इत्यादि से स्पष्ट किया है।

तङ् यक् चिण् आदि सभी फल में आश्रयान्वय के द्योतक हैं ऐसा नियम सार्वत्रिक नहीं है। सकर्मकधातु से उत्तर भाव तथा कर्म में विधायक सूत्रों से विहित उक्त ही फल के साथ आश्रय के अन्वय का तात्पर्य ग्राहक होता है। अबोधि इस पद में "दीपजनबुध" (३।१।६१) इत्यादि सूत्र से चिण् कर्तृ प्रत्यय स्थल में होता है। अतः भावकर्मोभय साधारण चिण् नहीं है। यही कारण है कि पूर्वोक्त नियम का व्यभिचार नहीं होता। कारिकास्थ "यथोचितम्" पद का इसी में तात्पर्य है ॥ ४ ॥

एवं सूचीकटाहन्यायेन सोपपत्तिकं वाक्यार्थमुपवर्ण्य, फलव्यापारयोः- इति प्रतिज्ञातं धातोर्व्यापारवाचित्वं, लडाद्यन्ते भावनाया अवाच्यत्वं वदतः प्राभाकरादीन् प्रति व्यवस्थापयति—

**व्यापारो भावना सैवोत्पादना सैव च क्रिया।**
**कृञोऽकर्म्मकतापत्तेर्नहि यत्नोऽर्थ इष्यते ॥ ५ ॥**

पचति पाकमुत्पादयति पाकानुकूला भावना, तादृश्युत्पादना इत्यादि-

---

१. 'चयस्त्विषामित्यवधारितं पुरा ततः शरीरीति विभाविताकृतिम्।
वपुर्विभक्तावयवं पुमानिति क्रमादमुं नारद इत्यबोधि सः ॥'
—माघ प्र० सर्ग १, श्लोक ३.

भगवान् श्रीकृष्णचन्द्र आते हुये देवमहर्षि नारद को इस क्रम से समझा—सर्व प्रथम कान्ति पुञ्ज के रूप में, आकृति के ज्ञान होने पर देवधारी के रूप में, पृथक् पृथक् अवयवों की प्रतीति से पुरुष तथा इसके बाद नारद है, ऐसा क्रमिक ज्ञान हुआ।

विवरणाद् विव्रियमाणस्यापि तद्वाचकतेति भावः। व्यापारपदं च फूत्कारादीनामयत्नानामपि फूत्कारत्वादिरूपेण वाच्यतां ध्वनयितुमुक्तम्। अत एव पचतीत्यत्र अधःसन्तापनत्वफूत्कारत्वचूल्ल्युपरिधारणत्वयत्नत्वादिभिर्बोधः सर्वसिद्धः।

नन्वेवमेषां शक्यतावच्छेदकत्वे गौरवापत्त्या कृतित्वमेव तदवच्छेदकं वाच्यम्, रथो गच्छति, जानातीत्यादौ च व्यापारत्वादिप्रकारकबोधो लक्षणयेति नैयायिकरीतिः साध्वी। शक्यतावच्छेदकत्वस्यापि लक्ष्यतावच्छेदकत्ववद् गुरूणि सम्भवात् तयोर्वैषम्ये बीजाभावात्। नच पचति, पाकं करोतीति यत्नार्थककरोतिना विवरणाद् यत्न एवाऽऽख्यातार्थ इति वाच्यम्। रथो गमनं करोति, बीजादिना अङ्कुरः कृत इति दर्शनात्कृञो यत्नार्थकताया असिद्धेः।

*एवमिति*। उक्तप्रकारेणेत्यर्थः। ननु फलव्यापारयोरित्यनेन सामान्यतो धातोः फलव्यापारवाचकत्वप्रतिज्ञातस्योत्तरक्षणे एवोपपत्तिभिस्तद्व्यवस्थापनं कर्त्तुमुचितम्, न तु वाक्यार्थनिरूपणानन्तरम्, तेन जिज्ञासाविच्छेदादित्याशङ्कायामाह—*सूचीकटाहन्यायेनेति*। तथाच सामान्यतः फलव्यापारयोर्धात्वर्थत्वे, आश्रयस्य तिङर्थत्वे च ज्ञाते, निरसनीयल्पवादिविप्रतिपत्तिकत्वेन सुप्रतिपाद्यतया च प्रथमं वाक्यार्थे एव शिष्यजिज्ञासोदयात्। स एवाऽऽदौ निरूपितः, न तु धात्वर्थः। निरसनीयबहुवादिविप्रतिपत्तिकत्वेनातिदुरूहतया च तस्य पूर्वमजिज्ञासितत्वादितिभावः।

'लडाद्यन्ते' इत्यतद्गुणसंविज्ञानबहुव्रीहिणा धातुपरम्। तथाच यजेत, पचेतेत्यादौ यज्यादिधातावित्यर्थः। *अवाच्यत्वम्*। वाच्यतानिरूपकत्वाऽभावम्। 'प्राभाकरादीन्' इत्यादिना नैयायिकसंग्रहः।

यद्यपि व्यापारो धात्वर्थत्वेन नैयायिकसंमतः, तथापि नाऽसौ तन्मते भावनापदव्यपदेश्य इति भावः। 'व्यापारो भावना सैव' इत्यादिपूर्वार्द्धस्य यो 'गुणभूतैरवयवैः' इत्याद्युक्तलक्षणलक्षितोऽर्थः, तद्वाचकव्यापारपदं भावनादिपदैर्विव्रियते। विव्रियमाणस्य विवरणसमानार्थकत्वेन धातोर्भावनावाचकत्वसिद्धिरित्यर्थः। तत्रोद्देश्यविधेययोरैक्यमापादयतः सर्वनाम्नः पर्यायेणान्यतरलिङ्गकत्वस्य 'शैत्यं हि यत् सा प्रकृतिर्जलस्य' 'इत्यादिबहुषु स्थलेषु दर्शनात्तत्र 'सा' इति स्त्रीलिङ्गनिर्देशानुपपत्तिः। पुंल्लिङ्गत्वेऽपि, 'सोऽचि लोपे चेत्' (पा० सू० ६।१।१३४) इति लोपेन साधुत्वाच्च। भावनैव वाऽस्तु तत्पदपरामृष्या।

ननु सम्भवेदेवं धातोर्व्यापारार्थकत्वे, तत्र च किं मानमित्याशङ्क्य कृञा धातुविवरणे मानं दर्शयति सारे-*पचति पाकमुत्पादयतीति*। ननु 'या क्रिया भावना सैवोत्पादनाऽपि च सा स्मृता' इत्युक्तेऽपि क्रियाया भावनात्वलाभे किमिति व्यापारपदोपादानमत आह—*व्यापारपदञ्चेति*। तथाच व्याप्रियतेऽनेनेति करणव्युत्पत्त्येन,

भावव्युत्पन्नेन वा व्यापारपदेन फलानुकूलयावतामधिश्रयणादीनां भावनात्वलाभाय तदुपादानम्। क्रियापदेन तु कृतिपदवद्यत्नमात्रार्थकेनोक्तविवरणात् कृतेरेव भावनात्वलाभः स्यादिति तदुपात्तमिति भावः।

*अत एवेति*। तत्तद्रूपेण फूत्कारत्वादीनां धातुवाच्यत्वादेवेत्यर्थः। *सर्वसिद्ध-इति*। अत एव पचतीत्युक्ते फूत्कारादिमात्र वेति सन्देहाऽनुदयादिति भावः। यद्रीत्या नैयायिकैः व्यापारत्वस्याख्यातवाच्यतावच्छेदकत्वं निरस्य, कृतित्वस्य तद्व्यवस्थापितम्, तद्रीत्यैव धातोः कृतित्वमात्रं शक्यतावच्छेदकं भविष्यतीति तटस्थाऽऽशङ्कां निराकरोति—*नचैवमेषामित्यादि*। 'न च' इति साध्वीत्यनेनान्वितम्। *एषाम्*—अधिश्रयणत्वादीनाम्। *गौरवेति*। धातुवाच्यत्वावच्छेदकत्वे गौरवापत्त्येत्यर्थः। तेषां कृतित्वापेक्षया गुरुत्वान्नानात्वाच्चेति भावः।

*तदवच्छेदकमिति*। धातुवाच्यतावच्छेदकमित्यर्थः। ननु कृतेरेव धात्वर्थत्वे रथादावचेतने तद्बाधात्तादृशप्रयोगानुपपत्तिरत आह—*रथो गच्छतीत्यादि*। व्यापारादीत्यादिनाऽऽश्रयत्वप्रतियोगित्वपरिग्रहः। जानातीत्यादावित्यादिपदग्राह्यो घटो नश्यतीत्यादौ नाशाश्रयत्वस्य बाधात्प्रतियोगित्वे एव लक्षणाया द्रष्टव्यत्वात्।

*नैयायिकरीतिरिति*। आख्यातार्थविचारे हि तैर्व्यापारे लक्षणां कृतौ च शक्तिं स्वीकृत्याऽयं प्रयोगः समर्थितः, तद्वन्मयाऽपि समर्थनीय इति सादृश्यात् रीतिपदोपादानम्; न त्वन्यांऽशे तन्मताऽऽदर इति भावः। लाघवोपष्टब्धमानादेवाऽर्थसिद्धिर्न केवलाल्लाघवादित्याशयेन मीमांसकरीत्या तद्रीतेरेवाऽसाधुत्वमाविष्करोति—*शक्यतावच्छेदकत्वस्येति*। तथाच शक्तिर्गुरुणाऽपि धर्मेणावच्छिद्यते, असति बाधके कृतित्वाल्लक्षणावदित्यनुमानात्तेषु शक्तिः सेत्स्यतीति भावः।

ननु तेषां कृतित्वाऽपेक्षया गुरुत्वमेव बाधकमत आह—*तयोरिति*। शक्यतावच्छेदकत्वलक्ष्यतावच्छेदकत्वयोरित्यर्थः। *बीजाभावादिति*। सम्भवति समनियते लघौ धर्मे गुरौ तदभावादित्यस्य प्रकृतेऽनवतारेण यद्यवच्छेदकत्वं स्वरूपसम्बन्धविशेषस्तदा तत्स्वरूपत्वस्य गुरूणामपि सत्वात्किमनुपपन्नम्। अथातिरिक्तम्, तदा गुरुधर्मेऽपि तत्स्वीकार आवश्यकः। गङ्गातीरत्वं लक्ष्यतावच्छेदकमिति व्यवहारात्। वृत्त्यवच्छेदककोटिप्रविष्टत्वस्योभयत्र साम्याच्च। तत्र न्यूनाऽतिरिक्तवृत्तित्वरूपाऽवच्छेदकत्वमादाय तादृशव्यवहारो यदि, तदा सर्वत्रैव तथास्त्विति भावः।

ननु लाघवादेव न तस्याऽवच्छेदकत्वं वदामः, किन्तु मानादपीत्याशङ्कते—*न चेति*। यत्नार्थककरोतिनेत्युक्त्या व्यापारजन्यत्वप्रतिसन्धानाऽविशेषेऽपि घटाङ्कुरयोः कृताऽकृतव्यवहारात्क्रञो यत्नार्थकत्वं सिद्धमेवेति ध्वनयति—*विवरणादिति*। तदर्थप्रतिपादकपदकथनरूपादित्यर्थः। धातुमात्रम्—यत्नत्वविशिष्टे शक्तम्, बाधकं विना यत्नत्वविशिष्टाऽर्थककरोतिप्रतिपादिताऽर्थकत्वाद्। यद्यद्विशिष्टबोधकपदप्रतिपादितार्थकं भवति तत्तत्र शक्तम्। घटत्वविशिष्टशक्तघटपदप्रतिपादितार्थककलशादिपदवदिति सामान्यतोदृष्टाऽनुमानविषया शक्तिग्राहकत्वं [illegible] भावः। यत्न

एवार्थ इति पाठः। यत्न एव आख्यातार्थं इति पाठस्तु प्रकृतसन्दर्भविरुद्धः। *अर्थः*—धात्वर्थः। एवकारेण व्यापारवाच्यत्वव्यवच्छेदः।

कृञो यत्नार्थकत्वे एव धातुमात्रस्य तदर्थकत्वसम्भावना। तदेव गगनकुसुमोपमानमित्याह—*रथो गमनं करोतीत्यादि*। रथादावचेतने यत्नस्य बाधेन तादृशप्रयोगाऽनुपपत्त्या न कृञो यत्नार्थकत्वम्, अपि तु व्यापारार्थकत्वमेवेति, तेन विवरणाद्धातोर्व्यापारार्थकत्वमेव सिद्धयतीति भावः।

ननु 'रथो गच्छति' इति प्रयोगस्थधात्वर्थप्रतिपादककृञो व्यापारे लाक्षणिकत्वान्न तेन यत्नार्थकत्वक्षतिरत आह—*बीजादिनेति*। तथाच कृञो व्यापारे प्रयोगप्राचुर्य्येण तत्रैव शक्तिर्न्याय्येति। तेन विवरणाद्धातोर्व्यापारार्थकत्वमवश्यमङ्गीकरणीयमिति भावः।

अत्रेदमवधेयम्—वैयाकरणमतेऽपि पचत्यादेः फूत्कारादिव्यापारे व्यापारत्वेनैव शक्तिः, व्यापारसामान्यार्थककृञा विवरणात्। एवञ्च व्यापारत्वेन कृतेरपि सङ्ग्रहात् 'मत्तो भूतं, न तु मया कृतम्' इति उपपद्यते इति तत्र तत्रोक्तं सङ्गच्छते। तत्तद्रूपेण क्वचिद् बोधस्तु पचत्यादीनां तत्तद्रूपावच्छिन्ने लक्षणयोपपाद्यः। 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' इत्यभियुक्तोक्तेः।

अत एव वक्ष्यार्थप्रदर्शनाऽवसरे विक्लित्त्यनुकूलो व्यापारः, ज्ञानाऽनुकूलो व्यापार इति व्यापारसामान्यार्थकव्यापारपदेन स्वोत्कीर्त्तितस्य सङ्गतिरिति।

अर्थ—इस प्रकार [1]सूचीकटाह न्याय से युक्ति द्वारा वाक्यार्थ प्रतिपादन के अनन्तर फल व्यापारोभय में प्रतिज्ञातधात्वर्थता की, भावना[2] (व्यापार) को वाच्य नहीं मानने वाले प्राभाकर मीमांसक तथा आदि पद ग्राह्य प्राचीन नैयायिकों के उद्देश्य से सिद्धि करते हैं।

व्यापार भावना है और वही उत्पादना तथा वही क्रिया है। कृञ् धातु के अकर्मक हो जाने के भय से उसका यत्न अर्थ इष्ट नहीं है।

पचति=पाक का उत्पादन करते हैं पाकानुकूल भावना तथा पाक के अनुकूल उत्पादना इस प्रकार का पचति के विवरणों से विव्रियमाण (जिसका विवरण किया जाय) पचति को भी उनका वाचक मानना आवश्यक है। फूत्कार (फूँकना) आदि

---

१. सूचीकटाह—न्याय—कटाह के निर्माण में संलग्न लोहार को किसी ने मध्य में ही सूची निर्माणार्थ प्रेरित किया। लोहार आरब्ध कटाह निर्माण को छोड़कर अल्प समय साध्य सूची (सुई) निर्माण में प्रवृत्त होता है। इससे यह सिद्ध होता है कि अधिक समय साध्य कार्य की अपेक्षा मध्य में भी अल्प समय साध्य कार्य की प्राथमिकता दी जाती है।

२. विचारणीय प्राभाकर मीमांसकों का यह मत है कि कार्य वाचक लिङादि स्थल में ही भावना (कृति) वाच्य होती है जहाँ कृति है, वहीं पर धात्वर्थ अनुष्ठेय है। अतः उनके मत में लङादि स्थल में भावना वाच्य नहीं है (यह आशय है)।

यत्नरूप नहीं है उनको भी फूत्कारत्वादि रूप से धातु वाच्यता बोधन के लिये व्यापार पद का प्रयोग है। अतएव पचति यहाँ पर अधः सन्तापनत्व फूत्कारत्व चुल्ल्युपरिधारणत्व-तथा यत्नत्वादि रूप से बोध सर्वसम्मत है।

फूत्कारत्वादि अनेकधर्म को शक्यतावच्छेदक मानने की अपेक्षा कृतित्व[1] के शक्यता-वच्छेदक होने मे लाघव है रथो गच्छति रथ जाता है, जानाति = जानता हैं इत्यादि स्थलों में व्यापार विचार्यत्वादि प्रकारक बोध लक्षणा द्वारा हो जायगा इस प्रकार की नैयायिक रीति ठीक नहीं है। लक्ष्यतावच्छेदक के समान शक्यतावच्छेदक भी गुरुधर्म हो सकता है। दोनों की विषमता अर्थात् लक्ष्यतावच्छेदक गुरुधर्म माना जाय शक्यता-वच्छेदक नहीं, इन दोनों वैषम्य में कोई कारण नहीं है।

यदि कहें कि यत्नार्थक कृञ् धातु से पचति का पाकं करोति ( पाक करता है ) इस प्रकार विवरण देखने से पच् धात्वर्थ यत्न ही है तो यह ठीक नहीं है। 'रथो गमनं करोति' ( रथ गमनानुकूल कृति वाला है ) 'बीजादिना अङ्कुरः कृतः' ( बीज आदि ने अङ्कुर किया गया ) इत्यादि स्थलों के देखने से कृञ् धातु का यत्न अर्थ सिद्ध नहीं होता।

शंका—"फलव्यापारयोर्धातुः" इसके द्वारा फल और व्यापार दोनों की धातु वाच्यता प्रतिपादन के अनन्तर युक्तियों से इसी का उपपादन आवश्यक होनेपर भी ऐसा न कर वाक्यार्थ का निरूपण करना युक्त नहीं है। इसके निरूपण से व्यवधान होने के कारण प्रतिज्ञात फल व्यापार की धातुवाच्यता सम्बन्धी आकाङ्क्षा शान्त हो जाने से पुनः निराकाङ्क्ष का निरूपण करना अयुक्त है।

इस शंका के निवारणार्थ सूचीकटाह न्याय का उल्लेख किया गया है। विभिन्नमतों का निराकरण तथा विषय दुरूहता को ध्यान में रखकर लघु प्रयास साध्य वाक्यार्थ का मध्य में निरूपण करने के अनन्तर पूर्व प्रतिज्ञात धातु की फलव्यापारोभयवाचिता का सविस्तर उपपादन युक्त है।

"लडाद्यन्ते" इस पङ्क्ति का यह अभिप्राय है—जिसके अन्त में लट् आदि है, वह लडाद्यन्त है। लट् का तिङ् में तात्पर्य है। इस प्रकार लडन्त से धातु तथा तिङ् दोनों का बोध होता है। तिङन्त से भावना भी प्रतीति वैयाकरण तथा मीमांसक दोनों के मत में होता है। वैयाकरण भावना को धातु वाच्य मानते हैं मीमांसक आख्यात वाच्य मानते हैं यह दूसरी बात है पर तिङन्त से दोनों के मत में भावना की प्रीति होती है। ऐसी दशा में लडाद्यन्त से भावना की अवाच्यता मानने वाले प्राभाकर मीमांसक है ऐसा मूलकार का कथन युक्त प्रतीत नहीं होता।

इसका समाधान यह है कि—तद्गुण संविज्ञान और अतद्गुण संविज्ञान के भेद से दो प्रकार की बहुव्रीहि है। तद्गुण संविज्ञान उसको कहते हैं जिस बहुव्रीहि में समस्यमान पदार्थ ( समास घटक पदों का अर्थ ) का कार्यान्वय होता है। उदाहरण में लम्बकर्ण-मानय ( लम्बे कान वाले को ले आओ ) समस्यमान लम्ब तथा कर्ण इन दोनों विशेषणों के साथ व्यक्ति का आनयन होता है अतः तद्गुण संविज्ञान है।

अतद्गुण संविज्ञान उसको मानते हैं जहाँ समस्यमान पदार्थ का कार्य अन्वय नहीं

---

१. कृति = यत्न है। आत्मा में यत्न और शरीर में चेष्टा होती है। वैयाकरण दोनों को व्यापार में अन्तर्भूत मानते हैं।

होता। जैसे 'दृष्टसागरमानय' (जिसने समुद्र को देखा है उसको ले आओ) यहाँ सागर सहित व्यक्ति का आनयन होता है सागर का नहीं। अतः अतद्गुण संविज्ञान है। इसी प्रकार "लडाद्यन्त" पद में अतद्गुण संविज्ञान बहुव्रीहि होने से लडादि रहित धातु मात्र का बोध यहाँ उक्त पद से विवक्षित है। अतः धातु मात्र से भावना[1] का बोध प्रभाकर मतावलम्बियों के मत में न होने से धातु से उसकी अवाच्यता का मूलोक्त कथन सङ्गत ही है।

"प्राभाकरादीन्" इसमें आदिपद प्राचीन नैयायिकों का संग्राहक है। इनके मत में फल और व्यापार धात्वर्थ होने पर भी भावना व्यापारार्थ नहीं होने से इस मत में भी भावना धातु वाच्य नहीं है। अधिक परीक्षा टीका में स्पष्ट है। मीमांसक एवं प्राचीन नैयायिकों के मत का कारिका से निराकरण किया गया है।

शङ्का—"भावना सैव" यहाँ सा यह स्त्रीलिङ्ग निर्देश भावनापद के अनुसार किया जाना ठीक नहीं है क्योंकि तत् से व्यापार का परामर्श होने से उसके लिङ्गानुसार पुल्लिंग का प्रयोग होना उचित है।

समाधान—उद्देश्य[2] और विधेय की एकता का प्रतिपादक सर्वनाम पर्याय से उद्देश्य और विधेय के लिङ्ग का अनुसरण करता है ऐसा नियम है। अत एव दोनों प्रकार के प्रयोग उपलब्ध होते हैं। "शैत्यं हि यत् सा प्रकृतिर्जलस्य" यहाँ विधेयरूप प्रकृति के अनुसार स्त्रीलिङ्ग का प्रयोग किया गया है अन्यथा 'शैत्यं हि यत् तत्' ऐसा पाठ होना चाहिये था। यहाँ भी इसी के अनुसार उत्पादना स्त्रीलिङ्ग है अतः सा इस प्रकार स्त्रीलिङ्ग का निर्देश है।

अथवा "सोऽचि लोपे" (६।१।१३४) इस सूत्र से विभक्ति लोप हो जाने से सः(वह पुल्लिङ्ग निर्देश भी उत्पन्न है।

विवरण अर्थात् समानार्थक पदान्तर से अर्थबोधन। विव्रीयमाण=जिस पद के अर्थबोध के लिये समानार्थक पदान्तर का प्रयोग किया जाता है। जैसे भास्करः=सूर्यः, यहाँ भास्कर विव्रीयमाण उसके अर्थका स्पष्टीकरण करने वाला सूर्य विवरण है। विवरण तथा विव्रीयमाण को समान अर्थवाला होना चाहिये। पचति का विवरण=पर्याय पाकमुत्पादयति—पाकानुकूला भावना, पाकानुकूला उत्पादना इत्यादि विवरण देखने से व्यापार भावना उत्पादना क्रिया तथा भावनार्थक सिद्ध होते हैं। इस प्रकार व्यापार-वाची धातु ही भावना उत्पादना क्रिया आदि का वाचक सिद्ध होती है।

शङ्का—'व्यापारो भावना सैव' इसके स्थान पर या 'क्रिया भावना सैव' ऐसा कारिका का आकार होने पर भी क्रिया और भावना का ऐक्य प्रतीत हो जाता है पुनः व्यापार-पदोपादान निष्प्रयोजन है।

---

१. वस्तुतः मीमांसक मत में भावना व्यापार समानार्थक नहीं है किन्तु कृति रूप है और आख्यातार्थ है। 'विचार्यमेतत् धात्वर्थातिरिक्ता कृतिरूपा भावनाऽऽख्यातार्थः' इति भाट्टचिन्तामणिः, पृ० ८६। प्राभाकर के मत में भी भावना यत्न रूप ही है। परन्तु आख्यातार्थ नहीं है, संख्यामात्र अर्थ है।

२. 'उद्देश्यप्रतिनिर्देश्ययोरैक्यमापादयन् सर्वनामपर्यायेण तत्तल्लिङ्गभाग्' लघुशब्देन्दुशेखर (प्रकृतिभावप्रकरण)।

समाधान—क्रियापदोपादानमात्र करने पर क्रिया से कृति समानार्थक यत्न की प्रतीति होगी इस प्रकार यत्न के साथ ही भावना का ऐक्य सिद्ध होने से चेतनाचेतन उभयनिष्ठ व्यापार के साथ ऐक्य बोध नहीं होगा। अतः व्यापार का भी उपादान किया गया। व्याप्रियते अनेन इस करण व्युत्पत्ति अथवा व्यापरणं इस भाव व्युत्पत्ति से निष्पन्न व्यापार पद से फलोत्पादक अधिश्रयण फूत्कार आदि सभी व्यापारों के साथ भावना का ऐक्य बोध होता है अन्यथा नहीं होगा।

पचति के श्रवण होने पर फूत्कार 'अधः सन्तापन' दर्वी[1] परिघट्टन आदि के सम्बन्ध में किसी को सन्देह नहीं होता प्रत्युत किसी अन्य प्रकार से ज्ञान न होने पर भी उस विषय में सन्देह नहीं रहता है। अतः स्पष्ट ज्ञात होता है कि पच् आदि धातु फूत्कार-त्वादि रूप से फूत्कार आदि विशेष व्यापार के भी वाचक हैं। तद्धर्मावच्छिन्न विषयक निश्चय होने पर ही तद्धर्मावच्छिन्न विषय का सन्देह नहीं होता है। अतः धातुत्वेन धातु, व्यापार सामान्य तथा पच् गम् आदि रूप से व्यापार विशेष का वाचक है।

जिस अर्थ के बोध के लिये जिस पद में शक्ति मानी जाती है वही अर्थ उस पद का वाच्य या शक्य होता है। उस के धर्म को शक्यतावच्छेदक कहते हैं यदि फूत्कार अधः-सन्तापन आदि पच् आदि धातु के वाच्य (शक्य) होंगे तो शक्यतावच्छेदक रूप में फूत्कारत्व अधःसन्तापनत्व आदि अनेक धर्मों के मानने से गौरव होगा यत्न (कृति) को धातु वाच्य मानने पर सकल कृति वृत्ति कृतित्व रूप एक धर्म ही शक्यतावच्छेदक होने से लाघव होगा। अतः कृति धात्वर्थ[2] है और कृतित्व शक्यतावच्छेदक है। इष्टसाधनता ज्ञान से प्रवृत्ति रूप कृति उत्पन्न होती है अतः कृति निष्ठ कार्यता के अवच्छेदक रूप से कृतित्व जाति की सिद्धि होती है। रथो गच्छति (रथ जाता है)

---

१. करछुल से चलाना।

२. दर्पणकार ने "कृतित्वमेव तदवच्छेदकम्" इस मूल के तदवच्छेदक शब्द का धातु वाच्यतावच्छेदक अर्थ माना है। अर्थात् धातु का अधिश्रयण आदि अर्थ नहीं है किन्तु कृति अर्थ है क्योंकि इसमें लाघव है।

काशिकाकार का मत इसके विपरीत है—कृतित्व को धातु वाच्यतावच्छेदक मानने पर कृति धातु वाच्य मानी जायगी। इस प्रकार तिङर्थ आश्रय होगा क्योंकि कृति धात्वर्थ होने से आख्यातार्थ नहीं हो सकती। फल धात्वर्थ है कृति आख्यातार्थ है इस पक्ष के अनुयायी नैयायिकों के मत में दर्पणोक्त व्याख्यान सङ्गत नहीं हो सकता। इस पक्ष में दूसरा दोष यह भी है कि धात्वर्थ कृति का प्रथमान्तार्थ के साथ अन्वय नहीं हो सकेगा। नामार्थ के धात्वर्थ का परस्पर साक्षात् अन्वय-व्युत्पत्ति विरुद्ध है।

वस्तुतः यह पूर्वपक्ष नैयायिकों का न होकर किसी तटस्थ की ओर से प्रस्तुत किया गया है अतः धात्वर्थ मानने से आश्रय आख्यातार्थ होगा जो कि न्यायमत से विपरीत है यह दोष अकिञ्चित् है। पूर्व पक्ष न्यायमत से नहीं होने के कारण विरोधाशङ्का अयुक्त है। दूसरा दोष भी नहीं है क्योंकि धात्वर्थ कृति का तिङर्थ आश्रय में अन्वय है नामार्थ में नहीं। अतः व्युत्पत्ति विरोध भी नहीं है।

देवदत्तो जानाति ( देवदत्त जानता है ) इच्छति ( इच्छा करता है ) एवं नश्यति ( नष्ट होता है ) इन स्थलों में यत्न अर्थ का बोध बाधित है। क्योंकि रथ अचेतन होने से आत्मधर्म यत्न का आश्रय नहीं हो सकता। जानाति तथा इच्छति में ज्ञान तथा इच्छा का कृति जनक नहीं हैं अतः तदनुकूल कृतिमान् ऐसा बोध बाधित है। एवं नश्यति यहाँ नाशानुकूल कृति घट में सम्भव नहीं है इसलिये पूर्वोक्त स्थलों में व्यापारत्वादि प्रकारक बोध के लिये लक्षणा माननी होगी। अर्थात् गच्छति में कृत्यर्थक धातु भी व्यापार, जानाति इच्छति में आश्रयत्व, एवं नश्यति में प्रतियोगिता में लक्षणा मान कर संयोगानुकूलव्यापाराश्रयः ज्ञानेच्छानिरूपिताश्रयतावान् नाशप्रतियोगितावान् इस प्रकार के बोध का निर्वाह लक्षणा द्वारा हो जायगा ऐसा कहना उचित नहीं है।

"सम्भवति लघौ गुरौ तदभावात्" अर्थात् समनियत लघुधर्म यदि अवच्छेदक हो सकता है तो गुरुधर्म को अवच्छेदक मानना अनुचित है। प्रमेय धूमत्व का समनियत धर्म धूमत्व के होने से प्रमेय धूमो नास्ति इस प्रतीति सिद्धात्यन्ताभाव की प्रतियोगिता का अवच्छेदक धूमत्व है प्रमेयधूमत्व नहीं होता। प्रकृत में इस न्याय का विषय नहीं है क्योंकि लघुधर्म की अवच्छेदक रहने पर ही गुरुधर्म अवच्छेदक नहीं होता। कृतित्व के शक्यतावच्छेदक मान लेने पर भी व्यापारत्व आश्रयत्वत्व प्रतियोगित्वत्व आदि के भेद से लक्ष्यतावच्छेदक अनेक मानना होगा। इसी प्रकार हमारे मत में शक्यतावच्छेदक फूत्कारत्व अधिश्रयणत्व आदि अनेक होने पर भी कोई क्षति नहीं है। प्रमाण सहित लाघव से अर्थ की सिद्धि होती है केवल लाघव से नहीं। लाघव तो तर्क है प्रमाण नहीं है। लक्षणा के समान शक्ति भी गुरुधर्म से अवच्छिन्न मानी जायगी। इन दोनों के वैषम्य में कोई कारण नहीं है।

धातुमात्र को यत्नार्थक सिद्ध करने में करोति विवरण में सहायक नहीं हो सकता। रथो गमनं करोति इत्यादि स्थलों में अचेतन रथ में यत्न न होने कारण कृञ् धातु का भी चेतनाचेतनोभय साधारण व्यापार ही अर्थ मानना होगा। इस प्रकार 'कृञ्' धातु यत्नमात्रार्थक न होने से कृञ् द्वारा विवरण धातुमात्र के यत्नार्थक होने में साधक नहीं है।

पच् आदि धातु की फूत्कार दर्वी परिघट्टन आदि विशेष व्यापार में व्यापारत्व रूप से ही शक्ति है फूत्कारत्वादि रूप से नहीं। अत एव सर्वत्र शाब्दबोध प्रदर्शनस्थलों में विक्लित्त्यनुकूलो व्यापारः संयोगानुकूलो व्यापारः इत्यादिरूप से व्यापार सामान्य का ही उल्लेख मिलता है। विशेष रूप से होने वाले बोध स्थल में व्यापार सामान्यवाची का विशेषार्थ में लक्षणा होती है। 'शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा' ऐसा अभियुक्तों का कथन है। इस प्रकार व्यापार सामान्य से कृति का भी संग्रह हो जाने से 'मत्तो भूतं नतु मया कृतम्=मुझसे हो गया हमने किया नहीं, इस प्रयोग की भी सङ्गति हो जाती है। दर्पणकार का यह मत है मूलकार मत में तद् तद् व्यापार विशेष रूप से शक्ति है।

किञ्च भावनाया अवाच्यत्वे घटं भावयतीत्यत्रेव घटो भवतीत्यत्रापि द्वितीया स्यात्। नचाऽत्र घटस्य कर्तृत्वेन तत्संज्ञया कर्मसंज्ञायाः बाधान्न द्वितीयेति वाच्यम्। अनुगतकर्तृत्वस्य त्वन्मते दुर्वचत्वेन घटस्याकर्तृत्वात्। कृत्याश्रयत्वस्य, कारकचक्रप्रयोक्तृत्वस्य वा घटादावभावात्। धात्वर्थानुकूलव्यापाराश्रयत्वस्य च कारकमात्रातिव्यापकत्वात्।

अपि च भावनाया अवाच्यत्वे धातूनां सकर्म्मकत्वाकर्म्मकत्वविभाग उच्छिन्नः स्यात्। स्वार्थफलव्यधिकरणव्यापारवाचकत्वं, स्वार्थव्यापार-व्यधिकरणफलवाचकत्वं वा सकर्म्मकत्वं भावनाया वाच्यत्वमन्तरेणा-सम्भवि। अन्यतमत्वं तत्त्वमिति चेद्? न। एकस्यैवार्थभेदेनाकर्म्मकत्व-सकर्म्मकत्वदर्शनात्। तदेतदभिसन्धायाह—*कृञ इति* ॥

अयम्भावः—व्यापाराऽवाच्यत्वपक्षे फलमात्रमर्थ इति फलितम्। तथाच—करोतीत्यादौ यत्नप्रतीतेस्तन्मात्रं वाच्यमभ्युपेयम्। तथाच 'यती प्रयत्ने' इतिवत् फलस्थानीययत्नवाचकत्वाविशेषादकर्म्मकतापत्तिरुक्तरीत्या दुर्व्वारेति। तथाच 'न हि यत्न' इत्यत्र फलस्थानीयत्वेनेति शेषः। कृञ इति-धातुमात्रोपलक्षणम्। सर्वेषामप्यकर्म्मकता सकर्म्मकता वा स्यादिति भावः।

अथवा—'व्यापारो भावना' इत्यर्धेन व्यापारस्य वाच्यत्वं प्रसाध्य फलांशस्यापि तत् साधयन् नैयायिकाभ्युपगतं जानातिकरोत्यादेः केवल-ज्ञानयत्नादिक्रियामात्रवाचित्वं दूषयति—*कृञ इति* ॥

अयम्भावः—फलांशस्यावाच्यत्वे व्यापार एव धात्वर्थः स्यात्। तथाच स्वार्थफलव्यधिकरणव्यापारवाचित्वादिरूपसकर्म्मकत्वोच्छेदापत्तिः। न च कृञादौ सकर्म्मकत्वव्यवहारो भाक्त इति नैयायिकोक्तं युक्तम्। व्यवहारस्य भाक्तत्वेऽपि कर्म्मणि लकारासम्भवात्। न हि तीरे गङ्गापदस्य भाक्तत्वेऽपि तेन स्नानादिकार्य्यं कर्त्तुं शक्यम्। एवञ्च 'न हि यत्न' इत्यत्र यत्नमात्रम् इत्यर्थः ॥ ५ ॥

'कृञोऽकर्मकतापत्तेः' इति मूलमवतारयति—*किञ्चेति*। *अवाच्यत्वे*—धात्वशक्यत्वे। *द्वितीया स्यादिति*। धात्वर्थोत्पत्तिरूपफलाऽऽश्रयत्वात्।

ननु घटो भवतीत्यत्र कृत्याश्रयत्वरूपकर्तृत्वबाधेऽपि धात्वर्थफलाऽन्विताऽऽख्या-तार्थव्यापाराश्रयत्वरूपकर्तृत्वसत्त्वात्तेन कर्मत्वस्याऽवश्यं बाधेन नोक्तस्थले द्वितीया-प्रसक्तिः। अन्यथा कर्त्तरि लकारोऽप्यनाकरतामापद्येतेत्याशङ्क्य निराकुरुते—*नचेति*। *घटस्येति*। घटं भावयतीत्यत्रेव, घटो भवतीत्यत्राऽपि द्वितीया-ऽऽपत्तिः। मन्मते तु धातूपात्तव्यापाराऽऽश्रयत्वेन परया कर्तृसंज्ञया बाधान्न तदा-पत्तिरिति भावः।

निराकरणप्रकारतामाह—*अनुगतेति*। चेतनाऽचेतनसाधारणेत्यर्थः। *त्व-न्मते*। भवदीयमते। *दुर्वचत्वेनेति*। वक्तुमशक्यत्वेनेत्यर्थः। तदेवाऽऽह—*कृत्या-श्रयत्वस्येति*। तस्याऽचेतनेऽव्याप्तत्वादिति भावः। *कारकचक्रप्रयोक्तृत्वस्य-वेति*। तद्धात्वर्थीयनिखिलकारकचक्रप्रवर्त्तकत्वरूपस्य चेत्यर्थः। नैयायिकमतं निरस्य मीमांसकं प्रत्याऽऽह—*धात्वर्थेति*। *कारकमात्रेति* मात्रपदं कृत्स्नाऽर्थकम्। सर्वे-स्याऽपि कारकस्य धात्वर्थाऽनुकूलयत्किञ्चित्क्रियाश्रयत्वात्। क्रियाजनकत्वस्यैव कारकत्वादिति भावः।

नन्वचेतने कृत्याश्रयत्वरूपकर्तृत्वस्य बाधेऽपीतरव्यापाराऽनधीनत्वप्रकारकविवक्षाविषयव्यापाराश्रयत्वरूपकारकचक्रप्रयोक्तृत्वरूपमेव कर्तृसंज्ञानियामकम्। व्यापारश्च क्वचित् कृतिः, क्वचित् संयोगादिरेव। तादृशव्यापापाराश्रय एव 'स्वतन्त्रःकर्ता' (पा० सू० १।४।५४) इति सूत्रे स्वतन्त्रपदार्थः, तत्सूत्रप्रणयनसामर्थ्यात्। तदुक्तं 'कारके' (पा० सू० १।४।८३) इति सूत्रे भाष्ये—"प्रधानेन समवाये स्थाली परतन्त्रा, व्यवाये स्वतन्त्रा। किं पुनः प्रधानं? कर्त्ता। कथं ज्ञायते कर्त्ता प्रधानमिति? यत्सर्वेषु कारकेषु सन्निहितेषु कर्त्ता प्रवर्त्तयिता भवति" इति। 'स्थाली काष्ठैः पचती'त्यादौ स्थाल्येव तत्त्वेन विवक्षिता इति तद्भावः। वक्ष्यते चाधिकमुपरिष्टात्।

मीमांसकमते प्रसक्तदूषणोद्धृतिरपि वक्ष्यमाणैव। एवञ्च घटगततादृशव्यापारस्यैव स्वातन्त्र्यविवक्षया कर्तृत्वस्य निराबाधेन न द्वितीयाप्रसङ्गोऽत आह *अपि चेति*।

*स्वार्थफलेति*। शक्यतावच्छेदककोटयप्रविष्टाऽऽश्रयकत्वेन फलस्य विशेषणान्न जीवत्यादावतिप्रसङ्गः। एवमविवक्षितकर्मकत्वाऽभावत्त्वेनाऽपि स्वार्थो विशेषणीयः; नाऽतोऽविवक्षितकर्मतयाऽभ्युपगतभावलकारप्रकृतिकस्मृधातौ सः। वैयधिकरण्यं त्वग्रे विवेचयिष्यते।

*असम्भवीति*। तथाच व्यापारवाचकत्वं धातोरावश्यकमिति भावः। *अन्यतमत्वमिति*। पच्यादिधातून् शृङ्ग्राहिकयोपादाय तावद्भिन्नभिन्नत्वमित्यर्थः। *तत्त्वमिति*। अनुगतं सकर्मकत्वमित्यर्थः। *दर्शनादिति*। यथा जिघातोरभिभवार्थेऽकर्मकत्वस्य' न्यूनीकरणार्थे सकर्मकत्वस्याभ्युपगमात्सकर्मकधातुलक्षणे तत्प्रवेशेऽकर्मके तस्मिन्नतिव्याप्तेरप्रवेशे च न्यूनीकरणेऽर्थे तत्रैवाऽव्याप्तिरित्यर्थः॥

यद्यपि तत्तदर्थविशिष्टानेवोक्तरीत्योपादाय सकर्मकत्वनिर्वचने दोषाभावः, तथापि 'बहुलमेतन्निदर्शनम्' इति स्मरणात्तत्र तत्रावृत्तिकरणाच्च तावद्धातूनां युगपद् ग्रहणाऽसम्भवे तात्पर्यमिति बोध्यम्। *तदेतदिति*। पूर्वोक्तदूषणगणमित्यर्थः॥

ननु 'कृञोऽकर्मकतापत्तेः' इत्यस्य कृञो यत्नार्थकत्वनिरासप्रतिपादकस्य कथमुक्तार्थाऽभिसन्धायकत्वमित्याशङ्क्याऽभिसन्धानप्रकारं विशदयति—*अयम्भावः इति*। *फलमात्रमिति*। मात्रपदेन व्यापारव्यवच्छेदः। 'करोत्यादौ' इत्यादिना सविषयार्थधातुसंग्रहः।

*तन्मात्रमिति*। यत्नादिरूपविषयिमात्रमित्यर्थः। *अकर्मकतापत्तिरिति*। व्यापारस्य धात्ववाच्यत्वे उक्तलक्षणाऽऽक्रान्तस्येति भावः। केचित्तु अकर्मकत्वापत्तिरिति विषय्यर्थकक्रञाद्यभिप्रायेणैव तेषामेव प्रक्रान्तत्वात्। एवं च न तदप्रसिद्धिरित्याहुः। *उक्तरीत्येति*। उक्तप्रायरीत्या-सकर्मकधातुभिन्नधातुत्वमित्याकारिकयेत्यर्थः। यथाश्रुते धातोर्व्यापाराऽवाचकत्वे स्वार्थफलसमानाधिकरणव्यापारवाचकत्वरूपाकर्मकत्वापादनस्याऽसम्भवदुक्तिकत्वापत्तेः।

नन्विदानीं धातुमात्रस्यैव व्यापारवाचकत्वस्याऽसिद्धत्वात् सकर्मकरूपप्रतियोग्यप्रसिद्ध्या भवदुक्तार्थापादनस्याप्यसम्भवदुक्तिकत्वं समानम्। अन्यतमत्वरूपस्य तु

स्वयमेव निराकृतत्वादुक्तपदेन तद्ग्रहणाऽसम्भवादिति चेद् ? न। नयत्यादिद्विकर्मकाणां संयोगाऽद्यनुकूलाऽजादिनिष्ठक्रियात्मकफलार्थकत्वस्य धातोः फलमात्रार्थकत्ववादिनाऽप्यभ्युपगमादजादिनिष्ठक्रियायाः संयोगरूपफलजनकत्वात् लोकप्रसिद्धेश्च व्यापारत्वात्तदर्थकधातून्, ण्यन्तादिधातून् वोपादायैव कथञ्चित्प्रसिद्धिसम्भवादिति नोक्तव्याख्याने दोषः।

नन्वेतावता ज्ञा-कृञादीनां व्यापारार्थकत्वं सिद्धम्, न धातुमात्रस्येत्यतः कृञ्पदं धातुमात्रपरतया व्याचष्टे—*कृञ इति*। *धातुमात्रोपलक्षणमिति* कृञ्पदं शक्यलक्ष्यसाधारणधातुत्वेनाऽजहत्स्वार्थलक्षणया धातुमात्रबोधकम्। तथाच धातुमात्रस्याऽकर्मकतापत्त्या न फलमात्रार्थकता, किं तु व्यापाराऽर्थकताऽपीत्यर्थः। *अकर्मकतेति*। पूर्वोक्तभिन्नसर्वधातूनां सेत्यर्थः। यदि फलवाचकत्वमेव सकर्मकत्वं, तदा सर्वेषामविशेषेण सकर्मकतैव स्यादित्याह—*सकर्मकतेति*।

वस्तुतस्तु उक्तयुक्त्या धातोर्व्यापारार्थकत्वसिद्धिस्तदैव स्याद्यदि स्वाऽर्थफलेत्यादि सकर्मकलक्षणं सकर्मकधातुमात्रसाधारणं स्यात्। तदेव न। अध्याद्युपसृष्टशीङादिष्वव्याप्तेः। तस्माद् भ्वादीनां धातुत्वाऽनापत्तिः। मैत्रेण पाचयतीत्यादौ मैत्रादीनां कर्तृत्वाऽनुपपत्तिश्च तथा। अत एव—

'निवृत्तप्रेषणाद्धातोः प्रकृतेऽर्थे णिजिष्यते।'

इत्याद्युपपत्तिरिति दिक्।

ननु 'कृञोऽकर्मकतापत्तेः' इति ग्रन्थो न मीमांसकमतनिराकरणपरः। तस्य 'तस्मात् करोतिरि'त्यादिना निराकरिष्यमाणत्वात्। तैः कृञो यत्नार्थकत्वाऽनभ्युपगमाच्च। नापि नैयायिकमतनिरासपरः। नैयायिकैः फलव्यापारयोरुभयोरपि धातुवाच्यत्वाऽभ्युपगमात्। तदुक्तमाख्यातवाददीधितौ 'स्तां वा फल-व्यापारौ पृथगेव धात्वर्थौ' इति। धातोः फलाऽवच्छिन्नव्यापारार्थकत्वे कर्माख्याते फलस्य द्वेधा भानापत्त्या तयोर्विशकलितयोरेव शक्तिर्ज्यायसीति तद्भावः। फलस्य धातुवाच्यत्वे परं केषाञ्चिन्न्यायविदां विप्रतिपत्तिः। कर्माख्यातेन द्वितीयया च तद्भानसम्भवात्। किञ्चैतद्ग्रन्थस्य धातुमात्रस्य व्यापाराऽर्थकत्वसाधकत्वे धातोरकर्मतापत्तेः, 'फलमात्रार्थता न हि' इत्येव ब्रूयान्न तु कृञ इत्यपरितोषादन्यार्थपरतया मूलमवतारयति—*अथवेति*। *प्रसाध्येति*। पूर्वाऽर्द्धस्य विवरणपरतया व्याख्यानादिति भावः। *तदिति*। धातुवाच्यत्वमित्यर्थः। *जानातिकरोत्यादेरिति*। निर्दिष्टयत्नार्थकभिन्नसविषयार्थकधातुमात्रोपलक्षणम्। *क्रियामात्रेति*। मात्रपदेन फलव्यवच्छेदः। सकर्मकाणां प्रायशः फलाऽवच्छिन्नव्यापारवाचकत्वं, विशकलितफलव्यापारोभयाऽर्थवत्त्वं वा। जानात्यादीनां तु ज्ञानादिव्यापारार्थकत्वमेव। अकर्मकाणां तु सर्वेषां न फलाऽर्थकत्वम्। तस्य ततोऽननुभवात्। किन्तु व्यापाराऽर्थकत्वमेवेति प्राचीननैयायिकाभ्युपगमात्। वक्ष्यमाणरीत्या कृञः फलार्थकत्वे तु तुल्यन्यायात् सर्वेषामेव तत्सिद्धिरिति भावः।

ननु क्ञः फलवाचकत्वे कथमकर्मकत्वमत आह—*अयं भावः इति*। वाचकत्वादीत्यादिना स्वार्थव्यापारव्यधिकरणफलवाचकत्वस्य नैयायिकनये फलाऽवच्छिन्नव्यापाराऽर्थकत्वस्याऽपि सकमर्कत्वात्तस्य च सङ्ग्रहः। जानात्यादीनामेव फलार्थकत्वानभ्युपगम उच्छेदपदार्थोऽव्याप्तिः, सर्वेषामेव तदनभ्युपगमे त्वसम्भवः। तथाच—क्ञ् धातुः फलवाचक; सकर्मकत्वात् पच्यादिवदित्यनुमाने विपक्षबाधकतर्कप्रदर्शकम् *क्ञोऽकर्मके* त्यादीति बोध्यम्।

वस्तुतस्तु—व्यापारो भावना सैवेति पूर्वाऽर्द्धमेव विवरणप्रतिपादनेन धातोः फलव्यापारोभयार्थत्वसाधकम्। तथाहि—धातोर्व्यापारार्थकत्वेऽसिद्धे भावनादिपदैर्व्यापारपदविवरणपरतैव तस्य वाच्या। व्याख्यातं च तथैव सारकृता। तथाच—व्यापारार्थकक्ञेव विक्लित्याद्यर्थकपाकादिपदेनाऽपि विवरणादुभयोरपि धात्वर्थत्वसिद्धिः, तत्र जानात्यादौ फलांशे विप्रतिपन्नं नैयायिकं प्रत्युक्तार्थोपष्टम्भकतया क्ञोऽकर्मकतेत्याद्युक्तम्। धातुमात्रे व्यापाराऽवाचकत्वं वदन्तं मीमांसकं प्रति तु तदुपपादकतयैव—*तस्मात्करोतिरित्यादि*।

यद्यपि व्यापारांशे विप्रतिपन्नं प्रत्यपि क्ञ इत्याद्युपष्टम्भकम्, तथापि विवरणस्यैवाऽऽख्यातपरतया सकर्मकत्वस्य व्यापारार्थकत्वं विनाऽप्यन्यथासिद्धावुद्भावितायां तद्ग्रन्थस्याऽऽवश्यकत्वादिति।

नव्यनैयायिकास्तु—सकर्मकधातूनां फलतज्जनकत्वेन विवक्षितव्यापारेषु चोपलक्षणीभूतसाधनाऽऽकाङ्क्षोत्थापकताऽवच्छेदकधर्मसमानाऽधिकरणधर्मत्वाऽनुगतीकृततत्तद्धर्माऽवच्छिन्नेषु शक्तिः सम्भवति; फलजनकतया विवक्षितानां तेषां विभिन्नधर्मवत्त्वम्। यत्र त्वेकधर्माऽवच्छिन्नस्यैव फलाऽनुकूलत्वं विवक्षाविषयः, तत्र तदवच्छिन्न एव धातोः सा। न हि सर्वत्र समुदाय एव शक्तिरिति राजाऽऽज्ञाऽस्ति।

'क्रिया नामेयम्' इत्यादि भाष्यं तु बहुकालसाध्योक्तधात्वर्थविषयमिति न तद्व्याकोपः। अन्यथा सर्वत्राऽगतिकगत्यारोपाश्रयणापत्तेः। तेषामेव च व्यापारपदव्यपदेश्यत्वम्। कृतित्वस्य तादृशधर्मसमानाधिकरणधर्मत्वे पि न तस्य पच्याद्यर्थताऽवच्छेदकत्वम्। तदंशे तस्योपलक्षणत्वाऽनङ्गीकारात्। अत एव व्युत्पन्नानां न कदाचिदपि तत्तात्पर्येण यागपाकादिपदप्रयोगः, तथा प्रयुक्तादपि तस्मात्पाकादिकृतिबोधश्च। एतेन तस्या अपि व्यापारतया धातोरेव लाभान्न तिङस्तत्र शक्तिरितिनिराकृतम्।

जानात्यादीनां तु विषयत्वं फलं तन्निर्वाहकज्ञानादिव्यापारश्च शक्यम्। क्ञस्तु साध्यत्वं यत्नश्चाऽर्थः। तेन तद्धात्वर्थफलसम्बन्धित्वरूपं मुख्यकर्मत्वं घटादीनां निराबाधम्। एवं स्वार्थफलव्यधिकरणत्वरूपं सकर्मकत्वमपि। यत्याद्यकर्मकाणां तु तत्तद्धर्माऽवच्छिन्नयत्नादिरूपव्यापार एव सा। भोजनं यतते—इत्यप्रयोगेण तद्विषयत्वस्य धातुशक्यत्वाऽनुपगमात्। यतत इत्युक्ते कर्माऽकङ्क्षाया अभावाच्च।

अध्याद्युपसृष्टशीङादीनां तु फले निरूढलक्षणैव। शीङादितः सर्वत्र फलाबोधात्। तदर्थेऽनादितात्पर्य्यग्राहकतयैव च "अधिशीङ्स्थासाम्" (पा० सू० ७।४।४६) इत्यादिसूत्रोपयोगः। कर्त्तेत्यत्र तु कृञो यत्नबोधकत्वादेव नाऽचेतने स्वरसतः कर्त्तृपदप्रयोगः।

एवञ्च कर्त्तृबोधनिर्वाहार्थं पचतीत्यादावाख्यातस्य कृतौ शक्तिरावश्यकी। तदर्थप्रयत्नस्याऽऽश्रयाश्रयिभावेन प्रथमान्तार्थेऽन्वयात् तद्बोधोपपत्तेः। यत्र तु न तद्बोधसिद्धी रथो गच्छतीत्यादौ, तत्र व्यापारे, आश्रयत्वादौ वा यथायथं लक्षणा। "स्वतन्त्रः कर्ता" (पा० सू० ७।४।५४) इतिसूत्रसामर्थ्येन, धात्वर्थव्यापाराऽऽश्रयं तत् प्रतियोगिनामपि कर्त्तृत्वस्य परिभाषणान्न कर्तृबोधाऽनुपपत्तिः, यत्र प्रथमान्तसमभिव्याहारः। यत्र तु न समभिव्याहारस्तत्र कृत्यादिविशेष्यक एव बोधः। "अनभिहिते" इत्यस्याप्यबोधित इत्येवाऽर्थः। अबोधनं त्वाश्रयाऽतिरिक्तार्थे विशेषणतया कृत्याद्यर्थप्रबोधनमेवेतिनाऽभिधानाऽनभिधानव्यवस्थाऽनुपपत्तिः। चैत्रः पचतीत्यादौ कर्तृबोधस्य कृतिशक्त्यैव निर्वाहे तत्राऽऽख्यातशक्तिकल्पनाऽनौचित्याच्च। व्यापारव्यपदेशाऽभावेन विक्लित्त्यादीनामुक्तधर्मत्वस्योपलक्षणत्वाऽनुपगमात्, पृथक् शक्तिरदुष्टैव। फलत्वं तु पूर्वं निरूपितमेव। एवं सति क्वचिद् दूषणं प्रसक्तमवगणयिष्यते इत्याहुः। एवं सकर्मकत्वादिनिर्वचनाऽनुपपत्त्या धातोरुभयार्थकत्वमावश्यकमिति पर्यवसितम्।

व्यापारमात्रशक्तिवादिनस्तु—द्वितीयाद्यर्थान्वय्यर्थकत्वं सकर्मकत्वम्। पच्यादिसमभिव्याहारे द्वितीयाया विक्लत्त्याद्यर्थकत्वात्। जानात्यादिसमभिव्याहारे च विषयत्वाऽद्यर्थकत्वात्, तदन्वयित्वं तदर्थेऽक्षतमित्याहुः। जानात्यादियोगे घटादीनां गौणकर्मत्वमिति वदतां मतमाशङ्क्य निराचष्टे—*न चेति*। *भाक्त इति*। भज्यते आमृद्यते सेव्यते वा शक्यार्थोऽनयेति भक्तिर्लक्षणा। तया शक्यार्थस्य तिरोधानात्। स्वज्ञाने घटकतया शक्यार्थस्यापेक्षणाच्च। तत आगतो भाक्त इत्यर्थः॥

*भाक्तत्वेऽपि*—लक्षणानिबन्धनत्वेऽपि॥ *कर्मणीति*॥ मुख्यसकर्मत्वमादाय शास्त्रस्य चारितार्थ्ये गौणे तद्व्यापारे मानाऽभावादिति भावः। तत्र लौकिकं दृष्टान्तमाह—*न हीत्यादि*॥ भाक्तराजपदव्यवहार्य्येण पुरोहितादिना तदीयकार्यप्रवर्त्तनान्महद्भूतश्चन्द्रमा इत्यादावात्ववारणायाऽऽश्रितस्य गौणमुख्यन्यायस्य विशिष्यार्थोपस्थापकविशिष्टरूपोपादानपुरस्सरपदकार्यविषयकत्वस्याऽन्यत्र व्यवस्थापनाच्च नाऽत्र तद्विषयतेत्यन्ये।

परे त्वेतच्छास्त्रीयकर्मसंज्ञकार्थान्वय्यर्थकत्वमेव सकर्मकत्वम्। सकर्मकपदात्, कर्मणा सहेत्यर्थकाच्छब्दमर्यादया पूर्वोक्ताऽर्थालाभाच्च "लः कर्मणि" इत्यादौ सकर्मकपदादुभयबोधाऽनापत्तेः। तदनन्वय्यर्थकत्वमकर्मकत्वम्। अत एवाऽध्यासिता भूमयः इत्यादौ कर्मणि क्तोपपत्तिः। अन्वयस्य पृथगुपस्थितसंसर्गरूपतया न जीवत्यादिषु दोष इत्याहुः।

अयमेव पक्षः 'फलाऽवच्छिन्नव्यापारबोधकत्वं सकर्मकत्वम्' इति वदद्भिराश्रितः।

फलस्य कर्मतायाः सर्वैरेवोपगमात् । फलाऽन्वय्यर्थकत्वस्य सकर्मकेषु सत्त्वत् । यदि चैकोपस्थितिविषयत्वान्नोक्तः प्रकारः सम्भवतीति विभाव्यते; तदा पृथक् शक्तिवादि-मते निर्दुष्टत्वमेव । अवच्छिन्नपदस्य सम्बन्धपरत्वेन कर्मीभूतफलसम्बन्धिव्यापाराऽर्थकत्वस्य सुस्थत्वात् । अकर्मकाणां फलार्थत्वाऽनङ्गीकारेणाऽतिव्याप्त्यव्याप्त्योरनवकाशादित्यवधेयम् । 'अध्यासिता भूमयः' इत्यादौ यथोक्तोपपत्तिस्तथोपपादितं प्राक् ॥५॥

अर्थ—भावना धातु वाच्य यदि नहीं मानी जायगी तो घटं भावयति के समान घटो भवति यहाँ भी ( उत्पत्ति रूप फल का आश्रय होने से ) द्वितीया विभक्ति हो जायगी ।

शङ्का—उत्पत्ति रूप फल तथा व्यापार दोनों ही एक घट में रहने के कारण कर्म तथा कर्तृ संज्ञा के प्राप्ति प्रसङ्ग में पर होने के कारण कर्तृ संज्ञा कर्म संज्ञा की बाधिका होगी । अतः द्वितीया की आपत्ति नहीं है ।

समाधान—आपके मत में चेतनाचेतन उभय साधारण कर्तृ स्वरूप का निरूपण सम्भव नहीं होने से घट कर्ता नहीं हो सकता । यदि कृति ( यत्न ) का आश्रय अथवा प्रकृत धात्वर्थ के निखिल कारक का प्रवर्तक कारक माना जाय तो भी घटादि में इसका अभाव है । इसी प्रकार धात्वर्थ फल जनक व्यापार का आश्रयत्व रूप कर्तृत्वकरण-मात्र में अतिव्याप्त है । और सुनिये दूसरा दोष भी है—भावना को धातु वाच्य नहीं मानने पर सकर्मक और अकर्मक रूप से धातुओं का विभाजन समाप्त हो जायगा । क्योंकि स्वार्थ=धात्वर्थ जो फल उससे व्यधिकरण=भिन्नाधिकरण में रहने वाले व्यापार का वाचक धातु सकर्मक कही जाती है ।

अथवा स्वार्थ धात्वर्थ व्यापार के व्यधिकरण=भिन्नाधिकरण वृत्ति फल का वाचक धातु सकर्मक है । भावना को धातु वाच्य स्वीकार किये विना यह लक्षण सम्भव नहीं है ।

पच् गम् आदि धातुओं के एक कल्पित समूह में पठित धातु सकर्मक है ऐसा मानना भी ठीक नहीं है । एक ही धातु अर्थ भेद से सकर्मक और अकर्मक दोनों प्रकार की मानी जाती है । इन सभी दोषों का अनुन्धान कर लिखते हैं:—

"कृञोऽकर्मकतापत्तेः" इत्यादि ।

भाव यह है कि—व्यापार को धात्वर्थ न मानने पर केवल फल ही धातु का अर्थ होगा ऐसा अर्थ फलित होता है । ऐसी अवस्था में करोति इत्यादि स्थल में कृति=यत्नमात्र अर्थ की प्रतीति होने से कृञ् धातु का भी वही अर्थ मानना होगा । इस प्रकार "यति प्रयत्ने" इसके समान फल स्थानीय यत्नमात्र अर्थ की वाचकता दोनों धातुओं में समान होने से यत् और कृञ् ये दोनों धातुयें अकर्मक की श्रेणी में आ जायेगी । कारिकागत "नहि यत्नः" इसमें फलस्थानापन्न यत्न अर्थ नहीं है ऐसा विवक्षित है । कारिकागत 'कृञ्' धातु सामान्य का उपलक्षण है । इस प्रकार की व्यवस्था मानने पर सभी धातुओं में सकर्मकत्व या अकर्मकत्व का प्रसङ्ग हो जायगा ।

अथवा "व्यापारो भावना सैव" इस श्लोकार्ध से व्यापार की धातुवाच्यता सिद्ध कर फलांश की भी धातु वाच्यता सिद्ध करते हुये नैयायिकाभिमत ज्ञा-कृ आदि धातुएँ भी केवल ज्ञान यत्न आदि क्रियामात्र वाचिता को दूषित करती हैं—'कृञः' इत्यादि से ।

तात्पर्य यह है कि फलांश के वाच्य न होने पर व्यापार मात्र धात्वर्थ होगा । ऐसी अवस्था में स्वार्थफल व्यधिकरण व्यापार वाचित्वरूप सकर्मकत्व का उच्छेद हो जायगा ।

कृञ् आदि धातु में सकर्मकत्व व्यवहार गौण है ऐसा नैयायिकों का कथन युक्त नहीं है। गौण में सकर्मकत्व व्यवहार होने पर भी लकार का विधान तथा विध कर्म से नहीं होगा। तट में गङ्गा का लक्षणानिबन्धन व्यवहार होने पर भी उसमें स्नानादिकार्य नहीं किया जा सकता। इस प्रकार 'नहि यत्नः' इसमें यत्नमात्र अर्थ विवक्षित है ॥ ५ ॥

हिन्दीभाष्य—भावना व्यापार धात्वर्थ नहीं है, किन्तु फलमात्र धात्वर्थ है इस मत में घटो भवति इस वाक्य घटक घटपद से द्वितीया विभक्ति की प्रसक्ति हो जायगी क्योंकि उत्पत्ति रूप भूधात्वर्थ फल घट में है व्यापार को भी धात्वर्थ मानने वाले वैयाकरणों के मत में धात्वर्थ व्यापार का आश्रय कर्ता होने से कर्तृ संज्ञा से कर्मसंज्ञा का परत्वमूलक बाध हो जाने के कारण घट पद से द्वितीया नहीं होती है। जहाँ जिस व्यापार की धात्वर्थ रूप से विवक्षा होती है वहाँ उस व्यापार के आश्रय को कर्ता माना जाता है। अन्य कारकों में व्यापार रहने पर भी वह धात्वर्थ रूप से विवक्षित नहीं है अतः उसमें कर्तृत्व का प्रसङ्ग नहीं है। भावना धात्वर्थ एवं तिङर्थ न मानने वालों के मत में कर्तृ स्वरूप का विवेक नहीं होने से कर्तृ संज्ञा द्वारा कर्म संज्ञा का बाध नहीं हो सकेगा[1]।

यदि आख्यातार्थ कृति के आश्रय को कर्ता मानें तो अचेतन घट आदि में यत्न रूप कृति नहीं रहने से लक्षण की अव्याप्ति होगी। इसी प्रकार कारक समूह के प्रवर्तक को भी कर्ता नहीं माना जा सकता, घटादि अचेतन होने से किसी भी कारक का प्रवर्तक नहीं हो सकता।

मीमांसकाभिमत धात्वर्थफलानुकूल व्यापाराश्रयत्व[2] रूप कर्तृत्व भी नहीं हो सकता। कारकमात्र अपने अवान्तरव्यापार के द्वारा प्रधान क्रिया के निष्पादक होते हैं। करोति = क्रियां जनयति इति कारकम् = क्रिया का जनक कारक होता है। इस व्युत्पत्ति की सङ्गति उक्तार्थ में ही होती है। तण्डुल में अवयवशैथिल्यानुकूल व्यापार स्थाली में धारणानुकूल व्यापार; इस प्रकार कारकों में व्यापार माना जाता है। इन व्यापारों में धात्वर्थफल जनकता भी है।

स्वभिन्न के व्यापार के अनधीन = स्वतन्त्र जो विवक्षित व्यापार उसका आश्रय कर्ता है ऐसा मानने पर चेतन तथा अचेतन दोनों स्थलों में कर्तृत्व लक्षण का समन्वय होने से कर्तृसंज्ञा से कर्मसंज्ञा का बाध इस मत में भी हो जायगा अतः द्वितीया की आपत्ति नहीं है। "स्वतन्त्रः कर्ता" इस सूत्र में इसी प्रकार का स्वातन्त्र्य माना गया है।

'कारकम्' इस सूत्र का भाष्य भी इस अर्थ का पोषक है—"प्रधानेन समवाये स्थाली परतन्त्रा, व्यवाये[3] स्वतन्त्रा, किं पुनः प्रधानं? कर्ता। कथं ज्ञायते कर्ता[4] प्रधानमिति? यत् सर्वेषु कारकेषु सन्निहितेषु कर्ता प्रवर्तयिता भवतीति।" प्रधान के सन्निधान में स्थाली परतन्त्र है अर्थात् धात्वर्थाश्रयत्व रूप से प्रधान की विवक्षा होने पर स्थाली

---

१. यह खण्डनीय मत किसी प्राचीन नैयायिक का है।

२. इस लक्षण में व्यापार का धात्वर्थ होना आवश्यक नहीं है।

३. व्यवाये = तस्य (प्रधानस्य धात्वर्थाश्रयत्वाभावे, स्थाल्याः धात्वर्थाश्रयत्वे इत्यर्थः इति उद्योतः)।

४. कर्ता प्रधानम् प्रत्ययार्थः प्रधानम् इत्यादि प्रयोग देखने से प्रधान शब्द।

परतन्त्र है। धात्वर्थाश्रयत्वाभाव प्रधान में मानने पर स्थाली में धात्वर्थाश्रयत्व की विवक्षा रहने पर स्थाली स्वतन्त्र है। प्रधान कौन है, कर्ता कैसे जानते है, सभी कारकों के सन्निधान में प्रवर्तक कर्ता ही होता है। 'स्थाली काष्ठैः पचति' इत्यादि इसके उदाहरण हैं। यहाँ स्थाली की ही अन्य कारकों के प्रवर्तकत्व रूप से विवक्षा है। इस प्रकार कर्ता का अनुगत स्वरूप निश्चित होने से घटो भवति में द्वितीया प्रसङ्ग नहीं है। कर्तृसंज्ञा द्वारा कर्मसंज्ञा का बाध हो जायगा। अतः 'अपि च' दूषणान्तर देते हैं।

व्यापार को धात्वर्थ न मानने पर स्वार्थ फलव्यधिकरण व्यापार वाचकत्व रूप सकर्मकत्व स्वार्थफल समानाधिकरण व्यापार वाचकत्व रूप अकर्मकत्व लक्षण लक्ष्य में समन्वित नहीं होगा। लक्षण घटक स्वपद से सकर्मकत्व रूप से विवक्षित जैसे गमधातु इसका अर्थ संयोग रूप फल हुआ इसका कारण समवाय सम्बन्ध से ग्राम आदि इससे भिन्न देवदत्त आदि कर्ता में रहने वाला व्यापार फल व्यधिकरण हुआ किन्तु व्यापार धात्वर्थ नहीं मानने वाले के मत में ईदृश व्यापार का वाचक धातु नहीं होने से सकर्मक लक्षण घटित नहीं हुआ। उक्त लक्षण में स्वपद के प्रवेश न करने पर पच्धात्वर्थ विक्लित्ति के अधिकरण से भिन्न अधिकरण वृत्ति व्यापार का वाचक भूधातु भी है इसकी व्यावृत्ति के लिये उक्त निवेश आवश्यक है। स्वपद से सकर्मकत्व रूप से विवक्षित धातु का ग्रहण होने से भूधातु को सकर्मकत्व प्रसञ्जन के लिये गम् का स्वपद से ग्रहण नहीं हो सकता।

इसी प्रकार अकर्मक लक्षण घटक स्वपद से अकर्मकत्व रूप से विवक्षित भूधातु इसका उत्पत्ति रूप फल तथा व्यापार ये दोनों घटरूप कर्ता में हैं। अतः फलाधिकरण वृत्तित्व रूप फल सामानाधिकरण्य व्यापार में होने पर भी तद्वाचक धातु नहीं है इसलिये अकर्मकलक्षण का संघटन नहीं होगा।

फल का अधिकरण जिस किसी सम्बन्ध से विवक्षित नहीं है किन्तु फलतावच्छेदक सम्बन्ध से इष्ट है। जिस सम्बन्ध से फलोत्पत्ति इष्ट है वही फलतावच्छेदक सम्बन्ध है। अतः फलतावच्छेदक सम्बन्ध से यत्किञ्चित् फलाधिकरण से भिन्नाधिकरण में वृत्तित्व रूप फल व्यधिकरणत्व है। उक्त सम्बन्ध के निवेश न होने पर कालिक सम्बन्ध से भूधात्वर्थ उत्पत्ति का अधिकरण जन्य भाव मात्र है। उससे भिन्न-घटरूप अधिकरण में वृत्ति भूधात्वर्थ व्यापार है; तद्वाचक भूधातु भी सकर्मक हो जायगी। पूर्वोक्त सम्बन्ध से फलाश्रय विवक्षित होने पर घटो भवति यहाँ उत्पत्ति समवाय या तादात्म्य सम्बन्ध से गृहीत है—कालिक सम्बन्ध से नहीं, अतः समवाय और व्यापार दोनों एक में ही होने से सकर्मकत्व का प्रसङ्ग नही होता है।

यद्यपि गम् धात्वर्थ फलीभूत संयोग, कर्ता और कर्म दोनों में है, क्योंकि संयोग दो में रहता है एक में नहीं। इस प्रकार संयोग रूप फल का ग्रामादि कर्म के समान चैत्रादि कर्ता भी होता है। एवं वह व्यापार का भी आश्रय है। इस प्रकार चैत्रादिनिष्ठ व्यापार फल व्यधिकरण नहीं होने से सकर्मक का लक्षण संघटित नहीं होगा। तथापि जिस किसी फलाधिकरण ग्राम आदि से भिन्न चैत्र के होने से फल व्यधिकरण व्यापार हो जाता है। यत्किञ्चित् तत्फलवदधिकरण प्रतियोगिक भेद विवक्षित है। फलवदधिकरणत्वावच्छिन्न प्रतियोगिताकभेद गृहीत नहीं है।

अथवा फल के यत्किञ्चित् अधिकरण में अवृत्तित्व ही फल व्यधिकरणत्व है।

शङ्का—जीवधातु का प्राणधारणानुकूल व्यापार अर्थ है। धारण रूप फल प्राण में इस के अनुकूल व्यापार चैत्रादि कर्ता में होने से फलव्यधिकरणव्यापारवाची जीवधातु हो जाती है। अतः इस को भी सकर्मक क्यों नहीं मानते।

समाधान—शक्यतावच्छेदक कोटि में अप्रविष्ट आश्रय वाले फल की लक्षण में विवक्षा होने से दोष नहीं है। जीव धातु का प्राण धारण अर्थ होने से शक्यतावच्छेदक कोटि में प्राण का प्रवेश हो जाने के कारण धारण रूप फल का आश्रय प्राण उस कोटि में अप्रविष्ट नहीं है अपितु प्रविष्ट ही है अतः सकर्मकत्व भी आपत्ति नहीं हुई।

शङ्का—कर्म की अविवक्षा स्थल में उदाहरण के रूप में श्रु धातु को ही लीजिये—इस के कर्म की अविवक्षा स्थल में अकर्मक होने से आत्मनेपद का विधान किया गया है। श्रवण जन्य ज्ञान विषयता सम्बन्ध से शब्द में व्यापार समवाय सम्बन्ध से देवदत्तादि के आत्मा में होने से फल व्यधिकरण व्यापार वाचित्व श्रुधातु में निर्बाध है। ऐसी अवस्था में धातु के सकर्मक होने के कारण अकर्मकत्व निबन्धन आत्मनेपद का विधान सङ्गत कैसे होगा।

समाधान—लक्षणघटक स्वार्थ में अविवक्षित कर्मकत्वाभाव विशेषण है। अविवक्षितं कर्म यस्य इस व्युत्पत्ति से जिसके कर्म की विवक्षा नहीं हुई हो, वह धातु अविवक्षित कर्म हुई। उसमें अविवक्षित कर्मत्व है। जिस में अविवक्षित कर्मकत्व का अभाव हो, ऐसा स्वार्थ लिया जाता है। श्रुधातु में अविवक्षित कर्मकत्व है क्योंकि इसके कर्म की विवक्षा नहीं की गई है। अतः अविवक्षितकर्मकत्व का अभाव नहीं है। इसलिये पूर्वोक्त दोष का अवकाश नहीं है। इत्यादि विस्तृत विवेचन अन्यत्र देखिये।

शङ्का—सभी सकर्मक धातुओं के नामनिर्देशात्मक समूह की कल्पना कर इन में अन्यतम=जो कोई धातु सकर्मक है ऐसा मानने से सकर्मक धातु का परिचय हो जायगा। अतः इसके परिचय के लिये पूर्वोक्त लक्षण अनावश्यक है। इस प्रकार पूर्वोक्त लक्षण को आधार मानकर धात्वर्थ भावना की सिद्धि नहीं की जा सकती।

समाधान—नामोल्लेखपूर्वक सकर्मक धातुओं का समूह कल्पित करने पर अर्थ के भेद से सकर्मक और अकर्मक दोनों रूप से व्यवहृत होने वाली धातुओं की उभय रूपता नष्ट हो जायगी। सकर्मकों के अन्तर्गत पाठ होने पर सकर्मक ही परिगणित होगी। उसके अन्तर्गत पाठ न होने पर अकर्मक ही कही जायगी। अर्थ भेद से इष्ट सकर्मका कर्म को उभयरूपता नहीं हो सकेगी। जैसे न्यूनीकरण विजयअर्थ में जिधातु सकर्मक और न्यूनीभवन पराजय अर्थ में अकर्मक है। 'शत्रून् जयति' तथा 'अध्ययनात् पराजयते' ये दोनों क्रमशः सकर्मक और अकर्मक के उदाहरण हैं। इसी प्रकार वह धातु प्रापण अर्थ में सकर्मक और प्रस्रवण अर्थ में अकर्मक है। 'भारं वहति' 'नदी वहति' ये उसके उदाहरण हैं। इन सबका अनुसन्धान करने के बाद लिखा है 'कृञः' इत्यादि।

व्यापार को धात्वर्थ न मानने पर फलमात्र धातु का अर्थ होगा। ऐसी अवस्था में सकर्मकत्व लक्षण का संघटन नहीं होने से धातुमात्र अकर्मक हो जायगी।

यद्यपि अकर्मक के लक्षण में भी फल तथा व्यापार वाचित्व का निवेश होने से लक्षण समन्वय दुर्घट है, तथापि सकर्मक से भिन्न अकर्मक है यह मानकर उक्त आपत्ति है।

शङ्का—व्यापारवाची धातु को न मानने पर स्वार्थ फल व्यधिकरण व्यापार वाचित्व रूप सकर्मकत्व लक्षण किसी भी धातु में समन्वित नहीं होगा। प्रतियोगी के अप्रसिद्ध-

होने पर तद्भिन्न अकर्मक की अप्रसिद्धि होगी। 'जिसका[1] प्रतियोगी अप्रसिद्ध होता है, उसका अभाव नहीं माना जाता ऐसा नियम है। ऐसी दशा में अकर्मकत्व की आपत्ति निराधार है। अन्यतमत्व रूप से सकर्मकत्व का संग्रह पूर्व में ही निराकृत हो चुका है।

समाधान—द्विकर्मक नीजादि धातु की सकर्मकता सर्वमत सिद्ध है क्योंकि नी धातु का संयोगानुकूल व्यापार जो अजा (बकरी) निष्ठ है तद्रूप फल मात्र वाची धातु के मानने वाले भी मानते हैं। अजा निष्ठा क्रिया संयोग रूप फल का जनक होने से तथा लोक व्यवहार से व्यापार रूप है। तदाश्रय व्यापाराश्रय अजा कर्म है। अतः फल व्यवहार भी है। एवं रूपतत्तद्धातुओं में सकर्मकत्व की प्रसिद्धि सुलभ होने से सकर्मकत्व अप्रसिद्ध नहीं है। अतः तद्भिन्न अकर्मक का कथन अयुक्त नहीं है। अप्रसिद्ध प्रतियोगिक अभाववादियों के मत में दोष की आशङ्का ही नहीं है।

इसी प्रकार व्यापार धातु वाच्य न होने पर 'भूवादयः' इत्यादि सूत्र से धातु संज्ञा नहीं होगी। व्यापार वाची को ही धातु संज्ञा का विधान है।

इसी प्रकार 'पाचयति ओदनं देवदत्तेन' इत्यादि स्थल में देवदत्त वृत्ति धात्वर्थ व्यापार न होने के कारण देवदत्त कर्ता में तृतीया विभक्ति नहीं होगी इत्यादि दोषों से यह पक्ष ग्रस्त है।

'अध्यासिता भूमयः' इत्यादिस्थल में आस् धातु के अकर्मक होने से कर्म में क्तप्रत्यय नहीं होगा। फल और व्यापार एक निष्ठ होने से अकर्मक है। 'अधिशीङ्स्थासां कर्म'··· इस सूत्र से कर्म संज्ञा होने से द्वितीया विभक्ति होती है। यदि यह सकर्मक धातु होती तो विशेष सूत्र के द्वारा कर्म संज्ञा का विधान क्यों क्रिया जाता, अतः सकर्मक का यह लक्षण ठीक नहीं है।

कर्मसंज्ञकार्थान्वय्यर्थकत्वं सकर्मकत्वम् एवं कर्मसंज्ञकार्थान्वयित्वय्यर्थकत्वमकर्मकत्वम्। अर्थात् कर्म संज्ञक के अर्थ में अन्वयी जो अर्थ उसका वाचक सकर्मक, कर्मसंज्ञक के अर्थ में अनन्वयी अर्थ का वाचक अकर्मक है। इसप्रकार सकर्मक तथा अकर्मक के लक्षणों में दोष नहीं है।

शङ्का—'कृञोऽकर्मकतापत्तेः' इत्यादि ग्रन्थ मीमांसक अथवा नैयायिक मत निराकरणार्थ लिखा गया है। आद्य पक्ष ठीक नहीं है क्योंकि 'तस्माद् करोतिः' इत्यादि ८ वीं कारिका से मीमांसक मत का निराकरण आगे किया गया है। मीमांसक मत में कृञ् धातु का यत्न अर्थ नहीं होने से उनके मत का खण्डन सङ्गत नहीं होगा।

द्वितीय पक्ष का कथन भी ठीक नहीं है। न्याय मत में फल और व्यापार दोनों को धात्वर्थ माना है। जैसा[2] कि दीधितिकार ने लिखा है कि 'स्तां वा फल-व्यापारौ पृथगेव-धात्वर्थौ = फल और व्यापार दोनों ही पृथक् रूप से धात्वर्थ हैं। फलावच्छिन्न व्यापार में शक्ति मानने पर कर्म प्रत्यय स्थल में कर्तृ प्रत्यय स्थल से विपरीत भान नहीं होगा। अतः पृथक् फल और व्यापार में शक्ति है इस प्रकार फल और व्यापार दोनों की वाच्यता सिद्ध होने से उक्त कथन सङ्गत नहीं है।

---

१. 'लब्धरूपे क्वचित् किञ्चित् तादृगेव निषिद्धयते।
विधानमन्तरेणातो न निषेधस्य संभवः ॥' ब्र. सि. तर्क. का. श्लो. २॥

२. आख्यातवाददीधितौ।

समाधान—इसी शङ्का के निवारणार्थ कारिका के अर्ध भाग का प्रकारान्तर से व्याख्यान करते हैं—अथवा इत्यादि।

जानाति आदि कतिपय धातुओं के फल वाची न होने पर सकर्मकोच्छेदापत्ति इस में उच्छेद असम्भव अर्थ में है। शेष अंश मूलानुवाद से ही स्पष्ट है।

वस्तुतः 'व्यापारो भावना' इत्यादि पूर्वार्ध कारिका विवरण निरूपण द्वारा धातु की फल व्यापार वाचिता का साधक है। पचति का विवरण पाकमुत्पादयति इत्यादि माना गया है। व्यापार के धात्वर्थ होने पर ही भावना उत्पादना आदि से उसका विवरण हो सकता है। इसी प्रकार पाक से फल का विवरण होने से फल भी धात्वर्थ सिद्ध होता है। अतः जानाति आदि सविषयकार्थ धातुओं का भी फल वाच्य है। इसके साधन करने के लिये "कृञोऽकर्मकतापत्तेः' इत्यादि कारिका का उत्तरार्ध—लिखा गया है।

अत एवाह—

वैया० किन्तूत्पादनमेवातः कर्म्मवत् स्याद् यगाद्यपि।
कर्म्मकर्त्तर्य्यन्यथा तु न भवेत् तद् दृशेरिव ॥ ६ ॥

उत्पादनम्—उत्पत्तिरूपफलसहितं यत्नादि कृञर्थ इत्यर्थः। फलस्य वाच्यत्वे युक्त्यन्तरमाह-*अत इत्यादि* ॥ यतः कृञो यत्नमात्रमर्थो नेष्यते, अतः कर्म्मवत् स्यादिति पदेन "कर्म्मवत् कर्मणा तुल्यक्रियः" (पा० सू० ३।१।८७) इति सूत्रं लक्ष्यते। अयमर्थः—यत एवास्योत्पादनार्थकता, अतः पच्यते ओदनः स्वयमेवेतिवत् क्रियते घटः स्वयमेवेति यगादयोऽप्युपपद्यन्ते। अन्यथा यत्नस्य कर्म्मनिष्ठत्वाऽभावात् तन्न स्यात्, दृशिवत्। यथा दृश्यते घटः स्वयमेवेति न दर्शनस्य घटावृत्तित्वात्, तथा यत्नस्यापि इति तथा प्रयोगापत्तेरिति ॥ ६ ॥

ननु 'कर्मवत् स्याद् यगाद्यपि' इति मूलस्य कर्मवद् यगाद्यपि भवेदित्यर्थो लभ्यते। स च बाधितोऽविवक्षितश्चेत्यत आह—*कर्मवत्स्यादितिपदेनेति* ॥ *सूत्रं लक्ष्यत इति*। सूत्रविहितं लक्ष्यते इत्यर्थः। यथाश्रुते कर्मपदात् स्वघटितत्वेन लक्षणया सूत्रोपस्थितावपि तस्य यगादिकमित्येनेनाऽनन्वयापत्तेः। एतद्बोधनायैव स्यादिति लक्ष्यकोटावुपात्तमिति ॥ *घटावृत्तित्वादिति* ॥ घटमात्रवृत्तित्वाऽभावेन कर्मस्थक्रियकत्वाभावादिति तु परमार्थः ॥ ६ ॥

यत्न शब्द यत्नमात्र का बोधक होने से लिखते हैं—किन्तूत्पादनमेवातः इत्यादि। कृञ् धातु का उत्पत्त्यनुकूल व्यापार अर्थ है। अत एव "कर्मवत्कर्मणा तुल्यक्रियः" ३।१।८७ इस सूत्र से कर्मवद्भाव होने के कारण यगादि प्रत्ययों का विधान होता है। अन्यथा दृश् धातु के समान कर्म कर्ता में उक्त प्रत्ययों का विधान नहीं हो सकेगा।

उत्पादनम्=उत्पत्ति रूप फल सहित यत्न आदि कृञ् धातु का अर्थ है।

फल के धात्वर्थ होने में अन्य युक्ति देते हैं 'अतः इत्यादि'। जिस कारण विशेष से कृञ् धातु का यत्न मात्र अर्थ इष्ट नहीं है। अत एव यगादि होता है। 'कर्मवत् स्यात्' इस पद से 'कर्मवत् कर्मणा तुल्यक्रियः (३।१।८७) इस सूत्र की विवक्षा है।

भावार्थ यह है कि उत्पत्ति रूप फलानुकूल यत्न कृञ् का अर्थ है। अत एव पच्यते ओदनः स्वयमेव इसके समान क्रियते कटः स्वयमेव यहाँ भी यगादि कार्य होता है। ऐसा नहीं मानने पर जिस प्रकार दृश धातु से यगादि नहीं होता उसी प्रकार यत्न कर्म निष्ठ न होने से यगादि कार्य नहीं होगा। जिस प्रकार दर्शनरूप फल घट में नहीं रहने से दृश्यते घटः स्वयमेव यह प्रयोग नहीं होता उसी प्रकार यत्न भी घट में नहीं होने के कारण 'क्रियते कटः स्वयमेव' ऐसा प्रयोग नहीं होगा।

हिन्दीभाष्य—यत्नादि में आदि पद से यत्नातिरिक्त व्यापार का ग्रहण है। अत एव 'बीजादिना अङ्कुरः कृतः' यहाँ अचेतन बीज में यत्न नहीं रहने पर भी व्यापारान्तर का बोध शक्ति द्वारा ही होता है।

कारिकास्थ 'कर्मवत्' पद से 'कर्मवत् कर्मणा' इत्यादि सूत्र[1] विवक्षित नहीं है, किन्तु सूत्र से विहित कार्य का ग्रहण है। अन्यथा 'यगाद्यपि' के साथ अन्वय नहीं होगा। लक्षणया तत् सूत्र विहित अर्थ करने पर उस सूत्र से विहित यगादि कार्य ऐसा अन्वय होगा।

कृञ् का यत्नमात्र अर्थ मानने पर सौकर्य के अतिशय की विवक्षा करने पर (कर्म रूप घट को कर्ता के रूप में विवक्षित होने पर) घटः क्रियते यह इष्ट प्रयोग नहीं होगा। क्योंकि धात्वर्थ क्रिया रूप यत्न कर्म में नहीं है। अतः कर्मस्थ क्रिया नहीं होने से कर्मवद्भाव प्राप्त नहीं होगा। इसलिये उत्पत्ति रूप फल सहित व्यापार कृञ् धातु का अर्थ है।

शङ्का—जिस प्रकार ज्ञान समवाय सम्बन्ध से चैत्र आदि कर्ता में एवं विषयता-सम्बन्ध से घट आदि विषयों में रहने से ज्ञानार्थक ज्ञाधातु का घट आदि कर्म होता है। अत एव घटं करोति ऐसा प्रयोग किया जाता है। उसी प्रकार यत्न भी समवाय से कर्ता एवं विषयता से घट आदि में रहने से घटं करोति इसकी उपपत्ति के समान विषयता सम्बन्ध से यत्न कर्मनिष्ठ होने के कारण घटः क्रियते स्वयमेव इसकी उपपत्ति हो जायगी। अतः यत्नमात्र अर्थ मानने में दोष नहीं है।

समाधान—इस प्रकार ज्ञान यत्नादि को कर्मनिष्ठ मानने पर 'दृश्यते घटः स्वयमेव' इस प्रयोग की भी आपत्ति हो जायगी। जिस प्रकार यत्न विषयता सम्बन्ध से घट में है उसी प्रकार ज्ञान भी विषयता से घट में है। अतः विषयता फलतावच्छेदक सम्बन्ध नहीं है। अन्यथा घटं यतते ऐसा प्रयोग भी होने लगेगा।

---

१. 'कर्मवत् कर्मणा' इस सूत्र का अर्थ इस प्रकार है—कर्मणा पद से कर्मस्थ क्रिया का ग्रहण है। कर्मस्थ क्रिया के समान फल रूप क्रिया अथवा तदनुकूल व्यापार जिसमें है ऐसे कर्ता को कर्मवद्भाव होता है। जैसे 'तण्डुलं पचति देवदत्तः' यहाँ चावल अत्यन्त महीन एवं कोमल होने से पाक में सौलभ्य की दृष्टि से कर्ता के रूप में देवदत्त की विवक्षा न होने पर अर्थात् कर्ता के व्यापार की अविवक्षा करने पर तण्डुलः पच्यते प्रयोग होता है। यहाँ तण्डुल निष्ठ क्रिया से तुल्य कर्ता तण्डुल की क्रिया है। यद्यपि दोनों की क्रिया एक ही होने से समानता नहीं है। भेद रहने पर समानता का व्यवहार होता है तथापि कर्ता और कर्म रूप अवस्थाओं के भेद से तण्डुल की क्रिया में भी औपाधिक भेद होने के कारण तुल्यता मानी गई है।

अथवा ज्ञान और यत्न ये दोनों कर्ता कर्म उभय निष्ठ होने से कर्ममात्र वृत्ति नहीं हुआ। अतः कर्मवद्भाव की उक्त स्थल में प्राप्ति नहीं है। ऐसी अवस्था में यत्नमात्रार्थक कृञ् के मानने पर कर्मवद्भाव नहीं होगा। इसी आशय से 'न भवेत् तद् दृशेरिव' इस प्रकार का उल्लेख कारिकामें किया गया है ॥ ६ ॥

'विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता' इस हरिकारिका के अनुसार क्रिया द्वारा कर्ता में किञ्चित् वैलक्षण्य होने पर कर्तृस्थभावक और क्रिया द्वारा कर्म में किञ्चित् वैलक्षण्य होने पर कर्मस्थभावक माना जाता है। ज्ञाधातु आदि की ज्ञानादि क्रिया से कर्ता में वैलक्षण्य नहीं होता। अतः यह कर्तृस्थभावक[1] नहीं है। इसलिये 'क्रिया व्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता' इस उत्तरार्ध से कर्तृस्थभाव का लक्षण किया है। कर्ता और कर्म दोनों में रहने वाले फल का जहाँ शब्द से प्रतिपादन होता है वह कर्तृस्थभावक है जैसे 'घटं पश्यति ग्रामं गच्छति' यहाँ प्रथम उदाहरण से समवाय सम्बन्ध से ज्ञान कर्ता में तथा विषयता सम्बन्ध से घट आदि विषयों में, द्वितीय में संयोग समवाय सम्बन्ध से कर्ता तथा कर्म दोनों में हैं अतः यह कर्तृस्थभावक है। जहाँ कर्ममात्र में रहनेवाले फल का शब्द से कथन होता है उसको कर्मस्थभावक कहते हैं। जैसे पच्यते ओदनः, क्रियते कटः। इन स्थलों में विक्लित्ति एवं उत्पत्ति क्रमशः ओदन तथा कटमात्र में है। अतः यह कर्मस्थभावक है। और इसीलिये इसको कर्मवद्भाव होता है। इस प्रकार की उक्तव्यवस्था मानने वाले के मत में ज्ञाधातु का आवरणभङ्गानुकूल व्यापार अर्थ स्वीकार करने से आवरण भङ्ग रूप फल कर्ममात्र वृत्ति होने से धातु कर्मस्थभावक होने से 'ज्ञायते घटः' इसकी आपत्ति हो जायगी। अतः ज्ञाधातु का अर्थ ज्ञान मानना युक्ति युक्त है। ज्ञान उभयनिष्ठ होने से कर्मस्थभावक नहीं है। इसीलिये ज्ञानानुकूल व्यापार ऐसा शाब्द बोध भूषणसार में यत्र तत्र मिलता है।

नन्वेवं कृञादेरिव जानातीत्यादेरपि विषयावच्छिन्नावरणभङ्गादिफल-वाचित्वमावश्यकम्। अन्यथा सकर्म्मकतानापत्तेः। तथाच ज्ञायते घटः स्वयमेवेति किन्न स्यात्। एवं ग्रामो गम्यते स्वयमेवेत्याद्यपीत्याशङ्कां मनसि कृत्वाह—

निर्वर्त्ये च विकार्य्ये च कर्म्मवद्भाव इष्यते।
न तु प्राप्ये कर्म्मणीति सिद्धान्तोऽत्र व्यवस्थितः ॥ ७ ॥

ईप्सितं कर्म्म त्रिविधं—निर्वर्त्यं विकार्य्यं प्राप्यञ्च। तत्राद्ययोः कर्म्मवद्भावः, नान्त्ये। प्राप्यत्वञ्च—क्रियाकृतविशेषानुपलभ्यमानत्वमिति सुबर्थ-निर्णये वक्ष्यते। न ह्ययं घटः केनचिद् दृष्टो ग्रामोऽयं केनचिद् गत इति शक्यं कर्म्मदर्शनेनाऽवगन्तुम्। घटं करोतीति निर्वर्त्त्ये सोममभिषुणोतीति विकार्य्ये च तज्ज्ञातुं शक्यमिति, न तत् प्राप्यम्। तथा च घटादेर्दृश्यादौ प्राप्यकर्म्मत्वान्नोक्तातिप्रसङ्ग इति भावः।

धातूनां फलावाचकत्वे त्यजिगम्योः पर्य्यायतापत्तिः। क्रियावाचकत्वा-विशेषात्। फलस्योपलक्षणत्वेऽप्येकक्रियाया एव पूर्वदेशविभागोत्तरदेश-

१. कर्तृस्थभावक से कर्मवद्भाव नहीं होता।

संयोगजनकत्वादुक्तदोषतादवस्थ्यमित्यपि वदन्ति। तस्मादावश्यकं सकर्म्मकाणां फलवाचकत्वम्। अकर्म्मकाणां तु तन्निर्विवादमेव। "भू सत्तायाम्" (भ्वा० ग०) इत्याद्यनुशासनाच्च। अत एव—"द्व्यर्थः पचिः" इति भाष्यं सङ्गच्छते इति दिक्॥ ७॥

*एवमिति*॥ कर्मवद्भावाऽनुरोधेन करणाऽर्थकरोतेरुत्पत्तिसहितयत्नाऽर्थकत्वाऽभ्युपगमे इत्यर्थः। जानात्यादेरपीत्यादिपदाद् गम्यादिपरिग्रहः। 'आवरणभङ्गादी'त्यादिपदेन तु संयोगादेः सः। आवश्यकमित्यनेन तत्र ज्ञानस्यैव फलत्वाङ्गीकारे तदनाश्रयत्वाद् घटादेः कर्मत्वानुपपत्तिरपि सूच्यते। आवरणभङ्गस्याऽप्यतीतादौ यथा फलत्वं तथा सारे एव सुबर्थनिर्णये वक्ष्यते॥ *सकर्मत्वाऽनापत्तेरिति*॥ स्वार्थफलव्यधिकरणेत्याद्युक्तरूपस्य तत्राऽसम्भवादिति भावः।

वस्तुतस्तु-जानातेर्ज्ञानरूपफलाऽर्थकत्वमेव युक्तम्। "न च कर्तृस्थभावकानां कर्मणि क्रियायाः प्रवृत्तिरस्ति' इति भाष्येण कर्तृस्थभावकानां क्रियाफलस्य कर्ममात्रे वृत्तिर्नास्तीत्यर्थकेन कर्तृकर्मोभयसाधारणफलार्थकत्वं कर्तृस्थक्रियकत्वं वदता कर्ममात्रवृत्तिफलार्थकत्वरूपकर्मस्थक्रियकत्वस्यैवाऽभ्युपगमेन तत्राऽऽवरणभङ्गस्य फलत्वे तत्पक्षे कर्मवद्भावस्य दुर्निवारतापत्तेः। आदृतश्चायमेव पक्षो जानातीत्यादौ ज्ञानेच्छाद्यनुकूलो व्यापार इति शाब्दबोधप्रकारं दर्शयता ग्रन्थकृताऽपि। प्रकृते आशङ्कासमाधाने तु भाष्यहृय्युक्तप्रथमकल्पाऽभिप्रायेणेति सारे स्फुटम्।

न चोक्तकल्पे ज्ञानस्य समवायेन घटादावसत्त्वात्तेषां जानातिकर्मत्वानुपपत्तिः। ज्ञानस्य तदनुकूलव्यापारस्याश्रयतादेश्च सामानाधिकरण्यादकर्मकत्वापत्तिः, कर्तृस्थभावकत्वानुपपत्तिश्चेति वाच्यम्। शास्त्रे ज्ञानम्, घटे ज्ञानमिति प्रतीत्या विषयतया तस्य ज्ञानाश्रयताभ्युपगमेनाद्यदोषस्य फलताऽवच्छेदकसम्बन्धघटितसामानाधिकरण्यघटिताऽकर्मकत्वस्य तत्राऽभावेन द्वितीयस्य विषयतासमवायाभ्यां कर्मकर्त्रुभयवृत्तित्वेनाऽन्त्यदोषस्य वाऽभावात्। अधिकमग्रे वक्ष्यते।

प्रकृतमनुसरामः—*किन्न स्यादिति*॥ क्रियते घटः स्वयमेवेत्यत्र घटस्योत्पत्तिरूपफलाश्रयत्ववदावरणभङ्गरूपफलाश्रयत्वस्यापि सत्त्वादिति भावः। ननु निर्वर्त्यविकार्यकर्मणोः कर्मवद्भावो, न प्राप्यकर्मणीत्यत्र किं मानमतो मूले—*सिद्धान्तोऽत्रेति*॥ अत्र "कर्मवत् कर्मणा तुल्यक्रियः" (पा० सू० ३।१।८७)। इतिसूत्रभाष्ये। तत्र हि "धातोरेकाच" इति सूत्रादनुवर्त्तमानधातुग्रहणेन धातुवाच्यक्रियया इत्यर्थलाभेन "साध्वसिश्छिनत्ति' 'स्थाली पचति' इत्यादौ करणाधिकरणाभ्यां तुल्यक्रिये कर्त्तरि वस्तुतः सतोऽपि व्यापारस्य धातुवाच्यत्वाऽभावादेवाऽनतिप्रसङ्गे कर्मग्रहणमतिरिच्यमानं कर्मस्थक्रियां लक्षयतीति सिद्धान्तो व्यवस्थित इत्यर्थः। कर्मस्थक्रियकत्वं च प्राप्यभिन्नकर्म्मण्येव सम्भवतीति दर्शयितुमादौ वक्ष्यमाणमपि विभागं सुखबोधायाऽऽह—*ईप्सितङ्कर्मेति*॥ यद्यपि द्वेष्याऽऽद्यनीप्सितस्याऽप्येष्वेवान्तर्भावात् कर्म त्रिविधमित्येवं वक्तुं युक्तम्। तथापि हरिणा—

"तयोरैम्यस्त्रिधा मतम् । तच्चेप्सिततमम्"—

इत्यादिना पार्थक्येन विभजनात् तदनुसृत्याऽत्रापि तथैवोक्तमिति ध्येयम् ॥ इत्यादिना पार्थक्येन विभजनात् तदनुसृत्याऽत्रापि ... *वक्ष्यत इति* ॥ *प्राप्यत्वञ्चेति* ॥ आद्ययोर्लक्षणे तु सुबर्थनिर्णये वक्ष्येते ॥ कर्मगतविशेषाधायकक्रियार्थकत्वं कर्मस्थक्रियाकृतविशेषाणामिति कारिकयेत्यर्थः । कर्मगतविशेषाधायकक्रियार्थकत्वं कर्मस्थ-क्रियकत्वं कर्मवद्भावप्रयोजकमिति दर्शयितुं तदन्वयव्यतिरेकौ दर्शयति—*न हीत्यादि* ॥ *सोमं सुनोतीति विकार्य्यं इति* ॥ नन्वाद्ययोः कर्मस्थक्रियकत्वेन कर्मवद्भावविषयत्वेऽपि तत्र कथं सोमं सुनोतीत्यस्य विकार्य्यलक्षणाक्रान्तत्वम् । प्रकृतेः सोमस्य परिणामित्वाऽनवगमात् । तदुक्तम्—प्रकृतेस्तु विवक्षायां विकार्य्यम्' इति । विवक्षायामित्यस्य परिणामित्वेनेत्यादिरिति चेदित्थं चूर्णीकरणरूपाऽभिषवैकदेशचूर्णं प्रति प्रकृतिसोमस्य परिणामित्वविवक्षया तदुपपत्तिः ।

अन्ये तु—क्रिया यद्धर्मनाशकं फलं जनयति तद्विकार्य्यमिति लक्षणाऽभिप्रायेण सोमे विकार्य्यत्वनिर्देशः । तथा हि—आरम्भकसंयोगनाशकविभागानुकूला क्रिया सुनोते-रर्थः । सोमपदं च प्रकृते तदवयवे लाक्षणिकम् । तथा च सोमावयवरूपसोमपदाऽर्थ-वृत्त्यारम्भकसंयोगस्य धात्वर्थक्रियाजन्यविभागेन नाशाद्विकार्य्यत्वोपपत्तिरित्याहुः ।

*ज्ञातुं शक्यमिति* ॥ एतेन क्रियाकृतविशेषधर्मप्रकारकप्रतीतियोग्यत्वं कर्म-वद्भावप्रयोजकमित्युक्तं भवति । प्राचीननैयायिकमते तु प्रकृते कृञ उत्पत्तिरूपफला-वच्छिन्ने यत्ने लक्षणया कर्मवद्भावोपपत्तिः ॥ *नोक्तातिप्रसङ्ग इति* ॥ न कर्म-वद्भावापत्तिरित्यर्थः ।

प्राचीननैयायिकमते तु ज्ञानं करोतीत्याद्यप्रयोगात् साध्यत्वे फले यत्ने च कृञः शक्तिरेव । तथा च घटादौ साध्यत्वरूपविशेषधर्मप्रकारकप्रतीतेः सार्वजनीनत्वात्, तादृशप्रतीतियोग्यतायास्तत्राऽनपायादनायासेनैव कर्मवद्भावोपपत्तिः । यदि च कर्तृ-गतविशेषाऽऽधायकक्रियार्थकत्वं तत्स्थक्रियकत्वमिति लक्षणे पच्यादिकर्त्तरि श्रमरूप-विशेषदर्शनाज्जानात्यादिकर्त्तरि तददर्शनाच्चाऽतिव्याप्त्यादिदोषादुक्तभाष्येण—

विशेषदर्शनं यत्र क्रिया तत्र व्यवस्थिता ।
क्रियाव्यवस्था त्वन्येषां शब्दैरेव प्रकल्पिता ॥

इति हरिकारिकोत्तरार्द्धेन च पूर्वोक्तलक्षणयोरेव निर्भरः प्रतीयते इत्युच्यते; तदा-ऽपि न क्षतिः । कर्मस्थक्रियकलक्षणे जानात्यादिभिन्नत्वस्य षोपदेशलक्षणे ष्वष्काद्य-न्यतमत्वस्येव कर्तृस्थक्रियकलक्षणे जानात्याद्यन्यतमत्वस्यापि निवेशेन करोतौ कर्म-स्थक्रियकत्वस्य जानात्यादौ कर्तृस्थक्रियकत्वस्य चोपपत्तेः । अत एव हरिणाऽपि 'शब्दैरेव प्रकल्पिता' इत्यत्र शब्दपदमुपात्तम् । शब्दप्रतिपाद्याऽर्थगतविशेषैः शब्दैश्चे-ति तदर्थादिति । दर्शनान्तरीयां युक्तिमुपन्यस्यति—*धातूनामिति* ॥ त्यजिगम्यो-रित्युपलक्षणं तादृशधातुमात्रस्य ॥ *पर्यायतापत्तिरिति* ॥ तच्छक्यताऽवच्छेदकाऽव-च्छिन्नशक्तत्वस्यैव पर्य्यायतापदार्थत्वादिति भावः ।

ननु त्यजिगम्योः क्रमेण विभागसंयोगोपलक्षितव्यापारार्थकत्वम्, एवञ्च पर्य्यायलक्षणे तदुपलक्षणेतरानुपलक्षितत्वस्याऽपि विशेषणान्नोक्ताऽऽपत्तिरत आह-*उपलक्षणत्वेऽपीति* । उपलक्षणत्वं च तत्पदजन्यबोधविषयत्वेन शक्त्यविषयत्वे सति शक्तिविषयत्वम् । *जनकत्वादिति* ।। तथा च संयोगविभागयोः स्वार्थव्यापारजन्यत्वाऽविशेषाद् गम्यर्थव्यापारे संयोग एवोपलक्षणम्, नो विभाग इत्यत्र विनिगमकाऽभावादुभयस्यैवोपलक्षणत्वे उक्तापत्तिर्दुर्वारेति फलेऽपि शक्तिरावश्यकीति भावः । अत्र 'ग्रामं गच्छतीत्यादौ द्वितीयाऽर्थसंयोगादिरूपफलाऽन्वयित्वस्यैव विनिगमकत्वाद् गमनक्रियायां संयोगस्यैवोपलक्षणत्वमित्यस्य सुवचतयाऽन्यत्र लक्षणयोपपत्तेश्च नोक्तरीतिः साध्वीत्यस्वरसोऽपि वदन्तीभ्यां सूचितः । उपसंहरति—*तस्मादिति* ।। उक्तयुक्तिसंहतेरित्यर्थः ।

*निर्विवादमेवेति* ।। स्वार्थफलसमानाऽधिकरणव्यापारवाचकत्वरूपाऽकर्मकत्वस्य धातोः फलवाचकत्वं विनाऽनुपपन्नत्वादिति भावः । ननु सकर्मकत्वं पूर्वोक्तमेव; तद्भिन्नधातुत्वं चाऽकर्मकत्वमिति नोक्ताऽनुपपत्तिरत आह—*भू सत्तायामिति* ।। गणेषु फलस्यैव निर्देशादिति भावः ।। *अत एवेति* ।। धातुमात्रस्य फलवाचकत्वादेवेत्यर्थः ।। *द्व्यर्थ इति* ।। द्व्यर्थपदं फलव्यापारोभयार्थकमित्याशयः । ननु 'द्व्यर्थः पचिः' इति भाष्यं पचेरुपादानात्सकर्मकाणां फलार्थकत्वे साधकमस्तु, न त्वकर्मकाणामत आह—*दिगिति* ।। तथा सति सत्ताद्यर्थनिर्देशवैयर्थ्याऽऽपत्तेः । धातुसामान्यशक्त्या पच्यादेरिव भवत्यादेरपि व्यापारबोधसम्भवादिति दिगर्थोऽवसेयः ।। ७ ।।

अर्थ—एवम् = उत्पत्ति सहित यत्न को कृञ् धात्वर्थ मानने पर कृञ् के समान ज्ञाधातु का विषयनिष्ठ आवरण भङ्गानुकूल व्यापार अर्थ मानना आवश्यक है। ऐसा नहीं मानने पर ज्ञाधातु सकर्मक नहीं होगी। ऐसा स्वीकार करने पर आवरण भङ्ग रूप फल घट में होने के कारण 'ज्ञायते घटः स्वयमेव' ऐसा प्रयोग क्यों नहीं होता। इसी प्रकार 'ग्रामो गम्यते' स्वयमेव इत्यादि प्रयोग भी होना चाहिये इस प्रकार की आशङ्का को मन में रखकर लिखते हैं—

'निर्वर्त्ये च' इत्यादि ।

निर्वर्त्य और विकार्य कर्म में कर्मवद्भाव इष्ट एवं प्राप्य कर्म में अनिष्ट है ऐसा सिद्धान्त यहाँ निश्चित किया गया है।

ईप्सित कर्म तीन प्रकार का है—निर्वर्त्य विकार्य और प्राप्य। इनमें निर्वर्त्य और विकार्य कर्म में कर्मवद्भाव होता है प्राप्य कर्म में नहीं होता। क्रिया कृत विशेष (वैलक्षण्य) जहाँ प्रतीत नहीं होता है उसको प्राप्य कर्म कहते हैं। सुवर्थनिर्णय[1] में इसके स्वरूप का विवेचन किया जायगा।

इस घट को किसी ने देखा एवं इस ग्राम में कोई गया इस प्रकार का निश्चय घट तथा ग्राम को देखकर नहीं किया जा सकता है। 'घटं करोति' यह निर्वर्त्य कर्म तथा

---

१. 'क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते' इत्यादिकारिकायाम् ।

सोममभिषुणोति' यह विकार्य कर्म है इन उदाहरणों में वैलक्षण्य जाना जा सकता है। अतः इनको प्राप्यकर्म नहीं कहा जाता। इसी प्रकार दृश् आदि धातु के घटादि प्राप्य कर्म नहीं होने के कारण उसमें कर्मवद्भाव की अतिप्रसक्ति नहीं है।

धातुओं को फलवाची स्वीकार नहीं करने पर त्यज् और गम् इन दोनों धातुओं की पर्यायता हो जायगी। क्योंकि दोनों धातुओं में व्यापार वाचित्व समान हैं।

यदि ऐसा कहें कि विभाग से उपलक्षित व्यापार त्यज् धातु का एवं संयोग से उपलक्षित व्यापार गम् धातु का अर्थ है तो गम् धात्वर्थ व्यापार से ही संयोग एवं पूर्व देश विभाग उत्पन्न होने से पूर्वोक्त दोष पूर्ववत् बना हुआ है ऐसा भी कहते हैं।

इसलिये सकर्मक धातुओं का फल अर्थ मानना आवश्यक है। अकर्मक धातुओं की फलवाचकता निर्विवाद है। 'भू सत्तायाम्' इस अनुशासन से भी अकर्मक का फलवाचकत्व सिद्ध है। अत एव पच् का दो अर्थ हैं इस आशय का भाष्य भी सङ्गत होता है।

हिन्दी भाष्य—ज्ञा धातु का विषय निष्ठ जो आवरणभङ्ग तदनुकूल व्यापार अर्थ मानने से सकर्मकत्व की उपपत्ति होती है। ज्ञानानुकूलव्यापार अर्थ मानने पर समवाय सम्बन्ध से ज्ञान गुण होने के कारण आत्मनिष्ठ होगा। व्यापार भी आत्मनिष्ठ है। अतः फल समानाधिकरण व्यापार होने से अकर्मकत्व की प्रसक्ति हो जायगी। विषयावच्छिन्न आवरणभङ्ग लिखने से अवच्छेदकता सम्बन्ध से आवरणभङ्ग विषयनिष्ठ सूचित होता है। धात्वर्थ आवरणभङ्ग है। विषयावच्छिन्न यह स्वरूप का प्रदर्शनमात्र है।

ज्ञानात्मक चैतन्य अविद्या = अज्ञान द्वारा आवृत होने से घटपटादि विषय का उसमें अध्यास (अन्य में अन्य का भान) होता है। आवरण शक्ति के द्वारा चैतन्य का आवरण, एवं विक्षेप शक्ति से स्वाश्रित का विविधरूप से भान होता है। वस्तुतः घटपटादि विषय नहीं है।

तैजस अन्तःकरण चक्षुरादि इन्द्रियों के द्वारा बहिर्गत होकर तत् तत् विषयों के आकार में परिणत होता है। जिस प्रकार नाली से बहता जल क्यारी में आकर उसके आकारानुरूप परिणत हो जाता है। उसकी ऋजुता वक्रता आदि का भी अनुसरण परिणममान जल करता है। उसी प्रकार अन्तःकरण का विषयाकार परिणाम होता है। इसी परिणाम को वृत्ति कहते हैं। इस वृत्ति के द्वारा चैतन्य के आवरण की निवृत्ति हो जाने से अनावृत विषयावच्छिन्न चैतन्य का स्फुरण होता है। विक्षेप शक्ति की निवृत्ति न होने के कारण अयं घटः अयं पटः इत्यादि अध्यस्त रूप से ही प्रतीति होती है। वृत्ति से अवच्छिन्न चैतन्य तथा अध्यस्त विषयावच्छिन्न चैतन्य के तादात्म्य होने से घटादि ज्ञान का व्यवहार है। अविद्या का विषय एवं आश्रय चैतन्य[1] है।

इस प्रकार चैतन्य में आवरण और उसका ध्वंस होने से विषय में नहीं है किन्तु घटादि विषयावच्छेदेन आवरणभङ्ग है अन्य विषयावच्छेद से उसका भङ्ग नहीं है। अतः अवच्छेदकतया आवरणभङ्ग विषय में है यह ग्रन्थ का आशय है।

शङ्का—आवरणभङ्गरूपफल वर्तमान घटपटादि विषय में ही रह सकता है अतीत एवं अनागत विषय का तो अभाव है अतः वह किसी का आश्रय नहीं हो सकता। ऐसी

१. आश्रयत्वविषयत्वभागिनी निर्विभागचितिरेव केवला। सं. शा.

अवस्था में 'अतीतं घटं स्मरामि, भाविनं घटं जानामि' इत्यादि प्रयोग की अनुपपत्ति होगी।

समाधान—अतीत तथा अनागत भी आवरणभङ्ग का आश्रय है। ऐसा न मानने पर 'यथापूर्वं जानामि'=पूर्वज्ञान के अनुसार जानता हूँ। पूर्वज्ञान में जिन विषयों का भान हुआ था, वे सब विषय इस स्मृति रूप ज्ञान में भी भासित होते हैं। पूर्वज्ञान घट की वर्तमानता दशा में आवरणभङ्ग का जनक होने से आवरणभङ्ग को विषय करता है। अतीत घट आवरण भङ्ग का आश्रय न होने से स्मृतिज्ञान आवरणभङ्ग का जनक नहीं है। एवं तद् विषय का भी अवगाहन न होने से पूर्व ज्ञान के समान स्मृति ज्ञान नहीं है अतः 'यथापूर्वं जानामि' इस प्रयोग की उपपत्ति के लिये अतीत और अनागत में भी आश्रयता माननी चाहिये।

अतीत और अनागत में भी आश्रयता मानने पर ही विषयता सम्बन्ध से ज्ञानाश्रय अतीत घट के होने से अतीतं घटं जानामि इत्यादि प्रयोगों की उपपत्ति नैयायिक मत से होती है। अन्यथा अतीत तथा अनागत घट विषयता सम्बन्ध से ज्ञान का आश्रय नहीं होने से फलाश्रयत्व के न रहने के कारण कर्म संज्ञा एवं तन्मूलक द्वितीया विभक्ति नहीं होगी।

शङ्का—विभागोपलक्षित व्यापार त्यज् का संयोगोपलक्षित व्यापार गम् का अर्थ मान लेने पर उक्त धातुओं की पर्यायता सिद्ध नहीं हो सकती।

यद्यपि तच्छक्यतावच्छेदकावच्छिन्न शक्तत्व रूप पर्यायता है। अर्थात् उसकी शक्यता के अवच्छेदक से अवच्छिन्न उस से निरूपित जो शक्तता वही पर्यायता है।

तथापि तदुपलक्षकेतर से अनुपलक्षितत्व का भी पर्यायता लक्षण में निवेश करने से पर्यायता की आपत्ति नहीं है। दोनों धात्वर्थों के उपलक्षण में भेद है। तदुपलक्षण से यदि विभाग का ग्रहण हो तो उससे भिन्न संयोग है। उससे उपलक्षित गमधात्वर्थ व्यापार है अनुपलक्षित नहीं है अतः पर्यायतापत्ति रूप दोष नहीं है, यह भाव है।

समाधान—एक ही व्यापार पूर्वदेश विभाग तथा उत्तर देश संयोग का जनक है। अतः दोनों में गम् धात्वर्थव्यापारजन्यता समान होने से गम् धात्वर्थव्यापार में संयोग उपलक्षण[1] है विभाग नहीं है इस में विनिगमक=अन्यतर साधक प्रमाण नहीं होने के कारण दोनों ही उपलक्षक होंगे, अतः पर्यायतापत्ति दुर्निवार है।

---

१. अविद्यमान रहकर दूसरे की व्यावृत्ति करने वाला उपलक्षण होता है। जिस प्रकार 'काकवन्तो देवदत्तस्य गृहाः'—काकवाला देवदत्त का घर है। यहाँ पर काक उपलक्षण है विशेषण नहीं है। क्योंकि काक गृह का स्थिर चिह्न नहीं है। उसके उड़ जाने पर भी अन्य गृहों से इस गृह की काक द्वारा व्यावृत्ति होती है। अतः अविद्यमान भी काक गृहान्तर का व्यावर्तक होने से उपलक्षण माना जाता है।

विशेष्य मे रहकर ही दूसरे का व्यावर्तक है वह विशेषण है। जैसे 'नीलो घटः' यहाँ नील विशेषण है उपलक्षण नहीं। क्योंकि नील विद्यमान होकर ही रक्त पीत आदि घट की व्यावृत्ति करता है। प्रकृत में त्यज् गम् आदि धातुजन्य बोध विषयत्व रूप से शक्ति विषय न होकर भी अन्य व्यापार की व्यावृत्ति करता है। अतः संयोगविभाग को त्यज् गम् का क्रमशः उपलक्षण माना गया।

फल और व्यापार दोनों धात्वर्थ हैं इस में 'द्व्यर्थः पचिः' यह भाष्य भी प्रमाण है। फल और व्यापार की दृष्टि से भाष्य में द्व्यर्थ पद का उपादान किया गया है।

यद्यपि 'तुण्डुलान् ओदनं पचति' यहां तण्डुल विकृति और ओदन निर्वर्त्य कर्म के निर्वाहार्थ पच् का उत्पत्ति एवं विकृति ये दो अर्थ माने गये हैं। इसी में 'द्व्यर्थः पचिः' इस भाष्य का तात्पर्य है फल और व्यापार रूप अर्थ द्वय में नहीं। अतः उक्त भाष्य वचन से फल व्यापारोभय वाचकत्व धातु में सिद्ध नहीं हो सकता। तथापि एक ही व्यापार उत्पत्ति और विकृति फल के जनक होने से एक ही व्यापार धात्वर्थ होगा, न कि व्यापार द्वय। ऐसी दशा में धात्वर्थ फल को नहीं मानने वाले के मत में दो अर्थ पच् का है इस भाष्य की असङ्गति दुष्परिहार ही है। अतः भाष्य सङ्गति के लिये फल और व्यापार दोनों को धात्वर्थ मानना युक्ति-युक्त है।

शङ्का—ज्ञा धातु का ज्ञानानुकूल व्यापार अर्थ के स्वीकार करने पर व्यापार को आश्रयता रूप अथवा आत्ममनः=संयोग रूप लिया जायगा। इसी प्रकार चक्षुरादि इन्द्रिय और मनका संयोग भी ज्ञान के अनुकूल=जनक व्यापार होगा। एवंभूत संयोग रूप व्यापार का आश्रय चक्षु आदि भी है। अतः 'चक्षु जानाति' ऐसा प्रयोग भी प्राप्त होगा।

समाधान—स्थाली पचति के समान चक्षुर्गत व्यापार की धात्वर्थ रूप से विवक्षा करने पर तथाविध रूप इष्ट ही है।

भूसत्तायाम् इत्यादि स्थल में फल के निर्देश से फल को धात्वर्थ मानना आवश्यक है इत्यादि विचार दिग् के उल्लेख से सूचित होता है ॥ ७ ॥

एवं सिद्ध्यतु फलव्यापारयोर्वाच्यत्वम्; किन्तु आख्यातवाच्यैव सा भावना, न धातोः। प्राधान्येन प्रतीयमानस्य व्यापारस्य धात्वर्थतायाः प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्य प्राधान्यमिति न्यायविरुद्धत्वात्। "तदागमे हि दृश्यते" इति न्यायविरुद्धत्वाच्च। एवञ्च 'स्वयुक्ताख्यातार्थव्यापारव्यधिकरणफलवाचकत्वं सकर्म्मकत्वम्। आख्यातार्थव्यापाराश्रयत्वञ्च कर्तृत्वं वाच्यम्' इत्यादि वदन्तं मीमांसकम्मन्यं प्रत्याह—

तस्मात् करोतिर्धातोः स्याद् व्याख्यानं न त्वसौ तिङाम्।
पक्ववान् कृतवान् पाकं किं कृतं पक्वमित्यपि ॥ ८ ॥

तस्मात्—अभिप्रायस्थहेतोः। सचेत्थम्—फलमात्रस्य धात्वर्थत्वे ग्रामो गमनवानिति प्रयोगापत्तिः संयोगाश्रयत्वात्। फलानुत्पाददशायां व्यापारसत्त्वे पाको भवतीत्यनापत्तिः। व्यापारविगमे फलसत्त्वे पाको विद्यत इत्यापत्तिश्च।

यत्तु—भावप्रत्ययस्य घञादेरनुकूलव्यापारवाचकत्वान्नानुपपत्तिरिति; तन्न। कर्त्राख्यातवत् "कर्त्तरि कृद्" इत्यत एव तद्विधानलाभे, भावे विधायकाऽनुशासनवैयर्थ्यापत्तेः, तद्विरोधापत्तेश्च।

अथ व्यापारोऽपि धात्वर्थ इत्यभ्युपेयमिति चेद्? तर्हि धातुत एव

सकलव्यापारलाभसम्भवेनाख्यातस्य पृथक्शक्तिकल्पने गौरवमिति। पचतीत्यस्य पाकं करोतीति विवरणात्मा करोतिर्धातोरेव व्याख्यानं-विवरणम्। अतस्तदपि नाख्यातार्थत्वसाधकमिति भावः। मीमांसकोक्तं बाधकमुद्धरँस्तन्मतं दूषयति-न त्वित्यादिना। नाऽसौ तिङां व्याख्यानं पक्ववानित्यादावनन्वयापत्तेः।

अयं भावः—"प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यम्" इत्यत्र हि विशेष्यतया प्रकृत्यर्थप्रकारकबोधं प्रति तदुत्तरप्रत्ययजन्योपस्थितिर्हेतुरिति कार्य्यकारणभावः फलितः। तथा च पक्ववानित्यत्र पाकः कर्म्मकारकम्, क्तवतुप्रत्ययार्थः कर्तृकारकम्।। तयोश्चारुणाधिकरणोक्तरीत्या वक्ष्यमाणाऽस्मद्रीत्या चान्वयासम्भव इति प्रकृतिप्रत्ययार्थयोरन्वयनियमस्यैवाऽभावे क्व प्राधान्यबोधक उक्तकार्य्यकारणभावः। न च—

सम्बन्धमात्रमुक्तश्च श्रुत्या धात्वर्थभावयोः।
तदेकांशनिवेशो तु व्यापारोऽस्या न विद्यते॥

इति भट्टपादोक्तरीत्यासम्बन्धसामान्येन कारकाणामन्वयः शङ्क्यः। योग्यताविरहाद् अन्वयप्रयोजकरूपवत्त्वस्य तथात्वात्। क्रियात्वमेव हि कारकान्वयितावच्छेदकमिति वक्ष्यते। तदेतदाविष्कर्तुं विवरणेन धात्वर्थक्तवत्वर्थयोः कर्मत्वकर्तृत्वे दर्शयति-*कृतवान् पाकमिति*॥

वस्तुतस्तु प्रत्ययार्थः प्रधानमित्यस्य यः प्रधानं स प्रत्ययार्थ एवेति वा, यः प्रत्ययार्थः स प्रधानमेवेति वा; नार्थः। अजा, अश्वा, छागी इत्यत्र स्त्रीप्रत्ययार्थस्त्रीत्वस्यैव प्रधान्यापत्तेश्छाग्यादेरनापत्तेश्च। किन्तूत्सर्गोऽयम्। विशेष्यत्वादिना बोधस्तु तथा व्युत्पत्त्यनुरोधात्।

अत एव नैयायिकानां प्रथमान्तविशेष्यक एव बोधः। लक्षणायामालङ्कारिकाणां शक्यतावच्छेदकप्रकारक एव बोधो, न नैयायिकादीनाम्। घटः कर्म्मत्वमानयनं कृतिरित्यादौ विपर्य्ययेणापि व्युत्पन्नानां नैयायिकनव्यादीनां बोधो, न तु तद्व्युत्पत्तिरहितानाम्। (अन्येषां तन्निराकाङ्क्षमेवेत्यादिकं सङ्गच्छते।

अत एव "प्रधानप्रत्ययार्थवचनमर्थस्यान्यप्रमाणत्वाद्" (पा० सू० १।२।५४) इत्याह भगवान् पाणिनिः। प्रधानं प्रत्ययार्थ इति वचनं न इत्यनुवर्त्य न कार्य्यम्, अर्थस्य—अर्थावबोधस्यान्यप्रमाणत्वाद् व्युत्पत्त्यनुसारित्वादिति हि तदर्थः। एवं सत्यपि नियामकापेक्षणे च "भावप्रधानमाख्यातम्" इति वचनमेव गृह्यतामिति सुधीभिरूह्यम्।

'तदागमे हि' इति न्यायो विवरणश्चाऽतिव्याप्तमित्याह-*किं कृतम्, पक्वमिति*॥ कृत्वा विवरणं प्रतीतिश्च पक्वमित्यत्रापि, इति तत्रापि भावना

वाच्या स्यादिति भावः। नन्वस्तु तिङ इव कृतामपि भावना वाच्येत्यत आह—*अपीति* ॥ तथा चोभयसाधारण्येन तत्प्रतीतेरुभयसाधारणो धातुरेव वाचक इति भावः। भवद्रीत्या प्रत्ययार्थत्वात् प्राधान्यापत्तिश्चेति द्रष्टव्यम् ॥ ८ ॥

ननु 'व्यापारो भावना सैव' इत्युक्तविवरणेन न व्यापारस्य धात्वर्थतानिर्णयः। पचति पाकं करोतीति विवरणेन आख्यातार्थताया अपि वक्तुं शक्यत्वादिति मीमांसकाशङ्कासमाधानपरतया मूलमवतारयति—*एवमित्यादिना* । *वाच्यत्वमिति*। तिङन्तजन्यबोधविषयत्वमित्यर्थः। तथा च—पाकाऽनुकूला भावनेत्यादिविवरणेनाऽपि पचतीत्यस्य पाकाऽनुकूलभावनाबोधकत्वमस्त्वित्यर्थः। यथाश्रुते विवरणेन धातोर्भावनावाचकत्वनिर्णये, 'किं त्वाख्यातवाच्यैव सा' इत्युत्तरग्रन्थाऽसङ्गतेः।

'प्रकृतिप्रत्ययौ'इति न्यायस्य संख्यादौ व्यभिचारमाशङ्क्याह—*तदागमे हीति* ॥ इदं च यः प्रधानं स प्रत्ययार्थं इति न्यायाऽऽकार इत्यभिप्रेत्य तन्मूलसूत्रालोचने तु यः प्रत्ययार्थः स प्रधानमिति न्यायाकारो लभ्यते। तथा हि—'पशुना यजेत' इति श्रूयते। तत्रैकवचनोपात्तमेकत्वं यागे विशेषणमुत प्रकृत्यर्थे इति संशये, पशुपदार्थस्य यागं प्रति गुणत्वात् सम्भावितयावत्पशुकरणेन प्रधानावृत्तौ प्रधानभङ्गापत्त्या यावद्गुणं प्रधानाऽऽवृत्तेरयोगादेकत्वविशिष्टपशोर्विधाने त्वेकत्वस्य पशुविशेषणतया यागाङ्गत्वाऽभावात्तदविवक्षितमेव स्यादित्यर्थकेन, "तत्रैकत्वमयज्ञाङ्गमर्थस्य गुणभूतत्वात्" इति सूत्रेण पूर्वपक्षिते, "शब्दवत्तूपलभ्यते तदागमे हि दृश्यते तस्य ज्ञानं यथाऽन्येषाम्" ( जै० अ० ४ पा० १ सू १५ ) इति सिद्धान्तसूत्रम्। शब्दवत्—शब्दवाच्यम्, यथा भवति तथोपलभ्यते। एकत्वं हि यतस्तदागमे एकवचनसमवधाने दृश्यते। अतस्तस्य प्राधान्येन प्रतीतिर्यथान्येषामरुणादीनामित्यर्थः। यद्वा 'तदागमे' तत्—एकत्वम्। आगमे—एकवचनविधायकागमे "द्व्येकयोः" इत्यत्र। दृश्यते—एकवचनरूपप्रत्ययार्थत्वेन प्रतीयते, अन्येषां करणादीनामिवेत्यर्थः।

एवञ्च समानप्रत्ययोपात्तत्वप्रत्यासत्त्या विभक्त्यर्थकरणाऽन्वितस्याऽरुणाधिकरणन्यायेन प्रथमं क्रियायामन्वयः पश्चात् प्रकृत्यर्थे। तथा च पश्वेकत्वोभयकरणको याग इति बोधेनैकत्वस्य यागाङ्गत्वाऽवगमान्नानेकपशुभिर्याग इति तद्भावः। प्राधान्यं च प्रकृत्यर्थाऽविशेषणत्वमेव, प्रत्ययार्थमादाय न्यायावताराद्यः प्रत्ययार्थ इति भागस्य न्यायघटकत्वम्। प्रकृते आख्याताऽसमवधाने भावनाऽबोधात् तस्याः प्राधान्येन भानमिति तत्सङ्गतिरिति बोध्यम्।

ननु सकर्मकत्वाऽनुगतकर्तृत्वयोर्दुर्वचत्वमेवैतन्मते दूषणमत आह—*एवञ्चेति*। भावनाया आख्यातवाच्यत्वे चेत्यर्थः। तथा चाऽऽरब्धे पाके फलाऽनुत्पत्तिदशायाम्, पाको जातो न वेति प्रश्ने; भविष्यतीत्युत्तराऽनुरोधात् फलमात्रं धातुवाच्यमिति मीमांसकाशयः। हेतोः पूर्वमनुपादानादाह—*अभिप्रायस्थेति*। त्यदादीनां बुद्धिस्थपरामर्शकत्वादिति भावः।

*प्रयोगापत्तेरिति*। भावल्युडन्तगमनपदार्थसंयोगात्मकफलस्य ग्रामे सत्त्वाद् ग्रामः संयोगवानितिवद् ग्रामो गमनवानिति प्रयोगस्य प्रामाण्यापत्तेरित्यर्थः। एवमग्रेऽप्यूह्यम्। *फलाऽनुत्पादेति*। फलानुत्पादे तादृशप्रयोगस्य सर्वाऽननुमतत्वादुक्तम्-*व्यापारसत्त्व इति*।*भवतीत्यनापत्तिरिति*। पाकपदार्थस्य विक्लित्तेरवर्त्तमानत्वादित्यर्थः। फलोत्पाददशायामर्थाऽबाधात्तादृशप्रयोगस्येष्टत्वादाह—*विद्यत इत्यापत्तिश्चेति*। व्यापारांशपरित्यागेन फलमात्रस्य धात्वर्थत्वाऽभिप्रायेण तु भविष्यतीत्युत्तरं पाकमुत्पादयतीति विवरजन्चेति भावः।

*अनुकूलेति*। अनुकूलत्वोत्कीर्त्तनं त्वन्विताऽभिधानवादिनां मतमेतदिति सूचयितुम्। *नानुपपत्तिरिति*। भावविहितल्युड्घञाद्यर्थव्यापारस्य ग्रामादौ बाधान्न पूर्वोक्तप्रयोगापत्तिरित्यर्थः। विक्लित्त्यनुकूलघञाद्यर्थव्यापारस्य कर्तृतया भावनादावन्वयान्न पूर्वोक्तप्रयोगाऽनुपपत्त्यापत्तिरिति भावः।

ननु "कर्त्तरि कृद्" इति विहितस्य कृतः पक्ता पाचक इत्यादौ कर्त्रर्थत्वदर्शनात्तद्विहितघञादीनां व्यापाराऽर्थत्वदौर्लभ्यात्तदर्थत्वबोधनाय भाव इत्यनुशासनचारितार्थ्यमित्याशङ्कामपाकरिष्यंस्तदनुगुणं दृष्टान्तमाह—*कर्त्राख्यातवदिति*। तथा च—"लः कर्मणि" इति विहितकर्त्राख्यातस्य त्वन्मते व्यापाराऽर्थकत्ववत् "कर्त्तरि कृत्" इति विहितघञादीनामपि व्यापाराऽर्थकत्वसम्भवादित्यर्थः।

*विरोधाऽऽपत्तेश्चेति*। चो हेतौ; यतो वैयर्थ्यमतस्तद्विरोधापत्तिरित्यर्थः। उक्तिवैचित्र्यमेतत्। यद्वा भावविहितप्रत्ययानां धात्वर्थानुवादकत्वात् प्रयोगसाधुतामात्रार्थकत्वमिति त्वदीयसिद्धान्तविरोधापत्तेरित्यर्थः। व्याख्यानमित्यस्य विवरणम्—*विवरणमिति*।

*अतस्तदपीति*। पचतीत्यस्य पाकं करोतीति विवरणमपीत्यर्थः। अपिना दूषयिष्यमाण "प्रकृतिप्रत्ययौ" इति न्यायसमुच्चयः। धातोः पृथग्विवरणं तु तवाऽऽख्यातार्थसंख्याकालव्यापाराणां मध्ये व्यापारस्य कृञा संख्यादेस्तदुत्तरतिङा विवरणवद्धात्वर्थव्यापारस्याऽप्युपपन्नमिति न तदाख्यातार्थत्वसाधकम्। अत एव "कथं ज्ञायते क्रियावचनाः पच्यादयः; यदेषां करोतिना सामानाधिकरण्यम्, किं करोति पचति" इति भूवादिसूत्रभाष्ये उक्तम्। तेन विवरणमपि धातोरेवेति स्पष्टमेव बोध्यते इति भावः। पक्ववानिति मूलमपि करोतेराख्यातविवरणत्वाऽभावसाध्यतया व्याचष्टे—*पक्ववानित्यादाविति*। अनन्वयमेव विशदयति—*अयम्भाव इत्यादि*।

*सहार्थमिति*। सम्बद्धार्थमित्यर्थः। ब्रूतः—बोधयतः। तयोः प्रकृतिप्रत्ययाऽर्थयोर्मध्ये प्रत्ययाऽर्थः प्रत्ययवृत्तिग्रहविशेष्यः प्रधानमिति प्रकृत्यर्थप्रकारतानिरूपितविशेष्यताशालीत्यर्थः। तादृशव्युत्पत्तिसिद्धिकार्य्यकारणभावमभिनयेन दर्शयति—*विशेष्यतयेति*। प्रत्ययस्य प्रकृत्यर्थप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधं प्रतीत्यर्थः। हेतुरित्यस्य विशेष्यतासम्बन्धेनेति शेषः।

*अरुणाधिकरणोक्तरीत्येति* । अरुणयेति पदोपात्ताऽऽरुण्यस्य प्रथमं करणत्वेनेतरक्रियायामन्वयः; नामार्थाऽन्वयस्तु पाष्ठिक इति तत्रोक्तम् । *वक्ष्यमाणेति* । कारकत्वस्य क्रियाजनकत्वरूपत्वेन क्रियाजनकमिति ज्ञाते, का सा क्रियेत्याकाङ्क्षोदयेन क्रियाया अपि साध्यरूपायाः साधकाकाङ्क्षया च परस्पराऽन्वयौचित्यमित्याशयेन क्रियात्वमेव हि कारकाऽन्वयिताऽवच्छेदकमिति सुबर्थनिर्णये वक्ष्यमाणरीत्येत्यर्थः । *सम्बन्धमात्रमिति* "ज्योतिष्टोमेन यजेत" इत्यत्र यजेतेति श्रुत्या धात्वाख्यातार्थयागभावनयोः सम्बन्धसामान्यं प्रतिपाद्यते । तयोः क्रियाकारकभावरूपसम्बन्धविशेषबोधने तु नाऽस्याः श्रुतेः कश्चिदभिधादिरूपो व्यापारस्तद्वाचकपदाऽभावादिति तदर्थः । तथा च यजेतेत्यत्र यागसम्बन्धिभावनेति बोधः, न यागकरणकभावनेति, तद्वत्प्रकृते पाकसम्बन्धी कर्त्तेति बोधः । कर्मत्वादिना तत्संसर्गकबोध एव क्रियाया अपेक्षणादित्याशङ्कितुराशयः । फलस्य कारकत्वेनाऽयोग्यत्वात्तादृशाऽन्वयबोधोऽप्यसम्भवदुक्तिक इत्याह-*योग्यताविरहादिति* ।

ननु तत्पदार्थे तत्पदार्थवत्त्वं योग्यता, अस्ति च सा प्रकृते, पाकप्रयोजकत्ववत्पाकसम्बन्धित्वरूपा कर्तुरत आह-*अन्वयप्रयोजकरूपवत्त्वस्येति* ॥ तथाच तत्पदार्थे तत्पदार्थताऽवच्छेदकावच्छिन्नत्वस्यैव योग्यत्वे जलाहरणे घटकरणत्वस्य सत्त्वात्तस्मिन् सुषिरघटस्यापि करणत्वेनाऽन्वयापत्तिः । अस्मन्मते तु सच्छिद्रेतरघटस्य जलाऽऽहरणाऽन्वयप्रयोजकत्वेन तादृशघटे तादृशाहरणान्वयप्रयोजकत्वमिति न तदन्वयापत्तिरिति भावः ।

ननु 'घटेन जलमाहर' इत्यत्र घटे छिद्रेतरघटत्ववत् प्रकृते किं कारकान्वयितावच्छेदकं यदभावादनन्वयापत्तिरुद्भाव्यतेऽत आह—*क्रियात्वमेव हीति* ।

ननु कृदर्थकर्त्राक्षिप्तभावनायां पाकादीनां कर्मत्वेनान्वयसौलभ्यान्नोक्तदूषणमत आह-*वस्तुतस्त्विति* ॥ प्रधानप्रत्ययार्थवचनमिति सूत्रस्वरसो यः प्रधानं स प्रत्ययार्थः । 'तदागमे हि' इति न्यायश्च, यः प्रत्ययाऽर्थं इत्यर्थे मूलमिति ध्येयम् । अजेत्यादौ विशेष्याजादिपदार्थस्य प्रत्ययार्थत्वाऽभावेन व्यभिचारस्य स्फुटत्वात् तदुपेक्ष्य द्वितीयकल्प एव व्यभिचारं दर्शयति—*अजेति* ॥

इष्टापत्तावाह-*छाग्यादेरिति* ॥ स्त्रीत्वविशेषणछाग्यादेश्छागनिष्ठस्त्रीत्वादेरिति वाऽर्थः । एकत्र विशेषणतयाऽन्वितस्यापरत्र विशेषणतयाऽन्वये नैराकाङ्क्ष्येण छागीमानयेत्यादौ कर्मत्वादिकारके छागी गच्छतीत्यादौ छागनिष्ठस्त्रीत्वस्य छागीपदार्थस्यायोग्यतयाऽऽख्यातार्थकर्तरि वाऽनन्वयापत्तेश्चेति भावः । छाग्यादेरनापत्तेश्चेति पाठे प्राधान्यानापत्तेरित्यर्थः ।

ननु सा व्युत्पत्तिरपार्थैव स्यादत आह-*किन्त्विति* । तथा च तादृशव्युत्पत्तेः कृत्तद्धितमात्रविषयकत्वं न प्रत्ययमात्रविषयकत्वमिति न तद्बलाद् व्यापारस्याख्यातार्थत्वमिति भावः । ननु कथं तर्हि व्यापारविशेष्यको बोधोऽत आह—*विशेष्यत्वादिनेति* । तथा च व्युत्पत्त्यनुसारी बोधः, न तु बोधानुसारिणी व्युत्पत्तिः । एवञ्च

तादृशव्युत्पत्त्यङ्गीकर्तृणां तथैव बोधोऽन्यादृग्व्युत्पत्तिमतां त्वन्यथापीति भावः। तदेव विशदयति—*अत एवेति*। *शक्यताऽवच्छेदकप्रकारक इति*॥

'लक्षणाऽऽरोपिता क्रिया' इति काव्यप्रकाशीयसूत्रपर्यालोचनया शक्यतावच्छेदकारोपविषयनिष्ठसंसर्गस्यैव लक्षणात्वलाभाद्, 'गङ्गायां घोष' इत्यत्र गङ्गात्वेनैव लक्ष्यार्थप्रतीतिरत एव ततो वैयञ्जनिकी शैत्यपावनत्वादिप्रतीतिः। 'जाता लता हि शैले' इत्यादौ च कनकलतात्वेनैव रूपेण बोधस्य चमत्काराऽऽधायकत्वादिति तदाशयः॥

*नैयायिकादीनामिति*। सम्बन्धितावच्छेदकरूपेणैव लक्ष्यार्थस्य भानम्। अत एव 'कचतस्त्रस्यति वदनम्' इत्यादौ सम्बन्धितावच्छेदकराहुत्वादिनैव बोधस्य त्रासाऽऽधायकस्योपपत्तिः। कचत्वादिशक्यतावच्छेदकरूपेण लक्ष्याऽर्थबोधाङ्गीकारे तदनुपपत्तिः स्पष्टैव। किञ्च शक्यतावच्छेदकं न लक्ष्यतावच्छेदकम्। "शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा" इत्यभियुक्तोक्तिविरोधादिति तद्भावः॥

*घटः कर्मत्वमिति*। नव्यमते एकपदेऽपरपदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वस्याकाङ्क्षात्वोपगमेन घटपदे कर्मत्वपदव्यतिरेकप्रयुक्तान्वयाननुभावकत्वज्ञानदशायां तादृशवाक्यात्तैः शाब्दबोधाऽभ्युपगमादित्यभिप्रेत्य नव्यानामित्युक्तम्। निराकाङ्क्षमित्यस्याऽऽधेयतासंसर्गेण बोधे इति शेषः। *अत एवेति*। बोधस्य व्युत्पत्त्यनुसारित्वादेवेत्यर्थः। *व्युत्पत्त्यनुसारित्वादिति*। कार्यकारणभावग्रहाधीनत्वादित्यर्थः। बोधानुसारिणी हि व्युत्पत्तिर्न हि बोधो व्युत्पत्त्यनुसारी। अत एवारोपे सति निमित्ताऽनुसरणम्, न तु निमित्तमस्तीत्यारोप इति प्रामाणिकाः।

अर्थस्य विशेष्यत्वादिना प्रतीयमानस्य अन्यप्रमाणत्वात् स्वविशेषणीभूतप्रतीत्यनुरोधकव्युत्पत्तिकत्वादित्यर्थः। 'प्रधानं प्रत्ययार्थः' इति नियमस्य पाणिनिनाऽनादृतत्वेऽपि, 'यो: यः प्रत्ययार्थः स प्रधानम्' इत्यर्थस्य, 'तदागमे हि' इति सूत्रयता जैमिनिनाऽऽदृतस्याऽदुष्टत्वादाख्यातार्थतयैव व्यापारस्य प्राधान्यम्। टाबादीनां द्योतकत्वेन संख्यावाचकत्वेऽपि प्रत्ययजन्योपस्थितौ संख्याद्यवृत्तित्वस्य विशेषणाच्चोक्तकार्यकारणभावस्य निर्दुष्टत्वादित्यन्ये प्रतीयमानाऽर्थस्य प्राधान्यमिति 'तदागमे हि इति न्यायाकार इत्याशयेन—*तदागमे हीतीति*।

*अतिव्याप्तमिति*। 'नपुंसकमनपुंसकेन' इति क्लीवशेषतैकवचनान्ततायां च व्यभिचरितमित्यर्थः। तदेव विशदयति *कृत्येति*। पक्वमित्यत्रापिनाऽनुपदोक्तपक्ववानित्यस्याऽपि संग्रहः। तत्र भावनाया आक्षेपात् प्रतीयमानत्वेऽपि प्रत्ययार्थत्वाऽभावेन व्यभिचारसम्भवात्। किं कृतमित्यतो व्यापारविषयस्य जिज्ञास्यत्वाऽवगमात् पक्वमित्यतस्तदनवबोधेनाऽस्योत्तरत्वाऽनुपपत्त्या व्यापारबोधकत्वध्रौव्ये तस्य प्रत्ययार्थत्वाऽभावादव्यभिचार इत्यर्थः॥

*विवरणमिति*। विवरणं चाऽत्र प्रश्नोत्तररूपमेव। तद्बोधनार्थमेव किमुल्लेखः। अन्यथा केवलकृतशब्दस्य पक्वपदविवरणतया लोकाऽप्रसिद्धेर्विवरणं चाऽस्ति-

व्याप्तमित्यस्याऽसङ्गतेः। *वाच्या स्यादिति*। प्रत्ययवाच्या स्यादित्यर्थः। अपिशब्दः पूर्वोक्तार्थस्यैव न समुच्चायकः, किन्त्वर्थान्तरस्यापीति वक्तुमाशङ्कते—ननिवति*। तथा चोक्तापत्तिरिष्टैवेति भावः।

अपिसमुच्चितार्थं प्रकटयति—*तथाचेति*। *उभयेति*। आख्यातकृदन्तोभयेत्यर्थः। *साधारण्येनेति*। साधारण्यमत्र समभिव्याहारविशेषः। *प्रतीतेरिति*। भावनाप्रतीतेरित्यर्थः॥ *उभयसाधारण इति*॥ घटकतया प्रयोगद्वयाऽनुस्यूत इत्यर्थः। तथाच प्रयोगद्वये नियतवृत्तित्वेन धातोरेव भावनावाचकत्वसिद्धिः। धातुत्वस्य शक्ततावच्छेदकत्वेन लाघवान्न तु तिङ्कृतोस्तिङ्त्वस्य चाननुगतस्य शक्ततावच्छेदकत्वे गौरवात्। परस्परव्यभिचाराच्चेत्युक्तापत्तेर्नेष्टत्वसम्भावनेति भावः।

ननु धातुत्वस्य शक्ततावच्छेदकतायाः प्रागेव निरातकृत्वान्नोक्तदूषणस्याऽपिशब्दसमुच्चेयत्वमत आह—*भवद्रीत्येति*। स्वमते भावनायाः प्रकृत्यर्थत्वादुक्तं *भवदिति*। प्रत्ययार्थत्वादित्यनेन पूर्वोक्तमतद्वयमध्ये त्वस्यैव मीमांसकसम्मतत्वमिति सूच्यते। व्याख्यातं च तथैव। अवतरणे तन्न्यायविरोधोपदर्शनं तु प्रत्ययाऽर्थत्वप्राधान्ययोः प्रायशः समनैयत्येन, प्रधानस्य प्रत्ययार्थत्वसाधकत्वस्याऽपि ततो लाभेन प्रकृतिवाच्यत्वे तदनुपपन्नमित्याशयेनेति बोध्यम्॥ ८॥

अर्थ—पूर्वोक्त युक्तियों से फल और व्यापार की वाच्यता सिद्ध होने पर भी भावना धातु वाच्य नहीं है किन्तु आख्यात का वाच्य है। क्योंकि शाब्दबोध में प्रधान रूप से भासमान व्यापार धात्वर्थ होने के कारण प्रकृति और प्रत्यय के अर्थों में प्रत्ययार्थ का प्राधान्य होता है इस अर्थ के बोधक न्याय से विरुद्ध होगा। एवं 'तदागमे हि दृश्यते' इससे भी विरोध होगा। एवञ्च=भावना आख्यात वाच्य मानने पर। स्वयुक्त[1] आख्यातार्थ व्यापार के भिन्नाधिकरण वृत्ति फल का वाचक सकर्मक, एवं आख्यातार्थ व्यापाराश्रय, कर्ता इस प्रकार सकर्मक एवं कर्ता के निर्वचन द्वारा उपर्युक्त दोष का निवारण करने वाले कथित मीमांसकों के प्रति अग्रिम कारिका लिखते हैं।

तस्मात्=अभिप्रायस्थ हेतु से। करोति धातु का व्याख्यान है। तिङ् का नहीं है। पक्ववान् का विवरण पाकं कृतवान् से होता है। 'किं कृतम्' इस वाक्य से किये गये

---

१. स्व पदसे सकर्मक रूप से विवक्षित धातु उससे युक्त जो तिङ्, युक्तता स्वाव्यवहितोत्तर वर्तित्व रूपसे ली जायगी, अन्यथा देवदत्तः पचति भवति घटः इस वाक्यसमूह का घटक भूधातु है उससे युक्त पचति तद् घटक आख्यात एतदर्थ व्यापार से व्यधिकरण फल की वाचकता भू में होने के कारण सकर्मकत्व का प्रसङ्ग भू में प्राप्त हो जायगा अतः उत्तर का निवेश है। भू से उत्तर पचति घटक आख्यात नहीं है। अव्यवहित के निवेश का फल घटो भवति पचति देवदत्तः यहाँ पर है। भू से उत्तर पचति घटक आख्यात होने से स्वयुक्त आख्यातार्थ व्यापार व्यधिकरण फलवाची भू धातु के होने से सकर्मकत्व प्राप्त होगा उसके वारणार्थ अव्यवहित का प्रवेश है।

व्यापार सामान्य विषयक प्रश्न का उत्तर 'पक्वम्' से दिया जाता है। अतः व्यापार सामान्य कृञ् का अर्थ है।

अभिप्रायस्थ हेतु इस प्रकार है—फलमात्र धात्वर्थ मानने पर गमन शब्द का संयोग रूप फल मात्र अर्थ होने से ग्रामो गमनवान् ऐसा प्रयोग भी प्राप्त होगा। फल की अनुत्पत्ति दशा में व्यापार के रहने पर भी पाको भवति ऐसा प्रयोग नहीं होगा। व्यापार के समाप्त होने पर फल के रहने पर 'पाको भवति' इस प्रकार के प्रयोग की आपत्ति होगी।

शङ्का—भावार्थकघञ् आदि प्रत्ययों का अनुकूल व्यापार अर्थ मानते हैं। इसलिये पूर्वोक्त दोष नहीं है।

समाधान—कर्ता में विहित आख्यात का जिस प्रकार व्यापार अर्थ मानते हैं उसी प्रकार 'कर्त्तरि कृत्' इस सूत्र से बोधित व्यापार रूप अर्थ कृत्प्रत्ययान्तर्गत-घञ् का भी सिद्ध हो जाता है। इसके बोधनार्थ आरब्ध 'भावे' इस सूत्र का वैयर्थ्य हो जायगा एवं सूत्र के साथ विरोध प्राप्त होगा।

इन दोषों के निराकरणार्थ व्यापार को भी धात्वर्थ मानने पर धातु से ही सकल व्यापार का लाभ हो जाने से आख्यात की व्यापार में पृथक् शक्ति कल्पना करने में गौरव होगा।

पचति के विवरण रूप पाकं करोति इसमें करोति पद अर्थात् कृञ् धातु पच् धातु के अर्थ का ही विवरण है। अतः पाकं करोति यह भी विवरण व्यापार के आख्यातार्थ होने में साधक नहीं है।

मीमांसकाभिमत प्रकृत्यर्थ प्रत्ययार्थों में प्रत्ययार्थ की प्रधानता रूप बाधक को निरस्त करते हुये उनके मत को दूषित करते हैं—न त्वित्यादि से।

पचति घटक तिङ् का व्याख्यान ( विवरण ) पाकं करोति के कृञ् से नहीं है ऐसा न मानने पर पक्वान् इत्यादि स्थल में अन्वय नहीं होगा।

भाव यह है कि प्रकृति और प्रत्यय दोनों ही परस्पर सम्बद्ध अर्थ के बोधक हैं। इन में प्रत्ययार्थ की प्रधानता मानी जाती है। प्रकृत्यर्थनिष्ठ प्रकारता निरूपित विशेष्यता सम्बन्ध से शाब्दबोध के प्रति प्रकृति से उत्तर प्रत्यय जन्य अर्थ की उपस्थिति विशेष्यता सम्बन्ध से कारण है इस प्रकार का कार्य-कारण भाव फलित होता है। ऐसी अवस्था में पक्ववान् इस स्थल में पाक कर्म कारक और क्तवतु प्रत्ययार्थ कर्तृकारक है। इन दोनों का अरुणाधिकरण की रीति एवं आगे कही जाने वाली हमारी रीति से परस्परान्वय का सम्भव न होने के कारण प्रकृत्यर्थ के अन्वय नियम का ही अभाव होने से पूर्वकथित प्राधान्य बोधक कार्यकारणभाव की सम्भावना ही कैसे है।

शङ्का—सम्बन्धमात्रमुक्तञ्च इत्यादिः—यजेत इस पद श्रुति से धात्वर्थ फल और आख्यातार्थं भावना इन दोनों के सम्बन्धमात्र की प्रतीति होती है। करणत्वादि विशेष सम्बन्ध के बोधन में पद श्रुति का व्यापार=सामर्थ्य[1] नहीं है। इस कुमारिलभट्ट की कारिका के अनुसार पक्वान् में भी सम्बन्ध सामान्य से कारक के अन्वय की ( पाक सम्बन्धी कर्ता ) आशङ्का नहीं करनी चाहिये। योग्यता के अभाव से उस प्रकार का अन्वय बोध नहीं होगा। अन्वय का प्रयोजक रूप ही योग्यता है। क्रिया में

१. यागसम्बन्धिनी भावना इस प्रकार का बोध मानते हैं।

फलसामानाधिकरण्यं तदस्पष्टत्वे दोष इति भावः। नन्वेवं किं करोतीति प्रश्ने, पचतीत्युत्तरस्येवास्तीत्युत्तरमपि स्यादिति चेत् ? इष्टापत्तेः। आसन्नविनाशं कञ्चिदुद्दिश्य किं करोतीति प्रश्ने, अस्तीत्युत्तरस्य सर्व्वसम्मतत्वात्।

इतरत्र तु सुस्थतया निश्चिते 'किं करोतीति प्रश्नः' पच्यादिविशेषगोचर एवेत्यवधारणादस्तीति नोत्तरमिति ॥ १२ ॥

*अस्यैवेति* । क्रियावाचकस्यैवेत्यर्थः। एवकारेण फलमात्रवाचकत्वव्यवच्छेदः। एतदवाचकत्वे हेतुः—*क्रियाप्रतीत्यभावादिति* । तदवाचकानाम्*—व्यापारावाचकानामित्यर्थः। *अधातुत्वप्रसङ्ग इति* । आपत्तेरिष्टत्वं तु न, ततो लकाराद्यनुत्पत्तिप्रसङ्गादिति भावः ॥

धर्म्यंशे, फलरूपे इत्यर्थः। अंशपदोपादानात् धर्मिणो धर्मघटितमूर्त्तिकत्वादकर्मकस्थले कर्तृवृत्तित्वाच्च फलस्यापि तदंशत्वात्। तस्य भाव्यतायामेव विवादादाह—*भाव्यत्वेनेति* । भावनानिष्पाद्यत्वेनेत्यर्थः। फलसाध्यव्यापारस्य जिज्ञासितत्वे इति यावत्। अत एव वक्ष्यति, 'आसन्नविनाशम्' इति। विवक्षास्थलमेव प्रश्नोत्तरभावेन दर्शयति—*स ततो गतो न वेति*। "गत्यर्थाऽकर्मक" ( ३।४।७२ ) इति कर्त्तरि क्तः। प्रश्न इत्यनेन भाव्यत्वस्य जिज्ञास्यत्वं ध्वन्यते। तथाच—गतो न वा किमिति प्रश्नाऽऽकारः।

*प्रयोग इति*। प्रश्ननिवर्त्तके वाक्य इत्यर्थः। प्रतीयते एवेत्यस्यासुधातुनेति शेषः। ननु स ततो गतो न वेति वाक्याद् गेहाद्यवधिकविभागानुकूलव्यापाराश्रयत्वतदभावाऽन्यतरस्य जिज्ञास्यत्वमवगम्यते। महता यत्नेनाऽस्तीति, वाक्यात्त्वस्तेर्व्यापारार्थकत्वाभ्युपगमेऽपि चैत्रादिकर्तृकसत्ताऽनुकूलव्यापार एवेति कथमेतयोः प्रश्नोत्तरत्वम्। तथा हि—यद्धर्मावच्छिन्ने जिज्ञासितयद्धर्माऽवच्छिन्नस्य सम्बन्धो यत्प्रश्नवाक्यात् प्रतीयते तद्धर्मावच्छिन्ने जिज्ञासिततद्धर्माऽवच्छिन्नसम्बन्धबोधकवाक्यस्योत्तरता। यदाहुः—

जिज्ञासितपदार्थस्य संसर्गो येन गम्यते।
तदुत्तरमिति प्रोक्तमन्यदाऽऽभासशब्दितम् ॥ इति।

यथा घटत्वावछिन्नजिज्ञासितधर्मावच्छिन्नसम्बन्धबोधकस्य, कस्माद् घट इति प्रश्नवाक्यस्य घटत्वाऽवच्छिन्ने जिज्ञासितदण्डत्वाऽवच्छिन्नस्य हेतुहेतुमद्भावबोधकं दण्डाद् घट इति वाक्यमुत्तरम्। प्रकृते तु, गत, इति नेति, वेत्युत्तरं युज्यते।

किञ्चोक्तप्रश्नेन सत्तासाधकव्यापारस्य जिज्ञास्यत्वानवगमात् कथमेतस्योत्तरत्वम्। तथात्वेऽपि पूर्वोत्तरवाक्ये यत्नेनेत्युपादानाद्यत्नपदोपस्थाप्ययत्ननिष्पाद्यत्वबोधेनैवोत्तरत्वसिद्धया, न ततो धातोर्व्यापारार्थकत्वसिद्धिरत आह—*उत्पत्त्यादीति*। सुतरामित्यस्य व्यापारार्थकत्वमिति शेषः। अत्राश्रयतावोधस्योभयमतसिद्धत्वेन सैव

साध्यत्वेनाभिधीयमानत्वाद् व्यापारः; पौर्वापर्य्ये च परमते सत्तायामिव कालगतं तत्रारोपितमेवेति भावः।

ननु तत्राप्याश्रयताया धात्वर्थत्वकल्पनमप्याग्रहमूलकमेव। तत्रोत्पत्तिमात्रार्थकत्वेऽपि रोहिताश्रयिका भूतानद्यतनोत्पत्तिरित्यभिमतार्थबोधलाभादत आह—*किञ्चेति*। *तस्या एवेति*। भावनाया एवेत्यर्थः। एवकारेण फलव्यवच्छेदः। यथाचैतत्तथोक्तं सार एव। *तद्विधानात्*—लडादिविधानात्। तत्र हरिसम्मतिमप्याह—*क्रियाभेदायेति*। 'तुमर्थात्' (२।३।१५) इति चतुर्थी, वार्त्तिकेन तादर्थ्ये वा। क्रियां भेत्तुं—विशेषयितुं कालो—लडादिर्बोध्यः। अस्तीति शेषः। लडाद्यर्थकालः क्रियामात्रभेदकः इति यावत्; विभक्त्यर्थरूपा संख्या तु सर्वस्याख्यातप्रतिपादकार्थस्य भेदिकेति तदर्थः। मतान्तरेषु धातुप्रतिपादकार्थस्येति बोध्यम्। *एवम्*। धातोर्व्यापारवाचकत्वे।

मूले—*अशेषभावादिति*। शेषः—फलव्याप्त्यतिरिक्तो, भवत्यस्मिन्निति भावोऽधिकरणं यस्येति बहुव्रीहिणा शेषभावशब्दः फलव्यधिकरणार्थकः भावप्रधानः निर्देशः। तस्मान्नञ्समस्तात्पञ्चम्येकवचने फलव्यधिकरणत्वाभावादित्यर्थावगतिः॥१२॥

अर्थ—भ्वादिगण पठित तथा व्यापार वाचक को ही धातु मानने पर अस्ति इत्यादि स्थल में व्यापार की प्रतीति नहीं होने से क्रिया (व्यापार) वाचकत्व नहीं है। ऐसी दशा में अस् आदि को धातु संज्ञा नहीं होगी। इसके समाधानार्थ कारिका लिखी हैं—अस्त्यादावपि इति।

अस् आदि में भी निष्पाद्यत्व रूप से विवक्षित सत्तादि रूप फलांश के कारण व्यापार रहता ही है। अशेषभावात्=फल और व्यापार एक अधिकरण में होने के कारण उक्त स्थलों में फल से पृथक् भावना (व्यापार) प्रतीत नहीं होती।

अस् भुवि भूधातु के अर्थ में पठित अस् आदि में भी [1]धर्म्यंश फल भाग में भाव्ये=भावना निष्पाद्यत्वरूप से विवक्षित में भावना की प्रतीति होती ही है।

वह वहाँ से गया या नहीं इस प्रश्न के उत्तर में बड़े यत्न से है ऐसा कहने से सत्ता रूप फल के अनुकूल भावना की प्रतीति होती ही है। "लोहित से रोहित हुये उसका लड़का धुन्धु हुआ" इत्यादि स्थलों के देखने से उत्पत्यादि अर्थ के बोध में व्यापार अर्थ की प्रतीति स्पष्ट रूप से देखी जाती है।

दोषान्तर भी है—अस्ति आदि स्थल में व्यापर की प्रतीति नहीं मानने पर लट् आदि लकारों का विधान नहीं हो सकेगा। क्योंकि व्यापार की ही वर्तमानकाल आदि से विवक्षा होने पर उसका विधान है।

'क्रियाभेदाय[2] कालस्तु संख्या सर्वस्य भेदिका' इस हरि कारिका के द्वारा भी उक्तार्थ की संपुष्टि होती है।

---

१. धर्म्यंश=धर्मः फलम् अस्ति अस्य इति धर्मी कर्ता। अकर्मक धातुस्थल में सत्तादिफलाश्रय ही कर्ता होता है। धर्मी कर्ता धर्म (फल) से घटित होने से उसका अंश फल होता है। भावना में विवाद होने से भाव्यत्वेन विवक्षित फल को कहा।

२. क्रियाभेदाय इत्यादि—काल क्रिया में अन्वयी होने से क्रियाओं का भेद करता है संख्या सब का भेद करती है।

शङ्का—अस्ति इत्यादि स्थलों में व्यापार की स्फुट प्रतीति क्यों नहीं होती ?

समाधान—"अन्यत्राशेषभावात्" अर्थात् व्यापार तथा फल का एक अधिकरण में वृत्तित्व रूप सामानाधिकरण्य उक्त स्थलों में भावना की अस्फुट प्रतीति का हेतु है। इसकी अस्पष्टता = परस्पर मिलकर रहना ही दोष है अर्थात् प्रतिबन्धक है।

शङ्का—अस्त्यादि से भी व्यापार प्रतीति मानने पर किं करोति = क्या करता है इस प्रश्न के उत्तर में पचति = पाक करता है इसीके समान अस्ति = है इसका प्रयोग भी होने लगेगा।

समाधान—अस्त्यादि के द्वारा उत्तर इष्ट ही है। मरणासन्न व्यक्ति के सम्बन्ध में 'किं करोति' ऐसे प्रश्न का उत्तर पचति के समान अस्ति से दिया जाना सर्व सम्मत है। अन्यत्र जहाँ स्वस्थ रहना निश्चित है वहाँ किं करोति यह प्रश्न पाकादि विशेष क्रिया के उद्देश्य से होने के कारण ही अस्ति शब्द से उत्तर नहीं दिया जाता ॥ १२ ॥

हिन्दी भाष्य—

शङ्का—अस्ति भवति इत्यादि अकर्मक धातुओं में पचति गच्छति के समान फल से पृथक् व्यापार की स्पष्ट रूप से प्रतीति नहीं होने के कारण यह सन्देह होता है कि इन धातुओं का व्यापार अर्थ नहीं है किन्तु सत्ता रूप फलमात्र अर्थ है। ऐसी दशा में अस्त्यादि को व्यापार( क्रिया )वाची न होने से धातु संज्ञा नहीं होगी।

समाधान—इन धातुओं का भी व्यापार अर्थ है। इसका स्पष्ट रूप से प्रतिभास होने में फल और व्यापार का एकाधिकरण वृत्तित्वरूप दोष प्रतिबन्धक है।

स ततो गतो न वा—यहाँ गम् धातु से "गत्यर्थाकर्मक" ( ३।४।७२ ) इससे कर्ता में क्त होने से गतः की सिद्धि होती है। प्रश्न शब्द के उपादान से फलांश में भाव्यत्व की जिज्ञासा व्यक्त होती है। प्रयोग = प्रश्न निवर्तक वाक्य है।

शङ्का—यद्धर्मावच्छिन्ने जिज्ञासितयद्धर्मावच्छिन्नस्य सम्बन्धो यत्प्रश्नवाक्यात् प्रतीयते तद्धर्मावच्छिन्ने जिज्ञासिततद्धर्मावच्छिन्नसम्बन्धबोधकवाक्यस्य उत्तरता। इसी आशय की कारिका भी है—

जिज्ञासितपदार्थस्य संसर्गो येन गम्यते।
तदुत्तरमिति प्रोक्तमन्यदाभासशब्दितम् ॥

इस प्रकार स ततो गतो नवा = वह वहाँ से गया या नहीं इस वाक्य से गेहावधिक विभागानुकूलव्यापाराश्रयत्व तदभावान्यतर की जिज्ञासा प्रतीत होती है। महता यत्नेनास्ति = बड़े यत्न से है इस वाक्य से व्यापारार्थक अस् धातु के मानने पर व्यापार की प्रतीति होने पर भी उपरिलिखित नियमों के अनुसार उक्त वाक्य में प्रश्नोत्तर भाव नहीं होगा। क्यों कि व्यापाराश्रय के प्रश्न का व्यापार से उत्तर नहीं हो सकता। अतः गतः या न गतः यही उत्तर हो सकता है। अस्ति यह उत्तर नहीं हो सकता। इसलिये इससे अस्ति में व्यापारवाचिता सिद्ध नहीं होती।

समाधान—गेहावधिक विभागानुकूल व्यापार का आश्रय या तदभाव के अन्यतर की जिज्ञासा होनेपर गेहे महता यत्नेन अस्ति। अर्थात् विशेष प्रयत्न से घर में है इस उत्तर वाक्य से गेहाधिकरणक चैत्रादि कर्तृक सत्तानुकूलव्यापार बोधन के द्वारा गेहावधिक विभागानुकूल व्यापाराश्रयत्व का बाध होने से एकतर पक्ष का निर्णय होने के कारण उत्तर वाक्य होने में किसी प्रकार की बाधा नहीं है।

वाक्यपदीय की उक्त कारिका से भी यह सिद्ध होता है कि जिज्ञासित पदार्थ के सम्बन्ध का गमक = निश्चायक उत्तर है, साक्षात् बोधक ही नहीं। अन्यथा गम्यते के स्थान में बोध्यते लिखना चाहिये था।

अस्त्यादि से व्यापार की प्रतीति नहीं मानने पर लट् आदि का विधान भी नहीं होगा। क्योंकि वर्तमान काल आदि की विवक्षा में लडादि का विधान है। क्रिया बोधक पद के अभाव से क्रियान्वयी काल की अन्वय विवक्षा नहीं हो सकती।

वाक्यपदीय से भी इस अर्थ की पुष्टि होती है—क्रियाभेदाय इति—'तुमर्थाच्च भाव-वचनात्' ( २।३।१५ ) इस सूत्र से क्रियाभेदाय में चतुर्थी होने से क्रियां भेत्तुं विशेषयितुं कालः लडादिबोध्यः=काल क्रियामात्र का विशेषक भेदक है तथा विभक्त्यर्थ संख्या आख्यात और प्रातिपदिक के अर्थों का मतान्तर में धातु और प्रातिपदिक के अर्थों का भेदक है।

सुस्थतया = शोभन स्थिति = सत्तानुकूल व्यापार से।

वृहद्भूषणकार के मत में—'भूवादयः' इस सूत्र के अनुसार भूआदि सभी धातुओं का व्यापार अर्थ मानना आवश्यक होने पर भी फल वाचित्व मानना आवश्यक नहीं है। अतः भू आदि में सत्ता ही व्यापार है। अत एव पश्यति भवः पच्यते तण्डुलः इत्यादि स्थल में विषयता विक्लिति आदि फल ही क्रिया होने से तदाश्रय भव तण्डुल आदि कर्ता होता है। इस प्रकार इनके मत में केवल व्यापार वाचक को अकर्मक तथा फल और व्यापार दोनों के वाचक को सकर्मक कहा जायगा।

वस्तुतः ऐसा मानना ठीक नहीं है। वह वहाँ से गया या नहीं इस वाक्य से व्यापार विशेष संयोगानुकूल व्यापार के आश्रय एवं तदभाव की जिज्ञासा प्रतीत होती है। उत्तर वाक्य से जिज्ञासित पदार्थ के प्रतिपादन होने से ही उसको उत्तर वाक्य माना जाता है। जिज्ञासित पदार्थाभिधान ही उत्तर है। इस प्रकार "महता यवेन अस्ति" इससे व्यापार की प्रतीति होने पर ही व्यापार विषयक होने से व्यापारानाश्रयत्व के बाध द्वारा उसका उत्तर हो सकता है अन्यथा नहीं। अतः अस्ति इत्यादि स्थल में भी फलानुकूल व्यापार अर्थ मानना चाहिये।

यद्धर्मावच्छिन्न में यद्धर्मावच्छिन्न का सम्बन्ध प्रतीत होता है तद्धर्मावच्छिन्न में जिज्ञासित तद्धर्मावच्छिन्न का सम्बन्धबोधक वाक्य उत्तर होता है। जिस प्रकार कस्मात् घटः यहाँ घटत्वावच्छिन्न में जिज्ञासित धर्मावच्छिन्न सम्बन्ध बोधक प्रश्न वाक्य का घटत्वावच्छिन्न में जिज्ञासित दण्डत्वावच्छिन्न का सम्बन्धहेतु-हेतुमद्भाव [का बोध 'दण्डाद् घटः' इस वाक्य से होता है। अत यह उत्तर वाक्य है।

भूवादि सूत्र के भाष्य में भी लिखा है "वाकारेण क्रिया भूत भविष्यद् वर्तमान काला व्यज्यन्ते" इति। अस्त्यादिभिश्चापि भूतभविष्यद्वर्तमानकाला व्यज्यन्ते। क्रिया के विना काल की अभिव्यक्ति नहीं होने से अस्ति आदि में भी कालान्वय होने से उसमें क्रिया वाचित्व आवश्यक है। अस् भू विद् आदि का सत्ता अर्थ है। जन्म सत्ता वृद्धि परिणाम अपक्षय, ( ह्रास ) तथा नाश ये छह भाव विकार हैं। इन विकार वाले सत् इत्याकारक प्रतीति से वेद्य स्वरूप सत्ता हैं। सत् सत् इस प्रतीति का कारण सत्ता जाति को नैयायिक मानते हैं। सत्ता समवाय सम्बन्ध से द्रव्य, गुण तथा कर्म में, एकार्थ समवाय से सामान्य विशेष और समवाय में रहने से छह भाव पदार्थों में सत् इस प्रतीति का कारण होती है। अभाव में सत्ता नहीं रहती। अतः सत् प्रतीति उसमें नहीं होती।

बौद्धमत में अर्थक्रियाकारित्व ही सत् प्रतीति का कारण है, सत्ता जाति नहीं। क्योंकि इस मत में जाति नहीं है। अभाव से किसी प्रकार का कार्य नहीं होता। अतः उसमें प्रयोजन सम्पादकत्व नहीं है। इस प्रकार सत्ता का विभिन्न रूप हैं। यहाँ प्रथम पक्ष की सत्ता अभिमत है।

सत्ताविषयक व्यापार स्वरूपधारणरूप है। निरुक्तकारने भी "अस्तीत्युत्पन्नस्य सत्त्वावधारणम्" ऐसा लिखा है। उत्पन्न का सत्त्व=सत्ता का अवधारण अस्ति से होता है ॥ १२ ॥

नन्वेवं भावनायाः फलनियतत्वात् फलाश्रयस्य च कर्म्मत्वात् सर्व्वेषां क्रियावाचकत्वे सकर्म्मकतापत्तिरित्यत आह—

फलव्यापारयोरेकनिष्ठतायामकर्म्मकः ॥
धातुस्तयोर्धर्मिभेदे सकर्म्मक उदाहृतः ॥ १३ ॥

एकनिष्ठतायाम्—एकमात्रनिष्ठतायाम्, भिन्नाधिकरणावृत्तितायामिति यावत्। तेन गम्यादौ फलस्य कर्त्तृनिष्ठत्वेऽपि नातिव्याप्तिः। अकर्म्मको यथा—भ्वादिः। तयोः—फलव्यापारयोः, आश्रयभेदे सकर्म्मक इत्यर्थः।

उक्तञ्च वाक्यपदीये—

आत्मानमात्मना बिभ्रदस्तीति व्यपदिश्यते।
अन्तर्भावाच्च तेनासौ कर्मणा न सकर्मकः ॥ इति ॥
(वाक्य० श्लोक ४७।२८९)

*बिभ्रदिति*। तेन स्वधारणानुकूलो व्यापारोऽत्रापि गम्यत इति भावः। तेन—कर्म्मणा, सकर्म्मकत्वन्तु न, अन्तर्भावात्—फलांशेन सामानाधिकरण्यसत्त्वादित्यर्थः। आत्मानं जानाति इच्छतीत्यादौ च द्वावात्मानौ—शरीरात्मान्तरात्मा च। तत्रान्तरात्मा तत्कर्म्म करोति येन शरीरात्मा सुखदुःखे अनुभवतीति "कर्मवत्कर्मणा" (पा० सू० ३।१।८७) इति सूत्रीयभाष्योक्तरीत्या भिन्नाधिकरणनिष्ठतामादाय सकर्म्मकत्वमित्यवधेयम् ॥१३॥

फलितमाह—सारे *भावनायाः फलेति*। एकमात्राऽधिकरणकफलसामानाधिकरण्यस्य स्वरूपतो भावनास्पष्टभानप्रतिबन्धकत्वाऽभ्युपगमान्न स्पष्टं तत्प्रतीतिः। स्पष्टत्वं च—फलप्रतीत्यनभिभूतत्वमिति भावः। एवम्—अस्त्याद्यकर्मकाणां व्यापाराऽर्थकत्वे। *फलनियतत्वादिति*। फलव्याप्यत्वादित्यर्थः। भावनावाचकत्वस्य फलवाचकत्वव्याप्यत्वादिति यावत्। *सकर्मकतापत्तिरिति*। फलव्यापारोभयवाचकस्य पच्यादेः सकर्मकत्वदर्शनादिति भावः।

ननु फलव्यापारयोरेकनिष्ठत्वस्याकर्मकतायां तन्त्रत्वे गम्यादीनामप्यकर्मकतापत्तिस्तदर्थफलव्यापारयोरेककर्त्तृवृत्तित्वादतो व्याचष्टे—*एकमात्रनिष्ठतायामिति*। एकमात्रनिष्ठत्वमेकेतरावृत्तित्वे सत्येकवृत्तित्वम्। तत्र प्रयोजनाभावाद्विशेष्यांशमपहाय फलितार्थमाह—*भिन्नाधिकरणेति*। भिन्नत्वं च व्यापाराधिकरणापेक्षया बोध्यम्।

तथाच स्वार्थव्यापारानधिकरणावृत्तिफलवाचकत्वं पर्य्यवसितं लक्षणं लक्ष्ये ग्राहयति—*भ्वादिरिति* । तत्र सत्ताऽऽत्मकव्यापारस्यैकमात्रनिष्ठत्वस्याऽविकलत्वादिति भावः ।

ननु मूले–'तयोर्धर्मिभेदे' इत्यनेन स्वार्थफलव्यधिकरणव्यापारवाचकत्वं स्वार्थव्यापारव्यधिकरणफलवाचकत्वं वा सकर्मकत्वमुक्तम् । तत्र वैयधिकरण्यम्–तदधिकरणावृत्तित्वम् । तथाच गमादावव्याप्तिः । तदर्थफलव्यापारयोः परस्पराऽधिकरणवृत्तिभिन्नत्वाऽभावादतो व्याचष्टे भूषणसारे—*आश्रयभेद इति* । तथाच प्रथमलक्षणे कर्त्तृभिन्नतदधिकरणाऽवृत्तित्वरूपस्य द्वितीये तदनधिकरणाऽवृत्तित्वरूपस्य निवेशान्नाऽनुपपत्तिरिति भावः ।

अस्तेः फलव्यापारोभयार्थकत्वे हरिसम्मतिमप्याह—*उक्तञ्चेति* । *व्यपदिश्यते* । व्यवह्रियते । *अन्तर्भावादिति* । धात्वर्थतावच्छेदककोटिप्रविष्टत्वादित्यर्थः ।

पृथगुपस्थितयोरेवान्वयनियमात् कर्मसंज्ञकाऽर्थान्वय्यर्थकरूपसकर्मकत्वस्य तत्राऽनवकाशादिति भावः । स्वोक्तलक्षणाऽनुसारेण सारकृद् व्याचष्टे–*फलांशेनेति* । स्वकर्मकधारणरूपफलेन सह तदनुकूलव्यापारस्यैकाधिकरण्यादित्यर्थः । आत्मरूपकर्मणा सकर्मकत्वं कुतो नेत्याकाङ्क्षायाम् एतत्समाधानस्योदक्षरत्वदोषदुष्टस्य योग्यत्वमीदृशव्याख्याने सुधीभिर्विभावनीयम् ।

नन्वात्मानं जानातीत्यादावनुपदोक्तसकर्मकलक्षणस्याऽव्याप्तिः । तत्र ज्ञानरूपफले तदर्थव्यापारस्य वैयधिकरण्याऽभावादतिव्याप्तिश्च फलसमानाधिकरणेत्याद्यकर्मकलक्षणस्येत्याशङ्क्य समाधत्ते–*आत्मानं जानातीत्यादिना* । *अन्तरात्मेति* । अन्तःकरणावच्छिन्नात्मा, शरीरात्मा तदवच्छिन्नः सः । तथाचाऽऽत्मन एकत्वेऽपि ततः शरीररूपोपाधिभेदपरिकल्पितं भेदमादाय वैयधिकरण्यस्य सूपपादत्वादुक्तलक्षणयोर्नाव्याप्त्यतिव्याप्ती इत्याह—*भिन्नाधिकरणेति* ।। १३ ।।

अर्थ—इस प्रकार अकर्मक धातुओं का भी व्यापार अर्थ मानने पर, सभी धातु क्रिया ( व्यापार ) वाचक होने से सकर्मक हो जायगी । क्योंकि फलं नियतं=व्यापकं यस्य इस व्युत्पत्ति से व्यापार फल से व्याप्य है । अर्थात् फल वाचकत्व का व्याप्य व्यापार वाचकत्व है । अतः व्यापार की प्रतीति होने पर व्यापक फल की प्रतीति अवश्यंभावी है । फलाश्रय ही कर्म होता है । इसके समाधानार्थ कारिका का उल्लेख है=फलव्यापारयोर्धातुरिति—जिस धातु का फल और व्यावार एक ही अधिकरण में रहता है वह अकर्मक तथा जिस धातु का फल और व्यापार भिन्न-भिन्न अधिकरण में रहता है वह सकर्मक है ।

"कारिकास्थ एकनिष्ठतायाम्" इसका एकमात्र[1] निष्ठता अर्थ है । भिन्न अधिकरण में वृत्तिता न हो यह भाव है । इस कारण से गम् आदि धातुओं में संयोग रूप फल तथा व्यापार एक ही आश्रय ( कर्ता ) में रहने पर भी अकर्मकलक्षण की ( अलक्ष्य में लक्षण

१. एक से इतर में अवृत्ति और एक में वृत्ति एकमात्र वृत्ति है ।

समन्वय रूप ) अतिव्याप्ति नहीं हुई। अकर्मक का उदाहरण भू आदि है। फल और व्यापार के आश्रय भेद होने पर धातु सकर्मक होती है ऐसा वाक्यपदीय में भी कहा है।

आत्मानमात्मना बिभ्रत् इत्यादि। अपने से अपने को धारण करने वाले का अस्ति से व्यवहार होता है। आत्मधारण रूप फल से अस् आदि धातु सकर्मक नहीं हो सकती क्योंकि फल और व्यापार दोनों एक ही अधिकरण में है।

"बिभ्रत्" इससे स्वधारण के अनुकूल व्यापार यहाँ भी प्रतीत होता है। कारिकास्थ तेन पद से कर्मका परामर्श है। उस कर्म से धातु सकर्मक नहीं मानी जाती। क्योंकि अन्तर्भावात्=फलांश के साथ सामानाधिकरण्य है। आत्मानं जानाति इच्छति इत्यादि स्थल में दो [1]आत्मा हैं एक शरीरावच्छिन्न शरीरात्मा दूसरा अन्तःकरणावच्छिन्न अन्तरात्मा है। अन्तःकरण विशिष्ट आत्मा कर्म करता है इस कारण से शरीर विशिष्ट आत्मा सुख और दुःख का अनुभव करता है। "कर्मवत् कर्मणा" इस सूत्रस्थ भाष्य की रीति का अनुसरण कर भिन्नाधिकरण वृत्तित्व की उपपत्ति द्वारा सकर्मकत्व का समर्थन करना चाहिये ॥ १३ ॥

हिन्दी भाष्य—फलाधिकरणमात्र वृत्ति व्यापार का वाचक धातु अकर्मक पद से व्यवहृत होती है। जिस प्रकार भूधातु का आत्म-धारण रूप फल तथा तदनुकूल व्यापार एक ही घटादि में होने से वह अकर्मक कही जाती है। इसी प्रकार म्रियत में सत्तात्याग और तदनुकूल व्यापार दोनों एक देवदत्तादि निष्ठ होने से मृ धातु अकर्मक है। गम् धातु का उत्तर देशसंयोग और तदनुकूल व्यापार दोनों ही भिन्न अधिकरण में होने से सकर्मक है। संयोग रूप फल ग्रामादि में और व्यापार देवदत्तादि में है।

शङ्का—संयोग[2] उभयनिष्ठ माना जाता है। संयोग गुण है घटपट का संयोग घट तथा पट दोनों 'भी' है। इसी प्रकार देवदत्त और ग्राम का संयोग भी दोनों में होने से संयोगरूप फल और तदनुकूल व्यापार एक ही कर्ता में है इसलिये फल में व्यापार सामानाधिकरण्य होने से उक्त धातु में अकर्मकत्व का प्रसङ्ग है।

समाधान—फल और व्यापार एकाधिकरण में ही हों। अर्थात् व्यापाराधिकरण से भिन्न अधिकरण में नहीं रहते हों इस अर्थ की सूचना 'एकमात्र निष्ठतायाम्' इस पद से दी गई है। यहाँ व्यापाराधिकरणकर्ता देवदत्त से भिन्न अधिकरण ग्राम में भी उत्तर देशसंयोग रूप फल के होने से व्यापाराधिकरण में अवृत्ति नहीं है। अतः अकर्मकत्व का प्रसङ्ग नहीं हुआ।

शङ्का—'आत्मा आत्मानं जानाति' यहाँ कर्ता और कर्म दोनों ही एक होने से ज्ञान अथवा आवरणभङ्ग और तदनुकूल व्यापार एक मात्रनिष्ठ हो जाने के कारण अकर्मत्व का प्रसङ्ग है।

---

१. ज्ञान रूप फल विषयता सम्बन्ध से आत्मा में तदनुकूल व्यापार कर्तृभूत आत्मा में इस प्रकार फल और व्यापार एकमात्र निष्ठ होने से अकर्मकत्वापत्ति हो जायगी। अतः कर्ता एवं कर्म आत्मा को उपाधि भेद से भिन्न दिखाया गया। शरीरात्मा अन्तरात्मा इस प्रकार उपाधिकृत भेद से दो होने के कारण फल सामानाधिकरण नहीं है।

२. दो अप्राप्त वस्तुओं की प्राप्ति संयोग है। 'अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः' (सिद्धान्तमुक्तावली श्लो० ११५)

समाधान—उपाधि के भेद से उपधेय का भेद होता है। आकाश के एक होनेपर भी घट और पट रूप उपाधि के भेद के कारण घटाकाश और पटाकाश दोनों में भेद जिस प्रकार माना जाता है उसी प्रकार दोनों आत्मा में भेद न होनेपर भी शरीर और अन्तःकरण के भेद होने से शरीर युक्त तथा अन्तःकरण युक्त आत्मा का भेद सिद्ध होता है। अतः अन्तःकरणावच्छिन्न (युक्त) आत्मा व्यापाराश्रय और शरीरावच्छिन्न (युक्त) आत्मा कर्म ( विषयता सम्बन्ध से ज्ञान रूप फल का आश्रय ) होने से फल व्यापार एक मात्र निष्ठ नहीं हुआ। इसी कारण से अकर्मत्व प्रसङ्ग नहीं है।

अस् भू आदि आत्मधारण तथा व्यापार एक कर्ता में होने से अकर्मक है। हरिकारिका में 'अन्तर्भावात्' इस पद का फलांश के साथ सामानाधिकरण्य होने से ऐसा व्याख्यान मूल में किया गया है।

अस् धातु का आत्मधारणानुकूल व्यापार अर्थ है। आत्मधारण एवं व्यापार दोनों एक कर्ता में होने के कारण इनका सामानाधिकरण्य है। अतः सकर्मकत्व का प्रसङ्ग नहीं है। आत्मानं धत्ते के समान आत्मानम् अस्ति ऐसा प्रयोग होना चाहिये। अतः इसकी व्यावृत्ति के लिये हरिकारिकास्थ अन्तर्भाव पद का मूलोक्त व्याख्यान सङ्गत नहीं है। क्योंकि आत्मधारणकर्म से सकर्मकत्व की उक्त रीति से व्यावृत्ति होने पर भी आत्मरूप कर्म से उक्तापत्ति पूर्ववत् बनी हुई है। धारण का कर्म धात्वर्थस्वरूपभूत शरीरात्मा और तदनुकूल व्यापार चैत्रादि चेतन में होने से सामानाधिकरण्य नहीं होने के कारण सकर्मकत्व होना चाहिये। अतः 'तेन कर्मणा' इससे आत्मरूप कर्मसे सकर्मकत्व की शङ्का का ही समाधान 'अन्तर्भावात्' इससे हरिजी ने किया है। इसलिये अन्तर्भावात् इसका अर्थ धात्वर्थतावच्छेदक स्वरूपधारण के शरीर में स्वस्वरूप आत्मा के प्रवेश होने से ऐसा करना चाहिये। 'जीव प्राणधारणे' यहाँ जिस प्रकार प्राणरूपकर्म धात्वर्थ में प्रविष्ट ( अन्तर्भूत ) हो जाता है उसी प्रकार यहाँ धात्वर्थ में ही आत्मरूपकर्म अन्तः प्रविष्ट है। अतः अकर्मक है।

धातोरर्थान्तरे वृत्ते धात्वर्थेनोपसंग्रहात्।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥ ( वा० सा० स० ८८ पृ० २४५)

इसके अनुसार अर्थान्तर में धातु की वृत्ति से, धात्वर्थ से कर्म के संग्रह से, कर्म की प्रसिद्धि से, तथा कर्म की अविवक्षा से भी धातु अकर्मक होती है।

जिसप्रकार वह धातु प्रापण में सकर्मक है 'भारं वहति'। 'नदी वहति' यहाँ वह अर्थान्तर प्रवहण अर्थ में अकर्मक है। प्राणरूप कर्म धात्वर्थ में संगृहीत हो जाने से प्राणधारणार्थक जीवधातु अकर्मक हो जाती है। जल की ही वर्षा होने से वर्षति का कर्म जल प्रसिद्ध है। अतः अकर्मक है। कर्म की विवक्षा न करने पर भी धातु अकर्मक होती है—अनुवदते कठः। विवक्षास्थल में उक्तमनुवदति।

जिसधातु का अर्थ कर्म में अन्वयी हो, वह सकर्मक है। इसीलिये 'अध्यासिता भूमयः' यहाँ आस् धातु को सकर्मक मानकर कर्म में क्तप्रत्यय होता है। 'अधिशीङ्स्थासां कर्म' ( १।४।४६ ) इस सूत्र से आधार भूमि को कर्म संज्ञा होती है। फल व्यधिकरण व्यापार वाची धातु को सकर्मक मानने पर सूत्र विशेष से कर्म संज्ञा होनेपर भी फल और व्यापार एक में होने के कारण अकर्मक ही हो जायगी तथा च कर्म में क्तप्रत्यय नहीं होगा। अतः कर्म संज्ञकार्थान्वयी के अर्थवाली धातु सकर्मक है।

पृथक्-पृथक् पदों से उपस्थित पदार्थों का परस्पर अन्वय होता है। जीव आदि धातु से प्राण धारण आत्म-धारण आदि पृथक्-पृथक् पदों से उपस्थित न होकर एक धातु से उपस्थित होते हैं। अतः इनका परस्पर अन्वय नहीं होगा क्योंकि पृथक्-पृथक् उपस्थित पदार्थों का अन्वय माना गया है। इस प्रकार कर्म संज्ञक अर्थ में अन्वयी अर्थ न होने से कर्मणा सह वर्तते स सकर्मकः इस व्युत्पत्ति द्वारा लभ्य सकर्मकत्व का प्रसङ्ग नहीं है। इसी प्रकार 'आत्मानम् अस्ति' का भी प्रयोग नहीं हुआ। अतः 'अन्तर्भावात्' इसका धात्वर्थ में अन्तर्भाव ऐसा अभिप्राय प्रतीत होता है ॥ १३ ॥

मूलकार का व्याख्यान शङ्का के अनुरूप न होने से इसी व्याख्यान का उपलक्षक है।

नन्वसत्त्वभूतक्रियाया धात्वर्थत्वे पाक इत्यत्रापि तत्प्रत्ययापत्तिः। नचेष्टापत्तिः। "कृदभिहितो भावो द्रव्यवत् प्रकाशते" इति भाष्यविरोधादित्यत आह—

आख्यातशब्दे भागाभ्यां साध्यसाधनवर्तिता ॥
प्रकल्पिता यथा शास्त्रे स घञादिष्वपि क्रमः ॥ १४ ॥

आख्यातशब्दे—पश्य मृगो धावतीत्यादौ। भागाभ्यां-तिङन्ताभ्याम्। प्रकृतिप्रत्ययभागाभ्यामिति विवरणकारोक्तमपव्याख्यानं पचतीत्यत्राऽपि भागद्वयसत्त्वात्। साध्यसाधनरूपता यथाक्रमं ग्राह्या। साध्यत्वम्—क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकरूपवत्त्वम्। साधनत्वं कारकत्वेनान्वयित्वम्। स घञादिष्वपीति। प्रकृत्या साध्यावस्था, प्रत्ययेन साधनावस्था। इयान् परं विशेषः। घञाद्युपस्थाप्या लिङ्गसंख्यान्वयिनी कारकान्वयिनी च, आख्यातान्तोपात्ता तु नैवम्; तथापि कारकत्वेनान्वयित्वमात्रेण दृष्टान्तदार्ष्टान्तिकतेत्यवधेयम्।

नच घञन्ते धातुना तथाभिधाने मानाभावः। ओदनस्य पाक इति कर्मणि षष्ठ्या मानत्वात्। नच भवतीत्यध्याहृततिङन्तक्रियान्वयात् षष्ठी। "कर्तृकर्म्मणोः कृति" ( पा० सू० २। ३। ६५ ) इति कृदन्तेन योग एव तद्विधानात्। "न लोकाव्ययनिष्ठाखलर्थतृनाम्" ( पा० सू० २। ३। ६९ ) इति लादेशयोगे षष्ठीनिषेधाच्च। एवं रीत्या 'काष्ठैः पाक' इत्याद्यपीष्टमेव। एवं फलांशोऽपि धातुना असत्त्वावस्थापन्न एवोच्यते। अत एव स्तोकं पचतीतिवत् स्तोकं पाक इत्युपपद्यते इति ॥ १४ ॥

*असत्त्वभूताया इति*। क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्माक्रान्ताया इत्यर्थः। *तदिति*। तेन रूपेण प्रतीत्यापत्तिरित्यर्थः। *कृदभिहित इति*। कृदर्थ इत्यर्थः। *द्रव्यवदिति*। द्रव्येण नामार्थेन तुल्यं प्रकाशते—भासते इत्यर्थः। द्रव्यधर्मान्—लिङ्गसंख्याकारकत्वानि गृह्णातीति यावत्। यद्वा द्रव्यं क्रियाकाङ्क्षोत्थापकतावच्छेदकरूपसिद्धत्ववत्, तेन तुल्यं प्रकाशते इत्यर्थः। सिद्धत्वेन भासत इति यावत्।

तथा च तादृशभाष्येणापाद्यव्यतिरेकनिर्णये तद्धेतुभूते प्रामाण्योपगमादिष्टापत्तेरसुकरत्वादिति भावः ।

आख्याते शब्दौ यस्मिन्निति बहुव्रीहिणा वाक्यमन्यपदार्थं इत्याशयेनाह—*पश्येत्यादि* । *तिङन्ताभ्याम्* पश्यधावतिभ्याम् । धावतेः साधनत्वेन; पश्यतेः साध्यत्वेन क्रियाबोधकत्वाद् दृष्टान्ततोपपत्तिरत एव 'वक्ष्यति इयान् परं विशेष' इति । *प्रकृत्यादीति* । व्याख्यानं विवरणस्थम् । आख्यातशब्द इति कर्मधारय इति तद्भावः । अपव्याख्याने हेतुमाह—*पचतीत्यत्रेति* । तथाच तिङन्तरूढेन केवलाख्यातपदेनैव पचत्यादितिङन्तरूपार्थलाभे शब्दपदवैयर्थ्यम् । मन्मते तु तस्य बहुव्रीहिलाभसम्पादकतयाऽऽख्यातशब्दपदस्य तिङन्तद्वयघटितवाक्यपरतोपपत्तिः, पचत्यादेर्भागद्वयस्य साध्यसाधनवर्त्तित्वेऽपि क्रियायास्ततः साधनत्वेनाऽबोधाद् दृष्टान्तत्वासम्भवश्चेति भावः । तदेव विशदयति—*साधनरूपतेति* । प्रकृत्येत्यादौ पाक इत्यादाविति शेषः ।

नन्वनयोर्लिङ्गसंख्यान्वयित्वानन्वयित्वेन वैषम्यात् कथं दृष्टान्तदार्ष्टान्तिकभावोऽत आह—*इयान् परमिति* । तथा च यत्किञ्चिद्धर्मवत्त्वेन सादृश्यविवक्षणान्नोक्तदोष इति भावः ।

ननु धावत्यर्थस्य कारकत्वेनाऽनन्वयित्वे कारकानन्वयित्वरूपमसत्त्वं तस्या भज्येतेति चेत् ? तत्र क्रियानाधारत्वविशेषणेन कर्तुर्व्यापाराधारत्वेनं कर्मणः फलाधारत्वेन कर्तृत्वेन कर्मत्वेनान्वयेऽप्युक्तरूपस्यासत्त्वस्याऽक्षतत्वात् । उक्तञ्च—

क्रिया न युज्यते लिङ्गैः क्रिया नाऽऽधारकारकैः ।
असत्त्वरूपता तस्या इयमेवाऽवधार्यताम् ॥ इति ।

क्रियान्तराकाङ्क्षानुत्थापकतावच्छेदकधर्मवत्त्वमसत्वभूतत्वमिति मते त्वत्र दोषः प्रागुक्त एवं । साधनाकाङ्क्षोत्थापकतावच्छेदकधर्मवत्त्वरूपतया परिष्कृते तु न क्वापि दोषः इति । तथाभिधाने इति । उक्तसाध्यत्वेन रूपेण प्रतीतावित्यर्थः ।

*ओदनस्येति* । अत्रौदनपदं तण्डुलादिपरम् । अन्यथा विक्लिन्नस्यैवौदनपदार्थतया तस्य पाकासम्भवेन बाधितार्थकताऽऽपत्तेः । कर्मषष्ठ्या इति । कर्मत्वेन कर्मशक्तायाः षष्ठ्या एवेत्यर्थः । *मानत्वादिति* । अनुपपत्तिरूपप्रमाणत्वादित्यर्थः । घञन्तेन सिद्धभावस्यैवाऽभिधाने कारकाणां साध्यस्वभावक्रियाऽन्वयित्वनियमेनौदनस्याऽकारकतयाऽकर्मत्वेन तत्र षष्ठ्यनुपपत्तेरेव तस्य साध्यस्वभावक्रियार्थकत्वे मानत्वादिति भावः । *क्रियान्वयादिति* । साध्यस्वभावाऽध्याहृतभवत्यर्थस्य परम्परयाऽन्वयादित्यर्थः ।

नन्वोदनस्य कृदन्तार्थफलाश्रयत्वरूपकृदन्तयोगस्यापि सत्त्वेन कथं तदनुपपत्तिरत आह—*न लोकेति* । इदं च समाधिसौकर्यादुक्तम् । प्रत्यासत्त्या यद्धात्वर्थफलाश्रयत्वं तद्धात्वर्थकारकस्यैव कर्मतालाभेन पाकपदार्थस्य क्रियात्वेन भवत्यर्थस्य क्रिया-

त्वेऽपि तदर्थफलाश्रयत्वाभावेनौदने कर्मत्वस्यैव दुरुपपादत्वात्। ननु तत्र मा भूत् कृद्योगषष्ठी शेषषष्ठ्यैव तथा प्रयोगोपपत्तेरिति चेद्? न। सर्वत्र सम्बन्धषष्ठ्यैव प्रयोगोपपत्त्या "कर्तृकर्मणोः" इत्यादिविधिवैयर्थ्यापत्तेः। यदि च जगतः कर्त्तेत्यादौ कर्म्मत्वेन कर्मत्वप्रकारकसर्वसिद्धबोधोपपत्त्यर्थं समासस्थले "गतिकारकोपपदात्कृत्" (पा० सू० ६।२।१३९) इत्यादिविहितस्वरनिर्वाहार्थं च तस्यावश्यकतेति विभाव्यते, तदा प्रकृते किं तत्प्रयोजनं पाणिपिहितमिति भावः। नन्वसत्त्वभूतक्रियाया भावप्रत्ययप्रकृत्यर्थत्वे काष्ठानां तन्निरूपितकरणत्वस्यापि सम्भवाद्भवत्यर्थाऽनध्याहारेऽपि, काष्ठैः पाक इत्याद्यपि प्रसज्ज्येतेत्याशङ्क्येष्टापत्त्या परिहरति—*एवं रीत्येति* ॥

अन्ये तु भावप्रत्ययस्थले सम्बन्धिभेदेनैकस्यैव पितृत्वभ्रातृत्ववद्भावत्यर्थस्य मृगदर्शनसम्बन्धिभेदात् साधनवच्चैकस्या एव क्रियाया वाचकप्रत्ययरूपसम्बन्धिभेदात् साध्यत्वसाधनत्वाभ्यामुपस्थितिर्न ताभ्यां भिन्नभिन्नक्रियोपस्थितिरित्याहुः। *एवमिति*। यथौदनस्य पाक इत्यादावोदनस्य कर्मत्वाऽनुपपत्त्याऽसत्त्वभूतव्यापारो धातुवाच्यस्तथेत्यर्थः। तादृशफलस्यावाच्यत्वेऽनुपपत्तिं दर्शयति—*अत एवेति*। अन्यथा तादृशप्रयोगानुपपत्तिस्तादृशफलस्य वाच्यत्वे तु, तस्य व्यपदेशिवद्भावेन स्वसम्बन्धितया कर्मत्वात्, तत्समानाधिकरणस्तोकादिशब्देभ्यो द्वितीयोपपत्तिः। तत्र स्तोकादिभ्यः "कर्तृकर्मणोः" इति षष्ठी तु न। कर्तृसाहचर्य्येण भेदान्वयिन एव कर्मणस्तत्र ग्रहणात्। अत एव "पूजनात्पूजितम्" इति सूत्रे भाष्ये दारुणं यथा भवति तथाऽऽध्यापक इत्यर्थे दारुणाध्यापकसिद्ध्यर्थं मलोपवचनमारब्धं भाष्ये। अन्यथा "कर्तृकर्मणोः" इति विहितषष्ठ्यन्तेन समासे तद्वैयर्थ्यं स्फुटमेवेत्यन्यत्र विस्तरः।

अन्ये तु "ओजः सहोऽम्भसा वर्त्तते" इत्यधिकारे "तत्प्रत्यनुपूर्वमीपलोमकूलम्" (पा० सू० ४।४।२८) इति सूत्रे द्वितीयान्ततच्छब्दग्रहणं ज्ञापकम् क्रियाविशेषणाद् द्वितीयेत्यस्यार्थस्य, न तु स्तोकाद्यर्थस्य कर्मत्वमपि। फलस्य फलाश्रयत्वाऽभावात्। एवञ्च न तद्वाचकेभ्यः षष्ठीप्रसक्तिरित्याहुः ॥ १४ ॥

अर्थ—जिस क्रिया के कथनानन्तर दूसरी क्रिया की आकाङ्क्षा नहीं होती, वह असत्त्वभूत क्रिया है। इस प्रकार की क्रिया यदि धात्वर्थ मानी जायगी तो पाकः इत्यादि कृदन्त स्थल में भी धातु से इसका भान प्राप्त होगा।

यदि पाकः इत्यादि स्थल में तादृश क्रिया की प्रतीति इष्ट मानी जाय तो कृत् प्रत्यय का भावरूप अर्थ द्रव्य (लिङ्ग संख्यान्वयी) के समान प्रतीत होता है इस भाष्य सिद्धान्त से विरोध प्राप्त होगा।

इसका उत्तर कारिका से लिखते हैं—

'आख्यातशब्दे भागाभ्याम्' इत्यादि।

आख्याते शब्दौ यस्मिन् अथवा आख्यातयोः शब्दे इस प्रकार की व्युत्पत्ति से दो तिङों से घटित वाक्य के भाग=एक देश अर्थात् 'पश्य मृगो धावति' इसमें पश्य और

धावति पदों से क्रिया का साध्य-साधन भाव शास्त्र में कल्पित किया गया है उसी प्रकार घञन्त पाक में भी क्रिया की [1]साध्यसाधनरूपता कल्पित है।

आख्यातशब्दे='पश्य मृगो धावति' इत्यादि स्थल में। भागाभ्याम्=तिङन्तों से यह अर्थ विवक्षित है। विवरणकार ने 'भागाभ्याम्' का प्रकृति प्रत्यय भाग अर्थ किया है। वह युक्त नहीं है। क्योंकि पचति यहाँ पर भी पच् तथा तिङ् रूप भाग द्वय होने से साध्यसाधन भाव से प्रतीति होने लगेगी। साध्यसाधनभाव क्रमसे लेना चाहिये। क्रियान्तर की आकाङ्क्षा की अनुत्थापकता का अवच्छेदक रूप साध्यत्व है। कारकत्वेन क्रिया में अन्वयित्व साधनत्व है।

स घञादिष्वपिक्रमः—पाकः इत्यादि स्थल में क्रिया की पच् आदि से साध्यावस्था घञादि प्रत्यय से साधनावस्था प्रतीत होती है। पश्य मृगो धावति से पाकः इसमें इतना विशेष है कि घञादि से उपस्थापित क्रिया लिङ्ग और संख्या में अन्वित होती है तथा कारकत्वव्याप्य कर्तृत्वादिरूप से अन्वित होती है। तिङन्त स्थल में उपस्थापित क्रिया का लिङ्ग और संख्या में अन्वय नहीं होता है। तथापि कर्तृत्व कर्मत्वादिरूप से अन्वयित्व कृदन्तस्थल के समान आख्यातान्त क्रिया का भी होता है। इसी से दृष्टान्त दार्ष्टान्तिक भाव है ऐसा समझना चाहिये।

शङ्का—घञन्त स्थल में क्रिया की साध्यस्वरूप से प्रतीति होने में प्रमाण क्या है?

समाधान—"ओदनस्य पाकः" यहाँ कर्म[2] में षष्ठी विभक्ति का होना ही प्रमाण है।

शङ्का—साध्यस्वभावा भवति क्रिया का अध्याहार करने से परम्परया कारक का अन्वय हो जायगा।

समाधान—'कर्तृकर्मणोः कृति' (२।३।६५) इस सूत्र से कृत् के योग में कर्ता तथा कर्म में षष्ठी विभक्ति का विधान होने से भवति क्रिया का अध्याहार प्रकृतोपयोगी नहीं है। भवति के साथ परम्परया अन्वय करने पर 'न लोकाव्ययनिष्ठाखलर्थतृनाम्' (२।३।६९) इस सूत्र से लादेश के योग में षष्ठी का निषेध भी हो जायगा।

इसी प्रकार काष्ठैः पाकः=काष्ठों के द्वारा पाक इत्यादि प्रयोग भी इष्ट है। एवं पाकः इत्यादि घञन्तस्थल में धातु से फलांश की भी असत्वरूप से प्रतीति होती है। अत एव स्तोकं पचति के समान स्तोकं पाकः ऐसा भी प्रयोग उपपन्न होता है॥ १४॥

हिन्दीभाष्य—'आख्यातशब्दे भागाभ्याम्' इस कारिका में शब्द के उपादन से बहुव्रीहि समास का लाभ होता है। वाक्य के अन्य पदार्थ होने से आख्यातद्वय से घटित वाक्य इस अर्थ का लाभ हुआ। पश्य एवं धावति इन दो तिङन्तों से घटित पश्य मृगो धावति इस वाक्य से वैयाकरणों के मत में 'मृगाभिन्नाश्रयक वर्तमान कालिक धावनानुकूल व्यापारकर्मकः त्वदभिन्नाश्रयकः प्रेरणाविषयीभूतो दर्शनानुकूलो व्यापारः' इस प्रकार का बोध होता है। इससे धावन क्रिया का दर्शन क्रिया में कर्मतया अन्वय स्पष्ट प्रति-

---

१. लिङ्गसंख्या में अनन्वयी असत्त्वभूत धात्वर्थ होता है। लिङ्गसंख्यान्वयी द्रव्य होता है।

प्रकृति से क्रिया की साध्यरूपता प्रत्यय से साधनरूपता प्रतीत होती है।

२. साध्यत्वरूप में प्रतीयमान क्रिया में ही कारकान्वय माना गया है।

भासित होता है। कर्मतया अन्वित धावन क्रिया साधनरूपा तथा दर्शन क्रिया साध्यावस्थापन्ना मानी जाती है।

विवरणकार ने आख्यातञ्चासौ शब्दश्च ऐसा कर्मधारय समास मानकर आख्यातरूप शब्द ऐसा अर्थ किया है। इसके प्रकृति और प्रत्यय दो भाग हैं परन्तु ऐसा अर्थ विवक्षित होनेपर शब्द-शब्द का उपादान निरर्थक हो जायगा। क्योंकि 'आख्यातमाख्यातेन' इसमें आख्यातशब्द तिङन्त का प्रतिपादक होने से आख्यातमात्र के कथन से तिङन्त पचति आदि का लाभ हो जाता है।

पचति में प्रकृति पच् से क्रिया की साध्यावस्था प्रतीत होनेपर भी तिङ् से उसकी साधनावस्था प्रतीत नहीं होने से दृष्टान्त कथन भी असङ्गत हो जायगा। इसलिये आख्याते (प्रथमा का द्विवचन) शब्दौ यस्मिन् वाक्ये इस प्रकार बहुव्रीहि समास करना उचित है।

विवरण के समर्थकों का कथन है कि आख्यात का शब्द के साथ कर्मधारय है। जिसप्रकार पच् से स्वार्थ (क्रिया) का साध्यत्वेन तिङ् से स्वार्थ (कर्ता) का साधनत्व रूप से पचति स्थल में बोध होता है उसी प्रकार पाकः इसमें प्रकृतिभूत पच् से स्वार्थ (क्रिया) का साध्यस्वरूपसे घञ् आदि से स्वार्थ (क्रिया) का सिद्धस्वरूप से प्रतीति होने में किसी प्रकार की बाधा नहीं है। पचति में स्वार्थ क्रिया तथा कर्ता और पाकः इसमें स्वार्थ क्रिया ही है इस भेद से दृष्टान्तदार्ष्टान्तिक भाव में किसी प्रकार की बाधा नहीं है। आख्यातशब्दे इसमें एकवचन का स्वारस्य भी इस पक्ष में होता है। वस्तुतः इस पक्ष में शब्द शब्दोपादान का सार्थक्य नहीं होगा क्योंकि आख्यात मात्र से ही तिङन्त का बोध हो जायगा।

इस प्रसङ्ग से यह स्पष्ट होता है कि जिस प्रकार धावन क्रिया साधनत्वेन और दर्शन क्रिया साध्यस्वरूप से प्रतीत होती है उसी प्रकार पाकः इसमें प्रकृति से क्रिया की साध्यत्वेन प्रत्यय से साधनत्वेन प्रतीति होती है।

शङ्का—धावन क्रिया कर्मतया दर्शन क्रिया में अन्वयिनी एवं पचति भवति स्थल में पचति क्रिया कर्तृत्वरूपसे भवति क्रिया में अन्वयी होने से कारकत्व व्याप्य कर्मत्व कर्तृत्वादि रूप से अन्वयित्व रूप साधनरूपता स्पष्ट है। ऐसी अवस्था में कारकत्वव्याप्य धर्म से क्रियानन्वयित्व स्वरूप असत्त्वभूतत्व का उसमें भङ्ग हो जायगा।

समाधान—कारकत्वव्याप्य में क्रियानाधारत्व विशेषण है। 'पश्यमृगो धावति' 'पचति भवति' आदि स्थल में क्रियानाधारकर्मत्व कर्तृत्वादि रूप से क्रिया का अन्वय नहीं है। कर्ता व्यापाराश्रय और कर्म फलाश्रय होने से क्रिया का अनाधार कर्ता और कर्म नहीं हुआ। अतः क्रियानाधार कारकत्व व्याप्य धर्म से यहाँ अन्वय नहीं होने से उक्त अतिप्रसङ्ग नहीं है। वाक्यपदीय में भी लिखा है।

'क्रिया न युज्यते लिङ्गक्रियानाधारकारकैः।
असत्त्वरूपता तस्या इयमेवावधार्यताम्॥' इति।

क्रिया, स्त्रीत्वपुंस्त्वादि लिङ्ग से एवं क्रिया के अनाश्रयकारकत्वव्याप्य करणत्व आदि से अन्वित नहीं होती। उसकी यही असत्त्वरूपता जाननी चाहिये।

क्रियान्तराकाङ्क्षा के अनुत्थापकतावच्छेदकधर्म को असत्त्वभूतत्व मानने से 'पचति

भवति' में दोष होगा। पचति में एकाश्रयनिष्ठ वर्तमान कालिक पाकक्रिया को क्रियान्तर भवति क्रिया की अपेक्षा होने से उसमें उक्तरूप असत्त्वभूतत्व नहीं होगा। इसलिये साधनाकाङ्क्षा का उत्थापकतावच्छेदक धर्म को असत्त्वभूतत्व मानना चाहिये। धात्वर्थ क्रिया ही साधन (कारक) की आकाङ्क्षा करती है। अतः धात्वर्थ क्रिया ही असत्त्वभूत है।

सादृश्य सर्वांश से नहीं होता किन्तु विवक्षित अंश विशेष से होता है। अतः कारकत्वेन अन्वयित्व मात्र से सादृश्य यहाँ विवक्षित है।

'ओदनस्य पाकः' यहाँ ओदनपद तण्डुल परक है। अन्यथा पका तण्डुल ही ओदन कहा जाता है। पके पदार्थ का पाक विवक्षित नहीं है।

कारकों का साध्यस्वभाववाली क्रिया में ही अन्वय होने से 'ओदनस्य पाकः' इसमें षष्ठीविभक्ति की उपपत्ति के लिये धातु वाच्य क्रिया को साध्यरूप मानना होगा। साध्यरूपा क्रिया के विना कर्मादि में षष्ठी अनुपपन्न होकर स्वोपपादक साध्यस्वभावा क्रिया का आक्षेप करती है। अर्थापत्ति प्रमाण से यह सिद्ध होता है।

शङ्का—साध्यस्वभाववाली भवति क्रिया का अध्याहार होने से परम्परया भवत्यर्थ का ओदन के साथ अन्वय हो जायगा।

समाधान—कृत् के साथ योग होनेपर 'कर्तृकर्मणोः कृति' (२।३।६५) इस सूत्र से षष्ठी का विधान होने से भवति योग में षष्ठी नहीं होगी।

शङ्का—कृदन्तार्थ फलका आश्रयत्व रूप ही कृदन्त का योग मानने से षष्ठी की अनुपपत्ति नहीं है।

समाधान—'न लोकाव्ययनिष्ठा' (२।३।६९) इत्यादि सूत्र से षष्ठी का निषेध हो जायगा। सूत्र में लादेश से तिङ् का भी ग्रहण है।

वस्तुतः यह समाधान अत्यन्त सुलभ होने के कारण लिखा है। जिस धातु के अर्थ रूप फल की आश्रयता हो, उसी धातु के अर्थ निरूपित कारकत्व होनेपर कर्म संज्ञा का लाभ होता है। अतः भवत्यर्थ निरूपित फलाश्रयता का ओदन में अभाव होने से कर्मत्व का ही अभाव है।

शङ्का—'कर्तृकर्मणोः' कृति' इससे वहाँ षष्ठी विभक्ति के न होनेपर भी सम्बन्ध सामान्य में 'शेषे षष्ठी' (२।३।५०) इससे 'षष्ठी' का विधान होने से दोष नहीं होगा।

समाधान—इस प्रकार सर्वत्र सम्बन्ध सामान्य में षष्ठी हो जाने से 'कर्तृकर्मणोः' इत्यादि सूत्र का वैयर्थ्य हो जायगा।

पाकः इसमें क्रिया कारकान्वयित्व रूप से प्रतीत होती है। अतएव स्तोक को कर्म संज्ञा होने से 'स्तोकं पाकः' ऐसा प्रयोग सिद्ध होता है। व्यपदेशिवद्भाव से फल भी फलाश्रय होता है।

शङ्का—स्तोकं पाकः यहाँ कृद्योग होने से कर्म में षष्ठी होनी चाहिये।

समाधान—धात्वर्थ व्यापार में भेद सम्बन्ध से अन्वयी कर्ता में षष्ठी होती है उसी के समान भेद से अन्वयी कर्म में षष्ठी होती है। स्तोक और विक्लितिरूप फल में अभेद से अन्वय होने से भेद सम्बन्ध से अन्वयी कर्ता कर्म में षष्ठीविधायक सूत्र का प्रसङ्ग नहीं है।

"तत्प्रत्यनुपूर्व" (४।४।२८) इत्यादि सूत्र में तत् यह द्वितीयान्त का निर्देश[1] है।

---

१. प्रतीपं वर्तते प्रातीपिकः इस सूत्रोदाहरण में प्रतीपं क्रिया विशेषण होने से इसमें द्वितीया है।

अतः क्रिया विशेषण से द्वितीया विभक्ति की कल्पना होती है। कर्मसंज्ञा नहीं होती। ऐसी अवस्था में द्वितीया होने से कर्म संज्ञा का अभाव है। अतएव षष्ठी की प्राप्ति नहीं हुई।

जिस प्रकार एक देवदत्त सम्बन्धि भेद से किसी के पिता किसी के पुत्र और किसी का पौत्र होता हैं एवं पश्यमृगो धावाते इस में मृग के प्रति साध्यावस्था और दर्शन क्रिया के प्रति साधनवस्था की धावन क्रिया में प्रतीति होती है उसी प्रकार पाकः में भी साध्यावस्था तथा साधनावस्था दोनों की प्रतीति लिङ्गसंख्याकारकान्वयी तदनन्वयी के रूप में एक ही क्रिया में प्रकृति और प्रत्यय के कारण से होती है ॥ १४ ॥

एतदेव स्पष्टयति—

साध्यत्वेन क्रिया तत्र धातुरूपनिबन्धना।
सिद्धभावस्तु यस्तस्याः स घञादिनिबन्धनः ॥ १५ ॥

न च घञादिभिः सिद्धत्वेनाभिधाने मानाभावः; पाक इत्युक्ते, भवति, जायते, नष्टो वेत्याद्याकाङ्क्षोत्थापनस्यैव मानत्वात्। धातूपस्थाप्यायां तदसम्भवस्योक्तत्वात्। स्तोकः पाक इत्यनापत्तेश्च। तस्माद्धात्वर्थान्वये स्तोकादिशब्देभ्यो द्वितीया। घञर्थान्वये प्रथमा पुंल्लिङ्गता चेति-तत्सिद्धये घञादेः शक्तिरुपेया। एतेन घञादीनां प्रयोगसाधुतामात्रमिति नैयायिकनव्योक्तमपास्तम्।

न च घञन्तशक्त्युपस्थाप्यान्वये स्तोकः पाक इति भवतीति वाच्यम्। घञन्तानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवादनुशासनाच्च घञादेरेव तथा शक्तिकल्पनादिति दिक्। एवञ्च घञ्शक्त्यभिप्रायेण "कृदभिहित" इति भाष्यमतो न तद्विरोध इति भावः ॥ १५ ॥

*उक्तत्वादिति* । क्रियान्तराकाङ्क्षाऽनुत्थापकतावच्छेदकरूपवत्त्वं साध्यत्वमित्यादिनेत्यर्थः। क्रियान्तराकाङ्क्षाऽनुत्थापकतावच्छेदकरूपेणोपस्थिते क्रियान्वयासम्भवादिति भावः। तेन रूपेणोपस्थितेः 'पश्य मृगो धावति' इत्यादौ व्यभिचरितत्वादाह— *स्तोकः पाक इति* । घञा सिद्धावस्थक्रियाया अबोधने धात्वर्थविशेषणवाचकस्तोकादिशब्दस्य लिङ्गसर्वनामनपुंसकत्वापत्तिरिति भावः। तदेव विशदयति—*तस्मादिति* । *एतेनेति* । घञादीनां सिद्धावस्थाऽऽपन्नक्रियावाचकत्वव्यवस्थापनेनेत्यर्थः। *प्रयोगसाधुतामात्रमिति* मात्रपदेन वाचकत्वव्यवच्छेदः।

*नैयायिकनव्योक्तमिति* । धातूनां सुब्विभक्त्यप्रकृतित्वात्तदर्थे सुबर्थसंख्याकर्मत्वादीनामन्वयानुपपत्त्या धातोरिव घञन्तस्यापि क्रियावाचकत्वमभ्युपेयम्। प्रकृत्येकदेशार्थे तदन्वयाऽभ्युपगमे तु यत्र पाककर्त्रादेर्द्वित्वादिकं बाधितम्, पाकादेश्च तद्बाधितं, तत्र पचन्तौ पश्यतीत्यादिप्रयोगापत्तेः। धातूपस्थाप्याऽर्थे सुबर्थान्वयबोधं प्रति तद्धातूत्तरधर्मिकयत्किञ्चिदर्थपरत्वज्ञानस्य प्रतिबन्धकत्वोपगमे तु गौरवम्। एवञ्च यत्र धातुमात्रस्य पाकादौ तात्पर्य्यम्, तत्र तद्विशेषणतावाचकस्तोकपदाद् द्वितीयैव।

यत्र तु कृदन्तसमुदायस्य तत्र तद्विशेषणवाचकपदं तत्समानविभक्तिकमेवेति कातन्त्रपरिशिष्टकृन्मतं नव्यनैयायिकमतत्वेनानूद्य दूषयति-*नचेति ॥ *गौरवादिति* ॥

ननु भावाख्यातवद्भावविहितघञादीनां धात्वर्थानुवादकत्वे स्थिते प्रागुक्तप्रयोगोपपत्तयेऽनायत्या घञन्तानुपूर्व्याः शक्ततावच्छेदकत्वस्वीकार आवश्यक इत्यत आह—*अनुशासनादिति* ॥ तथा च गुरुभूतानुपूर्व्याः शक्ततावच्छेदकत्वापेक्षयानुशासनानुगुण्यादुक्तप्रयोगोपपत्तये घञ्त्वस्यैव तत्त्वमुचितमिति भावः ।

ननु घञादीनां व्यापारावाचकत्वेऽपि क्रियाविशेषणत्वाद् द्वितीयेत्यत्र क्रियापदस्य पाकार्थकतया तथानुपस्थाप्यपरत्वात् 'स्तोकः पाक' इत्यादौ धातूपस्थाप्यपाकस्योक्तविशेषणवैकल्यान्न तद्विशेषणवाचकपदाद् द्वितीयापत्तिरत आह-*दिगिति* ॥ तदर्थस्तु-स्यादेवं यदि क्रियाविशेषणाद् द्वितीयेति स्वतन्त्रमनुशासनं स्यात्, किन्त्वस्मदुक्तफलितार्थकथनमेव तत् । तथात्वे वा त्वन्मते 'स्तोकं पाक' इत्यनापत्तेश्चेति ॥ १५ ॥

अर्थ—पूर्वोक्त अर्थ को ही अग्रिम कारिका से स्पष्ट करते हैं।

"पाकः" इत्यादि स्थल में साध्यत्वरूप से क्रिया की प्रतीति में धातु हेतु है। एवं क्रिया की सिद्धरूप से प्रतीति में घञ् आदि प्रत्यय निमित्त हैं।

शङ्का—घञादि प्रत्ययों से सिद्धावस्था की क्रिया में प्रतीति में कोई प्रमाण नहीं है।

समाधान—पाकः इसके कथनानन्तर पाक हो रहा है या नष्ट हो गया इस प्रकार की आकाङ्क्षा का होना ही सिद्धत्व प्रतीति में प्रमाण है। धातु द्वारा उपस्थित क्रिया में आकाङ्क्षाकी उत्थापकता नहीं है। पूर्व में इस विषय का विस्तृत विवेचन किया गया है।

घञर्थव्यापार में स्तोकार्थान्वय की विवक्षा होनेपर 'स्तोकः पाकः' ऐसा प्रयोग इष्ट है। सिद्धावस्था से क्रिया का भान होने से कर्म संज्ञा एवं द्वितीया नहीं हुई।

इसीलिये धात्वर्थ फल में अन्वय होने पर 'स्तोकं पाकः' इसी स्थल में घञर्थ में अन्वय करने पर 'स्तोकः पाकः' यह प्रथमान्त तथा पुल्लिङ्ग प्रयोग होता है। इस प्रयोग की सिद्धि के लिये घञादि कृत् प्रत्यय में शक्ति मानना आवश्यक है। अतः घञादि प्रत्यय का प्रयोग साधुता मात्र के लिये हैं ऐसा कथन असङ्गत है।

शङ्का—घञ् की शक्ति न मानकर घञन्त समुदाय की शक्ति मानते हैं। इस प्रकार धातु में अन्वय होने पर स्तोकं तथा समुदाय घञन्त पदोपस्थाप्य अर्थ में अन्वय करने पर स्तोकः यह प्रयोग हो सकता है। अतः घञ् में शक्ति मानने की आवश्यकता नहीं है।

समाधान—घञन्त अनुपूर्वी को शक्ततावच्छेदक मानने में गौरव है, तथा सूत्रानुशासन से भी घञ् आदि की ही सिद्धावस्थापन्न क्रिया में शक्ति कल्पना उचित प्रतीत होती है। इस प्रकार "कृदभिहितोभावः" यह कथन घञर्थ के तात्पर्य से है ॥ १५ ॥

हिन्दीभाष्य—कारिका में प्रतीयते का अध्याहार है। तत्र = घञाद्यन्त स्थल में। क्रिया की दो अवस्थायें होती हैं—एक साध्य दूसरी सिद्धरूपा। पाकः आदि में क्रिया साध्यरूपा धातु से प्रतीत होती है। "धातुरूपं निबन्धनं = निमित्तं यस्याः" इस व्युत्पत्ति से उक्तार्थ लब्ध होता है। क्रिया सिद्ध रूप से घञादि प्रत्ययों से प्रतीत होती है। "घञादि निबन्धनं" = निमित्तं यस्य ऐसा समास है।

 

घञादि प्रत्यय साधुता मात्र के लिये हैं। धात्वर्थ फल में स्तोकादि की अन्वय विवक्षा होने पर 'स्तोकं पाकः' तथा घञन्तपाक इस समुदाय के वाचक मानने से समुदायार्थ में स्तोक की अन्वयविवक्षा करने पर 'स्तोकः पाकः' इस प्रकार उभयविध प्रयोगों की उपपत्ति हो जाने से घञादिप्रत्यय का कोई अर्थ नहीं है।

वस्तुतः उक्तकथन असङ्गत है। समुदाय में शक्तता एवं उसके अवच्छेदक पाकत्व की अपेक्षा घञ् में शक्तता और उसके घञ्स्वरूप अनुपूर्वी को अवच्छेदक मानने में लाघव है। गुरुभूत पाकत्व को शक्ततावच्छेदक मानने की अपेक्षा लघुभूत घञ्त्व को ही शक्तता-वच्छेदक मानना युक्त है यह भाव है॥ १५॥

ननु कारकाणां भावनान्वयनियम एव पाक इत्यत्रापि कर्म्मषष्ठ्य-नुसारेण भावनाया वाच्यत्वं सिद्ध्येत्। तदेव कुत इत्याशङ्कां समाधत्ते—

सम्बोधनान्तं कृत्वोऽर्थाः कारकं प्रथमो वतिः।
धातुसम्बन्धाधिकारनिष्पन्नमसमस्तनञ्॥ १६॥

सम्बोधनान्तस्य क्रियायामन्वयः। 'त्वं ब्रूहि देवदत्त' इत्यादौ निघाता-नुरोधात्। "समानवाक्ये निघातयुष्मदस्मदादेशाः" इत्यनेन समानवाक्ये एव तन्नियमात्। उक्तं च वाक्यपदीये—

सम्बोधनपदं यच्च तत् क्रियायां विशेषणम्।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति॥ इति॥ द्वि० का० ५

'पचति भवति देवदत्त' इत्यादौ तु सूत्रभाष्यादिरीत्यैकवाक्यतासत्त्वात् स्यादेव निघातः। "तिङ्ङतिङः" (पा० सू० ७।१।८८) इति सूत्रयता तिङ-न्तानामप्येकवाक्यतास्वीकारात्। "एकतिङ् वाक्यम्" इति वदतां वार्त्तिक-काराणां मते परं न। वस्तुत एकतिङ्विशेष्यकं वाक्यमिति तदभिप्रायस्य हेलाराजीयादौ वैयाकरणभूषणेऽस्माभिश्च प्रतिपादितत्वात्तन्मतेऽपि भवत्ये-वेत्यवधेयम्॥ *कृत्वोऽर्थाः*॥ "क्रियाभ्यावृत्तिगणने कृत्वसुच्" (पा० सू० ५।४।१७) इति क्रियायोगे तत्साधुत्वोक्तेः। क्रियाया अभ्यावृत्तिः— पुनःपुनर्जन्म, तस्मिन् द्योत्ये इति तदर्थात्।

*कारकम्*॥ "कारके" इत्यधिकृत्य तेषां व्युत्पादनात्। कारकशब्दः क्रियापरः करोति कर्तृकर्म्मादिव्यपदेशानिति व्युत्पत्तेः। तथाचाग्रिमेष्वपा-दानादिसंज्ञाविधिषु क्रियाऽर्थककारकशब्दानुवृत्त्या क्रियान्वयिनामेव संज्ञेति भाष्ये स्पष्टम्।

*प्रथमो वतिः*॥ "तेन तुल्यं क्रिया चेद्वतिः" (पा० सू० ५।१।११५) इति विहितः। तत् यत्तुल्यं सा क्रिया चेदित्युक्तत्वात्॥ धातुसम्बन्धा-धिकारे—"धातुसम्बन्धे प्रत्ययाः" (पा० सू० ३।४।१) इत्यधिकृत्य तेषां विधानात्।

*असमस्तनञ्* ॥ समासायोग्यः प्रसज्ज्यप्रतिषेधीयो नञित्यर्थः। उत्तरपदाऽर्थान्वयेऽपि समासविकल्पेन पक्षेऽसमस्तत्वाद् यथाश्रुतग्रहणाऽयोगात्।

न चासमस्तनञः क्रियान्वये मानाभावः। न त्वं पचसि, न युवां पचथः, चैत्रो न पचति, घटो न जायते, इत्यादौ क्रियाया एव निषेधप्रतीतेः।

अत एव विद्यमानेऽपि घटे तादृशप्रयोगः। तथा च–घटो नास्तीत्यत्राप्यस्तित्वाभाव एव बोध्यते। न हि-घटो न जायते, नास्तीत्यनयोर्धात्वर्थभेदमन्तरेणास्ति विशेषः। तथा च—'भूतले न घट' इत्यत्राप्यस्तीत्यध्याहार्य्यम्। प्रकारतासम्बन्धेन नञर्थविशेष्यकबोधे, धातुजन्यभावनोपस्थितेर्हेतुत्वस्य क्लृप्तत्वात्। शेषं नञर्थनिर्णये वक्ष्यते॥ १६॥

*क्रियायामिति* ॥ प्रवर्त्तनाविषयक्रियायामित्यर्थः। तत्र तदनन्वये निघाताऽनुपपत्तिं प्रमाणयति–*निघाताऽनुरोधादिति*। *समानवाक्य इति*। 'आख्यातं सविशेषणं वाक्यम्' इति समर्थसूत्रभाष्यात्साक्षात्परम्परया वा पदार्थान्तराऽन्वितक्रियाबोधकाख्यातस्यैकवाक्यतालाभेन सम्बोधनान्तार्थस्य क्रियायामनन्वये, 'त्वं ब्रूहि देवदत्त' इत्यादौ तदभावात् समानवाक्य इति प्रकृत्य "आमन्त्रितस्य" इति विहितस्य निघातस्यानुपपत्तेरित्याखण्डलार्थः। तत्र 'शालीनां ते ओदनं दास्यामि' इत्यादौ शालीनामित्यादेः समानवाक्यत्वसिद्धये–परम्परयेति। पचतिभवतीत्यादिसाधारणं चैतत्। प्रकृते च सम्बोधनस्यानुवाद्यविषयतयाऽनुवाद्यस्य विधेयसाकाङ्क्षतया विधेयतायाश्च क्रियानिष्ठत्वेन तत्रैव सम्बोधनान्तार्थान्वयौचित्यात् समानवाक्यस्थत्वमक्षतमिति भावः। बोधस्त्वत्राभिमुखीभावनानुकूलव्यापारविषयदेवत्तोद्देश्यकप्रवर्त्तनाविषयत्वदभिन्नकर्तृकं भाषणमिति। तत्र हरिसम्मतिमाह–उक्तञ्चेति* ॥

*सम्बोधनपदमिति* ॥ तद्बोध्यमित्यर्थः॥ *विशेषणमिति* ॥ स्वोद्देश्यकप्रवर्त्तनाविषयत्वरूपपरम्परासम्बन्धेनेत्यर्थः। "व्रजानी"त्यस्य हि "जानीही"ति शेषः।

सिद्धस्याभिमुखीभावमात्रं सम्बोधनं विदुः।
प्राप्ताऽऽभिमुख्यो ह्यर्थात्मा क्रियासु विनियुज्यते॥ सम्बन्धसमु० १६३

इति कारिकान्तरे विनियुज्यत इति वदता प्रवर्त्तनाविषयक्रियायामेव तदन्वयबोधनात्। प्रवर्त्तनोद्देश्यस्यैव तद्विषयक्रियोद्देश्यत्वादुद्देश्यविधेयभावस्य तयोः संसर्गमर्य्यादया लाभादेकवाक्यतया निघात इति तदर्थः। शाब्दबोधस्त्वत्र सम्बोधनविषयदेवदत्तोद्देश्यकप्रवर्त्तनाविषयो मत्कर्तृकव्रजनकर्मकं ज्ञानमिति। *सूत्रभाष्यादिरीत्येति* ॥ भूवादिसमर्थसूत्रस्थभाष्योक्तरीत्येत्यर्थः॥

*स्यादेवेति* ॥ आमन्त्रितदेवदत्तपदस्येत्यर्थः। अत्र जानीहीति पदाध्याहारेणोक्तरीत्या देवदत्तपदस्यैकवाक्यस्थत्वाऽक्षतेरिति भावः। तत्र सूत्रकारसम्मतिमाह–*तिङ्ङतिङ इतीति* ॥ तिङन्तानामिति बहुवचनेन प्रकृते जानीहीतिपदाऽध्याहारः

सूच्यते। अन्यथा तत्र निघाताऽप्राप्त्या तत्पर्य्युदासबोधकातिङ्ग्रहणस्य वैयर्थ्यापत्तेरिति भावः।

सम्मतिरियं सूत्रकृत एकवाक्यतांशे निघातांशे च। भाष्यसम्मतिस्तु न, तेनातिङ्ग्रहणस्य प्रत्याख्यानात्।

नन्वेवं कथमतिङ्ग्रहणप्रत्याख्यानसङ्गतिः। पचतिभवतीत्यत्र निघातवारकतया तस्यावश्यकत्वादिति चेद्? न। तत्र कारकान्वितक्रियाबोधकत्वरूपैकवाक्यत्वस्य सुप्चयसुप्तिङन्तचयसाधारणस्य सत्त्वेऽपि वार्त्तिककारपरिभाषितश्रूयमाणैकतिङ्त्वरूपैकवाक्यत्वस्य तत्रासत्त्वादित्याशयात्। तथा चोक्तस्थले तादृशैकवाक्यत्वाऽभावान्निघाताऽप्रसक्तिरेवैतत्सूचनायैव "स्यादेव निघात" इति सम्भावनाद्योतकलिङ उपादानम्। तदेतदाविष्करोति—*वार्त्तिककाराणामिति*॥ "परं" केवलं यथाश्रुतसूत्रमनुरुद्धयाह—*वस्तुतस्त्विति*॥ *हेलाराजीयेति*॥

बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता। द्वि० का० ४४२
तिङन्तेभ्यो निघातस्य प्रतिषेधस्तथाऽर्थवान्॥

इति वाक्यपदीयव्याख्याऽवसर इति शेषः॥ *तन्मतेऽपि भवत्येवेति*॥ इदञ्च निरुक्तलौकिकवाक्यत्वस्यैव निघातप्रयोजकत्वमित्याशयमूलकमित्यवधेयम्॥ पुनः *पुनर्जन्मेति*॥ अत एव सकृत्प्रवृत्तौ, द्विः पचतीति न। 'पञ्च कृत्वो भुङ्क्ते इत्यादौ पञ्चादिशब्दाः संख्योत्पत्तिपराः। तस्या एव कृत्वसुजादिर्द्योतकः। सूत्रस्वारस्याच्च तद्द्योत्यार्थस्य क्रियायामन्वय इति भावः। क्रियान्वयिनामेव संज्ञेत्यपादानादिमध्यम्[1]। क्वचित्तथैव पाठः॥

*स्पष्टमिति*॥ अन्ये तु—उत्तरभाष्ये करोति क्रियां निर्वर्त्तयतीति व्युत्पत्तिप्रदर्शनात्कारकत्वम्। अत एव ब्राह्मणस्य पुत्रं पन्थानं पृच्छतीत्यादौ ब्राह्मणस्य न कारकत्वम् पुत्रेणाऽन्यथासिद्धत्वात्। अत एव तेषां क्रियायामन्वयः। क्रियाजनकमिति ज्ञाते का सा क्रियेत्याकाङ्क्षोदयेन क्रियाया अपि जनकाकाङ्क्षया च तत्रैवान्वयस्यौचित्यात्। अत एव "गतिकारकोपपदात्कृत्" ( पा० सू० ६।२।१३९ ) इत्यादौ कारकशब्दस्यापादानादिपरता सङ्गच्छते। "कारके" इति तु प्रथमार्थे सप्तमीत्याहुः॥

*इत्युक्तत्वादिति*॥ तथा च ब्राह्मणवदिति वृत्तौ ब्राह्मणशब्दस्य ब्राह्मणकर्तृकाध्ययनपरतया तत्तौल्यवत्यर्थसमभिव्याहृताध्ययनक्रियायां ब्राह्मणकर्तृकाध्ययनतुल्यमेककर्तृकमध्ययनमिति ब्राह्मणवदधीत इत्यतो बोधः। "तत्र तस्येव" इति विहितवतेर्द्रव्यगुणान्वयित्वान्मूले प्रथम इत्युक्तम्॥ *विधानादिति*॥ तत्र धातुशब्दस्य धात्वर्थपरता, 'वसन् ददर्श' इत्यत्राऽतीतवासकर्तृकर्तृकं दर्शनमित्यादिरीत्या बोधादिति भावः॥

*प्रसज्ज्येति*। प्रतिषेधशब्दः कर्मघञन्तो बाहुलकात्। प्रसज्ज्याऽऽपाद्य प्रतिषेधः—प्रतिषेधविषयः प्रतियोगी यस्य तादृशाऽभावोऽर्थो यस्येति व्युत्पत्त्याऽभावार्थक

---

१. अपादानादिपदं मध्ये योज्यमित्यर्थः।

इत्यर्थः ॥ *यथाश्रुतेति* ॥ न ब्राह्मणमानयेत्यादौ नञर्थारोपस्य ब्राह्मणादावन्वयेन व्यभिचारापत्तेरिति भावः। *निषेधप्रतीतेरिति* ॥ अत्यन्ताऽभावप्रतीतेरित्यर्थः। तथा च तादृशप्रतीतिरेवोक्तनञर्थस्य क्रियान्वयित्वे मानमिति भावः।

तस्य प्रतियोगितया युष्मदाद्यर्थाऽन्वयित्वे तु युष्मदादौ लकारवाच्यकर्तृवाचकत्वरूपसामानाधिकरण्याभावान्मध्यमपुरुषाद्यनुपपत्तिर्युष्मदर्थप्रतियोगिकाभावस्यैकत्वेन द्विवचनाद्यनुपपत्तिश्चेति सूचयितुम्, न त्वं पचसि, न युवां पचथ इत्युक्तम्। एवं चैत्रप्रतियोगिकाभावकर्तृत्वोपगमे पाके तत्कर्तृकत्वबाधः, पाकानुकूलकृत्यभावार्थकत्वे त्वन्मते पुरुषव्यवस्थापकाभावेन कदाचिन्मध्यमोत्तमयोरापत्तिश्चेति बोधयितुं चैत्रो न पचतीत्युक्तम्। *अत एवेति*। नञः क्रियाप्रतियोगिकाभावबोधकत्वादेवेत्यर्थः॥

*तादृशप्रयोग इति*। घटो न जायते इत्याकारक इत्यर्थः। घटस्य विद्यमानतादशायां घटकर्तृकोत्पत्त्यनुकूलव्यापाराभावाऽबाधात् त्वन्मते तु घटाऽभावे उत्पत्त्यनुकूलव्यापारकर्तृत्वाऽभावादुक्तप्रयोगानुपपत्तिरिति भावः। उक्तरीत्या नञः क्रियाप्रतियोगिकाऽभावबोधकत्वध्रौव्ये, घटो नास्तीत्यत्र घटाऽभावकर्तृकत्वस्य धात्वर्थे अबाधेऽपि तद्बोधमनादृत्य घटास्तित्वाभावबोधाभ्युपगम उचितो वक्ष्यमाणकार्य्यकारणभावबलादित्याह *तथा च घट इति*। तदेवोपपादयति*—न हीत्यादिना।

ननु यत्र न क्रियावाचकसमभिव्याहारो भूतले न घट इत्यादौ, तत्र नञा कथं क्रियाप्रतियोगिकाऽभावो बोधनीयोऽत आह—*तथा चेति*। *अध्याहार्य्यमिति*। 'अस्तिर्भवन्तीपर' इत्यादिभाष्ये क्रियान्तराभावेऽप्यस्तिक्रियामादाय वाक्यपरिपूर्त्तिबोधनादिति भावः। प्रकारतासम्बन्धेनेति* नञर्थाऽभावनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन शाब्दबुद्धित्वाऽवच्छिन्नं प्रति विशेष्यतासम्बन्धेन धातुजन्योपस्थितेर्हेतुत्वस्य 'न त्वं पचसि' इत्याद्यनुरोधेन क्लृप्तत्वादत्राऽपि तद्बोधोपपत्तयेऽस्त्यध्याहार आवश्यक इति भावः।

ननु नञर्थाभावस्य शाब्दबोधे प्राधान्योपगमे तदर्थभेदात्मकाभावस्यापि प्राधान्यमेवाभ्युपेयम्, अभावत्वाविशेषात्, तथा च 'असर्वस्मै' इत्यादौ सर्वनामताप्रयुक्तस्मायादिकार्यानुपपत्तिः, 'अतिसर्वाय' इतिवत्। असर्वशब्दात् 'सर्वभिन्नः' इति बोधेन भेदांशे सर्वपदार्थस्योपसर्जनत्वात् महासंज्ञाकरणेन संज्ञोपमर्जनार्थानां सर्वाऽदिबहिर्भावात्। किञ्चानेकमन्यपदार्थे इत्यादावनेकशब्दादेकवचनानुपपत्तिरत आह—*शेषमिति*।

ननु 'अत्वं पचसि' इत्यादाविवाऽत्राऽपि नञः पर्य्युदासद्योतकत्वाऽभ्युपगमाद् युष्मल्लक्ष्यार्थ-त्वद्भिन्ने सामानाधिकरण्याऽबाधान्न पुरुषव्यवस्थाऽनुपपत्तिः। संख्यायास्तत्राबाधान्न द्विवचनाऽनुपपत्तिरपीति। तादृशकार्य्यकारणभावस्यैवाऽप्रमाणिकतया कथं तदनुरोधोऽस्त्यध्याहारनियामकः। घटो न जायते इत्यादौ प्रसज्यप्रतिषेधाऽर्थकनञ्स्थले तु यथा नाऽनुपपत्तिस्तथा वक्ष्यते। तथा च भूतले घटो नेत्यादौ भूतलवृत्ति-

द्योतक तुमुन्, आदि प्रत्ययों का गुणभूत क्रिया के सम्बन्ध से जिस प्रकार विधान है उसीप्रकार गुणभूत क्रिया के सम्बन्ध से कृत्वसुच् आदि प्रत्ययों का विधान होना चाहिये। "एकः पाकः" यहाँ "एकस्य सकृच्च" (५।४।१९) "द्वौ पाकौ त्रयः पाकाः चत्वारः पाकाः" यहाँ "द्वित्रिचतुर्भ्यः सुच्" (५।४।१८) तथा "पञ्च पाकाः" यहाँ कृत्वसुच् प्रत्यय होना चाहिये। इनके होने से सकृत् पाकः द्विः पाकः चतुः पाक इत्यादि प्रयोगों की आपत्ति होगी। "द्विर्वचन" इत्यादि प्रयोग के देखने से गुणभूत क्रिया के सम्बन्ध से भी कृत्वसुच् सुच् ये दोनों प्रत्यय होते ही हैं। द्विः पाकः सकृत् पाकः इत्यादि प्रयोगों के न होने में अनभिधान कारण है। लोक में तथाविध प्रयोग नहीं होने से उनकी साधुता नहीं होती। अन्तिपरक वच् धातु लोक में प्रयुक्त नहीं होती। इस प्रामाणिक वचन की रीति से वहाँ भी समाधान करना चाहिये। अर्थात् इनका भी प्रयोग नहीं होता।

किसी का मत यह है कि—"संख्यायाः क्रियाभ्यावृत्ति गणने" इस सूत्र में क्रिया ग्रहण व्यर्थ है, क्योंकि क्रिया की ही अभ्यावृत्ति=पुनः पुनः उत्पत्ति होती है। अतः क्रिया कथन के विना भी उसका लाभ हो जाता है। इसलिये क्रिया ग्रहण के सामर्थ्य से साध्यमात्र[1] स्वभावा क्रिया का ग्रहण है। पाकः से प्रतीयमाना प्रधानीभूत पाक क्रिया साध्यरूपा नहीं है। अतः द्विः पाकः इत्यादि प्रयोग नहीं हुआ। द्विर्वचनम् यह प्रयोग "द्विः प्रयोगो द्विर्वचनम्" इस विवरण परक भाष्य के प्रयोग अथवा "द्विर्वचनेऽचि" (१।१।५९) इस सूत्र में द्विर्वचन शब्द के प्रयोग से सुच् की कल्पना उपपन्न होती है।

हिन्दी भाष्य—

क्रिया की दो अवस्थायें होती हैं। एक साध्यावस्था दूसरी सिद्धावस्था। पाकः इसमें धातु से साध्यावस्था और घञ् से सिद्धावस्थापन्ना क्रिया प्रतीत होती है। लिङ्ग संख्यानन्वयी असत्त्वभूत है इस प्रकार की क्रिया धातु से, लिङ्गसंख्यान्वयी सत्त्वभूत है इस प्रकार की क्रिया घञादि से प्रतीत होती है। प्रत्ययार्थ क्रिया में धात्वर्थ क्रिया विशेषण है। प्रत्ययार्थ विशेष्य भूत क्रिया लिङ्ग संख्यान्वयी है। अतः पाकौ पाकाः इत्यादि में लिङ्ग और संख्या की प्रतीति स्पष्ट हो रही है।

प्रकृति प्रत्यय रूप वाचक के भेद से 'पाकः' इसमें प्रतीयमाना क्रिया का भेद होता है। एक ही व्यक्ति किसी का आचार्य और किसी का मातुल जिस प्रकार सम्बन्धिभेद से होता है। उसी प्रकार यहाँ भी समझना चाहिये।

"तुमुन् रावुलौ" इसमें क्रियार्थक क्रिया का अर्थ है, क्रिया अर्थः प्रयोजनं यस्याः। अर्थात् क्रिया प्रयोजन है जिस क्रिया का—जैसे "कृष्णं द्रष्टुं याति"=भगवान् श्रीकृष्ण के दर्शन के लिये जाते हैं। यहाँ गमन क्रिया का दर्शन क्रिया फल है। क्योंकि भगवद्दर्शन के लिये गमन है। अतः इसके उपपद रहने पर धातु से तुमुन् रावुल् का विधान होता है। उपपद 'तत्रोपपदं सप्तमीस्थम्' (३।१।९२) इस सूत्र से परिभाषित लिया जाता है। जाने के बाद भगवान् कृष्ण का दर्शन होगा। अतः परकाल वृत्तिता तुमुन् प्रकृत्यर्थ में प्रतीत होती है। क्त्वा का पूर्वकाल में विधान है। "गत्वा पश्यति" देखने के पहले जाना है इत्यादि स्वयमूहनीय हैं।

---

१. साध्यमात्रस्वभावा का घञाद्यर्थ में अगुणीभूतसाध्यस्वभावा ऐसा तात्पर्य है। पाक स्थलीय धात्वर्थ, घञर्थ में गुणीभूत है।

तुमुन् क्त्वा आदि प्रत्यय "अव्यय कृतो भावे" इसके अनुसार भाव में होते हैं। इनसे प्रतीयमान भाव घञर्थ के समान सिद्धावस्थापन्न नहीं है। अपितु साध्यावस्थापन्न है। एतादृश भाव का धातु से लाभ हो जाने के कारण केवल पूर्वोत्तर काल सम्बन्ध का द्योतक क्त्वा तुमुन् होते हैं। क्त्वादि प्रत्यय के प्रकृतिभूत धातु का अर्थ क्रियान्तर के प्रति विशेषण है। विशेष व्याख्यान "तत्त्वबोधिनी" में देखिये।

किसी का कथन इस प्रकार है—"संख्यायाः" इस सूत्र के क्रिया ग्रहण से साध्यमात्र स्वभावा क्रिया का ग्रहण होता है। पाकः इसमें धातु से उपस्थित क्रिया साध्यमात्र स्वभावा नहीं है। क्योंकि घञर्थ क्रिया में विशेषण होने से विशेषणता अर्थ अधिक भासित होने से साध्यमात्र नहीं हुआ। पचति में प्रतीयमान क्रिया प्रधान होने से साध्यमात्र स्वभावा है। इस प्रकार साध्यमात्र स्वभावा का व्याख्यान करते हैं। कर्म प्रत्यय स्थल में क्रिया विशेषण होने से वहाँ भी तुमुन् नहीं होगा। अतः पूर्वोक्त व्याख्या युक्त नहीं है।

"द्विर्वचनम्" आदि प्रयोगों का भाष्यादि प्रामाण्य से उपपादन करना चाहिये ॥२०॥

ननु सिद्धान्ते बोधकतारूपा शक्तिराख्यातशक्तिग्रहवतां बोधादावश्यकी इति धातोरेव भावना वाच्या, नाख्यातस्येति कथं निर्णय इत्याशङ्कां समाधत्ते—

भेद्यभेदकसम्बन्धोपाधिभेदनिबन्धनम् ।
साधुत्वं तदभावेऽपि बोधो नेह निवार्य्यते ॥ २१ ॥

भेद्यं—विशेष्यम्, भेदकं-विशेषणं तयोर्यः सम्बन्धस्तस्य यो भेदस्तन्निबन्धनं साधुत्वम्। अयमर्थः-व्याकरणस्मृतिः शब्दसाधुत्वपरा तत्रैवावच्छेदकतया कल्प्यमानधर्म्मस्य शक्तित्वं वदतां मीमांसकानां पुनः शक्तत्वं साधुत्वमित्येकमेवेति तद्रीत्या विचारे साधुत्वनिर्णय एव शक्तिनिर्णय उच्यते। अतिरिक्तशक्तिवादेऽप्याख्यातानामसाधुता भावनायां स्यादेव। एवञ्च चतुर्थ्यर्थे तृतीयाप्रयोगवद्धात्वर्थभावनायामाख्यातप्रयोगे, याज्ञे कर्मण्यसाधुशब्दप्रयोगान्नाऽनृतं वदेदिति निषेधोल्लङ्घनप्रयुक्तं प्रायश्चित्तं दर्शनान्तरीयव्युत्पत्तिमतां स्यादेवेति।

ननु त्वन्मते 'नानृतम्' इति निषेधः क्रत्वर्थ एव न सिद्ध्येद्, आख्यातेन कर्त्तुरुक्तत्वाच्छ्रुत्या पुरुषार्थतैव स्यात्, प्रकरणाद्धि क्रत्वर्थता, तच्च श्रुतिविरोधे बाध्यत इति चेद्? न। 'तिङर्थस्तु विशेषणम्' इत्यनेन परिहृतत्वात्। न हि गुणभूतः कर्ता निषेधं स्वाङ्गत्वेन ग्रहीतुमलम्। भावना तु प्रधानं तं ग्रहीतुं समर्थेति प्रकरणात् क्रत्वर्थतैव। अस्तु वा क्रतुयुक्तपुरुषधर्म्मः, अनुष्ठाने विशेषाभावात्। "जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू" इति वाक्योक्तमन्त्रविधिवदित्यादिभूषणे प्रपञ्चितम्।

नन्वाख्यातस्य भावनायामसाधुत्वे ततस्तद्बोधो न स्यात्, साधुत्वज्ञानस्य शाब्दबोधहेतुत्वादित्यत आह-*बोध इति* ॥ असाधुत्वेऽपि साधु-

त्वभ्रमाद् बोधोऽस्तु नाम, अपभ्रंशवत्। असाधुत्वन्तु स्यादेवेति भावः। वस्तुतः साधुत्वज्ञानं न हेतुस्तद्व्यतिरेकनिर्णयोऽपि न प्रतिबन्धक इति 'असाधुरनुमानेन' इत्यत्र वक्ष्यामः॥ २१॥

रङ्गोजिभट्टपुत्रेण कौण्डभट्टेन निर्मिते।
पूर्णो भूषणसारेऽस्मिन् धात्वाख्यातार्थनिर्णयः॥ १॥

इति श्रीकौण्डभट्टविरचिते वैयाकरणभूषणसारे धात्वाख्यात-सामान्यार्थनिर्णयः समाप्तः॥ १॥

---

*सिद्धान्त इति* ॥ वैयाकरणसिद्धान्ते। इन्द्रियाणां स्वविषयेषु' इत्यादिना प्रतिपादिता बोधकतारूपा शक्तिराख्यातेऽप्यबाधितैव। ततो भावनाबोधस्य जायमानत्वादित्यर्थः। *साधुत्वपरेति* ॥ तथा च हरिः—

साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः॥ इति ब्र० का० १४१

तत्र—साधुशब्दे। *अवच्छेदकतया*। बोधजनकताऽवच्छेदकतयेत्यर्थः। *अतिरिक्तशक्तिवादेऽपीति*। साधुत्वं न शक्तत्वमसाधोरपि बोधात्किन्तु बोधकत्वमिति वक्ष्यमाणसिद्धान्तिमतेऽपीत्यर्थः।

*असाधुता स्यादेवेति*। आख्याताच्छक्तिभ्रमेण भावनाबोधेऽपि तत्र तस्याऽसाधुता स्यादेवेत्यर्थः। तथा च भाष्यकृता—"सिद्धे शब्दार्थसम्बन्धे" (म० भा० आ० १) इत्यत्र "समावायामर्थावगतौ साधुभिर्भाषितव्यम्, नाऽसाधुभिरिति गम्यागम्येतिवन्नियमः क्रियते" इति पस्पशायामुक्तम्। एवं यादृशविशेषणान्वितयादृशविशेष्यबोधे यादृशानुपूर्व्याः सूत्रकृदाद्यन्यतमसम्मतत्वं तादृशबोधे तादृशानुपूर्वीकः शब्दः साधुर्नान्यत्र। अत एवास्वशब्दोऽश्वे न साधुः, किन्तु निःस्वे। अश्वशब्दो निस्वे न साधुः, किन्तु तुरग इति सङ्गच्छते। नन्वस्तु साधुतेत्यत आह—*एवञ्चेति*। याज्ञेकर्मणीत्यनेन "नानृतं वदेन्नाऽपभ्रंशितं वा" इत्यादिश्रुतिः क्रतुप्रकरणे पाठादितरत्र तत्प्रयोगे प्रत्यवायाऽभावं सूचयति—*स्यादेवेति*। भावनाबोधकत्वेनाख्यातस्य सूत्रकारादिभिरनुशिष्टत्वात् कर्तृबोधकत्वेनैव तदनुशासनादिति भावः।

मीमांसकः शङ्कते—*नन्विति*। त्वन्मते—वैयाकरणमते। *नानृतमिति*। दर्शपूर्णमासप्रकरणे हि 'नानृतं वदेत्' इति श्रूयते। तत्र किमयं प्रतिषेधः पुरुषार्थः, आहोस्वित् क्रत्वर्थ इति संशये, वदेदित्याख्यातात् कर्तृप्रतीत्या कर्तृवाचकत्वनिर्णयात्, "लः कर्मणि" इत्यनुशासनात्तस्य कर्तृपरत्वलाभाच्च, प्रत्ययार्थत्वेन वदनं प्रति प्राधान्याद् वदनं तावत् पुरुषार्थोऽतः प्रतिषेधोऽपि पुरुषार्थः। निषेधप्रतियोगित्वेन वदनक्रियामनुवदता वदेदिति शब्देन पुरुषार्थतयैव बोधनात् तादृशस्यैवाऽनृतवदनस्यानिष्टसाधनतायाः विपरीत[illegible] बोधकता[illegible] बोधन[illegible] [illegible]वदनस्य चाऽनुप-

स्थितत्वात् । अत एवऽनारभ्याऽधीतस्मार्त्तवदननिषेधस्याऽप्येतदेव मूलं भवतीति लाघवम् । अन्यथा तन्मूलभूतः पुरुषार्थोऽन्यो निषेधः कल्प्यः इति गौरवं प्रसज्येतेति पूर्वपक्षे, 'अनन्यलभ्य एव शब्दार्थः' इति न्यायाद्भावनैवाख्यातवाच्या, कर्त्तात्वाख्यावाच्यभावनाया अविनाभावादाक्षेपलभ्य एवेति न तत्र तस्य शक्तिः । "लः कर्म्मणि" इत्यादिस्मृतिरपि "द्वयेकयोः" इत्यनेनैकवाक्यतया तत्संख्यावाचित्वपरैव । पचति देवदत्त इत्यादौ च गौः शुक्ल इतिवत् सामानाधिकरण्यं लक्षणयैवेति नाख्यातस्य कर्तृवाचित्वमिति कर्त्तुः श्रुतेरनुपस्थितत्वान्न पुरुषार्थता तस्य, किन्तु प्रकरणात् क्रत्वर्थतैवेति निर्णीतं कर्त्रधिकरणे । *आख्यातेनेति* । तिङेत्यर्थः ।

*तच्चेति* । प्रकरणं चेत्यर्थः । श्रुतिविरोध इति* । निरपेक्षरवरूपश्रुति प्रातिकूल्य इत्यर्थः ।

तथा हि—श्रुत्यादयः षडिह विनियोजकाः । तत्र विरुद्धयोरकत्रोपनिपाते समुच्चयदौर्लभ्यादेकेनाऽपरस्य बाधो वक्तव्यः । स च बलवता दुर्बलस्येति कस्य दौर्बल्यमित्याकाङ्क्षायां परदौर्बल्यप्रतिपादकम्, श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' इति सूत्रं प्रणिनाय महर्षिर्जैमिनिः । श्रुत्यादीनां पठितानां समवाये एकत्रोपनिपाते पारदौर्बल्यमिति । परम् एव पारम् उत्तरपठितम् । तथा चैषां मध्ये यदपेक्षया यत्परं तत् दुर्बलमित्यर्थः । तत्र हेतुमाह—अर्थविप्रकर्षादिति । अर्थस्य विनियोजकस्य लिङ्गादितो विप्रकर्षादुत्तरवर्त्तित्वात् । लिङ्गादेर्विलम्बेन पूर्वापेक्षया विनियोजकत्वावगतेरिति यावत् ।

तत्र श्रुत्यादीनामुदाहरणानि निरपेक्षाण्येव स्युः । इतरप्रामाण्याऽनधीनप्रामाण्यकत्वं च निरपेक्षत्वम् । यथा—'व्रीहीनवहन्ति' इति । अत्र क्रियाजन्यफलभागित्वं कर्मत्वं बोधयन्ती द्वितीयाश्रुतिरितरनिरपेक्षैव व्रीहीणामवघातशेषित्वं प्रतिपादयति ॥ १ ॥

अर्थविशेषप्रकाशनसामर्थ्यं लिङ्गम् । यथा—'बर्हिर्देवसदनं दामि' इति । अत्र लवनार्थप्रकाशकतया लवनस्य विनियोगः ॥ २ ॥

परस्पराकाङ्क्षावशादेकस्मिन्नर्थे पर्य्यवसन्नानि पदानि वाक्यम् । यथा 'देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याम्' 'अग्नये त्वा जुष्टं निर्वपामि' इति । अत्र मन्त्रलिङ्गेन निर्वापे प्रयुज्यमानस्य समवेताऽर्थभागस्यैकवाक्यताबलेन, 'देवस्य त्वा' इत्यादिभागस्यापि तत्रैव विनियोगः ॥ ३ ॥

लब्धवाक्यभावानां पदानां कार्य्यान्तरापेक्षावशाद्वाक्यान्तरेण सम्बन्ध आकाङ्क्षापर्यवसन्नं प्रकरणम् । यथा—'समिधो यजति' इति । अस्य हि दर्शपूर्णमासे कथम्भावाकाङ्क्षायाः प्रकरणपाठवशाच्छेषत्वम् ॥ ४ ॥

स्थानम्—क्रमः । स चानेकस्याम्नातस्य सन्निधिर्विशेषाम्नानम् । यथा—"दधिरसी"त्यत्राऽग्नेयोपांश्वग्नीषोमीययागाः क्रमेण पठिताः । एवं मन्त्रभागेऽपि क्रमेणानुमन्त्रणत्रयं पठितम् । तत्राग्नेयाग्नीषोमयोर्द्वयोर्लिङ्गेनैव विनियोगसिद्धिः । 'दधिरसी'-

त्यत्र तु न लिङ्गादि विनियोजकं, किन्तु यस्मिन् प्रदेशे ब्राह्मणे उपांशुयागविधानं तस्मिन् प्रदेशे मन्त्रेऽप्यस्य पाठ इति क्रमादुपांशुयागानुमन्त्रेण तस्य विनियोगः ॥ ५ ॥

समाख्या—योगबलम् । यथा—"हौत्रमौद्गात्रम्" इत्यादि । तत्र हि होतुरिदं हौत्रमित्यादियोगबलेन हौत्रादिसमाख्यातानि कर्माणि होत्रादिभिरनुष्ठेयानीति ॥ ६ ॥

विरोधोदाहरणादि यथा—श्रुतिलिङ्गयोर्विरोधे श्रुतिर्बलीयसी, लिङ्गंतु दुर्बलम्, अर्थविप्रकर्षात् । यथा—'कदाचनस्तरीरसी' त्यादिकाया ऋचो विनियोजिका श्रुतिः "ऐन्द्रया गार्हपत्यमुपतिष्ठते' इति इन्द्रप्रकाशनसामर्थ्याल्लिङ्गादिन्द्रोपस्थापने विनियोगोऽस्याः प्रतिभाति । अन्यप्रकाशकस्याऽन्यत्र विनियोगाऽयोगात् । श्रुत्या गार्हपत्योपस्थाने स प्रतीयते । गार्हपत्यमिति द्वितीया हि कर्मविभक्तितया कामपि क्रियामपेक्ष्य प्रकृत्यर्थस्य शेषित्वं बोधयति । क्रियाजन्येष्टफलभागित्वस्य तदर्थत्वात् । एवमैन्द्रयेति तृतीयाप्रकृत्यर्थस्य शेषत्वं क्रियां प्रति साधकतमत्वरूपकरणत्वस्य तदर्थत्वात् । तदनयोर्विरोधः ।

तत्राऽयं पूर्वपक्षः, सामर्थ्यज्ञानमपेक्ष्य श्रुतिर्विनियोजिका । न ह्यसमर्थं श्रुतिसहस्रमपि विनियोक्तुमलम् । अतो लिङ्गस्य बलवत्त्वादिन्द्रोपस्थापनेऽस्या विनियोगः । तदनुरोधितया द्वितीया सप्तम्यर्थतया व्याख्येया । गार्हपत्यसमीपे इन्द्रोऽनया उपस्थातव्य इत्यर्थः पर्यवस्यतीति ।

सिद्धान्तस्तु—श्रुतिः स्वरूपसत्सामर्थ्यमपेक्षते, न तु तज्ज्ञानमपि येन लिङ्गं बलवद्भवेत् । तस्य च पूर्वसत एव विनियोगोऽन्यथानुपपत्त्या ज्ञानं पश्चादुपजायते । लिङ्गं तु विनियोजने श्रुतिमपेक्षते । न ह्यनयेन्द्र उपस्थातव्य इति लिङ्गात् स्वरसतः प्रतीयते, किन्त्विन्द्र एतादृगित्येतावन्मात्रम् । तथा च प्रकरणाम्नानसामर्थ्यादिन्द्रप्रकाशनसमर्थाया ऋचोऽन्यथाऽनुपपत्त्या लिङ्गेनाऽनयेन्द्र उपस्थातव्य इति श्रुतिः कल्पनीया, यथा विनियोगो भवेत् । ततो यावल्लिङ्गं श्रुतिकल्पनायै प्रक्रान्तव्यापारम्, तावत् प्रत्यक्षश्रुत्या विनियोगः सिद्ध इति प्रकरणे निराकाङ्क्षे कयाऽनुपपत्त्या श्रुतिः कल्पनीया । तस्माच्छ्रुतेर्बलवत्त्वात्तदनुगुणतया सामर्थ्ये नीयमाने इन्द्रपदं परमैश्वर्याश्रयवाचकतया गार्हपत्यतात्पर्य्यकमित्यवधार्यत इति ।

विरोधोदाहरणान्तराणि त्वन्यतोऽवधार्य्याणि, गौरवभयान्नेह प्रपञ्चितानि । तदयं निर्गलितोऽर्थः—श्रुतिर्निरपेक्षत्वात् सर्वतो बलवती, लिङ्गं तु विनियोगे एकान्तरितत्वाद् द्वयन्तरितवाक्याद् बलवत् । एवं वाक्यादावप्यूह्यम् । समाख्या तु पञ्चान्तरितत्वात्सर्वतो दुर्बलेति । प्रकृते आकाङ्क्षापर्यवसन्नप्रकरणेन वाक्यं कल्पनीयम् । तेन च लिङ्गम्, लिङ्गेन श्रुतिस्तयाऽनृतवदननिषेधस्य क्रतौ विनियोगः । यावच्च प्रकरणं वाक्यकल्पनायै प्रक्रान्तव्यापारं तावत्प्रत्यक्षया कर्त्रर्थकाख्यातश्रुत्या तस्य पुरुषार्थत्वविनियुक्ते क्लृप्तमपि वाक्याद्यकिञ्चित्करमिति श्रुतिविरोधे बाध्यत इत्यस्यार्थः । लिङ्गादीनामुक्तप्रकारेण श्रुत्यपेक्षया दुर्बलत्वादिति भावः ।

समाधत्ते—*तिङर्थस्तु विशेषणमिति* ॥ तथा चाख्यातश्रुत्या कर्तुरुपस्था-

पनेऽपि न भावनावत् तस्य प्रधान्येन भानं येन निषेधस्य पुरुषार्थता शङ्क्येत, किन्तु विशेषणतयैव तथोपस्थितस्य च विशेषणाऽन्तरनैराकाङ्क्ष्येण कर्त्तुः श्रौतनञर्थ-सम्बन्धाभावान्नाऽत्र श्रुत्या प्रकरणबाध इत्याशयं विशदयति–*स्वाङ्गत्वेनेति* । स्वविशेषणतयेत्यर्थः । नन्वेवं निषेधस्य क्वापि श्रौतपुरुषार्थता न स्यात् । "न कलञ्जं भक्षयेत्" इत्यत्राप्युक्तरीत्या कर्तरि नञर्थासम्बन्धेन श्रौतत्वात्, यदि च कर्तुरप्राधान्ये-ऽपि कर्तृवृत्तिभावनायाः प्राधान्यात्तस्या नञर्थाऽन्वये तद्द्वाराख्यातार्थकर्त्तुरप्यन्वयान्न तस्य श्रौतपुरुषाऽर्थत्वानुपपत्तिरिति विभाव्यते; तदा प्रकृतेऽपि तुल्यमत आह— *अस्तुवेति* ।

*अनुष्ठान इति* ॥ 'नाऽनृतं वदेत्' इति निषेधस्य क्रतुयुक्तपुरुषधर्मत्वे यज-मानस्य प्राधान्यात्प्रधानीभूतकर्त्रैवानृतवदनं वर्ज्यं स्यात्; क्रत्वर्थत्वे च यज्ञप्रवृत्तेन यजमानेन ऋत्विग्भिश्च वर्जनं सिध्यतीति विशेषात् कथमेतदिति वाच्यम् । श्रुति-प्रकरणाभ्यां क्रतुसम्बन्धपुरुषकर्तृकानृतवदनाभाव इति बोधेन क्रतुकर्तृकेतिबोधे माना-भाव इति क्रतुयुक्तेति वदतोऽभिप्रेतत्वादिति ।

तत्र दृष्टान्तमाह–*मयि दक्षक्रतू इति* । दर्शपूर्णमासप्रकरण एवैतन्मन्त्रवचनं श्रूयते–"जञ्जभ्यमानोऽनुब्रूयान्मयि दक्षक्रतू" इति । तत्र किमेतन्मन्त्रवचनं शुद्धपुरुष-धर्मः उत क्रतुयुक्तपुरुषसंस्कारकतया क्रत्वङ्गमिति सन्देहे, वाक्येन तावज्जञ्जभ्यमान-पुरुषधर्मतयैवाऽयं प्रतीयते । कृत्प्रत्ययस्य शानचः कर्तृवाचकत्वात् । प्रकरणेन तु क्रत्वङ्गतया प्रकरणं च वाक्यापेक्षया दुर्बलमिति पुरुषधर्मतैव युक्ता । सत्यां च फलाकाङ्क्षायां "प्राणापानावेवात्मानं धत्ते" इति वाक्यशेषे श्रुतस्य फलस्य रात्रिसत्र-न्यायेन कल्पनादिति पूर्वपक्षे, सिद्धान्तः—वाक्यप्रकरणयोर्विरोधे बाध्यबाधकभावो, नत्वत्राऽस्ति विरोधः । जञ्जभ्यमानपदस्य कर्तृवाचकतया तादृशपुरुषस्य क्रतावपि सत्त्वात् तत्संस्कारमुखेन क्रत्वङ्गतासम्भवात् । एवञ्चाऽर्थवादोपस्थितफलकल्पनागौ-रवमपि नेति । तथाच बलाबलचिन्तायां विरोध एवौचित्येन जञ्जभ्यमानवाक्येऽनु-वचनस्य वाक्यप्रकरणाभ्यां क्रतुयुक्तपुरुषधर्मतावत् प्रकृतेऽप्यनृतवदननिषेधस्य श्रुति-प्रकरणाभ्यां क्रतुसम्बन्धपुरुषधर्मतैवोचिता । उक्तञ्च भट्टपादैः—

स्त्र्युपायमांसभक्षादिपुरुषार्थमपि श्रितः ।
प्रतिषेधः क्रतोरङ्गमिष्टः प्रकरणाश्रयाद् ॥ इति भावः ॥

*प्रपञ्चितमिति* ॥ प्रपञ्चस्तु उक्तः । ननु साधुत्वज्ञानं विनाऽपि शाब्दबोधोदयेन व्यभिचारात् कथमेतत्, साधुत्वस्य शक्तत्वरूपताया निराकरिष्यमाणत्वाच्चात आह– *वस्तुत इति* । *तद्व्यतिरेकनिर्णय इति* । असाधुत्वनिश्चय इत्यर्थः । तन्नि-श्चयेऽप्यपभ्रंशाद् बोधदर्शनात् । तथा चाख्याताद्भावनाबोधे बाधकाऽभाव इति भावः ॥२१॥

इति भूषणसारदर्पणे धात्वाख्यातार्थनिरूपणम् ॥ १ ॥

अर्थ-"इन्द्रियाणां स्वविषयेषु" इत्यादि वक्ष्यमाण कारिका के अनुसार बोधकता=बोध-जनकता शक्ति स्वरूपा मानी गयी है। मीमांसकों के मत में आख्यात की शक्ति भावना में होने से लिङ् के द्वारा भावना का बोध होता है। अतः बोधकता तिङ् में भी है। ऐसी दशा में धातु से वाच्य भावना है तिङ् वाच्य नहीं है, इसका निर्णय किस प्रकार होगा। इस शङ्का का समाधान करते हैं—"भेद्य भेदक" इत्यादि।

भेद्य = विशेष्य भेदक = व्यावर्तक = विशेषण इनका जो विशेष्य विशेषणभाव वही सम्बन्धोपाधि = इतरव्यावर्तक उसका भेद = विशेष। अर्थात् सम्बन्ध विशेष समवायादि वही साधुत्व का कारण हैं। समवाय सम्बन्ध से घटत्व विशिष्ट घट निरूपित बोधकता घट पद में है, पटादि शब्द में नहीं। इस प्रकार विशेष्यतया भासमान घटादि जिस विशेषण घटत्वादि से अन्वित है, उनमें यादृश यादृशआनुपूर्वी का सूत्रकारादि ने साधुत्व का निर्देश किया है। वह शब्द उसी में साधु है।

साधुत्व न रहने पर भी असाधु शब्द से बोध का वारण नहीं किया जाता है। अर्थात् बोध साधु असाधु दोनों से ही होता है।

भेद्य = विशेष्य, भेदक = विशेषण इनका जो सम्बन्ध रूप उपाधि उसका जो भेद = विशेष एतत्प्रयुक्त आधुत्व है। अयमर्थः = व्याकरणशास्त्र शब्दों की साधुता का प्रधानतया बोधक है। उन साधु शब्दों में बोध जनकतावच्छेदकता रूप से कल्प्यमान धर्म को शक्ति स्वीकार करने वाले मीमांसकों के मत में शक्तत्व और साधुत्व एक[1] ही है। इस रीति से विचार करने पर साधुत्व का निर्णय ही शक्ति का निर्णय माना जायगा।[2]

साधुत्व से भिन्न बोधकतारूप शक्ति मानने वालों के यहाँ तिङ् की भावना में असाधुता स्पष्ट है। 'लः कर्माणि' इससे कर्ता कर्म में तिङ् का अनुशासन किया गया है। भावना में नहीं।

इस प्रकार चतुर्थी के अर्थ में तृतीया प्रयोग के समान भावना बोध तात्पर्य से तिङ् का प्रयोग असाधु होने के कारण असाधु शब्द प्रयोग के द्वारा यज्ञ कर्म में वर्जित मिथ्या एवं अपभ्रंश भाषण के उल्लङ्घन प्रयुक्त प्रत्यवाय निवृत्ति के लिये प्रायश्चित्त मीमांसकों को करना ही होगा।

शङ्का—"नानृतं वदेत्" = मिथ्या नहीं बोलना चाहिये इसमें वदेत् इसके आख्यात (तिङ्) से वैयाकरण मत में कर्ता का बोध होने के कारण साक्षात् शब्द द्वारा कर्ता की उपस्थिति होती है। अतः पुरुषार्थता एवं दर्शपूर्णमास प्रकरण में इसका पाठ होने के कारण प्रकरण से क्रत्वर्थता प्राप्त होने पर "श्रुतिलिङ्ग" इत्यादि जैमिनि सूत्र से क्रत्वर्थता का बाध हो जायगा। अतः निषेध क्रत्वर्थ ही नहीं होगा।

---

१. शक्तत्व = शक्ति का आश्रय शक्त उसमें रहने वाला धर्म है। मीमांसकमत में असाधु शब्द साधु शब्दों के अनुमान द्वारा बोध जनक होता है। इस प्रकार साधु शब्दों में बोधकता रूप शक्ति होने से साधु शब्द शक्त होता है। इस कारण से शक्तत्व साधुत्व मूलानुसार एक हुए है।

२. इस प्रकार "लः कर्मणि" इस से तिङ् की कर्ता में साधुता का बोधन होने से भावना में तिङ् की असाधुता का ही लाभ होता है।

समाधान—कर्ता भावना में विशेषण होने से अप्रधान है। विशेषण में विशेषणान्तर का अन्वय सर्वत्र नहीं होता। अङ्गी=प्रधान निषेध को अपना अङ्ग बनाने में समर्थ है। विशेषण कर्ता नहीं। अतः निषेध क्रत्वर्थ है पुरुषार्थ नहीं होगा।

अथवा क्रतुयुक्त पुरुष का धर्म निषेध है। क्रतुयुक्त पुरुष कर्तृक अनृत वदन का अभाव ऐसा बोध "नानृतम्" इससे होगा।

"जञ्जभ्यमानोऽनुब्रूयात् मयि दक्षक्रतू" इति यहाँ क्रतुयुक्त पुरुष धर्म माना गया है उसी प्रकार यहाँ भी मानने में कोई आपत्ति नहीं है। अधिक विवेचन बृहद्वैयाकरण-भूषण में देखिये।

शङ्का—आख्यात की भावना में असाधुता मानने से भावना की प्रतीति तिङ् से नहीं होगी क्योंकि साधुत्व ज्ञान शब्द बोध में कारण है।

समाधान—"बोधो नेह" इत्यादि। असाधुत्व के रहने पर भी साधुत्व के भ्रम से बोध हो जायगा। जिस प्रकार अपभ्रंश से बोध होता है उसी प्रकार यहाँ भी हो जायगा।

वस्तुतः साधुत्व ज्ञान शाब्दबोध में हेतु नहीं है एवं असाधुत्व ज्ञान उसका प्रति-बन्धक भी नहीं है। इसका विशेष विवेचन "असाधुरनुमानेन" इससे आगे किया जायगा ॥ २१ ॥

श्री रङ्गोजिभट्ट के पुत्र कौण्डभट्ट के द्वारा रचित "भूषणसार" का धात्वर्थ निर्णय परिपूर्ण हो गया।

हिन्दी भाष्य—

मीमांसक मत में वह्नि में दाहकत्व के समान शब्दों में शक्ति पदार्थान्तर है। नैया-यिकों के अनुसार "अस्मात् पदात् अयमर्थो बोद्धव्यः" अथवा "इदं पदममुमर्थं बोधयतु" इस प्रकार की अर्थ विशेष्यक या पदविशेष्यक ईश्वर की इच्छा शक्ति है। भूषणकार के पक्ष में बोधकता तथा श्री नागेश के सिद्धान्त में वाच्य-वाचक भाव ही शक्ति है इस प्रकार शक्ति स्वरूप में अनेक मत है।

बोधजनकता शक्ति पक्ष में शब्दबोध=ज्ञान उसका जो कारण उसमें जो कारणता=जनकता है उसी को शक्ति कहते हैं।

तिङ् की शक्ति भावना में स्वीकार करने वाले मीमांसकों को भावना की प्रतीति (बोध) तिङ् से होने के कारण भावना बोध की जनकता रूप शक्ति तिङ् में माननी होगी। ऐसी अवस्था में धातु एवं तिङ् दोनों में से भावना निरूपित किस में शक्ति है, इसका निर्णय विनिगमक के न होने से किस प्रकार हो सकता है? इस शङ्का के निवारण के लिये "भेद्य-भेदक" यह कारिका लिखी गई है।

भेत्तुं=व्यावृत्ति योग्यं भेद्यम्। अन्य से व्यावृत्त=विशेष्य भेद्य है। भिनत्ति अन्यतो व्यावर्तयति इति भेदकम्=विशेषणं=व्यावर्तक भेदक है। "नीलं कमलम्" यहाँ नील विशेषण से रक्त कमल की व्यावृत्ति होने के कारण नील विशेषण एवं व्यावृत्त कमल है अतः विशेष्य है।

तालव्यशकार से घटित अश्व शब्द की अश्व में साधुता का भेद्य-भेदक=विशेष्य-विशेषण-भाव सम्बन्धरूप उपाधि=व्यावर्तक उसका भेद अर्थात् सम्बन्ध विशेष समवायादि वही निबन्धनम्=कारण है। समवाय सम्बन्ध से अश्वत्व विशेषण से विशिष्ट अश्व में उक्त पद की साधुता है। अर्थ विशिष्ट शब्द के साधुत्व का बोधन किया गया है। केवल शब्द के

साधुत्व का बोधन नहीं। जिस प्रकार के विशेषण से अन्वित विशेष्य में जिस प्रकार की आनुपूर्वी का साधुत्व व्याकरण से बोधित किया गया है उस आनुपूर्वी का उसी में साधुत्व है। जैसे अश्वत्व विशिष्ट अश्व में अश्व की साधुता होने से अस्व (न स्वं धनं यस्य सः) दरिद्र अर्थ में उसका साधुत्व नहीं है। इसी प्रकार "लः कर्मणि" इस सूत्र से प्रतिपादित अर्थ से विरुद्ध होने के कारण तिङ् की भावना में साधुता नहीं है। अतः भावना का बोध तिङ् से होने मात्र से उस अर्थ में उसका साधुत्व नहीं है।

व्याकरण, शब्द की साधुता का बोधक है। "मृजेर्वृद्धिः" इस सूत्र से मृजि प्रसङ्ग में मार्जि का साधुत्व किया गया है।

साधुत्वज्ञानविषया सैषा व्याकरणस्मृतिः।

इस हरिकारिका से भी उक्तार्थ प्रमाणित होता है।

साधु शब्द में ही शक्ति है असाधु शब्दों से शक्ति भ्रम होने के कारण बोध होता है। इस मत में शक्ति और साधुत्व दोनों एक है। शक्तत्व से शक्त में विशेषणीभूत शक्ति का ग्रहण है। जो साधु है उसी में शक्ति है इस प्रकार साधुत्व के रहने पर ही शक्ति रहेगी। शक्तत्व साधुत्व दोनों समनियत नियमतः = एक ही में रहने के कारण दोनों की एकरूपता है। अतः लकार की साधुता का बोधन कर्ता कर्म में होने से भावना में असाधुता है। अतएव उस अर्थ में शक्ति भी नहीं है।

"अग्नये स्वाहा वायवे स्वाहा" इसके स्थान में अन्यविध अशुद्ध प्रयोग जिस प्रकार असाधु माना गया है। उसी प्रकार भावना में तिङ् का प्रयोग भी असाधु है। जिस अर्थ में जिस शब्द का साधुत्वानुशासन है, उसी अर्थ में उसका प्रयोग साधु है। यही इस संदर्भ का निष्कर्ष है।

शङ्का—दर्शपूर्णमास यज्ञ के प्रकरण में "नानृतं वदेत् नापभ्रशितं वा" यह वचन पठित है। इसके द्वारा "अनृत = असत्य एवं अपभ्रंश" भाषण का प्रतिषेध किया गया है। यह प्रतिषेध पुरुषार्थ[1] या क्रत्वर्थ है ऐसा सन्देह होने पर "वदेत्" इसके आख्यात से कर्ता का बोध होता है। कर्ता प्रत्ययार्थ होने, से प्रधान है। अतः वदन पुरुषार्थ होने से उसका निषेध भी पुरुषार्थ होगा। स्वयं प्रार्थित जो स्वर्गादि तन्निष्ठ उद्देश्यता निरूपित विधेयता शाली होने से पुरुषार्थ होगा।

शङ्का—"लः कर्मणि" इस सूत्र में कर्तृपद भाव प्रधान निर्देश से "द्व्येकयोः" इस सूत्र में द्वित्व एकत्व के समान कर्तृत्व परक है। कर्तृत्व से क्रिया का बोध होता है। अतः कर्तृत्व में लकार विधान होने से तिङर्थ क्रिया (व्यापार) होगा। कर्ता कर्म का आक्षेप से लाभ होगा। इस प्रकार व्यापार में लकार की साधुता व्याकरण से सिद्ध होने से भावना ही प्रत्ययार्थ होने के कारण प्रधान है। कर्ता की उपस्थिति शब्द द्वारा नहीं होने से निषेध पुरुषार्थ नहीं हो सकता, किन्तु याग प्रकरण में पठित होने से प्रकरण को आधार मानकर निषेध क्रत्वर्थ होगा ऐसा निर्णय मीमांसा में किया गया है। आपके मत से तिङर्थ कर्ता होने से "श्रुतिलिङ्ग-वाक्य-प्रकरण-स्थान-समाख्यानां समवाये पारदौर्बल्य-

---

१. स्वयंप्रार्थितस्वर्गवृत्त्युद्देश्यतानिरूपितविधेयताशालित्वं पुरुषार्थत्वम्। स्वयं प्रार्थितभिन्नवृत्त्युद्देश्यतानिरूपितविधेयताशालित्व क्रत्वर्थत्वम्।

मर्थविप्रकर्षात्'' इस जैमिनि सूत्र के अनुसार निरपेक्ष एव रूप श्रुति[1] अन्यापेक्षया प्रबल होने से निषेध में पुरुषार्थता प्राप्त होने के कारण क्रत्वर्थ निर्णय असङ्गत हो जायगा।

समाधान—यद्यपि कर्ता आख्यातार्थ है। तथापि वह धात्वर्थ में विशेषण होने से अप्रधान है। "तिङर्थस्तु विशेषणम्" ऐसा पूर्व में कहा गया है। अप्रधान होने से कर्ता निषेध को स्वाङ्ग नहीं कर सकता। अतः पूर्वोक्त दोष नहीं है।

विशेषणतया उपस्थित पदार्थ को विशेषणान्तर की अपेक्षा नहीं होती। इसलिये नञर्थ की आकाङ्क्षा न होने के कारण निषेध की प्रकरण से प्राप्त क्रत्वङ्गता ही है। अन्यथा एक ही में प्राधान्य तथा अप्राधान्य दो विरुद्ध धर्मों का समावेश प्राप्त होगा।

अथवा क्रत्वङ्गता के साथ पुरुषार्थता का परस्पर विरोध नहीं होने से बाध्यबाधक भाव नहीं होगा। विरोध रहने पर ही 'श्रुति लिङ्ग' इत्यादि से बाध्यबाधक भाव का प्रतिपादन है। अतः क्रतुयुक्त पुरुष का धर्म निषेध है।

शङ्का—क्रतुयुक्त पुरुषधर्म मानने पर यजमान पुरुष की प्रधानता होने से यजमान के लिये ही असत्य भाषण वर्जनीय होगा अन्य याग सम्बद्ध ऋत्विक् आदि सभी के लिये इष्ट अनृत वर्जन प्राप्त नहीं होगा।

समाधान—श्रुति और प्रकरण के अनुरोध से क्रतुयुक्त पुरुष कर्तृक अनृत वदनाभाव की प्रतीति द्वारा क्रतु से सम्बद्ध सभी पुरुषों के साथ निषेध का सम्बन्ध है यजमान मात्र से नहीं यह तात्पर्य है।

मीमांसकों ने भी—"जञ्जभ्यमानोऽनुब्रूयात् मयि दक्षक्रतू" इति=जंमुआई लेने वाला व्यक्ति "मयि दक्षक्रतू" इस मन्त्र का उच्चारण करे। दर्शपूर्णमास याग के प्रकरण में इसका पाठ होने से क्रत्वङ्गता तथा "जञ्जभ्यमान" इसमें शानच् जो कि धात्वर्थ की अपेक्षा प्रधान है, उस कर्ता का बोधक है। अतः पुरुषार्थता प्राप्त है। परस्पर विरोध नहीं होने के कारण श्रुति और प्रकरण में बाध्यबाधक भाव नहीं होता अतः मन्त्र का अनुवचन क्रतुयुक्त पुरुष का संस्कारक होने से क्रतु का भी संस्कारक होता है। अतएव क्रतुयुक्त पुरुष का धर्म उक्त मन्त्र के अनुवचन को माना गया है। उसी प्रकार "नानृतं वदेत्" इस स्थल में भी क्रतुयुक्त पुरुष का संस्कारक निषेध, क्रतु का भी उपकारक होता है।

भावना में आख्यात के असाधुत्व होने से शाब्दबोधोत्पत्ति में किसी प्रकार की बाधा नहीं है। क्योंकि असाधु शब्दों में साधुत्व भ्रम होने से वहाँ भी साधुत्वज्ञान है।

वस्तुतः शाब्दबोध में साधुत्व ज्ञान कारण नहीं है। एवं असाधुत्वज्ञान उसमें प्रतिबन्धक भी नहीं है। शक्ति साधु और असाधु दोनों प्रकार के शब्दों में समान रूप से रहती है ॥ २१ ॥

पूर्णं भूषणसारस्य धात्वाख्यातार्थनिर्णये।
हिन्दीभाष्यं सानुवादं ब्रह्मदत्तेन निर्मितम् ॥ १ ॥



१. निरपेक्ष एवः श्रुतिः।

## अथ लकारार्थनिर्णयः

अथ प्रत्येकं दशलकाराणामर्थं निरूपयति—

वर्त्तमाने परोक्षे श्वो भाविन्यर्थे भविष्यति।
विध्यादौ प्रार्थनादौ च क्रमाज्ज्ञेया लडादयः ॥ २२ ॥

लडादयष्टितः षट् क्रमेणेष्वर्थेषु द्रष्टव्याः। तथाहि—वर्त्तमानेऽर्थे लट्। "वर्त्तमाने लट्" (पा०सू० ३।२।१२३) इति सूत्रात्। प्रारब्धापरिसमाप्तत्वं, भूतभविष्यद्भिन्नत्वं वा वर्त्तमानत्वम्। पचतीत्यादावधिश्रयणाद्यधःश्रयणान्ते मध्ये तदस्तीति भवति लट्प्रयोगः।

"आत्माऽस्ति" "पर्वताः सन्ती"त्यादौ तत्तत्कालिकानां राज्ञां क्रियाया अनित्यत्वात्तद्विशिष्टस्योत्पत्त्यादिकमादाय वर्त्तमानत्वमूह्यम्। उक्तं हि भाष्ये-"इह भूतभविष्यद्वर्त्तमानानां राज्ञां क्रियास्तिष्ठतेरधिकरणम्" इति।

परतो भिद्यते सर्वमात्मा तु न विकल्पते।
पर्वतादिस्थितिस्तस्मात् पररूपेण भिद्यते ॥ (कालसमु० ८०)

इति वाक्यपदीये च। एवम् "तम आसीत्" "तुच्छेनाभ्यपिहितं यदासीत्" "अहमेकः प्रथममासम्, वर्त्तामि च भविष्यामि च" इत्यादिश्रुतयोऽपि योज्याः।

तच्च वर्त्तमानत्वादि लडादिभिर्द्योत्यते। क्रियासामान्यवाचकस्य तद्विशिष्टे लक्षणायां लडादेस्तात्पर्यग्राहकत्वेनोपयोगात्। अन्वयव्यतिरेकाभ्यां तद्रूपं लडादिवाच्यमेव। अन्यथा प्रत्ययानां वाचकत्वविलोपापत्तिरित्यपि पक्षान्तरम्।

लकारसामान्यार्थे निरूपिते तद्विषयकजिज्ञासानिवृत्ताववश्यवक्तव्यत्वज्ञानाद्विशेषार्थनिरूपणेऽवसरस्य सङ्गतित्वं सूचयन्नाह—*प्रत्येकमिति*। *दशलकाराणामिति*। लट् लिट् इत्यादिक्रमेण पठितानामित्यर्थः। आदेशानां वाचकत्वमिति पक्षेऽपि तिङाद्यादेशनिष्ठां बोधकतारूपां शक्तिं लडादिष्वारोप्य तद्विधानात् तदर्थकत्वं तेषामक्षतमिति भावः।

*प्रारब्धापरिसमाप्तत्वमिति*। विनष्टाद्यवयवप्रागभावकत्वे सत्यनुत्पन्नध्वंसान्त्यावयवकत्वमित्यर्थः। भाविभूतक्रिययोरतिप्रसङ्गवारणाय क्रमेण पदद्वयम्। लक्ष्ये लक्षणं ग्राहयति—*पचतीति*। *अधिश्रयणादीति*। साध्यत्वप्रकारकप्रतीतिविषयपूर्वापरीभूतावयवसमुदायस्यैव क्रियात्वादिति भावः।

*तदिति* । उक्तवर्त्तमानत्वमित्यर्थः । यद्यपि भावकालकारकसंख्याश्चत्वारोऽर्था आख्यातस्येति निरुक्तभाष्यात् क्रियातिरिक्तकालस्यैव वर्त्तमानत्वादिकं प्रतीयते; तथापि निरुपाधिकस्य तस्य वर्त्तमानत्वादिना प्रत्येतुमशक्यत्वादुपाधिभूतक्रियामादायैव तत्र तत्त्वस्य वक्तव्यतयाऽऽवश्यकत्वात् क्रियायामेव तत्त्वमुक्तमित्यवधेयम् ।

वस्तुतस्तु दण्डमुहूर्त्ताद्यात्मकः खण्डकाल एव वर्त्तमानत्वादिना लडादिवाच्यः । तद्गतं वर्त्तमानत्वं च तत्तच्छब्दप्रयोगाधिकरणत्वमेव तदादिन्यायेन तत्तच्छब्दप्रयोगाधिकरणत्वेनाऽनुगमाच्च न शक्त्यानन्त्यम् ।

यद्येवमपि तत्तत्कालत्वेन तत्तत्कालबोधस्यानुभवसिद्धानुपपत्तिरिति विभाव्यते; तदास्तु शब्दप्रयोगाधिकरणवृत्तिकालत्वव्याप्यधर्मत्वेनोपलक्षिततत्तत्कालत्वावच्छिन्न एव लटः शक्तिः । क्रियारम्भात् पूर्व्वं समाप्त्युत्तरं चाऽधीते पचतीत्यादिप्रयोगापत्तिस्तु स्ववृत्तिप्रागभावाऽप्रतियोगिवृत्तित्वस्ववृत्तिध्वंसाऽप्रतियोगिप्रकृतक्रियाऽनुयोगिकत्वाभ्यां विशेषितेन आधेयतासम्बन्धेनाऽन्वयनियमोपगमेन वारणीया ।

यत्र तु खण्डक्रियैव धात्वर्थस्तत्र शुद्धाधेयतासम्बन्धेनैव तदन्वयान्नाऽऽत्माऽस्तीत्यादौ दोष इति । भूतभविष्यद्भिन्नत्वं वेत्यत्र वाकारोऽनास्थायाम् । पूर्वलक्षणापेक्षयाऽस्य गुरुत्वाद्भविष्यत्त्वस्यापि वर्त्तमानत्वघटितत्वेन तद्ग्रहे, भविष्यत्वग्रहे च तदवच्छिन्नभिन्नत्वरूपवर्त्तमानत्वग्रह इत्यन्योऽन्याश्रयाच्च । एवं भूतत्वमादायाऽप्यन्योन्याश्रयो द्रष्टव्यः ।

ननु सत्ताश्रयत्वादीनां धात्वर्थत्वे तत्राऽसङ्गतिः; तेषामखण्डत्वेनाऽवयवघटितोक्तलक्षणवर्त्तमानत्वासम्भवादत आह—*आत्मास्तीति* । *अनित्यत्वादिति* । सावयवकत्वेन प्रागभावप्रतियोगित्वे सति ध्वंस प्रतियोगित्वादित्यर्थः । तद्विशिष्टस्य=अनित्यराजक्रियादिविशिष्टसत्तादिरूपार्थस्येत्यर्थः । तथाच केवलसत्तादिरूपार्थे तदसत्त्वेऽप्युक्तविशेषणविशिष्टे तस्मिन् विशेषणांशमादाय तत्सत्त्वं नाऽनुपपन्नमिति भावः ।

यद्वा तद्विशिष्टेत्यस्य तदा अव्यहितत्वादनित्यत्वस्यैव परामर्शात् तादृशक्रियागतं वर्त्तमानत्वमारोप्य सत्ताद्यर्थको लडित्यर्थः । तत्र स्वोत्प्रेक्षितत्वं निरस्यति—*उक्तं हीति* । *तिष्ठतेरधिकरणमिति* । आधेयतासम्बन्धेन तादृशक्रियात्मककालविशिष्टत्वात् तासामिति भावः । अनेन साधुत्वं लभ्यते । लक्षितकालस्यैव वस्तुतस्त्वित्यादिना उक्तकल्पस्यैव क्रियायामाधेयतयान्वयलाभात् ।

*परतो भिद्यते इति* । सर्वं पच्यादिधात्वर्थसामान्यं परतः—स्वाऽपेक्षयाऽन्येन वर्त्तमानत्वादिना । *भिद्यते*—व्यावर्तते । आत्मास्तीत्यत्रात्मादिपदमात्मसत्ताद्यर्थकं न विकल्पते सनातनत्वेन निरवयवत्वादुक्तविशेषशसम्बन्धाभावेन भेदाऽनुमितिविषयो न भवतीत्यर्थः । तथाचाऽत्मास्तीति प्रयोगाऽनुपपत्तिरिति पूर्वार्द्धार्थः । समाधत्ते—*तस्मादिति* । विशेषाऽतिरिक्तपदार्थस्य स्वतो व्यावृत्तत्वासम्भवादित्यर्थः । प्रर्वतादीत्यादिनाऽस्मादिपरिग्रहः ।

*परस्पेणेति* । परस्य राजक्रियादिरूपार्थस्य, रूपेण=धर्मेण वर्त्तमानत्वादिना भिद्यते इत्युक्त एवार्थः । *तम इत्यादि* । तम आसीदित्यादयो भूतक्रियागतभूतत्वारोपात् । *भविष्यामि चेति* । भाविक्रियागतभविष्यत्त्वारोपाच्च योज्या इत्यर्थः । पक्षद्वयस्यैवाऽऽकरारूढतां प्रदर्शयन् प्रथमद्योतकत्वपक्षे उपपत्तिमाह—*तच्चेति* । *क्रियासामान्येति* । कालसामान्यवृत्तिक्रियावाचकस्येत्यर्थः ।

*तद्विशिष्टे* । वर्त्तमानकालादिविशिष्टे, वर्त्तमानत्वादिविशिष्टे वा व्यापारे इत्यर्थः । लडादेरित्यादिना लिडादिपरिग्रहः । *उपयोगादिति* । स च प्राक् प्रतिपादितः । तथाच लडाद्यादेशत्वेन तिबादीनां वर्त्तमानत्वादिद्योतकत्वान्नापाक्षीदित्यादौ वर्त्तमानक्रियाप्रतीतिः । क्रियासामान्यशक्तधातोस्तत्तद्विशिष्टे लक्षणयैव तत्तद्विशिष्टक्रियाबोधोपपत्तौ पृथग्वर्त्तमानत्वादौ तेषां शक्तिकल्पने गौरवादिति भावः । वाचकत्वपक्षमवलम्ब्याह—*अन्वयव्यतिरेकाभ्यामित्यादि* ।

नच तक्रकौण्डिन्यन्यायात् कर्त्राद्यर्थबाधः, शक्ततावच्छेदकभेदात् । किञ्चैवं "लः कर्मणि" इतिसूत्रं निरवकाशं स्यात् । स्थलान्तरेऽपि विध्याद्यर्थैर्बाधसम्भवादिति भावः । *अन्यथा*—अन्वयव्यतिरेकयोः शक्त्यग्राहकत्वे । *विलोपापत्तिरिति* । सर्वत्र प्रकृत्यैव तत्तत्प्रत्ययार्थत्वाभिमतबोधसम्भवादिति भावः । अधिकं सुबर्थनिर्णये वक्ष्यते ।

अर्थ—दश लकारों में से एक-एक लकार के अर्थ का निरूपण करते हैं—लट् लिट् लुट् लृट् लेट और लोट ये छह लकारों का क्रम से वर्तमान, परोक्ष, अनद्यतन भावी, भविष्यत्=विधि निमन्त्रण आदि तथा प्रार्थना आशीर्वाद आदि अर्थों में विधान होता है। ये छहों लकार टित् अर्थात् टकार इत्संज्ञा वाले हैं। इन छहों लकारों का वर्तमान परोक्ष आदि अर्थों में प्रयोग होता है। "वर्तमाने लट्" इस सूत्र से वर्तमान अर्थ में लट् का प्रयोग होता है। आरब्ध सजातीय क्रिया की असमाप्तता ही वर्तमानत्व[1] है। अथवा भूत और भविष्य से भिन्न को वर्तमान कहते हैं। पचति आदि स्थलों में अधिश्रयण (चूल्हा पर पात्र रखना) से अधः श्रयण (पात्र नीचे उतारने) के मध्य में वर्तमानत्व है। अत एव इसमें लट् का प्रयोग होता है। "आत्मा अस्ति" =आत्मा है "पर्वताः सन्ति" = पर्वत हैं इत्यादि स्थलों में (सत्ता क्रिया निरवयव होने से अखण्ड है। अतः उसमें कुछ उत्पन्न कुछ अनुत्पन्न नहीं हो सकता) राजा आदि की क्रियाओं के अनित्य होने से अनित्य, राजादि की क्रिया से विशिष्ट (युक्त) सत्ता की उत्पत्ति और अनुत्पत्ति से वर्तमानत्व की कल्पना करनी चाहिये। भाष्य में भी लिखा है—यहाँ (पर्वताः सन्ति) भूतभावी और वर्तमान राजाओं की क्रिया अर्थात् तत् परिच्छेदक काल 'तिष्ठतेः' अर्थात् सत्ता का (कालिक सम्बन्ध से) अधिकरण है।

इसी अभिप्राय से वाक्यपदीय की कारिका भी है—पचि आदि धातुओं का अर्थ, भूत भविष्य आदि के द्वारा भिन्न-भिन्न प्रतीत होता है किन्तु आत्मा—आत्मसत्ता (नित्य

---

१. अथवा फल की प्राप्ति के पूर्व तक तदनुकूल व्यापार वर्तमान है। आफल समाप्तेः क्रियाबन्धोऽव्युपरतो वर्तमानः कालः। वाक्यपदीय—

और निरवयव होने से ) भिन्न नहीं हो सकती। इसलिये पर्वत आत्मा आदि की सत्ता में राजा आदिकों के क्रियागत वर्तमानत्व आदि धर्मों से भिन्नता होती है।

"तमः आसीत् = अविद्या = अज्ञान था। "तुच्छेन अभ्यपिहितं यदासीत्" = अविद्या से जो ढका था। मैं अकेला ही था, अकेला हूँ, और रहूँगा इत्यादि बोधकश्रुतियों में भूत वर्तमान और भविष्य की उपपत्ति इसी प्रकार करनी होगी।

वर्तमानत्व आदि अर्थ लट् आदि से द्योत्य होते हैं। क्रिया ( व्यापार ) सामान्य वाचक धातु की वर्तमानत्वादि विशिष्ट व्यापार में लक्षणा है। इस प्रकार के अर्थ में तात्पर्य का ग्राहक लडादि लकार को मानते हैं। अत एव इनकी उपयोगिता द्योतकतया होती है।

लट् इसके प्रयोग से वर्तमानत्व की प्रतीति होती है न रहने पर उसकी प्रतीति नहीं होती इस अन्वय व्यतिरेक से वर्तमानत्व लट् का वाच्य ही है। यदि ऐसा न मानें तो सभी स्थलों में प्रत्ययार्थ में प्रकृति की लक्षणा और प्रत्यय को तात्पर्य ग्राहक मान लेने से प्रत्यय की वाचकता का सर्वथा उन्मूलन ही हो जायगा।

हिन्दी भाष्य—लकार सामान्य के कर्ता और कर्म अर्थ का प्रतिपादन करने के बाद उनके विशेष अर्थों का निरूपण अवसर प्राप्त है। सामान्य पदार्थ ज्ञान के अनन्तर विशेष पदार्थ की जिज्ञासा स्वाभाविक है।

वर्तमान अर्थ में लट् परोक्ष में लिट् अतीत रात्रि के बारह बजे के बाद आगामिनी रात्रि के बारह बजे से पहले का समय अद्यतन है इससे अतिरिक्त अनद्यतन भावी में लुट् भविष्य में लृट् विधि, निमन्त्रण, तथा आमन्त्रण में, लेट्, प्रार्थना और आशीर्वाद में लोट् लकार होता है। अन्य अर्थों में भी लकार का विधान होता है। विशेष सिद्धान्त कौमुदी लकारार्थ प्रक्रिया में देखिये।

क्रिया के आरम्भ से फलप्राप्ति के पूर्व तक वर्तमान कहा जाता है। फूत्कार आदि विशेष क्रियाओं का समूह क्रिया है। समूह के अन्तर्गत विशेष क्रियाओं में प्रारम्भिक उत्पन्न क्रिया के और अनुत्पन्न अन्तिम क्रिया के बीच एवं आद्यन्त की क्रिया वर्तमान है।

कार्यारम्भ के पहले कार्यमात्र का प्रागभाव रहता है आरम्भ होने पर उसका नाश हो जाता है। समूह रूप क्रिया के आद्यवयव का प्रागभाव नष्ट हो गया हो और उसके अन्त्यावयव का ध्वंस उत्पन्न न हुआ हो ऐसी क्रिया का धर्म वर्तमानत्व है।

यद्यपि भोजनादि क्रिया के मध्य में पान हास कथनोपकथन आदि क्रियायें भी होतीं हैं। ऐसी दशा में भुङ्क्ते इसकी उपपत्ति कैसी होगी। तथापि मध्य में पान हास आदि क्रिया अविनाभूत होने से ( अर्थात् मध्य में उनका होना अनिवार्य है ) भोजन क्रिया का व्यवच्छेदक नहीं है।

अथवा अनिवार्य उन क्रियाओं को भी भुज् धात्वर्थ मान लेने से भुङ्क्ते इस प्रयोग की असङ्गति नहीं है।

अनेक मास में समाप्त होने वाले ग्रन्थाध्ययन के समय भोजन गमन आदि क्रियाओं के रहते हुये भी अध्ययन क्रिया का शयन विच्छेदक नहीं होता इसी प्रकार वर्तमानत्व का उपपादन करना होगा। उनको भी धात्वर्थ मानकर समाधान करना कण्ठादि अभिघातरूप अल्प व्यापार में लाघव मूलक शक्ति स्वीकार करने के कारण असङ्गत है। अत एव संहिताध्ययन समाप्ति पर्यन्त "देवदत्तः संहितां पठति" यही प्रयोग होता है।

संहिताध्ययन की अन्तिम क्रिया का ध्वंस जबतक नहीं होगा तबतक मध्य में अन्य अविच्छेदक क्रियाओं के होते हुये भी "पठति" का यह प्रयोग इष्ट है।

यद्यपि वर्तमानत्व क्रियागत धर्म नहीं है। अपितु काल गत है। भाव, काल, कारक और संख्या ये चार आख्यातार्थ निरुक्त में कहे गये है। वर्तमान काल भूतकाल भविष्यत् काल इस प्रकार का व्यवहार भी काल गत ही वर्तमानत्वं का साधन करता है तथापि उपाधि से रहित अखण्ड महाकाल में दिन मास वर्ष आदि खण्ड काल एवं वर्तमानत्व भूतत्वादि का व्यवहार उपाधिभूत नश्वर क्रिया के द्वारा ही हो सकता है। अतः काल गत वर्तमानत्वादि का उपाधिभूत क्रिया में आरोप कर क्रिया में उक्त व्यवहार किया जाता है। तात्पर्य यह है कि मिनट घण्टा दिन मास आदि की कल्पना का कारण घड़ी की सुई, पृथ्वी की गति से प्रतीत होने वाली सूर्य की गतिं, आदि है। इतनी वार सुई के घूमने पर व्यवहृत मिनट घण्टा आदि से अखण्ड काल में खण्ड काल का व्यवहार होता है। इसलिये क्रिया से ही काल में विभाग होता है। विभाजक क्रिया उपाधि है। उसमें वर्तमानत्व प्रारब्धत्व और अपरिसमाप्तत्व है। प्रारब्धापरिसमाप्त (आरम्भ हुआ हो और समाप्ति नहीं हुई हो) क्रिया के उच्चारणाधिकरण काल को वर्तमान काल कहते हैं। सूर्योदय सूर्यास्त आदि से काल में खण्ड की कल्पना होती है। अतः खण्ड काल लक्षण का विषय है। भाष्यकार ने भी लिखा है—"न्याय्या त्वेषा वर्तमानकालता। आरम्भानपवर्ग पर्यन्तं भुञ्जानो हसति जल्पति पिबति निमिषति च"।

"वर्तमानसामीप्ये वर्तमानवद् वा" (३।३।१३१) इस सूत्र के अनुसार वर्तमान सामीप्य में भी लट् लकार का प्रयोग होता है। वर्तमान सामीप्य वर्तमान के पूर्व और पर में होने से अतीत तथा भावी उभयविधक्रियासाधारण[1] हैं।

जव कहीं से शीघ्र ही आये मनुष्य को देखकर किसी ने पूछा "कदा आगतोऽसि" इसके वाद "एष आगच्छामि" यह उत्तर वाक्य अतीत क्रिया सम्बन्ध में, "कदा गमिष्यसि" "एष गच्छामि" यह वाक्य भावि क्रिया सम्बन्ध में है। उक्त दोनों स्थलों में वर्तमान सामीप्य रहने से लट् लकार का प्रयोग होता है।

भूत और भविष्यत् काल से भिन्न काल को वर्तमान काल कहते हैं। यह लक्षण भी हो सकता है। परन्तु भूत और भविष्यत् काल के निर्णय होने पर ऐसा लक्षण हो सकेगा। वर्तमान और भविष्य से भिन्न भूत, भूत और वर्तमान से भिन्न भविष्य, इस प्रकार के लक्षण में वर्तमान काल के ज्ञान के लिये भूत काल का ज्ञान और भूत काल के ज्ञान के लिये वर्तमान का ज्ञान आवश्यक होने से अन्योन्याश्रय है। अत एव इस लक्षण में अनास्था की व्यक्ति वा शब्द से मूल में की गई है।

राजाओं की क्रिया का अर्थात् क्रिया परिच्छेदक काल। ("क्रियाभेदायकालस्तु" इससे क्रिया में काल की परिच्छेदकता स्पष्ट है।) आधेयता सम्बन्ध से पर्वतादि स्थिति में आरोप है। पर्वतों की स्थिति अतीत वर्तमान आगामी किसी न किसी राजा अथवा महाजन के समय में रहेगी, उन राजा आदिकों की क्रिया के परिच्छेदक काल गत

१. प्रकृतशब्दप्रयोगाधिकरणक्षणवृत्तिध्वंस प्रतियोगिक्षणवृत्तित्व रूप वर्तमान सामीप्य भूतक्रियानिष्ठ तथा प्रकृतशब्दप्रागभावाधिकरणक्षणध्वंसाधिकरण क्षणोत्पत्तिकरवरूप वर्तमानसामीप्य भाविक्रियानिष्ठ समझना चाहिये। विशेष परीक्षा टीका में।

वर्तमानत्व का पर्वतादि की स्थिति क्रिया में आरोप समझना चाहिये ऐसा भाष्य का आशय है।

शङ्का—"आत्मा अस्ति"=आत्मा है "पर्वताः सन्ति"=पर्वत हैं इत्यादि स्थलों में वर्तमान काल का प्रयोग सङ्गत नहीं है। अस्ति से आत्मधारण रूप सत्ता उसके अनुकूल व्यापार-आश्रयत्व रूप की प्रतीति होती है। आश्रयत्व आश्रयसत्ता रूप है। सत्ता अखण्ड होने से खण्डरूप अवयव क्रिया नहीं है किन्तु अखण्ड रूप क्रिया है। अतः आद्य अवयव भूत क्रिया का प्रागभाव विनष्ट हो और अन्त्य क्रिया के ध्वंस की अनुत्पत्ति हो ऐसे वर्तमान काल का यहाँ सम्भव नहीं है। साथ ही "समूहः क्रमजन्मनाम्" इसके अनुसार क्रम से होने वाली क्रियाओं के समूह का नाम क्रिया है। यहाँ एक अखण्ड और नित्य सत्ता की प्रतीति होने से समूह भूत क्रिया भी नहीं है।

समाधान—प्रयोग करने के समय में अवस्थित राजा आदि विशिष्ट पुरुषों की क्रियायें उत्पत्ति और विनाशशाली होने से अनित्य हैं। तादृश अनित्य क्रिया से विशिष्ट (युक्त) आत्मसत्ता में, विशेषणांश राजादि क्रिया की अनित्यता होने से उसकी उत्पत्ति का आत्मसत्ता में आरोप कर उक्त वर्तमान लक्षण का समन्वय होता है।

अथवा "तद् विशिष्टस्य" इस मूल के तत् शब्द से अव्यवहित पूर्ववर्ती अनित्यत्व के परामर्श होने से राजादि क्रियागत वर्तमानत्व का आत्मसत्ता में आरोप होता है। अत एव वर्तमानार्थक लट् का प्रयोग उपपन्न होता है।

इसी प्रकार अखण्ड सत्ता में पौर्वापर्य का आरोप होने से अर्थात् राजादिकों की स्थिति भूत भविष्य वर्तमान भेद से भिन्न-भिन्न है। अतः तत् क्रियागत भेद से ही आत्मसत्ता का भेद होने से क्रियात्व और वर्तमान कालादित्रय का योग उपपन्न होता है।

इसी आशय की कैयट की पङ्क्ति है—"तत्र राज्ञां स्थितिः भूतादि भेदेन भिन्ना पर्वतादि स्थित्यादेर्भेदिका इति क्रिया रूपत्वं कालत्रययोगश्चोपपद्यते"।

इसी आशय की भर्तृहरि कारिका भी है।

धातु का अर्थ काल भी माना गया है। अतः लट् वर्तमान काल का द्योतक है वाचक नहीं है। द्योतकत्व का स्वरूप-स्वसमभिव्याहृतपदनिष्ठशक्त्युद्बोधकत्व है। समभिव्याहृत पद की शक्ति का उद्बोधन द्योतकत्व है। प्रकृत में वर्तमान कालादि में शक्ति के बिना उसका उद्बोधन सम्भव नहीं है। अतः उस अर्थ में शक्ति माननी पड़ेगी। परन्तु शक्ति मानने पर गौरव दोष होगा। अतः वर्तमान काल विशिष्ट उन क्रियाओं में धातु की लक्षणा है। इस विशिष्ट लक्षणा में तात्पर्य ग्राहक लट् है। काल में शक्ति और वर्तमान में लक्षणा ऐसा न मानकर विशिष्ट में लक्षणा स्वीकार करने से वृत्तिद्वय (शक्ति लक्षणा) जन्य एक समय में दोनों अर्थों की उपस्थिति नहीं होगी इस शङ्का का निराकरण हो जाता है।

सर्वत्र इसी प्रकार प्रकृत्यर्थ मानने पर प्रत्ययों का वाच्य अर्थ नहीं होगा अतः प्रत्यय को वाचक मानना चाहिये द्योतक नहीं यह भी पक्ष है।

वस्तुतः द्योतकत्व पक्ष युक्तियुक्त है। वर्तमान काल प्रत्ययार्थ होने पर शाब्दबोध में काल की प्रधानता प्राप्त होगी। इसके निवारण के लिये "प्रकृतिप्रत्ययो" इस न्याय का बाध करना होगा। द्योतकत्व पक्ष में न्याय का बाध नहीं करना पड़ता। क्योंकि

प्रत्ययार्थ से वाच्यार्थ ही की विवक्षा है; द्योत्यार्थ की नहीं। अतः एव "अजा छागी' इत्यादि स्थलों में टाप् ङीप् से द्योत्य स्त्रीत्व की प्राधान्य से प्रतीति नहीं होती।

लिडर्थमाह—*परोक्षे इति*। "परोक्षे लिट्" (पा० सू०३।२।११५) इतिसूत्रात्। कालस्तावदद्यतनानद्यतनभेदेन द्विविधः। द्विविधोऽपि भूतभविष्यद्रूपः। तत्रानद्यतने भूते परोक्षे लिडित्यर्थः। तेनाद्यतने भूते, अनद्यतने भविष्यति, भूतेऽप्यपरोक्षे च न लिट्प्रयोगः। परोक्षत्वं च साक्षात्करोमीत्येतादृशविषयताशालिज्ञानाविषयत्वम्।

नच "क्रिया नामेयमत्यन्तापरिदृष्टा पूर्वापरीभूतावयवा न शक्या पिण्डीभूता निदर्शयितुम्" इतिभाष्यात् तस्या अतीन्द्रियत्वेन परोक्षे इत्यव्यावर्त्तकमितिशङ्क्यम्। पिण्डीभूताया निदर्शयितुमशक्यत्वेऽप्यवयवशः साक्षात्करोमीति प्रतीतिविषयत्वसम्भवात्। अन्यथा 'पश्य मृगो धावति' इत्यत्र तस्या दर्शनकर्मता न स्यादिति प्रतिभाति।

व्यापाराविष्टानां क्रियानुकूलसाधनानामेवात्र पारोक्ष्यं विवक्षितमतोनोक्तदोषः। 'अयं पपाच' इत्याद्यनुरोधाद् व्यापाराविष्टानामितीत्यपि वदन्ति।

कथं तर्हि "व्यातेने किरणावलीमुदयनः" इति स्वक्रियायाः स्वप्रत्यक्षत्वादिति चेत्? असङ्गतमेव। व्यासङ्गादिना स्वव्यापारस्य परोक्षत्वोपपादनेऽपि बहुतरमनः प्रणिधानसाध्यशास्त्रार्थनिर्णयजनकशब्दरचनात्मके ग्रन्थेऽनद्यतनत्वाऽतीतत्वयोर्विस्तारक्रियायामसत्त्वेन अनद्यतनातीतत्वयोरभावेन तदर्थकलिडसम्भवात्॥

*अनद्यतने भूत इति*। "भूते" (पा० सू० ६।२।१४) इति "अनद्यतने लङ्" (पा० सू० ३।२।१११) इति सूत्राभ्यां तत्तत्पदानुवृत्तिरिति भावः। *न लिट्प्रयोग इति*। उक्तार्थस्य बाधात् पपाचेत्यादिजबोधानन्तरमनद्यतनत्वादिसन्देहाऽनुदयाद् भूतत्वादिवत्तयोरपि तद्वाक्यजबोधे क्रियांशे विशेषणतया भानमभ्युपेयम्। तच्च वाचकतां द्योतकतां वा विनाऽनुपपन्नमिति लिटस्तदभ्युपगम आवश्यक इति भावः।

ननु परोक्षत्वं प्रत्यक्षान्यज्ञानविषयत्वम्। तथाच प्रत्यक्षक्रियायामपि श्रुतानुमितत्वयोः सत्त्वात् पपाचेत्यादिप्रयोगापत्तिरत आह—*परोक्षत्वञ्चेति*। यथाश्रुतप्रत्यक्षाविषयत्वस्योपनीतक्रियायामभावेन तत्र पपाचेत्यादिप्रयोगानुपपत्तिरत आह—*साक्षात्करोमीति*। साक्षात्करोमीत्येतत्प्रतीतिसाक्षिकलौकिकविषयत्वाभाववत्त्वमित्यर्थः।

उक्तस्थले प्रत्यक्षविषयतासत्त्वेऽपि तादृशविलक्षणविषयत्वाभाववत्त्वमक्षुण्णमिति न तदनुपपत्तिः। प्रत्यक्षं तादृशशब्दप्रयोक्तुर्ग्राह्यम्। ननु "दशमस्त्वमसी"त्यादौ शब्दादप्यपरोक्षज्ञानस्य दृष्टत्वेन शब्दजन्यतादृशज्ञानविषयेन्द्रियासम्बन्धक्रियायां लिडनुपपत्तिरितिचेद्? न। तत्रापि शाब्दज्ञानसहकृतमनसैव दशमसाक्षात्कारो, न तु

शब्दात्। लौकिकविषयतानियामकेन्द्रियसंयोगादेरभावेन शाब्दे तद्वत्त्वाऽसम्भवात्। अत एव तत्त्वमसीत्याद्याचार्योपदेशशमदमादिसंस्कृतं मन आत्मदर्शने कारणमिति गीताभाष्ये उक्तमिति सर्वं समञ्जसम्।

"क्रिया नामेयम्" इति भाष्ये साऽसावनुमानगम्येति शेषः। अवयवानामांशुविनाशित्वेन पिण्डस्यैवाभावादिति भावः। *साक्षादिति*। विक्लित्त्यादिरूपकार्याऽनुमेयेति। *अन्यथेति*। क्रियाया अवयवशोऽपि साक्षात्कारानभ्युपगमे इत्यर्थः। प्रतिभातीति उक्तार्थं एवास्मद्बुद्धिविषयोभवतीत्यर्थः।

ननु क्रियाऽवयवा अपि क्रियावदतीन्द्रिया एव; यथा पचेरुदकसेचनादयोऽवयवास्तथा तेषामप्यवयवास्तेऽपि समूहरूपेणैव धातुवाच्याः। यस्तु क्षणाऽवच्छिन्नस्तद्रूपोऽवयवः स तु न धातुवाच्यः, किन्त्वयवसमूहाऽऽत्मनैव। आश्रितक्रमरूपत्वात्तद्वाच्यस्य। एवञ्च सदसद्रूपा क्रिया न सद्विषयेन्द्रियग्राह्या। तदुक्तम्—

क्रमात् सदसतां तेषामात्मना न समूहिनः।
सद्वस्तुविषयैर्यान्ति सम्बन्धं, चक्षुरादिभिः॥

इति वाक्य-क्रियासमुद्देशः (६)

अत्यन्तापरदृष्टेति भाष्यस्याऽप्यवयवरूपेण समूहात्मना चाऽदृष्टेत्येवार्थः। अत एव "वर्त्तमाने लट्" इति सूत्रे भाष्ये, "अस्ति वर्त्तमानः कालः, परं त्वाऽऽदित्यगतिवन्नोपलभ्यते" इत्युक्तम्। तस्य प्रत्यक्षेणेति शेषः।

एवञ्च वर्त्तमानत्वाक्रान्तक्रियाणां स्पष्टमेवाऽप्रत्यक्षत्वं तत उपलभ्यते। 'पश्य मृगो धावति' इत्यादौ तु दृशिर्ज्ञानार्थको, धावतिर्वा फलपर इति न कश्चिद्दोषः। किञ्च अवयवस्य प्रत्यक्षत्वे, प्रकृतः कटमित्यादाववयवातीतत्वेन समुदायातीतत्वमादाय क्ताद्युपपादनवदवयवप्रत्यक्षत्वेन समुदायप्रत्यक्षत्वमादाय, परोक्ष इत्यस्य चारितार्थ्ये भाष्यस्यपूर्वपक्षस्य निर्दलत्वापत्तिरित्यपरितोषान्मतान्तरमाह—*व्यापाराविष्टानामिति*। एवञ्चातीतानद्यतनव्यापाराविष्टपरोक्षकर्तृकक्रियावृत्तेर्धातोर्लिडिति, "परोक्षे लिट्" (पा॰सू॰ ३।२।११५) इति सूत्रार्थः।

*अयं पपाचेति*। तदानीं कर्तुरपारोक्ष्येऽपि व्यापारदशायां पारोक्ष्यसत्त्वादुक्तप्रयोगोपपत्तिरिति भावः। *इत्यपि वदन्तीति*। मतान्तरानादरेऽत्रापि पूर्वोक्तार्थस्याऽऽपातरमणीयत्वं मन्वाना भाष्याऽनुसारिण इति शेषः॥

अत्राहुर्नैयायिकाः—पूर्वाऽपरीभूताऽवयवसमुदायात्मकपारिभाषिकक्रियाया अप्रत्यक्षत्वं युक्तमेव समूहस्यैवाभावात्। तदवयवानामपि पारोक्ष्यं तु सर्वानुभवविरुद्धम्। तत्र प्रत्यक्षकारणचक्षुःसंयुक्तसमवायादेः सत्त्वात्; अन्यथा घटपुस्तकादेरप्यप्रत्यक्षत्वाऽऽपत्तिरिति बहुव्याकोपः। अधिश्रयणं साक्षात्करोमीति सार्वजनीनप्रतीतेश्च। प्रतीतेः पदार्थाऽसाधकत्वे व्यवहारमात्रोच्छेदाऽऽपत्तिश्च। "क्रिया नामेयं" इति भाष्यस्यापि इयं सावयवपच्याद्यर्थरूपेत्यर्थान्न तद्विरोधः। सदसतां तेषामित्यस्य विद्यमानाविद्यमाना-

वयवरूपाणामित्यर्थात् समूहात्मकक्रियायाः पारोक्ष्यप्रतिपादनपरत्वान्न हरिवाक्यविरोधोऽपि। अन्यथा क्रिया सदसद्रूपेति वदतोव्याघातः स्पष्ट एव।

कालस्य प्रत्यक्षत्वाभावेन तदनुवादकभाष्योपष्टम्भोपन्यासोऽपि नावयवानां पारोक्ष्योपपादकः। प्रकृतः कटमित्यत्राप्ययवयवातीतत्वमादायैव प्रयोगोपपत्तौ समुदायातीतत्वारोपे मानाभावेन तद्दृष्टान्तासङ्गतिश्च। दार्ष्टान्तिकेऽवयवप्रत्यक्षत्वेन समुदायप्रत्यक्षत्वमारोप्य पूर्वपक्षस्य निर्दलत्वापादनमपि स्वाग्रहमूलकमेव। अत एव भाष्ये 'पश्य मृगो धावति' इत्यनेन लौकिकविषयताशाल्यर्थकदृशिकर्मत्वं धावतेः प्रतिपादितम्। कथमन्यथा आगारान्तरस्थितस्य न तादृशप्रयोगः। मृगकर्तृकधावने ज्ञानविषयत्वरूपज्ञानकर्मत्वाऽबाधात्॥ धावतेः संयोगरूपफलार्थकत्वे व्यापारवाचकत्वाभावाद्धातुत्वप्रसङ्गश्च। स्वजनकव्यापारगतपौर्वापर्यारोपेण क्रियात्वोपपादने चाप्रत्यक्षत्वापत्तिस्तदवस्थैवेति न किञ्चिदेतत्। तस्मात् पूर्वोक्तमतमेव निराबाधमिति॥

*व्यासङ्गादिनेति*। यथा—"मत्तोऽहं किल विललाप" इत्यत्र मदादिना मनोऽसन्निधानात् क्रियापारोक्ष्यं, तद्वदित्यर्थः। *लिडसम्भवादिति*।

अत्रेदं चिन्त्यम्—न वास्तवं पारोक्ष्यादि लिडादिनियामकम्। 'अध्यास्त सर्वर्तुसुखामयोध्याम्' इत्यत्र लङोऽसाधुतापत्तेः। किन्तु वैवक्षिकं तत्। तथा वक्ष्यति च स्वयमेव सारकृत् 'अनद्यनभूतत्वेन विवक्षिते लङ्, तत्रैव पारोक्ष्यविवक्षायां लिट्' इति। प्रकृते चाऽनायासनिष्पन्नत्व—शीघ्रनिष्पन्नत्वप्रतीतिफलकभूतानद्यतनत्वविवक्षायाः, एवं सूक्ष्मकालेन करिष्यामि यत्र काले मयाऽपि साक्षात्कर्तुमशक्यमिति प्रतीतिफलकपारोक्ष्यविवक्षायाश्च सत्त्वाल्लिडुपपत्तिसम्भवादिति॥

*अनद्यतन इति*। अतीताव्यवहितरात्रिपश्चार्द्धविशिष्टाऽऽगामिरात्रिपूर्वार्द्धोपेतं दिनमद्यतनम्। एतद्भिन्नकालत्वमनद्यतनत्वमिति वृत्तिकारादयः। कैयटस्तु—लुङ्सूत्रेऽतीतरात्रेरन्त्ययामेनाऽऽगामिरात्रेराद्ययामेन सहितो दिवसोऽद्यतन इत्यूचे।

अर्थ—लिट् के अर्थ का निरूपण करते हैं—"परोक्षे इति"। "परोक्षे लिट्" (३।२।११५) इस सूत्र से परोक्ष अर्थ में लिट् लकार होता है। अद्यतन और अनद्यतन के भेद से काल दो प्रकार का है। ये दोनों भेद भी भूत और भविष्यत् के भेद से दो प्रकार के हैं। उनमें अनद्यतन परोक्ष भूत अर्थ में लिट् का प्रयोग होता है। इस प्रकार अद्यतन भूत, अद्यतन भविष्य और भूत काल में भी यदि क्रिया अपरोक्ष हो तब लिट् का प्रयोग होगा। साक्षात् कार (प्रत्यक्ष) करता हूँ इस प्रकार का अनुव्यवसाय रूप जो ज्ञान एतन्निरूपित विषयता व्यवसायरूप प्रत्यक्ष ज्ञान में उक्त ज्ञान की अविषयता ही ज्ञान में परोक्षता है।

शङ्का—क्रिया अतीन्द्रिय है क्योंकि इन्द्रियों के संयोग से उत्पन्न ज्ञान का विषय प्रत्यक्ष होता है। क्रिया की परोक्षता भाष्य से भी सिद्ध है—"साध्यरूप यह क्रिया अत्यन्त प्रत्यक्ष प्रमाण से अदृष्ट अर्थात् प्रत्यक्ष प्रमाण का अविषय, क्रमिक अनेक पूर्वापर अवयवों वाली समूहात्मक (पिण्ड) रूप से दिखाई नहीं जा सकती" इस आशय के भाष्य से उसमें इन्द्रियाविषयत्व होने से "परोक्षे लिट्" इस सूत्र में परोक्ष ग्रहण व्यावृत्तिस्थल

न होने के कारण व्यर्थ है। (क्रिया अपरोक्ष भी होती तो उसकी व्यावृत्ति के लिये परोक्ष विशेषण क्रिया में आवश्यक हो सकता था।)

समाधान—शीघ्र विनाशिनी क्रियाओं का समूह नहीं होने के कारण समूह की प्रत्यक्षता नहीं हो सकती। किन्तु खण्ड-खण्ड (अवयवभूत) क्रिया में प्रत्यक्ष ज्ञान की विषयता सम्भव है। यदि अवयवभूत क्रिया का प्रत्यक्ष नहीं माना जायगा तो "पश्य मृगो धावति" यहाँ पर धावन क्रिया दर्शन क्रिया का कर्म नहीं होने से वैसा प्रयोग असङ्गत हो जायगा।

अतीत अनद्यतन व्यापार से युक्त कर्ता की परोक्षता ही क्रिया की परोक्षता मानी जाती है। तादृश व्यापार सहित कर्ता का प्रत्यक्ष स्थल परोक्ष का व्यावृत्ति स्थल होता है। इस प्रकार की व्याख्या से कोई दोष नहीं होता। कर्ता के प्रत्यक्ष होने पर भी पाकानुकूल व्यापार विशिष्ट कर्ता का प्रत्यक्ष न होने से व्यापार विशिष्ट कर्ता परोक्ष ही है। अतः "अयं पपाच" इसके अनुरोध से व्यापार युक्त का प्रवेश है।

शङ्का—नैयायिक शिरोमणि उदयनाचार्य ने प्रशस्त पादभाष्य की टीका किरणावली में "व्यातेने किरणावलीमुदयनः" ऐसा मङ्गलश्लोक लिखा है। अपनी क्रिया अपने से परोक्ष नहीं होने से अपरोक्ष में लिट् का प्रयोग "व्यातेने" इसमें कैसे होगा।

समाधान—वैसा प्रयोग नहीं करना चाहिये था। अतः उस प्रकार का प्रयोग असङ्गत है।

शङ्का—किसी कारण से मन के सावधान नहीं रहने के कारण अपनी क्रिया भी अपने लिये परोक्ष हो जाती है।

समाधान—मन के पूर्ण अवधान करने से साध्य जो शास्त्र के अर्थ का निर्णय इसका बोधक शब्द रचनात्मक ग्रन्थ विशेष की विस्तार क्रिया में अनद्यतनत्व और अतीतत्व के अभाव से भी अनद्यतन तथा अतीत काल में निष्पन्न होने वाले लिट् का प्रयोग सर्वथा असम्भव है।

हिन्दीभाष्य—अद्यतन और अनद्यतन के भेद से भूत काल दो प्रकार का है। अतीत रात्रि के निशीथ से और आनेवाली रात के निशीथ से पूर्व का काल अद्यतन कहलाता है। इससे भिन्न काल को अनद्यतन कहते हैं। लिट् लकार भूत अनद्यतन और परोक्ष क्रियावाची धातु से होता है। अतः अद्यतन भूत अनद्यतन भविष्य और अपरोक्षभूत में लिट् का प्रयोग नहीं होता है।

(परोक्ष का स्वरूप इस प्रकार है।)

सौ वर्ष पुरानी क्रिया या हजार वर्ष पहले की क्रिया या दो तीन दिन पहले की क्रिया परोक्ष है ऐसा कुछ लोगों का मत भाष्य में मिलता है। वस्तुतः प्रयोग करने वाले व्यक्ति के ज्ञानेन्द्रियों से उत्पन्न ज्ञान का अविषयत्व ही सर्वसम्मत क्रियागत परोक्षत्व है।

ग्रन्थोक्त परोक्ष लक्षण का संघटन इस प्रकार है। "साक्षात्-करोमि" = साक्षात्कार करता हूँ इत्याकारक जो अनुव्यवसाय ज्ञान एतादृश ज्ञान की विषयता का शाली=आश्रय व्यवसाय ज्ञान उसका अविषयत्व परोक्षत्व है।

अयं घटः अयं पटः इत्यादि विषयों के भासक ज्ञान को व्यवसाय कहते हैं। इस व्यवसाय रूप ज्ञान से केवल विषय का भान होता है। इसके भासक ज्ञान का इसके

करते हैं वे पाप मुक्त होकर विशुद्ध ब्रह्मलोक को प्राप्त करते है। इसके अनुसार श्राद्ध से पितरों की तृप्ति और सन्ध्या से ब्रह्मलोक की प्राप्ति रूप फल की कल्पना होती है।

यद्यपि सामानाधिकरण्य (एक अधिकरण में कार्य कारण का रहना) से कार्य कारणभाव देखा जाता है। संयोग से पर्वत में धूम है तो वहीं संयोगेन वह्नि का अनुमान होता है। समवाय से जिस आत्मा में संस्कार है स्मरण भी समवाय से उसी आत्मा में होता है। यागकर्ता ही कालान्तर में स्वर्ग प्राप्त करता है इस प्रकार अनेक उदाहरण हैं तब यहाँ श्राद्ध करनेवाले से भिन्न पितरों को तृप्ति कैसे मिलेगी। श्राद्ध कोई करे उससे जन्य तृप्ति किसी को हो ऐसा न्याय विरुद्ध होने से नहीं हो सकता तथापि उद्देश्यत्व रूप सम्बन्ध से श्राद्ध कर्म पितरों में है और वहीं समवाय सम्बन्ध से तृप्ति रूप कार्य भी है। अतः कार्य कारण भिन्न-भिन्न अधिकरण में नहीं होने से पूर्व शङ्का नहीं हो सकती है।

पितृगण को उद्देश्य करके ही श्राद्ध का विधान है।

यदि पितृगण मुक्त हो गये हों तो श्राद्ध का फल श्राद्ध करने वाले को प्राप्त होगा। अतएव "असति वचनान्तरे शास्त्रदेशितं फलमनुष्ठातरि" ऐसा वृद्ध वचन है।

शङ्का-नित्य कर्म के अनुष्ठान में फल की कल्पना होने पर नित्य कर्मता ही लुप्त हो जायगी क्योंकि नित्य कर्मानुष्ठान से फल की प्राप्ति नहीं होती है।

समाधान-ग्रहण का श्राद्ध, नित्य और नैमित्तिक दोनों माना जाता है उसी प्रकार नित्यश्राद्ध और सन्ध्या वन्दन में नित्यत्व और काम्यत्व दोनों मानते हैं।

अथवा नित्य और नैमित्तिक कार्य के अनुष्ठान न करने से प्रत्यवाय होता है उसके करने पर अकरणजन्य प्रत्यवाय नहीं होगा। अतिरिक्त कोई फल विशेष नहीं होता ऐसा कुछ लोग मानते हैं।

वस्तुतः "नित्य नैमित्तिकैरेव कुर्वाणो दुरितक्षयम्" इत्यादि वचनों से पापनिवृत्ति उक्त दोनों कर्मों का फल है।

शङ्का—ऐसा मानने पर काम्य कर्म से इन दोनों कर्मों में भेद कैसे होगा। काम्य कर्म के समान नित्य नैमित्तिक कर्मों का भी अनुष्ठान, फल विशेष के लिए ही किया जाता है।

समाधान—फलकामना से इन दोनों कर्मों का अनुष्ठान नहीं होता। कामना विशेष से काम्य कर्म के समान इनके अनुष्ठान का विधान भी नहीं किया गया है। अतः इनमें काम्य कर्मत्व का प्रसङ्ग नहीं है।

शङ्का—लिङ् का अर्थ इष्ट साधनत्व मानने से साधनत्व आख्यात (तिङ्) से उक्त होने के कारण "ज्योतिष्टोमेन यजेत" यहाँ ज्योतिष्टोम से तृतीया विभक्ति नहीं होगी। अनुक्त कर्ता करण में ही तृतीया का विधान किया गया है। क्रिया फल सिद्धि में प्रकृष्ट उपकारक करण है उसको साधन भी कहते हैं।

समाधान—स्वर्गादिरूप फल के साधनत्व का आख्यात से अभिधान होने पर भी यज् धात्वर्थ भावना का निर्वर्तकत्व रूप यागनिष्ठ करणत्व का अभिधान लिङ् से न होने के कारण तृतीया की अनुपपत्ति नहीं है। अर्थात् ज्योतिष्टोमका अभेद से यज्धात्वर्थ याग रूप फल में अन्वय है। ज्योतिष्टोमाभिन्न याग से इष्ट की भावना उत्पन्न करो। पुरुष-प्रवृत्ति रूप जो आर्थी भावना है उसको किं केन और कथंभाव की आकाङ्क्षा है। किं से इष्टतम स्वर्ग विवक्षित है। अर्थात् स्वर्गं भावयेत् उत्पादयेत्। केन इससे करण

की आकाङ्क्षा होने पर धातु से उपस्थित याग का अन्वय होता है। यागेन स्वर्गं भावयेत्। स्वर्ग की साधनता का लिङ् से अभिधान होने पर भी याग में जो आर्थी भावना रूप पुरुषप्रवृत्ति है इसका उत्पादकत्व रूप करणत्व याग में सुस्पष्ट है जो लिङादि से उक्त नहीं हुआ है। अतः तृतीया की अनुपपत्ति नहीं है। यह भाव है।

शङ्का—किसी भी कार्य में प्रवृत्ति का कारण जिस प्रकार इदम् इष्टसाधनम् इस प्रकार का ज्ञान है उसी प्रकार मत्कृतिसाध्यम् और बलवदनिष्टाननुबन्धित्वज्ञान भी है अर्थात्—मेरी कृति से साध्य यह कार्य है और बलवान् जो मरणादि रूप अनिष्ट है उसका अजनक है इस प्रकार का ज्ञान भी प्रवृत्ति का प्रयोजक होने से इनको भी लिङ् का अर्थ मानना चाहिये। स्व व्यापार साध्य न होने के कारण ही सुमेरु के स्वर्णमय शिखर के और चन्द्रबिम्ब के आनयन में प्रवृत्ति नहीं होती। इसी प्रकार विष मिले हुये पदार्थ के भोजन में प्रवृत्ति नहीं होती क्यों कि तादृश भोजन में मरण रूप अनिष्ट की जनकता का ज्ञान है अजनकत्व का ज्ञान नहीं है। अतः विष मिले हुये अन्न के भोजन में प्रवृत्ति नहीं होती है। इस प्रकार इष्ट साधनता ज्ञान के समान कृति साध्यत्व एवं बलवदनिष्टाननुबन्धित्व का ज्ञान भी प्रवृत्ति प्रयोजक होने से लिङर्थ मानना चाहिए।

समाधान—कृति साध्यत्व का उपायान्तर से लाभ हो जाने से उसमें लिङ की शक्ति कल्पना व्यर्थ है। उपायान्तर से जो लाभ नहीं होता उसी में शब्द की शक्ति मानी जाती है। लिखा भी है "अनन्यलभ्यो हि शब्दार्थः।" उपायान्तर से अनुमानादि प्रमाण विवक्षित है। यागो मत्कृतिसाध्यः कृतिसाध्यत्वविरोधिधर्मानधिकरणत्वात् ग्रामगमनवत्=याग मेरे व्यापार से साध्य है व्यापार साध्यत्व के विरोधी धर्म का अनधिकरण है ग्राम गमन के समान इस प्रकार के अनुमान से उक्तार्थ का लाभ हो जाता है। अतः लिङ् में शक्ति स्वीकार व्यर्थ है।

बलवदनिष्टाननुबन्धित्व को भी लिङर्थ मानना अनावश्यक है। प्रतिबन्धक रहने पर कारण कलाप कार्य का उत्पादक नहीं होता। मणि मन्त्र आदि दाह के प्रतिबन्धक होने से (उनके समवधान रहने पर) वह्नि दाह का जनक नहीं होती। मणिमन्त्र के अभाव में वह्नि से दाह होता है। अतः प्रतिबन्धक का अभाव कार्य मात्र के प्रति कारण है। अभाव निरुपाख्य होने से किसी कार्य के प्रति कारण नहीं होगा ऐसा सन्देह नहीं करना चाहिए। "भावो यथा तथाऽभावः कारणं कार्यवन्मतः" इस उदयनाचार्य के वचन से अभाव में भी कारणता सिद्ध होती है। प्रागभाव को कार्य के प्रति कारण नैयायिक मानते ही हैं। इस प्रकार द्वेषाभाव प्रवृत्ति का कारण होता है। जहाँ बलवान् अनिष्ट की सम्भावना है वहाँ उसके प्रति द्वेष का होना स्वाभाविक है। अतः द्वेषाभाव न होने के कारण प्रवृत्ति नहीं होगी फिर बलवदनिष्टाननुबन्धित्व को लिङर्थ मानना निष्प्रमाणक है।

परस्त्रीगमन नरक का साधन है इस प्रकार की आस्था वाले पुरुष को भी उत्कट प्रेम से द्वेषोत्पादक सामग्री की विकलता के कारण द्वेषाभाव हो जाता है। अतएव अगम्य स्त्री का गमन देखा जाता है।

परस्त्रीगमन नरक साधन है इस बलवदनिष्ट जनक ज्ञान के रहने पर भी तादृश गर्हित प्रवृत्ति देखने से वह ज्ञान प्रवृत्ति का प्रतिबन्धक नहीं हो सकता इसलिये भी उसको लिङर्थ नहीं मानते। इससे यह निष्कर्ष निकलता है कि लिङ् का इष्टसाधनत्व अर्थ है कृति साध्यत्व तथा बलवदनिष्टाननुबन्धित्व अर्थ नहीं है।

मीमांसक रीति से लिङर्थ का निरूपण संक्षेप से किया जा रहा है। विस्तृत विवेचन पूज्यपितृचरण से अनूदित गीता मधुसूदनी में देखिये।

प्रवर्तना प्रवृत्ति के कारण का पर्याय है। राजा या ब्राह्मण से प्रेरित होकर यह कार्य कर रहा हूँ ऐसा कार्यप्रवृत्त पुरुष कहा करता है। प्रवर्तना = प्रेरणा राजा ब्राह्मण आदि में पाई जाती है। इसके तीन भेद हैं। छोटे के प्रति बड़े की प्रेरणा बड़े की प्रति छोटे की प्रेरणा तथा समान के प्रति समान की प्रेरणा।

उदाहरण क्रमशः "जलमानयेः "छात्रमिममध्यापयेद् भवान्", "भवन्तस्तत्र गच्छेयुः" इत्यादि।

इसी प्रवर्तना को क्रमशः प्रेरणा या आज्ञा, याञ्चा, या अध्येषणा, एवं अनुमति या अनुज्ञा कहते हैं। यह आज्ञादिरूप प्रेरणा ज्ञान विशेष या इच्छाविशेष रूप होने से चेतन का ही धर्म है। वेद के अपौरुषेय होने के कारण इसका कोई कर्ता नहीं है। अतः चेतननिष्ठ आज्ञा प्रेरणा अनुमति याञ्चा आदि अपौरुषेय वेद में नहीं हो सकता। वेद से प्रेरित होकर यह कार्य करता हूँ ऐसा लोक में सुना जाता है। इसकी उपपत्ति के लिये शब्द का धर्म शाब्दीभावना विधिबोधक लिङ आदि शब्दों में मानी जाती है। इससे प्रेरित होकर जो पुरुष की प्रवृत्ति है उसको आर्थी भावना कहते हैं। इस प्रवृत्तिरूपी आर्थी भावना को सभी लकारों ( आख्यातों ) का अर्थ मानते हैं।

लिङ्त्वरूप से लिङ् शाब्दीभावना का वाचक है। "यजेत" "जुहुयात्" इत्यादि शब्द क्रमशः याग होम में प्रवृत्त कराते हैं। याग करो होमकरो इत्यादि रूपसे प्रवृत्त कराने के कारण इनमें प्रवृत्ति कराने के व्यापार की सिद्धि होती है। उसी व्यापार को शाब्दीभावना कहते हैं।

लिङादि विधि शब्दों का—श्रोत्रेन्द्रिय द्वारा प्रत्यक्ष होता है। अर्थात् वैदिक लिङादि शब्द स्वश्रावणप्रत्यक्ष को उत्पन्न करता है। इसी को प्रवर्तना = प्रेरणा कहते है। अतः विधि शब्दज्ञान ही शाब्दी भावना के रूप से कहा जाता है।

नैयायिकों ने इष्टसाधनता को लिङ् का अर्थ माना है। प्रेरणा इनके मत में लिङर्थ नहीं है। प्रवर्तना शब्द की निष्पत्ति प्रपूर्वकणिजन्तवृत् धातु से भाव में युच् प्रत्यय करने से तथा करण में युच् करने से होती है। करण प्रवर्तना का इष्ट साधनता अर्थ है।

शङ्का—राजा से प्रवर्तित होकर करता हूँ इत्यादि व्यवहार से प्रवर्तना प्रवर्तक निष्ठ प्रतीत होती है। इष्टसाधनता प्रवर्तक पुरुष में प्रतीत नहीं होती किन्तु प्रवर्त्य में प्रतीत होती है। अतः लिङादि शब्द से इष्ट साधनता वाच्य नहीं है।

समाधान—इष्ट साधनता भी स्वज्ञापनवत्त्व सम्बन्ध से प्रवर्तक में है प्रवर्तनीय में इष्ट साधनता ज्ञान कराही कर प्रवर्तक प्रवृत्त कराता है।

शङ्का—विध्यर्थ प्रेरणा मानने वालों के यहाँ—"पृच्छतु मां भवान्" इत्यादि स्थलों में णिजन्त "पृच्छयतु" इस प्रकार का प्रयोग होना चाहिये। क्योंकि प्रेरणा में लिङ्लोट् आदि के समान णिच् का भी उक्त अर्थ में विधान किया गया है।

समाधान—क्रियायुक्त व्यक्ति की प्रेरणा में णिच् प्रत्यय होता है। "पृच्छतु" इसमें अक्रिय पुरुष में प्रश्नकर्ता होने की प्रेरणा है। उसमें प्रश्नकर्तृत्व पूर्व से नहीं है। "हेतुमति च" इस सूत्र से हेतु व्यापार में णिच् का विधान है। कर्ता का प्रयोजक हेतु शब्द से यहाँ विवक्षित है। वाक्यपदीय में लिखा है—

द्रव्यमात्रस्य तु प्रैषे पृच्छादेर्लोङ् विधीयते।
सक्रियस्य प्रयोगस्तु यदा स विषयो णिचः॥ (साधन समुद्देश १२६)

विस्तृत काशिका में देखिये।

लुङर्थमाह—*भूतमात्र इति* ॥ भूतसामान्ये इत्यर्थः। भूते इत्यधिकृत्य "लुङ्" (पा०सू०३।२।११०) इति सूत्रात्। अत्र विद्यमानध्वंसप्रतियोगित्वं भूतत्वम्। तच्च क्रियायां निर्बाधमिति विद्यमानेऽपि घटे घटोऽभूदिति प्रयोगः। विद्यमानध्वंसप्रतियोगी घटाभिन्नाश्रयक उत्पत्त्याद्यनुकूलो व्यापार इति बोधः॥

अयमत्र संग्रहः—कालो द्विविधः। अद्यतनोऽनद्यतनश्च। आद्यस्त्रिविधः। भूतभविष्यद्वर्त्तमानभेदात्। अन्त्यो द्विविधः। भूतो भविष्यंश्च। तत्र वर्त्तमानत्वे लट्। भूतत्वमात्रे लुङ्। भविष्यत्तामात्रे लृट्, हेतुहेतुमद्भावाद्यधिकार्थविवक्षायामनयोर्लृङ्। अनद्यतने भूतत्वेन विवक्षिते लङ्। तत्रैव परोक्षत्वविवक्षायां लिट्। तादृशे भविष्यति लुट्, इति द्रष्टव्यम्॥

लृङर्थमाह—* सत्यामिति* ॥ क्रियाया अतिपत्तिरनिष्पत्तिस्तस्यां गम्यमानायाम्, भूते भाविनि हेतुहेतुमद्भावे सति लृङित्यर्थः। "लिङ्निमित्ते लृङ् क्रियातिपत्तौ" (पा०सू० ३।३।१३९) इति सूत्रात्। लिङो निमित्तं हेतुहेतुमद्भावादि। यथा—'सुवृष्टिश्चेदभविष्यत् सुभिक्षमभविष्यत्, 'वह्निश्चेत् प्राज्वलिष्यद् ओदनमपक्ष्यत्' इत्यादौ। अत्र वह्न्यभिन्नाऽऽश्रयकप्रज्वलनाऽनुकूलव्यापाराभावप्रयुक्त-ओदनाभिन्नाश्रयकविक्लित्त्यनुकूलव्यापाराभाव इति शाब्दबोधः एवं रीत्या द्रष्टव्यम्। अयञ्च अर्थनिर्देश उपलक्षणम्। अर्थान्तरेऽपि बहुशो विधानदर्शनात् प्रसिद्धत्वादेष्वेवार्थेषु शक्तिरन्यत्र लक्षणेति मतान्तररीत्या चोक्तम्। एतेषां क्रमनियामकश्चानुबन्धक्रम एव। अत एव 'पञ्चमोलकार' इत्यनेन मीमांसकैर्लेट् व्यवह्रियत इति दिक्॥ २३॥

इति श्रीकौण्डभट्टविरचिते वैयाकरणभूषणसारे
लकारविशेषार्थनिरूपणम्॥ २॥



मात्रपदं कृत्स्नार्थकमित्यभिप्रायवानाह—*भूतसामान्य इति*। तेन विशेषविवक्षायां लङादीनामवकाशं सूचयति—*भूते लुङिति*। भूत इत्यधिकृत्य "लुङ्" इति सूत्रादित्यर्थः। ननु वर्त्तमानध्वंसप्रतियोग्युत्पत्तिकत्वं भूतत्वम्। अत एव नाशस्य विद्यमानतादशायामपि, विनष्टो घट इति प्रयोगः। तदुत्पत्तेर्वर्त्तमाननाशप्रतियोगित्वात्। तथाच यत्रोत्पत्तिरेव धात्वर्थस्तत्रोत्पत्तेर्द्वंधाभानप्रसङ्गोऽत आह—*अत्रेति*। भूत इति सूत्रे इत्यर्थः॥ विद्यमान इत्यादि नचोक्तदोषः

अस्मन्मते नश्यत्यादेर्नाशाऽनुकूलव्यापारार्थकतया कालाऽन्वयस्यापि व्यापार एव समर्थितत्वेन च तदप्रसक्तेरुत्पत्त्यघटितत्वेन द्वैधाभानाऽसम्भवाच्च । *क्रियायामिति*। फलानुकूलायां तस्यामित्यर्थः । विद्यमानेऽपीत्यपिना समानप्रत्ययोपात्तत्वप्रत्यासत्त्याऽऽख्यातार्थकारके कालान्वयोपगमे उक्तप्रयोगानुपपत्तिः सूच्यते ॥

नैयायिकास्तु—उत्पत्तिघटितत्वेन लाघवादुक्तार्थं एव भूतपदस्य शक्तिः । परन्तु नश्यत्यादौ नाशातिरिक्तस्य व्यापारान्तरस्याननुभवात्तत्रोत्पत्तिघटिते प्रत्ययस्य लक्षणावश्यकीत्याहुः ॥

*भूते भाविनीति* । कार्यकारणभावापन्नप्रकृत्यर्थयोर्भूतत्वे भविष्यत्त्वे वा गम्यमान इत्यर्थः । *हेतुहेतुमद्भावादीति* । आदिना शक्त्यादिपरिग्रहः । तत्र भविष्यदर्थे उदाहरणमाह—*सुवृष्टिश्चेदिति* । अत्रैकस्यैव धात्वर्थस्य कर्तृरूपोपाधिभेदेन कार्य्यकारणभावाऽवगतिरुत्तरत्र तु स्वरूपतो भिन्नयोस्तयोरिति विशेषः । *व्यापाराभाव इति* । धात्वर्थयोर्भविष्यत्त्वप्रदर्शनार्थपरमभावविशेष्यकबोधोत्कीर्तनम् । वह्निभिन्नाश्रयकभाविप्रज्वलनजन्यौदनाऽऽश्रयकविक्लित्त्यनुकूलव्यापार इति शाब्दबोधस्तूचितः । *प्रयोज्य इति* । व्यापाराभावान्वयिप्रयोज्यत्वोत्कीर्तनं च वह्निप्रज्वलनौदनपाकयोः कार्य्यकारणभावप्रदर्शनाय । यदभावो यदभावप्रयोज्यः; स तज्जन्य इति नियमात् । तथाच प्रकृते ओदनपाकाभावे वह्निप्रज्वलनाभावप्रयोज्यत्वेऽवगते तत्प्रतियोगिनोस्तयोः कार्य्यकारणभावः सुबोधो भवतीति भावः । एवं भूते—

परस्परेण स्पृहणीयशोभं न चेदिदं द्वन्द्वमयोजयिष्यत् । (रघु० स० ७ सं० १४)
अस्मिन् द्वये रूपविधानयत्नः पत्युः प्रजानां विफलोऽभविष्यत् ॥

यदि देवदत्तो नाऽभविष्यदित्यादि बोध्यमित्याह—*एवं रीत्येति* । *अयञ्चेति* । "वर्त्तमाने लट्" इत्यादिनोपात्त इत्यर्थः । *अर्थान्तरेऽपि* । अर्हप्रशंसाप्राप्तकालाद्यर्थेऽपीत्यर्थः । एषु—वर्त्तमानत्वादिषु, शक्तिः—सङ्केतरूपा पदार्थान्तररूपा वा, अन्यत्र-अर्हाद्यर्थे । *मतान्तररीत्या चेति* । बोधकत्वमेव शक्तिरिति वदतामस्माकं तु केषाञ्चित् प्रयोगोपाधित्वमितरेषां शक्यत्वमेवेति भावः । *अनुबन्धक्रम इति* । अकाराद्यनुबन्धक्रम इत्यर्थः । ननु यत्र प्रत्ययस्य तिबादेरदर्शनं तत्र द्योतकत्वं वाचकत्वं वेति पक्षद्वयेऽप्यनुपपत्तिः । वाचकस्य द्योतकस्य वाऽसत्त्वेन वर्तमानत्वादिबोधस्योपपादयितुमशक्यत्वादत आह-*दिगिति* । तदर्थस्तु पदं वाचकमिति पक्षे प्रकृतिप्रत्ययविभागकल्पनया वाचकत्वं तत्रारोप्य पदशक्तिरेव व्युत्पाद्यते । यत्र प्रत्ययस्य प्रकृतेर्वा अश्रूयमाणत्वं तत्र श्रूयमाणस्यैव तदर्थकत्वं कल्प्यते । तदाहुः—"शिष्यमाणं लुप्यमानाऽर्थाभिधायि" इति । अत एव 'व्यतिसे, इः, इयान्' इत्यादौ प्रत्ययमात्रात्प्रकृत्यर्थविषयको बोध इत्यादिः ॥ २३ ॥

॥ इति भूषणासारदर्प्पणे लडाद्यर्थनिर्णयः ॥ २ ॥

अर्थ—लुङर्थ कहते हैं। लुङ् का भूत सामान्य अर्थ है। इसमें भूताधिकार का "लुङ्" सूत्र प्रमाण है। वर्तमान जो ध्वंस उसका प्रतियोगित्व ही क्रिया में [1]भूतत्व है। अतएव घट की उत्पत्ति के बाद घट के वर्तमान रहने पर भी घट हो गया इस प्रकार का प्रयोग उपपन्न होता है। वर्तमान जो ध्वंस उसका प्रतियोगी घट रूप आश्रय में रहने वाला उत्पत्त्यनुकूल व्यापार ऐसा बोध "घटोऽभूत्" इससे होता है।

सारांश—अद्यतन अनद्यतन के भेद से काल दो प्रकार का है। भूत भविष्यत् और वर्तमान के भेद से अद्यतन तीन प्रकार का है। अनद्यतन, भूत और भविष्यत् के भेद से दो प्रकार का है। वर्तमान काल में लट्, भूत सामान्य में लुङ्, हेतुहेतुमद्भाव के साथ भूत या भविष्यत्, काल की विवक्षा में लृङ्, अनद्यतन भूतकाल में परोक्षत्व विवक्षा में लिट् अनद्यतन भविष्यत् काल की विवक्षा में लुट् होता है।

लृङ् का अर्थ कहते हैं—सत्यामिति। क्रिया की अतिपत्ति अर्थात् अनिष्पत्ति गम्यमान होने पर हेतुहेतुमद्भाव की विवक्षा करने से भूत और भावी दोनों अर्थों में लृङ् होता है। यह "लिङ् निमित्ते लृङ् क्रियातिपत्तौ" इस सूत्र से प्रमाणित होता है। (यह सूत्र भूते च ३।३।१४० इत्यादि सूत्रों का उपलक्षण है) लृङ् का निमित्त है हेतुहेतुमद्भावादि। इसका उदाहरण सुवृष्टिश्चेद् इत्यादि। समयानुकूल वृष्टि हेतु है सुभिक्ष हेतुमान् (कार्य) है। आगे के उदाहरण में धातु भेद मात्र से भिन्नता है। अग्नि यदि जलेगी ओदन पकेगा।

वह्निरूप आश्रयनिष्ठ प्रज्वलनानुकूल व्यापाराभावसे ओदनरूप आश्रयनिष्ठ विक्लिति का जनक व्यापाराभाव इस प्रकार का बोध होता है।

लकारों का अर्थ निर्देश उपलक्षण हैं। अर्ह, प्रशंसा, प्राप्त काल आदि भी लकारों के अर्थ हैं। प्रसिद्ध होने से इन अर्थों में शक्ति है और अन्य अर्थों में लक्षणा है ऐसा मतान्तर की दृष्टि से कहा गया है। लकारों के क्रम का नियामक अकारादि अनुबन्धों का क्रम है। अर्थात् अ के बाद इ इसके बाद उ उसके बाद ए तब ओ इसी अकारादि रूप अनुबन्धों का क्रम लट् आदि के क्रम का नियामक है। जैसे लट् लिट् लुट् इत्यादि। यह क्रम मान्य है। अत एव पाचवाँ लकार (लेट्) वेद में ही प्रयुक्त होता है लोक में नहीं इसमें पाचवाँ लकार से लेट् ही का व्यवहार मीमांसक करते हैं॥ २३॥

हिन्दी भाष्य—भूतत्व सामान्य की विवक्षा में लुङ् लकार होता है। वास्तविक काल विभिन्न लकारों की उत्पत्ति में कारण नहीं है किन्तु उस रूप से उसकी विवक्षा मात्र से विभिन्न लकारों का प्रयोग होता है। "अध्यास्त सर्वर्तुसुखामयोध्याम्" यहाँ परोक्ष भूत होने पर भी तथा विवक्षा न करने से अनद्यतन भूत में लङ् का प्रयोग साधु माना गया। सभी लकारों की यही गति है।

"लिङ् निमित्ते लृङ् क्रियातिपत्तौ" इस सूत्र का अर्थ इस प्रकार है—लिङ् का निमित्त

---

१. जिसका अभाव होता है वह प्रतियोगी कहा जाता है। घट का अभाव इसमें घट प्रतियोगी हैं। क्यों कि उसका अभाव विवक्षित है। जिस व्यापार का ध्वंस हो गया है उसका प्रतियोगी वहीं व्यापार हैं व्यापार (क्रिया) ध्वंस वर्तमान है। अतः वर्तमान जो ध्वंस उसका प्रतियोगी व्यापार (क्रिया) है उसमें प्रतियोगित्व जो प्रतियोगी में है वहीं भूतत्व है।

हेतुहेतुमद्भाव आदि है उसके रहने पर क्रिया की अनिष्पत्ति गम्यमान हो तो भूत और भविष्यत् काल में लृङ् होता है। सुवृष्टि के होने के साथ सुभिक्ष होने का कार्य कारण-भाव है। इस प्रथम उदाहरण में एक ही भवन क्रिया को कर्ता के भेद से भिन्न मानकर कार्यकारणभाव माना गया है। दूसरे उदाहरण में स्वरूपतः क्रियाओं का भेद है। एक ज्वल्धातु दूसरी पच्धातु है।

हेतु हेतुमद्भाव तथा क्रिया की अनिष्पत्ति में लृङ् था धातु की शक्ति नहीं है क्योंकि शाब्दबोध में इनका भान नहीं होता।

शङ्का—अस्ति वर्धते अपक्षीयते आदि निर्दिष्ट क्रम से नाशरूप भाव विकार को प्राप्त होता है। उसको भूत और सामग्री समवधान में जिसकी उत्पत्ति सम्भावना हो उसको भविष्यत् कहते हैं। सुवृष्टि का होना तथा सुभिक्ष का होना दोनों की साधन के वैकल्प से उत्पत्ति अनियत है। लकड़ी जली होती तो ओदन पका होता इस प्रकार भूत का भी उदाहरण इसको मान सकते है। यहाँ भी सत्त्वादि क्रम से उत्पन्न होकर नष्ट न होने से भूतत्व की आशा नहीं है फिर लृङ् का उदाहरण ये कैसे होंगे।

समाधान—"अभूत्" इसमें भूतत्व अभविष्यत् इस भविष्यत्त्व का आरोप करने से उक्त प्रयोगों की सिद्धि होती है। सुभिक्ष भवन में सुवृष्टि के हेतुत्व की ओदन पाक में अग्नि प्रज्वलन के हेतुत्व की सम्भावना करने वाले की सुवृष्टिश्चेत् तथा अग्निः प्राज्वलिष्यत् इत्यादि उक्ति हैं। भूतत्व भविष्यत्त्वादि के न रहने पर भी तत्प्रकारक बोध आहार्यरूप होता है। बाध रहने पर भी इच्छाजन्य ज्ञान को आहार्य कहते हैं।

वह्निश्चेत् प्राज्वलिष्यत् इत्यादि का वाक्यार्थ बोध वह्निरूपाश्रयनिष्ठ भावि प्रज्वलन-जन्य ओदनरूपाश्रय निष्ठ विक्लित्त्यनुकूल व्यापार होना चाहिये। मूल में अभाव घटित वाक्यार्थ बोध के लिये अभाव को भी धात्वर्थ या लृङ् का अर्थ मानने में गौरव दोष होगा॥ २३॥

इति लकारार्थ निर्णयभाष्यं परिपूर्णम्।



## अथ सुबर्थनिर्णयः

सुबर्थमाह—

आश्रयोऽवधिरुद्देश्यः सम्बन्धः शक्तिरेव वा।
यथायथं विभक्त्यर्थाः, सुपां कर्मेति भाष्यतः॥ २४॥

द्वितीयातृतीयासप्तमीनामाश्रयोऽर्थः। तथाहि—"कर्मणि द्वितीया" (पा० सू० २।३।२) तच्च कर्त्तुरीप्सिततमम्' क्रियाजन्यफलाश्रय इत्यर्थः। क्रियाजन्यफलवत्त्वेन कर्मण एव कर्त्तुरीप्सिततमत्वात्।

"तथा युक्तञ्चानीप्सितम्" (पा० सू० १।४।५०) इत्यादिसंग्रहाच्चैवमेव युक्तम्। ईप्सितानीप्सितत्वयोः शाब्दबोधे मानाभावेन संज्ञायामेव तदुपयोगो, न तु वाच्यकोटौ तत्प्रवेशः। तथाच क्रियायाः फलस्य च धातुनैव लाभादनन्यलभ्य आश्रय एवार्थः। तत्त्वञ्चाखण्डशक्तिरूपमवच्छेदकम्। 'ओदनं पचति' इत्यत्र विक्लित्याश्रयत्वात् कर्म्मता। घटं करोतीत्यत्र उत्पत्त्याश्रयत्वाद् उत्पत्तेर्धात्वर्थत्वात्। जानातीत्यत्र आवरणभङ्गरूपज्ञाधात्वर्थफलाऽऽश्रयत्वात्। अतीताऽनागतादिपरोक्षस्थलेऽपि ज्ञानजन्यस्य तस्यावश्यकत्वात्। अन्यथा यथापूर्वं न जानामीत्यापत्तेः। अतीतादेराश्रयता च विषयतया ज्ञानाश्रयताया नैयायिकानामिव सत्कार्य्यवादसिद्धान्ताद्वोपपद्यत इति। उक्तञ्च—

तिरोभावाभ्युपगमे भावानां सैव नास्तिता।
लब्धक्रमे तिरोभावे नश्यतीति प्रतीयते॥ इति। वा० जाति० ३

अवसरसङ्गत्या सुबन्तार्थे निरूपणीये प्रातिपदिकार्थविशेष्यत्वात् क्रियाकाङ्क्षितत्वाच्चादौ विभक्त्यर्थनिरूपणमित्यभिप्रायवानाह—*सुबर्थमिति*॥ *आश्रयोऽर्थ इति*॥ किञ्चिद्धर्मानवच्छिन्नाश्रयतावानित्यर्थः। तेन चतुर्थीपञ्चम्योरर्थयोरुद्देश्याऽवध्योराश्रयात्मकत्वेऽपि न क्षतिः। तत्र द्वितीयाया आश्रयार्थकत्वे मानमाह—*तथाहीत्यादिना*।

ननु यथाश्रुते "कर्त्तुरीप्सिततमम्" इत्यनेन कर्तृसम्बन्धिप्राप्तीच्छाविशेष्यस्यैव कर्मत्वं प्रतिपाद्यते, न तु क्रियाजन्यफलाश्रयस्येत्यत आह—*क्रियाजन्यफलाश्रयत्वेनेति*॥ अयं भावः—सूत्रे ईप्सिततमशब्द आप्नोतेरिच्छासन्नन्तात् कर्मक्तान्तात् प्रकृत्यर्थाऽतिशयद्योतके तमपि निष्पन्नः। तद्योगाच्च कर्तृशब्दात्, "क्तस्य च वर्त्तमाने" (पा० सू० २।३।६७) इति कर्त्तरि षष्ठी। तथा कर्त्रोपस्थितत्वात् स्वीयव्यापारेण व्याप्तुमिष्यमाणतमं व्यापारजन्यफलसम्बन्धित्वप्रकारककर्तृनिष्ठोत्कटे-

च्छाविषयः कर्मेति पर्य्यवसानात् क्रियाजन्यफलाश्रयस्य कर्मतालाभ इति। न चेच्छाकर्मीभूतार्थधातोरेव "धातोः कर्मण" इति सूत्रेणेच्छायां सनो विधानाद् व्याप्तीच्छार्थकसन्नन्तधातुना व्याप्तिरूपकर्मोपसंग्रहाज्जीवत्यादिवदकर्मकतया ततः कथं कर्मक्तोपपत्तिरिति वाच्यम्। धात्वर्थोपसंगृहीतकर्मत्वमित्यत्र कर्मणा तद्धात्वर्थीयकर्मान्तरानाकाङ्क्षात्वविशेषेण सन्प्रकृतिधात्वर्थकर्मणः कर्मान्तरसाकाङ्क्षत्वेनोक्ताऽकर्मकत्वस्य सन्नन्ते असम्भवात्। एवं सन्नन्तस्य वृत्तितया तद्घटककर्माऽऽदाय कर्म्मसंज्ञाकान्वय्यर्थकत्वरूपसकर्मकत्वाभावेऽपि तद्बहिर्भूतकर्मान्वयित्वमादायैव सकर्मकत्वं बोध्यम्। एवं फलतावच्छेदकसम्बन्धेन तद्धात्वर्थफलव्यधिकरणव्यापारवाचकत्वरूपं तदपीतिनेप्सत्यादितः कर्मप्रत्ययानुपपत्तिः। जिघ्रतेरपि स्वार्थाऽन्तर्भूतकर्मणस्तदीयपुष्पादिकर्मान्तरसाकाङ्क्षत्वमस्त्येव। गन्धनिरूपितलौकिकविषयतायां पुष्पादेराधेयत्वीयसांसर्गिकविषयता निरूपितप्रकारतानिरूपकत्वेनाऽन्वयेनाऽकर्मत्वात्।

'कृष्णाय राध्यति' इत्यस्य कृष्णस्य शुभाऽशुभं पर्यालोचयतीत्यर्थान्न धात्वर्थान्तर्भूतशुभकर्मणः कर्मान्तरसाकाङ्क्षत्वमिति न तत्रातिप्रसङ्गः। बुभूषत्यादीनां तु भवनाऽऽदिकर्मणः कर्मान्तरानाकाङ्क्षस्य धात्वर्थतावच्छेदककोटिप्रविष्टत्वादकर्मकत्वं व्यक्तमेव। एवं स्वयंत इति भाष्यप्रयोगस्थस्वरवद्रूपविकृतिकर्मणः सन्निहितशब्दरूपप्रकृतिकर्मसाकाङ्क्षातया, करोत्यर्थणिजन्तात् कर्मप्रत्ययोपपत्तिरिति बोध्यम्॥ केचित्तु—सनाद्यन्तस्य धात्वर्थोपसङ्गृहीतत्वेनाऽकर्मकत्वेऽपि तत्प्रकृतेः सकर्मकत्वामादाय तस्मात् कर्मप्रत्ययोपपत्तिमाहुः।

ननु तथापीष्टाऽघटितस्य भवदुक्तस्य कथं कर्मलक्षणत्वमत आह—*तथा युक्तमिति*। कर्मव्यवहारस्य द्वेष्योदासीनयोरप्यविशिष्टत्वात्तत्साधारणस्यैव लक्षणत्वमुचितम्। 'इच्छाघटितस्यैव तस्य लक्षणत्वे तु द्वेष्यादिकर्मण्यव्याप्तिः स्यात्। तथाच तत्साधारण्यायेदमेवाश्रयितुं युक्तमिति भावः। *एवमेवेति*। इत्थमेवेत्यर्थः। ननु द्वितीयाया उक्तकर्मार्थकत्वे, हरिं भजतीत्यादौ हर्य्यादेरीप्सितत्वादिना भानाऽनुपपत्तिरत आह—*ईप्सितानीप्सितत्वयोरिति*। *भानाऽभावेनेति*। सार्वजनीनतयानुभवादितिभावः। ननु तर्हि क्रियाजन्यफलाश्रयः कर्मेत्येव सूत्र्यतामत आह—*संज्ञायामेवेति*।

अयमाशयः—क्रियाजन्यफलाश्रयः कर्मेति सूत्रप्रणयने यद्यपीप्सितानीप्सितयोरविशेषेण संज्ञा सिद्ध्यति; तथापि 'अग्नेर्माणवकं वारयति' इत्यादौ क्रियाजन्यफलभागित्वेनेष्टस्य माणवकस्याऽपि विशेषविहितेन "वारणार्थानाम्" (पा० सू० १।४।२७) इत्यनेनापादानसंज्ञा प्रसज्ज्येत। सूत्रं तु 'हरिं भजति' इत्यादौ चरितार्थम्। तत्परिहारायेप्सिततमत्वस्य संज्ञिकोटौ निवेशे अप्राप्तद्वेष्योदासीनसंज्ञाविधानार्थमुत्तरसूत्रमिति तथा नोक्तमिति। ननु तथापि पञ्चम्या इव न द्वितीयाया अप्याश्रयमात्रार्थकता, किन्तु विशिष्टस्यैवेत्यत आह—*तथाचेति*। आश्रय एवेत्येवकारेण विशिष्टार्थस्य शक्यत्वव्यवच्छेदः। नन्वाश्रयत्वस्य तत्तत्स्वरूपात्मकस्य तत्तदाश्रय-

भिन्नत्वात् कथं तस्य शक्यतावच्छेदकत्वम्। अनुगतधर्मस्यैव तत्त्वादत आह—*तत्त्वञ्चेति*। आश्रयत्वं चेत्यर्थः। *अखण्डशक्तिरूपमिति*। शक्तिर्धर्मः। इतरपदार्थाघटितमूर्त्तिकधर्मरूपमिति यावत्। आश्रय इत्यनुगतव्यवहारादश्रयपद शक्यतावच्छेदकत्वाच्च तत्सिद्धिर्द्रव्यत्वादिवदिति भावः॥

नैयायिकास्तु—आश्रताया नियतान्यनिरूपितस्वरूपाया अनुगमकत्वाऽसम्भवः। शक्यतावच्छेकत्वस्यापि विभुत्वान्यतरत्वादौ व्यभिचारेण नाऽखण्डत्वसाधकत्वमिति न द्वितीयाया आश्रयोऽर्थः। तस्य प्रकृत्यैव लाभात्; प्रकृत्यर्थभिन्नत्वेन तत आश्रयस्याऽननुभवाच्च। किन्तु फलान्वयिनी कृतिरेव तदर्थः। "कर्मणि द्वितीया" इत्यस्य फलनिष्ठाऽऽधेयत्वान्वये प्रकृतितात्पर्य्ये तदुत्तरं द्वितीयेत्यर्थात् न तद्विरोधोऽपि। अत्रादितात्पर्यग्राहकत्वेन परम्परया शक्तिग्राहकत्वाच्च न तद्वैय्यर्थ्यम्। आश्रयत्वं तु न तच्छक्यम्। तस्य निरूपकतासम्बन्धेनैव फलाऽन्वयित्वस्याभ्युपगन्तव्यतया निरूपकत्वस्य च वृत्त्यनियामकतयाऽभावप्रतियोगिताऽनवच्छेदकत्वेन 'विहगो भूमिं गच्छति, न महीरुहम्' इत्यादौ धात्वर्थफले संयोगे महीरुहनिष्ठाश्रयतायास्तेन सम्बन्धेनाभावस्याऽप्रसिद्धतया तत्राबोधत्वाऽसम्भवात्। न च सूत्रस्वरसभङ्गः। शक्तिः कारकमितिपक्षे तदयोगात्। आधेयताया अपि निरूपकतया कारकधर्मत्वादित्याहुः॥

*विक्लित्त्याश्रयत्वात्कर्मतेति*। कर्मसंज्ञेत्यर्थः। एतेन कर्त्तृगतप्रकृतधात्वर्थव्यापारप्रयोज्यतद्व्यधिकरणप्रकृतधात्वर्थफलाश्रयत्वं कर्मत्वमुक्तम्भवति। यद् वक्ष्यति 'उक्तप्रायत्वात्' इति॥ 'अग्नेर्माणवकं वारयति' इत्यादावग्न्यादावतिव्याप्तिनिरासाय व्यापारे कर्त्तृगतत्वमुपात्तम्। वारयतेश्च संयोगानुकूलव्यापाराभावानुकूलव्यापारोऽर्थः। 'चैत्रो ग्रामं गच्छति' इत्यादौ चैत्रादेर्वारणाय व्यधिकरणेति। वैयधिकरण्यं च—तदनधिकरणवृत्तित्वं, न तु तदधिकरणावृत्तित्वम्। तस्य संयोगे असत्त्वेन ग्रामादावव्याप्तेः। तादृशवैयधिकरण्यविशिष्टाऽधिरणतायाश्चैत्रादावसत्त्वान्नातिप्रसङ्गसम्भावनापि। 'माषेष्वश्वं बध्नाति' इत्यादौ बन्धनप्रयोज्यभक्षणाश्रयमाषाणां तत्त्ववारणाय प्रकृतधात्वर्थत्वं फलविशेषणम्। प्रकृतत्वं च तत्र तत्र विशिष्योपादेयम्। 'पयसौदनं भुङ्क्ते' इत्यादौ तु कर्मत्वाविवक्षणान्न द्वितीया। कृतभोजनस्य पयो लोभेन प्रवृत्तावीप्सिततमत्वस्यापि पयसि सम्भवादिति।

ननु परैः कृञो यत्नमात्राऽर्थकत्वाभ्युपगमात् कथमुत्पत्तेः प्रकृतधात्वर्थत्वमत आह—*उत्पत्तेरिति*। तथा—कृञ उत्पत्तिरूपफलार्थकत्वस्य प्रागुपपादनान्नार्थासङ्गतिरिति भावः। धात्वर्थत्वादित्युक्त्या कृञः केवलयत्नार्थकत्वे घटादीनां कर्मत्वानुपपत्तिरिति दोषत्वेन ध्वन्यते। *आवरणभङ्गेति*। प्राचीनमतानुसारेणेदम्। निष्कृष्टमते तु ज्ञानरूपफलस्यविषयतया घटादौ सत्त्वात्कर्मतेति बोध्यम्। न चाकर्मकतापत्तिः। फलतावच्छेदकसम्बन्धेन सामानाधिकरण्याभावात्। नैयायिकमते त्वेतादृशस्थले यथा घटादीनां कर्मत्वं तथोपपादितं धात्वर्थनिरूपणावसरे।

ननु विद्यमानघटे ज्ञानजन्यावरणभङ्गस्य सम्भवेऽपि भाविविनष्टघटे निराश्रयस्य तस्यासंभवेन तस्य कर्मत्वानुपपत्तिरत आह—*अतीतानागतेति*। तत्राश्रयताङ्गीकारे युक्तिमाह—*अन्यथेति*। विनष्टे तत्रावरणभङ्गास्वीकारे इत्यर्थः ॥ यथापूर्वमिति जानातिक्रियाविशेषणम्। पदार्थानतिवृत्तावव्ययीभावः। पूर्वमनतिक्रम्येत्यर्थः। पूर्वज्ञानानतिक्रमो यस्मिंस्तदिति यावत्। घटस्य विद्यमानतादशायां तात्कालिकज्ञानस्य तद्घटे आवरणभङ्गजनकतयाऽतीतदशायामाधुनिकज्ञानस्य तदजनकत्वेन पूर्वातिक्रमस्य तत्त्वात् पूर्वानतिक्रान्तज्ञानाभावस्य विषयस्याऽबाधात्तादृशप्रयोगस्य प्रामाण्यापत्तेरित्यर्थः। अतीतघटे आधुनिकज्ञानेनावरणभङ्गोत्पादाभ्युपगमे तु तेन पूर्वज्ञानानतिक्रमात् तदभावस्य बाधाद्भवति तस्याप्रामाण्यमिति भावः।

ननु विनष्टे घटे वास्तवतदाश्रयत्वं कथमत आह—*अतीतादेरेति*। आदिना भाविपरिग्रहः। *नैयायिकानामिवेति*। यथाऽनुभवानुरोधेन तस्मिन् विषयतया ज्ञानाश्रयताङ्गीकारस्तेषां तथास्माकमपीति भावः। नन्वतीतो घटो ज्ञानविषय इति प्रतीतिरस्तु नाम; तादृशघटस्य विषतया ज्ञानाश्रयता; आवरणभङ्गाश्रयतायां तु न तथा साधकोपलब्धिरत आह—*सत्कार्य्येति*। तमेव दर्शयति—*उक्तञ्चेति*। "सदेव सौम्येदमग्र आसीत्" इति श्रुतेः कार्य्यजातं सूक्ष्मरूपेण प्रागवस्थितमेव। परमते जनकत्वेनाभिमतसामग्रीसमवधानात्तु तदभिव्यक्तीभवति। कारणे सूक्ष्मरूपेणावस्थानमेव तत्प्रागभावः। तस्यामेवावस्थायां स भविष्यतीति व्यवह्रियते। ततः प्रच्युतमभिव्यक्तिक्षणं धर्ममप्राप्तं जायत इति प्राप्ताभिव्यक्तिस्त्वस्तीति।

ननु सर्वदैव सति तस्मिन् कथं नाऽस्ति नश्यतीति व्यवहारोऽत आह—*तिरोभावाभ्युपगम इति*। तिरोभावाभिव्यञ्जकसामग्र्या तिरोभावेऽभिव्यञ्जिते सति, नाऽस्ति नष्ट इति व्यवहारः। लब्धक्रमायां तु तस्यां नश्यतीति सत्कार्यवादसिद्धान्तः; प्रकृते घटस्य तिरोधानेऽपि सूक्ष्मरूपेण सत्त्वात्तत्रावरणभङ्गरूपफलाश्रयत्वं सुलभमिति भावः।

अर्थ—"सुपां कर्मादयोऽप्यर्थाः" इस महाभाष्य के वचन के अनुसार आश्रय (द्वितीया, तृतीया और सप्तमी का) अवधि (पञ्चमी का), उद्देश्य (चतुर्थी का) सम्बन्ध (षष्ठी का) अथवा शक्ति ही विभक्तियों के यथायोग्य अर्थ हैं।

द्वितीया तृतीया एवं सप्तमी विभक्ति का आश्रय अर्थ है। कर्म में द्वितीया विभक्ति का "कर्मणि द्वितीया" इस सूत्र से विधान होता है। कर्ता के व्यापार से उत्पन्न फल के आश्रय रूप से विवक्षित को कर्म कहते हैं। अर्थात् क्रियाजन्यफल का आश्रय कर्म है यह भाव है।

क्रियाजन्यफलाश्रयरूप कर्म ही कर्ता की इच्छा का उद्देश्य है। "कर्तुरीप्सिततमं कर्म" इस सूत्र के अर्थ में इच्छोद्देश्यत्व का प्रवेश है। कर्म के लक्षण में उसका प्रवेश नहीं होने से क्रियाजन्यफलाश्रयमात्र कर्म है। ऐसा करने से ही "तथायुक्तं चानीप्सितम्" इस सूत्र से प्रतिपादित कर्मत्व का भी संग्रह हो जाता है। अतः यही युक्त है। अन्यथा अनीप्सित कर्म का संग्रह ईप्सितघटित कर्मलक्षण से नहीं

होगा। इच्छोद्देश्यत्व और अनिच्छोद्देश्यत्व का शाब्दबोध में भान नहीं होने से कर्मसंज्ञा में ही इसका उपयोग है। अतः द्वितीया विभक्ति के वाच्यकोटि में भी इसका निवेश नहीं है। ऐसी दशा में फल और क्रिया (व्यापार) का धातु से ही लाभ हो जाने से अवशिष्ट आश्रय द्वितीया का अर्थ है। क्योंकि शब्द का अनन्य लभ्य ही अर्थ माना जाता है।

अखण्ड उपाधिरूप आश्रयत्व शक्तता का अवच्छेदक है। इतर पदार्थ से घटित स्वरूपवाले धर्म से भिन्न को अखण्ड कहते हैं। "ओदनं पचति" = ओदन को पकाते है यहाँ ओदन विक्लित्ति = अवयवों का शैथिल्य तद्रूप फल का आश्रय होने से एवं "घटं करोति" = घट को उत्पन्न करते हैं यहाँ उत्पत्तिरूप फलाश्रय घट को कर्म संज्ञा होती है। कृधातु का उत्पत्ति के अनुकूल व्यापार अर्थ होने से उत्पत्ति धात्वर्थ है।

जानाति में ज्ञाधातु का आवरणभङ्गानुकूलव्यापार अर्थ होने से आवरणभङ्गरूपफल के आश्रय घटादि को कर्मसंज्ञा सिद्ध होती है।

अतीत और अनागत परोक्ष पदार्थ नहीं रहने के कारण ज्ञानजन्य आवरण भङ्ग रूप फल के आश्रय नहीं हो सकते। विद्यमान पदार्थ किसी का आश्रय होता है अविद्यमान नहीं। ऐसी दशा में "अतीतं घटं भविष्यन्तं वा घटं स्मरामि" इत्यादि व्यवहार के विलोप की आशङ्का नहीं करनी चाहिये। अतीत अनागत घटादि में भी आवरणभङ्गरूप फल मानते हैं। यदि वहाँ आवरणभङ्ग नहीं माना जायगा तो यथापूर्व नहीं जानता हूँ ऐसा व्यवहार होने लगेगा। पूर्वज्ञान में आवरणभङ्गजनकता है अतीत घटादिविषयक ज्ञान में तज्जनकता नहीं है इस प्रकार पूर्वज्ञान का अतिक्रमण होने से अनतिक्रमणबोधक "यथापूर्वं जानामि" इस प्रकार का प्रयोग नहीं होगा।

नैयायिक मत में भी ज्ञान की आश्रयता विषयता सम्बन्ध से अतीत अनागत घटादिपदार्थों में मानी जाती है उसी प्रकार यहाँ भी मानी जाती है।

अथवा कार्य सूक्ष्मरूप से कारण में रहता है। कारण के व्यापार से अव्यक्त कार्य व्यक्त (स्फुट) प्रतीत होने लगता है। कार्य विनष्ट होने पर भी कारण में अव्यक्तरूप से रहता है इसको सत्कार्यवाद कहते हैं। इस पक्ष में सूक्ष्मरूपेण घट अपने अवयव में रहता है। अतः वही विषयतासम्बन्ध से ज्ञान का आश्रय होता है। इस सत्कार्यवाद को हरिकारिका से प्रमाणित करते हैं—

"तिरोभावाभ्युपगमे" इत्यादि—भावपदार्थों का तिरोभाव = सूक्ष्मरूप से अवस्थान होना ही उनकी नास्तिता अर्थात् नष्टता नाश है। क्रमिक तिरोभाव की दशा में "नश्यति" इस प्रकार की प्रतीति होती है।

हिन्दी भाष्यः—वाक्यघटक तिङन्त (धातु और तिङ्) के निरूपण के बाद अवसर-प्राप्त तद्घटक सुबन्त का निरूपण अपेक्षित है। सुबन्त में प्रकृति और प्रत्ययरूप दो अंश हैं। प्रत्यय रूप अंश प्रकृति की अपेक्षा प्रधान और क्रियासाकाङ्क्ष होने से प्रकृति की अपेक्षा प्रत्यय का अर्थ प्रथमतः विवेचनीय रूप से प्रस्तुत किया जाता है "आश्रयोऽवधिः" इत्यादि से।

द्वितीया तृतीया एवं सप्तमी का आश्रय अर्थात् आश्रयतावान् अर्थ है। आश्रयता किसी भी धर्म से अनवच्छिन्न विवक्षित है। भूतलादि भी आश्रय होने से वहाँ भी आश्रयत्व के रहने के कारण द्वितीया वाच्यतावच्छेदक वह नहीं हो सकता। अन्यून

और अनतिरिक्त वृत्ति धर्म ही अवच्छेदक होता है। आश्रयत्व भूतलादि से अतिरिक्त में भी है। अतः द्वितीया वाच्यता का अवच्छेदक आश्रयत्व नहीं है। चतुर्थी और पञ्चमी विभक्ति का उद्देश्य अवधि रूप अर्थ आश्रयात्मक होने पर भी द्वितीया-वाच्य नहीं होता। अतः किञ्चिद्धर्मानवच्छिन्न आश्रयताविशिष्ट आश्रय को द्वितीया का अर्थ मानते हैं। इस प्रकार यहाँ की आश्रयता अखण्डोपाधिरूप होने से निरूपकादि के भेद से भिन्न नहीं होती।

द्वितीया विभक्ति का आश्रयरूप अर्थ मानने में सूत्र ही प्रमाण है। "कर्मणि द्वितीया" इस सूत्र से कर्म में द्वितीया का अनुशासन किया गया है। कर्म का स्वरूप "कर्तुरीप्सित-तमं कर्म" इस सूत्र के द्वारा प्रतिपादित है। सन्नन्त आप् धातु से कर्म में "मतिबुद्धि०" इत्यादिसूत्र से वर्तमानार्थक क्त प्रत्यय का विधान करने पर ईप्सित शब्द की सिद्धि हुई है। अतिशयेन ईप्सितम् ईप्सिततमम् "क्तस्य च वर्तमाने" इस सूत्र से वर्तमानार्थक क्तप्रत्यय के योग में कर्तृपद से षष्ठी विभक्ति होती है। ईप्सित का सम्बन्धेच्छाविषय अर्थ है। सम्बन्ध, समीप में उपस्थित कर्तृपद से उपस्थित व्यापार द्वारक है। क्योंकि व्यापाराश्रय कर्ता होता है। अतः व्यापारघटित सम्बन्ध लेने से व्यापारजन्यफल के आश्रयत्वरूप सम्बन्ध से सम्बन्ध करने की इच्छा के विषय को कर्मसंज्ञा होती है।

व्यापार कर्तृ सम्बन्धी और फल, धात्वर्थ विवक्षित है। कर्तृवृत्ति जो व्यापार उससे प्रयोज्य जो फल तदाश्रयत्वरूप से विवक्षित ही कर्म होता है। उदाहरण ग्रामं गच्छति कर्त्ता देवदत्तादि है इसमें रहनेवाला जो संयोगानुकूलव्यापार इससे जन्य जो संयोगरूप फल इस फल के आश्रयत्वरूप से विवक्षित ग्राम को कर्म संज्ञा होती है।

शङ्का:—ईप्सित शब्द से कर्म में क्तप्रत्यय नहीं हो सकता। आप्तुं सम्बन्धुमिष्टम्—ईप्सितम् यहाँ सन्नन्त ईप्स धातु से व्याप्तीच्छा का बोध होता है। व्याप्तिरूप कर्म सन्नन्त धातु से प्रतीत होने के कारण धात्वर्थ से संगृहीत कर्म होने पर जीवति के समान यह धातु अकर्मक हो जाती है। अतः अकर्मक सन्नन्त धातु से कर्म में क्त प्रत्यय नहीं होना चाहिये।

समाधानः—धात्वर्थ से संगृहीत कर्म कर्मान्तर में अनाकाङ्क्ष लेना चाहिये। जैसे जीवति इस धातु का कर्मरूप प्राण धात्वर्थ में ही अन्तर्गत है क्योंकि जीवधातु का प्राणधारण अर्थ है। धात्वर्थ से संगृहीत कर्म प्राण को किसी दूसरे कर्म की आकांक्षा नहीं है। यहाँ वैसा नहीं है। धात्वर्थ से संगृहीत कर्म आप्ति का अर्थ सम्बन्ध है। सम्बन्ध सम्बन्धी में साकाङ्क्ष हैं। किसी का सम्बन्ध होता है। अतः इसको अकर्मक नहीं माना जा सकता।

द्वितीया विभक्ति से क्रियाजन्यफलाश्रय मात्र का बोध होता है। अतः इच्छोद्देश्य तथा अनिच्छोद्देश्य दोनों का भान शाब्दबोध में नहीं होता। कर्मसंज्ञा के विधान में इनका उपयोग है। फल और व्यापार धातु से लब्ध हो जाने से आश्रयमात्र द्वितीयार्थ है।

शङ्का:—ईप्सितानीप्सितत्व का शाब्दबोध में भान नहीं होने पर क्रियाजन्यफलाश्रय मात्र को ही कर्मसंज्ञा का विधान क्यों नहीं किया। "तथायुक्तम्०" इस सूत्र का इसी में संग्रह होने से लाघव भी है।

समाधानः—"अग्नेर्माणवकं वारयति" इसमें वारिधात्वर्थ अग्निसंयोगानुकूलव्यापारा-भावानुकूलव्यापार होने से संयोग तथा तदनुकूलव्यापाराभाव इन दो फलों का आश्रय

क्रमशः अग्नि और माणवक के होने से दोनों को कर्मसंज्ञा प्राप्त होने के कारण "वारणार्थानाम्०" यह सूत्र कर्मसंज्ञा का अपवाद होगा। अतः दोनों स्थलों में पञ्चमी का विधान प्राप्त होगा। इसके लिए विषयभेद करना आवश्यक है। ऐसी दशा में ईप्सित को अपादानसंज्ञा ईप्सिततम को कर्मसंज्ञा इस प्रकार के भेद करने से अनीप्सित को कर्मसंज्ञा प्राप्त नहीं होगी। अतः "तथायुक्तं चानीप्सितम्" यह सूत्र किया गया।

तद्धात्वर्थव्यापारजन्य तद्धात्वर्थ फल का आश्रय कर्म है। इस प्रकार द्वितीयाविभक्ति की उत्पत्ति के लिए इसकी उपयोगिता है। द्वितीयावाच्यकोटि में इसका भान नहीं हैं।

ज्ञाधातु के स्थल में आवरण ( अज्ञान ) भङ्गरूप फल का आश्रय घट आदि होता है। अतः उससे द्वितीया विभक्ति होती है। ज्ञाधातु का ज्ञान अर्थ नैयायिक मानते हैं। समवाय सम्बन्ध से ज्ञान पुरुष विशेष में है। अतः ज्ञानाश्रय होने से कर्ता है। विषयता सम्बन्ध से ज्ञान घटादि में है। क्योंकि ज्ञान किसी विषय का ही होता है। अतः ज्ञान का विषय घटादि माना जाता है। सम्बन्ध के भेद से ज्ञान का आश्रय भिन्न-भिन्न होने से कर्तृत्व कर्मत्व उपपन्न होता है। फलतावच्छेदक सम्बन्ध से फलाश्रय कर्म होता है। अन्यथा कालिक सम्बन्ध से विक्लित्ति पाषाण में भी होने से "पाषाणं पचति" ऐसा भी प्रयोग होने लगेगा। फलतावच्छेदक के निवेश करने पर कालिकसम्बन्ध फलतावच्छेदक नहीं है अतः दोष नहीं हुआ। "घटं जानाति" यहाँ नैयायिक मत में फलतावच्छेदक सम्बन्ध विषयता सम्बन्ध है।

शङ्काः—वर्तमान घट में ज्ञानजन्य आवरणभङ्गरूपफल रहने पर भी अतीत और अनागत घट में आवरणभङ्गफल नहीं रह सकता क्योंकि निराश्रय में कोई वस्तु नहीं रह सकता।

समाधानः—अनुभवसिद्ध अर्थ में तर्कविरोध अकिञ्चित्कर होता है। "यथापूर्वं जानामि"—पूर्वमनतिक्रम्य यथापूर्वम् इस प्रकार अव्ययीभाव समास है। पूर्वज्ञान का अतिक्रमण नहीं है जिस ज्ञान में वह ज्ञान यथापूर्व है। परन्तु घट की विद्यमानता दशा में पूर्वज्ञात आवरणभङ्गरूप फल का जनक है। अतः आवरणभङ्गविशिष्ट ज्ञान है घटाभावदशा में इदानीन्तन ज्ञान उस फल का जनक नहीं है। इस प्रकार आवरणभङ्ग जनक ज्ञान नहीं होने से इस मत में पूर्व ज्ञान का अतिक्रमण होने के कारण अनतिक्रमण का बोधक "यथापूर्व" इसका प्रयोग असङ्गत हो जायगा। अतः अनुभवसिद्ध अर्थ के अनुरोध से फल का आश्रय अतीत और अनागत विषय को भी मानते हैं। विषयता सम्बन्ध से ज्ञानरूप फल का आश्रय अतीत और अनागत को नैयायिकों ने भी माना है। अनुभव के आधार पर जिस प्रकार विषयता सम्बन्ध से ज्ञान अतीत अनागत विषय में मानते हैं उसी प्रकार यहाँ भी आधारता समझनी चाहिये।

"ज्ञान विषयः" इस प्रतीति के बल पर विषयता सम्बन्ध से अतीत अनागत विषय में ज्ञान की आधारता मानने पर भी इस दृष्टान्त से आवरणभङ्ग की आधारता अतीत अनागत में नहीं सिद्ध होती है। क्योंकि इसकी साधिका कोई प्रतीति नहीं है। अतः दूसरा उपाय लिखते हैं।

अथवा-सत्कार्यवाद सिद्धान्त से सूक्ष्मरूपापन्न होना ही घट का नाश है। अतः घट के न रहने पर भी अव्यक्त सूक्ष्म घट ही फल का आश्रय होने से पूर्वोक्त दोष नहीं है।

सत्कार्यवाद सांख्याभिमत पक्ष है। जिस प्रकार कूर्म (कछुआ) कभी अपने अंगों को समेट कर अपने भीतर करता है और कभी बाहर करता है। कछुआ के अंग कहीं जाते नहीं हैं किन्तु कभी व्यक्त और कभी अव्यक्त रूप में रहते हैं। तिल में तैल दूध में नवनीत (माखन) नया उत्पन्न नहीं होता किन्तु पेरने एवं मन्थन व्यापार के द्वारा सूक्ष्म रूप से अवस्थित तेल और माखन अभिव्यक्त होता है उसी को उत्पत्ति कहते हैं। कारणव्यापार के पहले अनभिव्यक्त अवस्था में अनुत्पन्न का व्यवहार होता है। इत्यादि अन्यत्र स्पष्ट है।

घट पट आदि का तिरोभावसूक्ष्मरूप से अवस्थान ही को घट पट का नाश कहते हैं। घट पट आदि की स्थूलरूप से अभिव्यक्ति ही उत्पत्ति है। सत्कार्यवाद मानने से सूक्ष्म घट में क्रियाजनकत्वरूपकारकत्व एवं कर्तृत्व की उपपत्ति "घटो जायते" इत्यादि प्रयोगों में होती है। अन्यथा आश्रयभूत घट की अनुत्पत्ति रहने पर क्रियाजनकत्वरूप कारकत्व किस में रहेगा। सत्कार्यवाद में सूक्ष्म घटादि उसके आश्रय होते हैं इत्यादि।

**ननु चैत्रो ग्रामं गच्छतीत्यत्र ग्रामस्येव चैत्रस्यापि क्रियाजन्यग्रामसंयोगरूपफलाश्रयत्वात् कर्म्मतापत्तौ, चैत्रश्चैत्रं गच्छतीत्यापत्तिः। प्रयागतः काशीं गच्छति चैत्रे प्रयागं गच्छतीत्यापत्तिश्च। क्रियाजन्यसंयोगस्य काश्यामिव विभागस्य प्रयागेऽपि सत्त्वादिति चेद्? न।**

**ग्रामस्येव चैत्रस्यापि फलाश्रयत्वेऽपि तदीयकर्तृसंज्ञया कर्म्मसंज्ञाया बाधेन, चैत्रश्चैत्रमिति प्रयोगासम्भवात्। द्वितीयोत्पत्तौ संज्ञाया एव नियामकत्वात्। अन्यथा 'गमयति कृष्णं गोकुलम्' इत्यत्रेव, पाचयति कृष्णेनेत्यत्रापि कृष्णपदाद् द्वितीयापत्तेः।**

**शाब्दबोधश्चैत्रश्चैत्रमित्यत्र स्यादिति चेद्? न। तथा व्युत्पन्नानामिष्टापत्तेः। उच्यतां वा प्रकारतासम्बन्धेन धात्वर्थफलविशेष्यकबोधं प्रति धात्वर्थव्यापारानधिकारणाश्रयोपस्थितिर्हेतुरिति कार्य्यकारणभावान्तरम्। प्रकृते चैत्रस्य व्यापारानधिकरणत्वाभावान्न दोषः। प्रयागस्य कर्मत्वन्तु सम्भावितमपि न। समभिव्याहृतधात्वर्थफलशालित्वस्यैव क्रियाजन्येत्यनेन विवक्षणस्य उक्तप्रायत्वात्।**

उक्तनिष्कृष्टकर्मत्वं विशदीकर्तुमाशङ्कते—*नन्विति* ॥ विभागस्येत्यस्य क्रियाजन्येत्यादि। ननु कर्मसंज्ञायाः परया कर्तृसंज्ञया बाधनेऽपि वास्तवकर्मत्वस्य तत्राऽबाधात् स्यादेव तादृशप्रयोगोऽत आह—*द्वितीयोत्पत्ताविति* ॥ इदं च प्रकृताऽभिप्रायेण। कारकविभक्त्युत्पत्तिमात्रस्यैव तन्नियम्यत्वात्। *अन्यथेति* ॥ संज्ञाया अनियामकत्व इत्यर्थः ॥

*द्वितीयापत्तेरिति* ॥ गमयति कृष्णं गोकुलमित्यत्र णिच्प्रकृत्यर्थव्यापारजन्यसंयोगानुकूलव्यापाररूपधात्वर्थफलाश्रयत्वस्येव, पाचयति कृष्णेनौदनमित्यत्रापि-

तादृशव्यापारजन्यविक्लित्त्यनुकूलव्यापाराश्रयत्वस्य तत्र सत्त्वादिति भावः ॥ *शाब्दबोध इति* ॥ चैत्रनिष्ठसंयोगानुकूलश्चैत्रकर्तृको वर्त्तमानो व्यापार इति शाब्दबोध इत्यर्थः । तद्विषयस्याऽबाधादिति भावः ॥ *तथा व्युत्पन्नानामिति* ॥ सामान्यतो धात्वर्थफलविशेष्यतानिरूपितप्रकारतासम्बन्धेन शब्दबोधे आश्रयोपस्थितेर्हेतुत्वत्रादिनामित्यर्थः । बोधस्य स्वस्वव्युपत्त्यनुसारित्वादिति भावः ।

चैत्रकर्मकचैत्रकर्तृकव्यापारशाब्दबोधस्य चैत्रो ग्रामं गच्छतीत्यादावननुभवादाह—*उच्यतां वेति* ॥ *कार्य्यकारणभावान्तरमिति* । सामान्यतः कार्य्यकारणभावकल्पने उक्ताऽतिप्रसङ्गेनाश्रयं प्रकृतधात्वर्थव्यापारानधिकरणत्वेन विशेष्य तादृशाश्रयोपस्थितेर्हेतुत्वस्य कल्पनान्न तादृशशाब्दबोधापत्तिरिति भावः । *समभिव्याहृतेति* । प्रकृतेत्यर्थः । *उक्तप्रायत्वादिति* । धात्वर्थविक्लित्याश्रयवतात् कर्मतेत्यादिग्रन्थेनेत्यस्यादिः । गमेस्तत्र पार्थक्येनाऽनुपादानादुक्तम्—*प्रायेति* । वस्तुतस्तु, फलव्यापारयोरित्यत्र फलत्वस्य तद्धात्वर्थजन्यत्वे सति तद्धातुजन्योपस्थितिविषयत्वरूपस्य निर्वचनाद् व्यापारव्यधिकरणफलाश्रयत्वरूपकर्मत्वोक्त्यैवानतिप्रसङ्गे नोक्तविशेषणस्य पार्थक्येन निवेश इति ध्येयम् ॥

अर्थ—शङ्काः—चैत्र और ग्राम का संयोग जिस प्रकार ग्राम में है उसी प्रकार चैत्र में भी है। क्योंकि संयोग दो में रहता है। इस प्रकार व्यापार से जन्य ग्राम का संयोग चैत्र में भी होने से चैत्र को भी कर्मसंज्ञा होने के कारण "चैत्रः चैत्रं गच्छति" ऐसा भी प्रयोग होना चाहिये। इसी प्रकार "प्रयागात्काशीं गच्छति" इसके समान प्रयाग से काशी जाते हुए चैत्र के तात्पर्य से प्रयागं काशीं गच्छति चैत्रः" ऐसा प्रयोग भी प्राप्त होगा। धात्वर्थव्यापार से जन्य संयोग और विभाग दोनों ही हैं। अतः क्रियाजन्यसंयोगरूपफलाश्रय काशी के समान विभागरूपफलाश्रय प्रयाग भी है।

समाधानः—ग्राम के समान संयोगरूप फल चैत्र में रहने पर भी कर्तृसंज्ञा द्वारा कर्मसंज्ञा का परत्व के कारण बाध हो जाने से द्वितीया विभक्ति नहीं होगी। अतः "चैत्रश्चैत्रम्" इस प्रकार के प्रयोग की आपत्ति नहीं हो सकती है। द्वितीया विभक्ति की उत्पत्ति में कर्मसंज्ञा ही नियामक है। यदि कर्मसंज्ञा द्वितीया में नियामक नहीं होगी तो "गमयति कृष्णं गोकुलम्" इसके समान "पाचयति कृष्णेन" यहाँ भी कृष्णादिपद से द्वितीया होनी चाहिये। क्योंकि संयोगानुकूलव्यापारानुकूलव्यापारार्थक गमि धातु का संयोग के समान तदनुकूलव्यापार भी फल है। अतः तदाश्रय कृष्ण से द्वितीया होती है उसी प्रकार विक्लित्ति के अनुकूलव्यापारानुकूलव्यापारार्थक पाचिधातु का विक्लित्ति के समान तदनुकूलव्यापार भी फल है तदाश्रय कृष्ण से द्वितीया क्यों नहीं होगी? अतः कर्मसंज्ञा विभक्ति का नियामक है अर्थ नहीं। यहाँ कर्मसंज्ञा नहीं होती है क्योंकि "गतिबुद्धि" इस सूत्र के नियमार्थक होने से गति बुद्धि आदि अर्थवाचक से भिन्न धातु के योग में अण्यन्तावस्था के कर्त्ता को ण्यन्तावस्था में कर्मसंज्ञा न होने से द्वितीया की आपत्ति नहीं होगी।

शङ्काः—चैत्रनिष्ठ संयोगानुकूल-चैत्रकर्तृकवर्तमानकालिकव्यापार ऐसा शाब्दबोध "चैत्रः चैत्रम्" इससे होना चाहिये।

समाधानः—"चैत्रः चैत्रं गच्छति" इस वाक्य में तादृश शाब्दबोधजनकत्व का ज्ञान जिसको है उसको वैसा शाब्दबोध इष्ट ही है।

अथवा चैत्रनिष्ठसंयोगानुकूलचैत्रकर्तृकव्यापार इस बोध में चैत्ररूप आश्रय में प्रकारता और संयोग में विशेष्यता है। धात्वर्थसंयोगनिष्ठविशेष्यतानिरूपितप्रकारता सम्बन्ध से शाब्दबोध के प्रति धात्वर्थव्यापार के अनधिकरण आश्रय की उपस्थिति कारण है। ऐसा कार्यकारणभावान्तर की कल्पना करने से चैत्ररूप आश्रय, धात्वर्थव्यापार का अधिकरण होने से अनधिकरण नहीं हुआ अतः व्यापारानधिकरण (प्रकारता सम्बन्ध से) आश्रय की उपस्थिति नहीं होने से पूर्वोक्त दूषण की प्रसक्ति नहीं है।

"प्रयागात् काशीं गच्छति" यहाँ प्रयाग को कर्मसंज्ञा की सम्भावना ही नहीं है। व्यापारजन्यफल को समभिव्याहृत धातु (प्रकृतवाक्यघटकधातु) का वाच्य होना आवश्यक है। यहाँ गम् धातु का संयोगानुकूलव्यापार अर्थ होने से विभाग गम् धातु का वाच्य अर्थ नहीं है किन्तु संयोग होने से विभाग अर्थतः प्राप्त है। अतः धातुवाच्य विभाग फल न होने से कर्मसंज्ञा नहीं हुई।

हिन्दीभाष्यः—

शङ्का—अर्थों के रहने पर उन-उन अर्थों के बोध कराने के लिये तद्वाचक शब्दों का प्रयोग किया जाता है। दो अप्राप्त वस्तुओं की प्राप्ति संयोग है। अप्राप्तयोस्तु या प्राप्तिः सैव संयोग ईरितः (मुक्तावली गुण प्र०) ऐसा लिखा भी है। ऐसी अवस्था में संयोग ग्राम और कर्ता देवदत्त आदि दोनों में होने के कारण ग्राम के समान चैत्र पद से भी आश्रयबोधक द्वितीया विभक्ति क्यों नहीं होती है।

समाधान—विभक्ति के प्रयोग में अर्थनियामक न होकर कर्मसंज्ञा नियामक है। ऐसा न मानने पर ण्यन्त पाचि धातु का विक्लित्त्यनुकूलव्यापारानुकूलव्यापार अर्थ होने से विक्लित्ति का आश्रय ओदन के समान तदनुकूल व्यापार का आश्रय प्रयोज्यकर्ता (अण्यन्तावस्था का कर्ता) कृष्ण भी है अतः उससे भी द्वितीया विभक्ति होनी चाहिये। कर्मसंज्ञा होने पर ही द्वितीया विभक्ति मानने पर यहाँ कर्मसंज्ञा नहीं होती है "गतिबुद्धि०" सूत्र नियमार्थक है। णिच् की अनुत्पत्तिदशा में जो कर्ता है उसको णिच् उत्पन्न होने पर कर्मसंज्ञा यदि हो तो गतिबुद्धि प्रत्यवसान आदि अर्थवाली धातुओं के कर्ता को ही हो दूसरे को नहीं। इस प्रकार के नियम से पाचि धातु के कर्ता कृष्ण को कर्मसंज्ञा न होने से द्वितीया विभक्ति नहीं होती। "गतिबुद्धि०" सूत्र में परिगणित धातुओं में पच् का निर्देश नहीं है। इसी प्रकार उक्त प्रयोग में चैत्र से द्वितीया विभक्ति नहीं हुई। कर्तृसंज्ञा से कर्मसंज्ञा बाधित हो जाती है।

चैत्रश्चैत्रं गच्छति ऐसा प्रयोग न होने पर भी शाब्दबोध की आपत्ति का परिहार कार्यकारणभाव की कल्पना से किया गया है।

उपस्थिति कारण है शाब्दबोध कार्य है। स्मरणात्मक ज्ञान को उपस्थिति कहते है। कार्यकारणभाव समानाधिकरण में होता है। वह्नि किसी स्थान में हो धूम किसी स्थान में हो तो इनका कार्यकारणभाव नहीं होता है। यहाँ "चैत्रनिष्ठसंयोगानुकूलः चैत्राभिन्नैकाश्रयको वर्तमानकालिको व्यापारः" इस बोध में चैत्र में प्रकारता और धात्वर्थसंयोग में विशेष्यता है। धात्वर्थफलविशेष्यक-शाब्दबोध धात्वर्थफलनिष्ठविशेष्यतानिरूपित प्रकारता सम्बन्ध से चैत्र में है। वहाँ धात्वर्थ व्यापारानधिकरण (अर्थात्

धात्वर्थव्यापारका जो अधिकरण न हो ) आश्रय की प्रकारता सम्बन्धस्व से उपस्थिति कारण है। धात्वर्थ व्यापारानधिकरण चैत्ररूप आश्रय नहीं हैं। क्योंकि कर्ता भी होने से चैत्र धात्वर्थ व्यापार का अधिकरण है अनधिकरण नहीं है।

"ग्रामं गच्छति" इसमें ग्राम व्यापार का अधिकरण नहीं होने से व्यापारानधिकरण है। द्वितीया पद से उपस्थित आश्रय रूप ग्राम में प्रकारता भी है। इस प्रकार व्यापारानधिकरण प्रकारता सम्बन्ध से उपस्थित आश्रय से अभिन्न ग्राम होने से पूर्वोक्त शाब्दबोध होता है और ग्राम से द्वितीया होती है।

नैयायिकास्त्वाद्यदोषवारणाय परसमवेतत्वम्, द्वितीयदोषवारणाय धात्वर्थतावच्छेदकत्वं फले विशेषणम्; द्वितीयावाच्यमित्युपाददते। परसमवेतत्वं धात्वर्थक्रियायामन्वेति। तथैव कार्यकारणभावान्तरकल्पनात्। परत्वमपि द्वितीयया स्वप्रकृत्यर्थापेक्षया बोध्यते। तथाच चैत्रस्तण्डुलं पचतीत्यादौ तण्डुलान्यसमवेतव्यापारजन्यधात्वर्थतावच्छेदकविक्लित्तिशालित्वात् तण्डुलानां कर्म्मता। शाब्दबोधस्तु तण्डुलसमवेतधात्वर्थतावच्छेदकविक्लित्त्यनुकूलतण्डुलान्यसमवेतक्रियाजनककृतिमाँश्चैत्र इत्याहुः।

तन्न रोचयामहे; परसमवेतत्वादेर्गौरवेणावाच्यत्वात्। अतिप्रसङ्गः किं द्वितीयायाः, शाब्दबोधस्य वा। नाद्यः तावद्वाच्यकथनेऽपि तत्तादवस्थ्यात्। गमयति कृष्णं गोकुलमितिवत् पाचयति कृष्णं गोपःइति द्वितीयापत्तेः। तण्डुलं पचति चैत्र इतिवत्, तण्डुलं पच्यते स्वयमेवेत्यापत्तेश्च। विक्लित्त्यनुकूलतण्डुलान्यसमेवताग्निसंयोगरूपधात्वर्थाश्रयत्वात्। शाब्दबोधातिप्रसङ्गोऽप्युक्तरीत्यैव निरस्तः। परसमवेतत्वस्य शक्यत्वेऽपि परत्वस्य परसमवेतत्वस्य च इष्टाऽन्वयलाभायाऽनेकशः कार्य्यकारणभावाऽभ्युपगमे गौरवान्तरत्वादिति स्पष्टं भूषणे।

नैयायिकमतं दूषयितुमुपन्यस्यति—*नैयायिकास्त्विति*। *आद्यदोषेति*। चैत्रश्चैत्रं गच्छतीति प्रयोगापत्तिरूपेत्यर्थः। *धात्वर्थतावच्छेदकत्वमिति*। फलावच्छिन्नव्यापारस्य धात्वर्थत्वमिति वादिनां मतेनेदम्। तथाच तन्मते धात्वर्थताऽवच्छेदकफलशालित्वं कर्मत्वं द्वितीयाऽर्थः पर्यवस्यति। *कार्यकारणभावेति*। द्वितीयाऽर्थपरसमवेतत्वस्य स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति भावनात्वावच्छिन्नविशेष्यतासम्बन्धेन धातुजन्योपस्थितेर्हेतुत्वान्तरकल्पनादित्यर्थः।

ननु भेदस्य केवलाऽन्वयितया सर्वस्यैव परत्वेन चैत्रक्रियाया अपि मैत्राऽन्यसमवेतत्वात् तद्वाच्यताङ्गीकारेऽप्युक्तदोषतादवस्थ्यमत आह—*परत्वञ्चेति*। व्युत्पत्तिवैचित्र्यात्तु पदार्थैकदेशेऽपि प्रतियोगितया प्रकृत्यर्थाऽन्वयः, प्रकृते चैत्रसंयोगजनकक्रियायां चैत्रभिन्नसमवेतत्वबाधान्न चैत्रश्चैत्रं गच्छतीति प्रयोगः। यत्र चोभयकर्मभ्यां मल्लयोः संयोगस्तत्र मल्लान्तरक्रियायाः स्वनिष्ठसंयोगजनिकायाः स्वभिन्नसमवेत-

त्वेऽपि तादृशक्रियायाः स्वस्मिन् बाधान्न मल्लः स्वं गच्छतीति प्रयोगः। स्वनिष्ठसंयोगजनकस्वक्रियायां स्वभिन्नसमवेतत्वस्यायोग्यत्वेनाभानेऽप्यबाधितसंयोगजनकत्वं विषयीकृत्य, "अभिचरन् यजेत्" इत्यादाविव शाब्दबोधसम्भवात् तदर्थतात्पर्येण 'स्वं गच्छति' इति प्रयोगो दुर्वार इति तु नाशङ्कनीयम्। परसमवेतत्वांशाऽविषयकस्य द्वितीयाधीनफलजनकत्वबोधस्य कुत्राप्यऽनभ्युपगमेन तादृशबोधे तद्ज्ञानसामग्र्या अप्यपेक्षणात् तस्याश्च प्रकृतेऽसत्त्वात्।

अथ स्वस्याऽपि द्वित्वाऽवच्छिन्नभिन्नत्वात् स्वं गच्छतीतिप्रयोगवारणाय द्वितीयाप्रकृत्यर्थस्य प्रकृत्यर्थतावच्छेदकावच्छिन्नप्रतियोगिताकत्वसम्बन्धेनाऽन्वयो वाच्यः। तथाच—'चैत्रो द्रव्यं गच्छति,' 'मल्लो मल्लं गच्छति' इत्यादिवाक्यानामप्रामाण्यापत्तिः। चैत्रमल्लादिनिष्ठक्रियाया द्वितीयाप्रकृत्यर्थताऽवच्छेदकद्रव्यत्वमल्लत्वावच्छिन्नभिन्नाऽसमवेतत्वात् तद्व्यक्तित्वानुपस्थितावपि शाब्दबोधस्याऽनुभवसिद्धतया तत्तद्व्यक्तित्वोपस्थापकत्वाऽवच्छिन्नप्रतियोगितयान्वयासम्भवात्, तद्व्यक्तित्वोपस्थापकपदाऽभावाच्च। एकधर्मावच्छिन्नप्रतियोगिताया अन्यधर्मावच्छिन्नसंसर्गत्वे मानाभावाच्च प्रतियोगिविशेषिताभावबुद्धेर्विशिष्टवैशिष्ट्यावगाहित्वनियमात्।

तदुक्तं दीधितिकृता-प्रतियोगिविशेषिताभावभानं तु विशिष्टवैशिष्ट्यमर्यादां नातिशेत इतीति चेत्? तर्हि क्रियान्वयिभेदप्रतियोगिताबच्छेदकत्वं द्वितीयार्थः। भेदे प्रकृत्यर्थस्याधेयतयान्वयान्न पूर्वोक्तापत्त्यनुपपत्ती। नञ्समभिव्याहारे च नञा तात्पर्यवशाच्चैत्रश्चैत्रं न गच्छतीत्यादौ द्वितीयाप्रकृत्यर्थवृत्तित्वविशिष्टतदपरार्थभेदप्रतियोगितावच्छेदकत्वाभावः। क्वचिच्च चैत्रो ग्रामं न गच्छतीत्यादौ द्वितीयाऽर्थवृत्तित्वविशिष्टधात्वर्थसंयोगजनकत्वाभावः क्रियायां बोध्यते। ये तु प्रकृत्यर्थवृत्तित्वविशिष्टसंयोगादिरूपफलस्यैव जनकत्वस्वाश्रयनिष्ठभेदप्रतियोगितावच्छेदकत्वोभयसम्बन्धेन क्रियायामन्वयोपगमाद् भेदप्रतियोगितावच्छेदकत्वस्य द्वितीयार्थत्वमन्तरेणाप्युक्तापत्तिमुद्धरन्ति। तन्मते वृत्त्यनियामकसम्बन्धस्याभावप्रतियोगितावच्छेदकतयोक्तस्थले उक्तसम्बन्धेन नञा संयोगाभावबोधाऽनुपपत्तिः। परसमवेतत्वं द्वितीयार्थ इति दीधितिविरोधश्च।

एवञ्च 'चैत्रो ग्रामं गच्छति' इत्यत्र ग्रामवृत्तिसंयोगजनिका ग्रामवृत्तिभेदप्रतियोगितावच्छेदिका च या क्रिया तदनुकूलकृतिमांश्चैत्र इति नैयायिकमतपरिष्कारः।

अत्र प्रत्यवतिष्ठन्ते। नञर्थप्रसज्यप्रतिषेधस्य प्रतियोगितया क्रियाऽन्वयित्वमिति व्यवस्थापनात् कथं चैत्रो ग्रामं न गच्छतीत्यादौ नञः संयोगजनकत्वाभावबोधकत्वम्। उक्तञ्च—

पर्य्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्।
प्रसज्ज्यप्रतिषेधस्तु क्रियया सह यत्र नञ्॥

यत्र नञर्थाभावः क्रियया धात्वर्थव्यापारेण प्रतियोगितया सम्बद्धो भवतीत्युत्तरार्द्धाऽर्थः। तस्मात् तिङन्ते नञ्समभिव्याहारे क्रियाप्रतियोगिकाऽभावबोध एव

न्याय्यो न तु क्रियायां फलाभावस्य विभक्त्यर्थाभावस्य वा प्रथमान्तार्थे वा तिङर्थाऽभावस्य क्लृप्तकारणविरहादिति ॥

अत्र वदन्ति—यद्धर्म्मावच्छिन्ने यद्धर्म्मावच्छिन्नत्वं येन संसर्गेण नञ्समभिव्याहारे प्रतीयते; तद्धर्म्मावच्छिन्ने तद्धर्मावच्छिन्नस्य तत्संसर्गावच्छिन्नप्रतियोगिताकाभावो नञ्समभिव्याहारे बुद्ध्यते; इति सकललोकानुभवसिद्धोऽयमर्थः । 'प्रतियोग्यभावाऽन्वयी तुल्ययोगक्षेमौ' इरि वदता दीधितिकृतोपनिबद्धः । एवञ्च—चैत्रो ग्रामं गच्छतीत्यत्र नञ्समभिव्याहारे क्रियायां द्वितीयाऽर्थवृत्तित्वविशिष्टसंयोगजनकत्वस्य बोधात् नञ्समभिव्याहारे तत्र तदभावस्य बोधो जायमानः केन वारणीयः । न च कारणाभावः । नञर्थाभावप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे प्रतियोग्यन्वययोग्याऽर्थोपस्थितेर्हेतुतया तस्याश्च क्रियायां सत्त्वात् । न तु नञर्थनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन बोधे धातुजन्यभावनोपस्थितेर्हेतुता । चैत्रश्चैत्रं न गच्छतीत्यादिवाक्यानामप्रामाण्यापत्तेः । चैत्रकर्मकचैत्रकर्तृकगमनक्रियारूपप्रतियोगिनोऽप्रसिद्ध्या नञा तदभावस्य बोधयितुमशक्यत्वात् ।

मन्मते तु चैत्रकर्तृकक्रियायां चैत्रवृत्तिसंयोगजनकत्वेऽपि चैत्रवृत्तिभेदप्रतियोगितावच्छेदकत्वस्य तस्यामसत्त्वेन नञा तदभावस्य प्रत्यायनात् प्रामाण्योपपत्तेः । अत एव परसमवेतत्वस्य द्वितीयोपपत्तिरुक्तस्थले इति वाच्यम् । 'मैत्रो गच्छति चैत्रं; न चैत्र' इत्यत्र मैत्रक्रियावच्छिन्नप्रतियोगिताकभेदवत्त्वतदीयसंयोगाश्रयत्वयोरुभयोर्द्वितीयार्थयोरबाधेन तदुपपत्तेः । अधिकमग्रे वक्ष्यते ।

तस्मात् 'चैत्रो गच्छति' इत्यादौ चैत्रो न कर्मेति व्यवहाराच्च, सर्वथा कर्तृव्यावृत्तं धात्वर्थव्यापारप्रयोज्यतद्व्यधिकरणधात्वर्थफलाऽऽश्रयत्वं कर्मत्वं निर्वाच्यम् । तत्र फलव्यापारयोर्धातुलभ्यत्वेऽपि वृत्तित्वे भेदप्रतियोगितावच्छेदकत्वपर्य्यवसिते वैयधिकरण्ये च द्वितीयादेः शक्तिरनन्यलभ्यत्वात् स्वीकरणीयेति । प्रकृतमनुसरामः ॥

*विक्लित्त्यनुकूलेति* । इदं तण्डुलाऽन्यसमवेतक्रियाऽन्वयि । यथाश्रुतं दूषयति—*तन्न रोचयामहे इत्यादिना* । ननु परसमवेतत्वस्य द्वितीयार्थत्वं विनाऽतिप्रसङ्गाऽनिरासाद् गौरवं न दोषायेत्यत आह—*अतिप्रसङ्गः किमिति* । *तावदिति* । परसमवेतक्रियाजन्यधात्वर्थताऽवच्छेदकफलशालित्वरूपकर्मत्वस्य द्वितीयार्थत्वस्वीकारेऽपि द्वितीयातिप्रसङ्गस्य तादवस्थ्यादित्यर्थः । तमेवाह—*गमयति कृष्णमित्यादिना* । *द्वितीयापत्तेरिति* । द्वितीयोत्पत्तावुक्तकर्मत्वस्य तन्त्रत्वे, गमयति गोकुलं कृष्णमित्यत्र णिजर्थनिरूपितनिरुक्तकर्मत्वस्येव पचिप्रकृतिकणिजर्थकर्मत्वस्य कृष्णे सत्त्वेन पाचयत्यादिप्रयोगेऽपि प्रयोज्यकर्तृवाचकाद् द्वितीयापत्तेः । अतः संज्ञाया एव द्वितीयोत्पत्तौ प्रयोजकताऽङ्गीकरणीया । एवञ्च तत एवातिप्रसङ्गभङ्गे, कृतं तत्र द्वितीयाशक्त्येति भावः ।

ननु तादृशकर्मत्वस्यैव द्वितीयानियामकत्वे । निरुक्तस्थले कृष्णे तादृशत्वेऽप्युपात्तग-

त्यर्थकाद्यतिरिक्तणिजन्तधातुयोगे "गतिबुद्धि" इति सूत्रेण तदविवक्षाबोधनान्नोक्तापत्तिः। विवक्षाया एव विभक्त्युत्पत्तौ नियामकताया वक्ष्यमाणत्वादत आह—*तण्डुलं पच्यत इति*। तण्डुले भवदुक्तद्वितीयानियामककर्मत्वस्य सत्त्वात्तदापत्तिः, मन्मते तु कर्तृसञ्ज्ञया बाधान्न तदापत्तिरिति भावः। तण्डुलान्यसमवेतेत्यनेन परसमवेतक्रियाजन्यत्वं विक्लित्तावस्तीति बोधितम्। धात्वर्थाश्रयत्वादित्यनेन कर्तृसंज्ञासत्त्वमावेद्यते। *उक्तरीत्यैवेति*। नथा व्युत्पन्नानामित्याद्युक्तरीत्यैवेत्यर्थः। धात्वर्थव्यापाराऽनधिकरणाश्रयोपस्थितिरूपहेत्वभावादिति भावः। नतु नाऽस्मन्मतेऽप्युक्तप्रयोगापत्तिस्तत्र व्यापारत्वेन फलस्यैव भानाऽङ्गीकारेण तण्डुलस्य धात्वर्थतावच्छेदकफलशालित्वाऽभावात्। निष्कृष्टभवन्मतेऽपि व्यापारगतपौर्वापर्य्यारोपेण फलस्य व्यापारतायाः स्वीकाराच्चेत्यतो दूषणान्तरमाह—

*परसमेवतत्वस्येति*। *इष्टाऽन्वयेति*। इष्टस्य प्रकृत्यर्थस्य प्रतियोगितासम्बन्धेन परसमवेतत्वस्यैकदेशे परत्वे परसमवेतत्वस्य चाश्रयतया क्रियायामन्वयस्य लाभाय—भानायेत्यर्थः। *अनेकश इति*। प्रकृत्यर्थप्रकारकशाब्दबुद्धि प्रति द्वितीयाऽधीनाधेयत्वोपस्थितेरिव तदधीनपरसमेवतत्वोपस्थितेः प्रकारतासम्बन्धेन, एवं परसमवेतत्वप्रकारकबुद्धि प्रति धातुजन्योपस्थितेर्व्यापारत्वावच्छिन्नविशेष्यतासम्बन्धेन हेतुत्वकल्पने चातिगौरवादित्यर्थः। मन्मते तु फलप्रकारकशाब्दबोधक्लृप्तहेतुताकव्यापारोपस्थितिविषयव्यापारांशे द्वितीयाप्रकृत्यर्थावृत्तित्ववैशिष्टचनिवेशेनैव नातिप्रसङ्ग इति भावः।

ननु 'चैत्रो मैत्रश्च परस्परं गच्छतः' इत्यादौ धात्वर्थव्यापारस्य द्वितीयाप्रकृत्यर्थवृत्तित्वात्तत्फलानन्वयप्रसङ्गोऽत आह—*स्पष्टमिति*। तथाच द्वितीयाप्रकृत्यर्थावृत्तीत्यनेन द्वितीयाप्रकृत्यर्थवृत्तिभेदप्रतियोगिताऽवच्छेदकत्वस्य विवक्षणात्, 'परस्परं गच्छत' इत्यादौ क्रियायाः परस्परावृत्तित्वबाधेऽपि परस्परनिष्ठभेदप्रतियोगितावच्छेदकत्वस्याबाधान्न फलान्वयानुपपत्तिरित्यादि तत्रोक्तमिति।

अर्थ—नैयायिकों ने "चैत्रः चैत्रं गच्छति" इसमें दोषवारण के लिये परसमवेतत्व तथा" प्रयागात् काशीं गच्छति" इसमें दोषवारण के लिये फल में विशेषणीभूत धात्वर्थतावच्छेदकत्व को द्वितीया विभक्ति का वाच्य मानते हैं। परसमवेतत्व धात्वर्थ क्रिया में अन्वित है। इस प्रकार के कार्यकारणभावान्तर की कल्पना है। इसमें जो परत्व है वह द्वितीया प्रकृत्यर्थ की अपेक्षा से माना जाता है। (किससे पर भिन्न) अर्थात् द्वितीया प्रकृत्यर्थ से पर (भिन्न) ऐसा मानने से—"चैत्रस्तण्डुलं पचति" इत्यादि स्थल में तण्डुल से अन्य में समवेत जो व्यापार उससे जन्य जो धात्वर्थफल (फलाच्छिन्न व्यापार की विशेष्यता व्यापार में है उसकी अवच्छेदकता विशेषणीभूत फल में है) फल यहाँ विक्लित्ति है तदाश्रय तण्डुल को कर्मसंज्ञा होती है। तण्डुलसमवेत जो धात्वर्थतावच्छेदक विक्लित्ति तदनुकूल-तण्डुलान्यसमवेतक्रियाजनककृतिमान् चैत्रः इस प्रकार का शाब्दबोध होता है।



यह नैयायिकों का कथन ठीक नहीं है—परसमवेतत्वादि को गौरव होने से द्वितीया-

का वाच्य नहीं मानना चाहिये। इसके न मानने पर क्या द्वितीया की आपत्ति है। या शाब्दबोध की। प्रथम आपत्ति यदि कहें तो परसमवेत धात्वर्थतावच्छेदकफल आदि के प्रवेश करनेपर भी पूर्ववत् आपत्ति बनी हुई है। 'गमयति कृष्णं गोकुलम्'' इसके समान "पाचयति कृष्णं गोपः' यहाँ भी द्वितीया का प्रसङ्ग पूर्ववत् बना है। 'तण्डुलं पचति चैत्रः' इसके समान "तण्डुलं पच्यते स्वयमेव'' इस प्रयोग की आपत्ति भी हो जायगी क्योंकि विक्लित्त्यनुकूलतण्डुलान्य में समवेत जो अग्निसंयोग रूप धात्वर्थ उसका आश्रय तण्डुल है।

शाब्दबोध का अतिप्रसङ्ग पूर्वोक्त युक्ति ( विपरीत व्युत्पत्तिवालों को तथाविध बोध इष्ट है इस रीति ) से निरस्त हो चुका है। परसमवेतत्व को वाच्य मानने पर परत्व पदार्थैकदेश का द्वितीया प्रकृत्यर्थ में और परसमवेतत्व का इष्ट ( व्यापार ) में अन्वय के लिये अनेक कार्यकारणभाव मानने में और भी गौरव होगा। यह बृहद्वैयाकरभूषण में विशेष रूप से स्पष्ट है।

हिन्दीभाष्य—नैयायिकों ने "चैत्रः चैत्रं गच्छति'' इसमें पूर्वोक्त द्वितीया की आपत्ति का परिहार धात्वर्थ क्रिया ( व्यापार ) में परसमवेतत्व विशेषण देकर किया है। धात्वर्थव्यापारजन्यफलाश्रयरूप द्वितीया विभक्ति के अर्थ में व्यापार को परसमवेत होना चाहिये। साथ-साथ फल धातुवाच्य भी विवक्षित है। अतः परसमवेत धात्वर्थव्यापार-जन्यप्रकृतधात्वर्थफलाश्रय द्वितीया विभक्ति का वाच्य हुआ। चैत्र में संयोगानुकूल-व्यापार और संयोगरूपफल दोनों होने से द्वितीयाप्रकृतिरूप से चैत्र की विवक्षा होने पर द्वितीया प्रकृति के अर्थ से पर=भिन्न में समवेत व्यापार नहीं है अपि तु द्वितीयाप्रकृति चैत्र पद के अर्थ चैत्र व्यक्ति में समवेत ही व्यापार है। अतः परसमवेत क्रिया के न होने के कारण द्वितीया विभक्ति चैत्र से नहीं हुई। परसमवेत में पर का अर्थ=भेदवान् है। उसमें समवेत=समवाय से रहनेवाला। इस परसमवेत के एकदेश परत्व में द्वितीया प्रकृत्यर्थ का अन्वय है। यद्यपि पदार्थ का पदार्थैकदेश में अन्वय नहीं होता, अत एव राजपुरुषघटकराजपदार्थ में सुन्दर विशेषण के तात्पर्य से सुन्दरो राजपुरुषः ऐसा प्रयोग नहीं होता है। "पदार्थः पदार्थेन अन्वेति न तु पदार्थैकदेशेन'' यह न्याय का स्वरूप है। तथापि नित्यसाकाङ्क्ष पदार्थ में एकदेशान्वय माना जाता है, इसीलिये "देवदत्तस्य गुरुकुलम्'' यहाँ गुरु का कुल के साथ "गुरोः कुलम् गुरुकुलम्'' इस प्रकार समास होने से गुरुपदार्थ के एकदेश हो जाने पर भी देवदत्त का तद्वृत्ति गुरुत्व में अन्वय होता है। देवदत्त निरूपित जो गुरुत्व तद्वान् गुरु का कुल ऐसा बोध इष्ट है। गुरुत्व नित्यसाकाङ्क्ष है। किसी का किसी में गुरुत्व है। सबके प्रति किसी की गुरुता नहीं है। इसी प्रकार परत्व भेद भी प्रतियोगी में साकाङ्क्ष है। किसी का भेद विवक्षित है। एकदेश परत्व में द्वितीया प्रकृत्यर्थ का निरूपितत्व सम्बन्ध से अन्वय होने में किसी प्रकार की बाधा नहीं है।

फल में धात्वर्थतावच्छेदक के निवेश करने से "प्रयागात् काशीं गच्छति''=प्रयाग से काशी जाता है इसमें प्रयाग से द्वितीया नहीं हुई। प्रयाग धात्वर्थव्यापारजन्यविभागरूप फल का आश्रय होनेपर भी धात्वर्थ फल का आश्रय नहीं है। क्योंकि गम् धातु का वाच्य अर्थ उत्तर देश संयोग है विभाग नहीं है। अतः धात्वर्थ फलाश्रय न होने से प्रयागपद में द्वितीया नहीं हुई।

धात्वर्थतावच्छेदक फल का तात्पर्य यह है—धात्वर्थ=धातुवाच्य। फलावच्छिन्न-व्यापार में धातु की शक्ति माननेवालों के यहाँ फलावच्छिन्ना उपस्थितीया व्यापार की विशेष्यता है। फल उसका अवच्छेदक है इसी अभिप्राय से फल को धात्वर्थतावच्छेदक कहा है। धातुवाच्य फल विवक्षित है यह सारांश है।

स्व ( परसमवेतत्व ) निष्ठ जो प्रकारता तन्निरूपित जो विशेष्यता इस सम्बन्ध से परसमवेतत्वप्रकारक शाब्दबोध में भावनात्वावच्छिन्नभावनानिष्ठविशेष्यतारूपसम्बन्ध से धातुपद जन्य उपस्थिति कारण है। परसमवेतत्व का व्यापार में अन्वय होने से परसम-वेतत्व में प्रकारता और व्यापार में विशेष्यता है। अतः परसमवेतत्व, स्वनिष्ठ-प्रकारता-निरूपित-विशेष्यता-सम्बन्ध से व्यापार में है वहीं भावनात्वावच्छिन्न ( व्यापारत्वा-वच्छिन्न) भावनानिष्ठविशेष्यता सम्बन्ध से धातुजन्य भावना की उपस्थिति भी है। अतः समानाधिकरण होने से दोनों का कार्य करण भाव होता है। इसीलिए परसमवेतत्व का व्यापार में ही अन्वय हुआ। चैत्रस्तण्डुलं पचति इसमें द्वितीयाप्रकृतिरूप में विवक्षित तण्डुल है इससे पर अर्थात् भिन्न हुआ कर्ता चैत्र उसके व्यापार से उत्पन्न जो प्रकृत वाक्य घटक धातु पच् इसका अर्थ विक्लित्ति तदाश्रय तण्डुल को कर्मसंज्ञा होती है।

शाब्द बोध प्रकार न्यायमत से इस प्रकार है—तण्डुल समवेत जो धात्वर्थतावच्छेदक ( धातुवाच्य ) विक्लित्ति तदनुकूल ( जनक ) तण्डुलान्यसमवेत जो क्रिया तज्जनक कृति-मान् चैत्र। न्याय मत में आख्यात का अर्थ कृति है। प्रथमान्तार्थ की ही शाब्दबोध में प्रधानता है। वैयाकरण और मीमांसकों के यहाँ व्यापार ( भावना ) का प्राधान्य है।

वैयाकरणों को यह रुचिकर प्रतीत नहीं होता। यथासम्भव अनन्यलभ्य और लघु को वाच्य होना चाहिए। फल और व्यापार धातु से लभ्य होने से उसमें द्वितीया की शक्ति मानना व्यर्थ है। यह पहले कह चुके हैं। परसमवेतत्व और धात्वर्थताच्छेदकत्व इन दोनों को भी गौरव के कारण द्वितीया का वाच्य नहीं मानना चाहिये। लाघवात् आश्रयमात्र ही द्वितीया का अर्थ है। ऐसा मानने पर द्वितीया के अर्थ का अतिप्रसङ्ग नहीं होगा। क्यों कि द्वितीया का अर्थ द्वितीया विभक्ति में नियमित नहीं है किन्तु कर्म संज्ञा होने पर द्वितीया विभक्ति होती है। "चैत्रः चैत्रं गच्छति" इसमें चैत्र को व्यापाराश्रय होने के कारण कर्तृ संज्ञा और फलाश्रय होने से कर्म संज्ञा दोनों का प्राप्ति में परत्वात् कर्तृसंज्ञा होती हैं। "आकडारादेका संज्ञा" इस सूत्र के अनुसार एक ही संज्ञा एक को होती है। कर्तृ संज्ञा परत्वात् कर्म संज्ञा का बाधक होने से द्वितीया की आपत्ति नहीं होगी। तत्तत्संज्ञा ही तत्तद्विभक्ति की उत्पत्ति में नियामक है। यदि ऐसा न मानें तो "गमयति कृष्णं गोकुलम्" इसमें जिस प्रकार ण्यन्त गमि धातु का संयोगानुकूलव्यापारानुकूल व्यापार अर्थ होने से संयोग और तदनुकूलव्यापार ये दोनों धातु वाच्य फल हैं। साथ-साथ द्वितीया प्रकृत्यर्थ से भिन्न जो प्रयोजक देवदत्तादि तन्निष्ठ व्यापार से जन्य भी दोनों फल है। अतः कर्मसंज्ञा होती है। उसी प्रकार ण्यन्त पाचि धातु के योग में "पाचयति कृष्णेन ओदनम्" इसमें कृष्ण से द्वितीया विभक्ति होनी चाहिए। विक्लित्त्यनुकूलव्यापा-रानुकूलव्यापार पाचि का अर्थ है। परसमवेतदेवदत्त आदि निष्ठ जो व्यापार तज्जन्य विक्लित्ति और तदनुकूलव्यापार दोनों है। अतः विक्लित्ति का आश्रय तण्डुल तदनुकूल व्यापार का आश्रय प्रयोज्यकर्ता अर्थात् अनुत्पन्न णिच् की अवस्था का कर्ता कृष्ण इससे भी द्वितीया होनी चाहिए। क्योंकि द्वितीया विभक्ति का वाच्य परसमवेतक्रियाजन्य-

धातुवाच्यफलाश्रयत्व दोनों स्थानों में समान है। यदि द्वितीया विभक्ति की उत्पत्ति में उसका वाच्य अर्थ नियामक न होकर कर्मसंज्ञा नियामक होती है तब "कर्तुरीप्सिततमं कर्म" इससे कर्मसंज्ञा ण्यन्तस्थल में भी हो जाने से "गतिबुद्धि०" सूत्र व्यर्थ होकर नियमार्थक होता है। अण्यन्तावस्था के कर्ता को णिच् उत्पन्न होने पर कर्मसंज्ञा यदि हो तो गत्यर्थक बुद्ध्यर्थक आदि के कर्त्ता को ही होती है इस नियम से पाचि धातु से घटित वाक्य में कर्मसंज्ञा नहीं हुई। गमिघटित वाक्य में कर्मसंज्ञा हो जाती है अतः एक स्थल में द्वितीया विभक्ति हुई अन्य स्थल में ( पाचयति घटित वाक्य में ) कृष्ण-पद से द्वितीया नहीं हुई।

'परसमवेतक्रियाजन्यधात्वर्थफलाश्रयत्व ही द्वितीया विभक्ति का नियामक है। कर्म-संज्ञा नहीं' इस पक्ष में भी पाचि के योग में कृष्ण से द्वितीया का प्रसङ्ग नहीं है क्योंकि "गतिबुद्धि" इस सूत्र से उपात्त गत्यर्थकादि धातु से अतिरिक्त णिजन्त धातु योग में तादृश कर्मत्व की विवक्षा नहीं होती ऐसी कल्पना करने से प्रकृत में आपत्ति नहीं है। विवक्षा ही विभक्ति में नियामक है। अतः दोषान्तर का उद्भावन किया गया है—

देवदत्तः तण्डुलं पचति इसमें पच् धातु का विक्लित्ति और व्यापार दोनों अर्थ हैं। इसमें विक्लित्ति ( अवयव शैथिल्य ) फल है इसका आश्रय तण्डुल कर्म है। इसका अनुकूल ( जनक ) व्यापार अधिश्रयण करना अदि पुरुष में है। अधिश्रयण=तण्डुलयुक्त पात्र का चूल्हा पर स्थापन करना है। स्थापन स्थिति के अनुकल व्यापार को कहते हैं। स्थिति के अनुकूल व्यापार पुरुषचेष्टा विशेष है। तादृश चेष्टाविशेष से युक्त पुरुष कर्ता है क्योंकि वह स्वतन्त्र है। "स्वातन्त्र्यं प्राधान्यम्" = स्वातन्त्र्य प्रधानता है ऐसा महाभाष्य में लिखा है।

अर्थात् जिसके व्यापार को धातुवाच्यत्वरूप से विवक्षित किया जाता है उसी व्यापार के आश्रय को कर्ता कहते हैं। सभी कारक अपने अपने अवान्तर व्यापार के द्वारा प्रधान क्रिया ( कर्तृव्यापार ) के निष्पादक होने से ही उन सबों में क्रियाजनकत्वरूप कारकत्व की उपपत्ति होती है। सौकर्य के अतिशय की विवक्षा से कर्ता के व्यापार को अविवक्षित कर तण्डुलादिकर्मनिष्ठ व्यापार को ही विक्लित्त्यादि फलानुकूलत्व से विव-क्षित करते हैं और उसी को प्रकृतधातु का वाच्य भी मानते हैं तब वहाँ कर्म ही कर्ता हो जाता है।

शङ्काः—कर्मगतव्यापार पुरुष व्यापार के अधीन होने से तण्डुलादि कर्म स्वतन्त्र न होने के कारण कर्त्ता कैसे होगा ?

समाधानः—कर्म भी अपने व्यापार में स्वतन्त्र है। अर्थात् कर्मनिष्ठ व्यापार ही धातुवाच्य होने से उसी की प्रधानता और तद्रूप स्वातन्त्र्य है। इस प्रकार कर्म तण्डुल को कर्तृत्व विवक्षा करने में "तण्डुलः पच्यते" ऐसा प्रयोग होता है। कर्मसंज्ञा को नियामक नहीं मानने पर तण्डुल ( द्वितीया प्रकृत्यर्थ ) से भिन्न काष्ठवृत्ति अग्निसंयोग-क्रियाजन्यफलाश्रय तण्डुल से भी द्वितीया का प्रसङ्ग होगा। कर्मसंज्ञा होने पर ही द्वितीया विभक्ति है ऐसा मानने पर कर्मनिष्ठधात्वर्थव्यापार तण्डुल कर्म में होने से कर्तृ-संज्ञा से कर्मसंज्ञा का बाध हो जाता है अतः द्वितीया विभक्ति नहीं होती है। अग्नि-संयोग भी पच् धातु का अर्थ है।

यदि कहें कि न्यायमत में ऐसा दोष नहीं हो सकता है। फल को ही व्यापार रूप से धातु का वाच्य मानते हैं। अथवा विक्लित्त्यनुकूल व्यापार जो कर्ममात्र में भी है इसी को धात्वर्थ माना गया है इन दोनों पक्षों में फल धात्वर्थ होने पर भी धात्वार्थतावच्छेदक नहीं है क्योंकि फलावच्छिन्नव्यापार में शक्ति नहीं है। अतः तादृश कर्मत्व नहीं है। अतः दोषान्तर का उपन्यास है।

द्वितीया प्रकृत्यर्थ का परत्व में परसमवेतत्व का धात्वर्थ क्रिया में और धात्वर्थताव-च्छेदक का फल में इस प्रकार इष्ट अन्वय लाभ के लिए कई कार्यकारणभाव की कल्पना करनी होगी अतः गौरवदोष से पराहत न्यायमत ग्राह्य नहीं हैं।

कल्पनीय कार्यकारणभाव का स्वरूप यह है—द्वितीया प्रकृत्यर्थनिष्ठप्रकारतानि-रूपितविशेष्यता सम्बन्ध से परसमवेतत्वोपस्थिति कारण हैं। परसमवेतत्वनिष्ठ-प्रकार-तानिरूपितविशेष्यता सम्बन्ध से परसमवेतत्वविषयक शाब्दबोध में विशेष्यता सम्बन्ध से क्रियात्वावच्छिन्न क्रिया की उपस्थिति कारण हैं। इसी प्रकार धात्वर्थतावच्छेदकत्व-निष्ठप्रकारतानिरूपित-विशेष्यतासम्बन्ध से धातुजन्यफलविषयक उपस्थिति कारण है। वैयाकरणों के मत में फलप्रकारक शाब्दबोध में द्वितीयाप्रकृत्यर्थवृत्तित्व से विशिष्ट धातु-जन्य व्यापार की उपस्थिति कारण है इत्यादि अन्यत्र विस्तृत है। अतः वैयाकरण पक्ष में लाघव स्पष्ट है।

एतञ्च सप्तविधम्—

निर्वर्त्त्यञ्च विकार्य्यञ्च प्राप्यञ्चेति त्रिधा मतम्।
वा० साध० तृ० का ४५
तच्चेप्सिततमं कर्म्म चतुर्द्धान्यत्तु कल्पितम्॥
औदासीन्येन यत् प्राप्यं यच्च कर्त्तुरनीप्सितम्।
संज्ञान्तरैरनाख्यातं यच्चाप्यन्यपूर्वकम्॥ ४६

इति वाक्यपदीयात्।

यदसज्जायते सद्वा जन्मना यत्प्रकाशते। साध० ३ का० ४९
तन्निर्वर्त्यं विकार्यं तु द्वेधा कर्म्म व्यवस्थितम्॥
प्रकृत्युच्छेदसम्भूतं किञ्चित् काष्ठादिभस्मवत्। ३ का० ५०
किञ्चिद् गुणान्तरोत्पत्त्या सुवर्णादिविकारवत्॥
क्रियाकृतविशेषाणां सिद्धिर्यत्र न गम्यते। ३ का० ५१
दर्शनादनुमानाद्वा तत्प्राप्यमिति कथ्यते॥ इति च तत्रैवोक्तम्।

'घटं करोति' इत्याद्यम्। काष्ठं भस्म करोतीति, सुवर्णं कुण्डलं करोतीति, च द्वितीयम्। घटं पश्यतीति तृतीयम्। तृणं स्पृशतीत्युदासीनम्। विषं भुङ्क्ते इति द्वेष्यम्। गां दोग्धीति संज्ञान्तरैरनाख्यातम्। क्रूरमभि-क्रुद्ध्यतीत्यन्यपूर्वकम्॥



हरिकृतं कर्मविभागमाह—*तच्चेति*। क्रियाजन्यफलाऽश्रयरूपं कर्मत्यर्थः॥

*यदसज्जायत इति*। असत्कार्य्यवादमवलम्ब्य। सद्वेत्यादि सांख्यमतेन। प्रकाशत इत्यनन्तरं—

"प्रकृतेस्तु विवक्षायां विकार्य्यं कैश्चिदन्यथा।

तन्निर्वर्त्यम्" इत्येव वाक्यपदीयपाठः। अन्यथा सामान्यधर्मेण अलक्षितस्य विकार्य्यस्य विशेष्यरूपेण प्रदर्शनेऽर्थान्तरतापत्तेः। तदर्थस्तु—कैश्चित् प्रसिद्धैराचार्य्यैः प्रकृतिविवक्षायां निष्पाद्यं विकार्य्यमित्युच्यते। अन्यथा तदविवक्षायां तन्निष्पाद्यं निर्वर्त्यमिति तदर्थः। तत्र घटं करोतीत्यादौ सत्या अपि मृदादिप्रकृतेः परिणामित्वेनाविवक्षा। 'भस्म करोति' इत्यादौ त्वसत्या एव तस्यास्तत्त्वेन सा।

यद्यपि निर्वर्त्यते निष्पाद्यते इति व्युत्पत्त्या निर्वर्त्यत्वम्। तण्डुलानोदनं पचतीत्यादावोदनादौ विकार्य्यकर्म्मण्यप्यस्ति; तथापि प्रकृतिवाचकपदासमभिव्याहृतपदोपस्थाप्यत्वे सति निष्पाद्यत्वरूपपारिभाषिकनिर्वर्त्यत्वस्य विवक्षणान्न दोषः॥

तदुक्तम्—सती वा विद्यमाना वा प्रकृतिः परिणामिनी।
यस्य नाश्रीयते तस्य निर्वर्त्यत्वं प्रचक्षते॥ इति।

यस्य विकृतिकर्म्मणो नाश्रीयते—न प्रयुज्यते, न विवक्ष्यत इति यावत्। अन्यत्—उक्तार्थम्। *विकार्यं त्विति*। तल्लक्षणं तु प्रतीयमानप्रकृतिविकृतिभावकत्वे सति क्रियानिर्वाह्यविशिष्टासत्त्वोत्पत्त्यन्यतरफलवत्त्वम्। घटं करोतीत्यादिनिर्वर्त्ये क्रियानिर्वाह्योत्पत्तिमत्यपि प्रकृतिविकृतिभावाभानान्नातिप्रसङ्गः। प्रकृतिकर्मणस्तादृशविशिष्टासत्त्वाद् विकृतिकर्मणश्च तादृशोत्पत्त्याश्रयत्वाल्लक्षणसङ्गतिः। ईदृशस्थले फलद्वयप्रयोजकव्यापारार्थकत्वं धातोरावश्यकम्। उक्तञ्च भाष्ये—'द्व्यर्थः पचिः' इति। अन्यथैकफलैकव्यापारार्थकत्वस्याकर्मकेष्वपि सत्त्वाद् विशेषोपादानानर्थक्यप्रसङ्गात्॥

परे तु—"द्व्यर्थः पचिः" इति भाष्याद्, विक्लेदनं निर्वर्त्तनं च पचेरर्थः। 'तण्डुलानोदनं पचति'इत्यस्य तण्डुलान् विक्लेदयन्नोदनं निर्वर्त्तयतीति विवरणात्। तथाच प्रकृते तण्डुलाश्रयविक्लित्त्यनुकूलव्यापाराश्रयाश्रयक ओदनाश्रयकोत्पत्त्यनुकूलो व्यापार इति बोधः। एवं 'काष्ठं भस्म करोति' इत्यादावप्यूह्यमित्याहुः॥

तदसत्। भावनाप्रकारकबोधे हेतुत्वेन क्लृप्तायाः कृद्धात्वन्यतरजन्योपस्थितेर्विशेष्यतासम्बन्धेनाख्यातार्थेऽभावेन तादृशबोधासम्भवात्। एकयैव क्रियया फलद्वयोत्पत्तिसम्भवेन तद्वाक्यजन्यबोधस्य व्यापारद्वयविषयकत्वकल्पनानौचित्यादाख्यातशब्दान्निवृत्तभेदाया एव क्रियाया अवगमादिति रूपप्सूत्रीयकैयटाच्च। किञ्च पचेर्व्यापारद्वयार्थकत्वे नव्यमते क्रियायां द्वित्वाबाधेन द्विवचनापत्तिर्दुर्वारा।

वस्तुतस्तु विक्लेदनं विक्लित्तिर्निवर्त्तनमुत्पत्तिरेवोक्तपदयोर्भावल्युडन्तत्वात्। तथाच—फलद्वयाऽनुकूल एक एव व्यापारो धात्वर्थतया भाष्यकृत्सम्मतः। व्यापारद्वयार्थकत्वोक्तिस्तु केषाञ्चित् तत्पदयोर्णिजन्तप्रकृतिकल्युडन्तत्वभ्रमनिबन्धनैवेत्यवधेयम्। यद्यपि निर्वर्त्यं द्वेधा प्रकृतिर्विकृतिश्चेत्येव वक्तुमुचितम्, तथापि

विकृतिद्वैविध्येऽवगते प्रकृतावपि विकार्यत्वं ज्ञातप्रायं भवतीत्याशयेन तदनुक्त्वैव विकृतिकर्म विभजते—*प्रकृत्युच्छेदेति*। एतेन क्रियानिर्वाह्योऽभावः प्रतियोगिताऽवच्छेदकधर्मवत्वं प्रकृतिकर्मत्वमिति ध्वनितम्।

'काशान् कटं करोति, कुसुमानि स्रजं करोति, सुवर्णं कुण्डलं करोति, मृदं घटं करोति, काष्ठं भस्म करोति, तण्डुलानोदनं पचति'इत्यादौ क्रियानिर्वाह्यो यः पूर्वभावविशिष्टकाष्ठाकाशादिप्रतियोगिकाभावो विशिष्टाऽसत्त्वरूपस्तत्प्रतियोगितावच्छेदकवैशिष्ट्यवत्वं काशकाष्ठादेरिति तत्तत्प्रकृतौ लक्षणसङ्गतिः। सर्वत्र विशिष्टाभावप्रतियोगिनि तादृशप्रतियोगितावच्छेदकवैशिष्ट्यसत्त्वादतिप्रसङ्गवारणाय क्रियानिर्वाह्येति प्रकृतधात्वर्थव्यापारनिर्वाह्यार्थकम्। क्वचित् काष्ठतण्डुलादिधर्मिनाशादेव विशिष्टाऽभावो भस्मौदनादिसम्पादकः। क्वचिद्धर्मिणः सत्त्वेऽपि कटस्रगादिसन्दर्भविशेषविरहरूपपूर्वभावविशिष्टाऽसत्त्वं कटसन्दर्भादिनिष्पादकं क्रियातो निर्वहति॥

*सम्भूतमिति*। प्रकृतिनाशप्रयोज्योत्पत्तिमदित्यर्थः। इदं च भस्मवदित्यन्वयि। काष्ठादीति पृथक् पदम्, अन्यथा काष्ठसुवर्णादेस्तुरीयतापत्तेः॥ *भस्मवदिति*। तत्तौल्येन वर्त्तमानमन्यदपि विकारजातमित्यर्थः। सादृश्यं च प्रकृतिनाशप्रयोज्योत्पत्तिमत्त्वेनैव। एवमग्रेऽपि। तथाच प्रकृतिविकृतिभावापन्नकाष्ठभस्मादिविकार्य्यमित्यर्थः पर्य्यवस्यति। एवञ्च—'काष्ठं भस्म करोति'इत्यत्र करोतेः प्रतियोगित्वविशिष्टनाश उत्पत्तिश्च फलद्वयम्, तदनुकूलव्यापारश्चाऽर्थः। नाशे प्रतियोगितया काष्ठस्योत्पत्तौ भस्मन आधेयतया काष्ठप्रतियोगिकनाशानुकूलो भस्मोत्पादको वर्त्तमानो व्यापार इति बोधः। एवं तण्डुलानोदनं पचतीत्यादावपि।

नैयायिकास्तु—'तण्डुलानोदनं पचति'इति विकार्य्यस्थले प्रकृतिकर्मोत्तरद्वितोयाया नाशकत्वमर्थः। विकृतिकर्मोत्तरद्वितीयायाश्चोत्पादकत्वम्। तण्डुलाद्यन्वितं नाशकत्वं च पाकेऽन्वेति। ओदनाऽन्वितोत्पादकत्वस्य नाशकत्वविशिष्टे पाकेऽन्वयः। नाशे चोत्पत्तेः प्रयोजकत्वमुद्देश्यविधेयभावमहिम्ना भासते। तेन पाकस्य तण्डुलारम्भकसंयोगनाशकत्वेऽपि 'संयोगमोदनं पचति'इति न प्रयोगः। तण्डुलारम्भकसंयोगनाशस्यौदनोत्पत्तौ तण्डुलनाशेनाऽन्यथासिद्धतया अप्रयोजकत्वात्।

वस्तुतस्तु विकृतिकर्माऽसमभिव्याहृते, 'तण्डुलं पचति'इतिवत् संयोगं पचतीति प्रयोगवारणाय नाशद्वारा नाशकत्वमेव द्वितीयाऽर्थो वाच्य इति प्रकृते प्रयोज्यप्रयोजकभावाऽभानेऽपि न क्षतिः। तथाच तण्डुलनाशक ओदनोत्पादको यो व्यापारस्तदनुकूलकृतिमानिति बोधः।

ईदृशस्थले च कर्माख्यातेन प्रकृतेः कर्मत्वमेवाऽभिधीयते। अत एव काष्ठानि भस्मराशिः क्रियन्ते इत्यादौ काष्ठपदसमानवचनत्वमाख्यतस्य, न तु भस्मादिविकारवाचकपदसमानवचनत्वम्। भावनाऽन्वयिनि संख्यान्वयनियमात्।

ननु प्रधानाऽप्रधानकर्मवाचककर्मपदसमभिव्याहृत—नी—वहादि—दुहादिप्रकृतिककर्माख्यातस्यैवा प्रधाने दुहादीनां प्रधाने नीहृकृष्वहाम्'इत्यनुशासनात् कर्मत्वद्वयाऽ-

नभिधायकत्वाऽनियमेन प्रकृते कर्मत्वद्वयस्यैव तुल्यतया विकृतिगतकर्मत्वस्यापि लकारेणाभिधाने बाधकाभावः । आख्यातस्य विकृतिसमानवचनत्वप्रसङ्गस्तु—

"गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्न हि" ।

इत्यनुशासनसिद्धविकृतिसंख्यान्वयबुद्धिं प्रति प्रकृतिसंख्यान्वयपरत्वेनाऽगृह्यमाणाख्यातजन्योपस्थितेर्हेतुत्वकल्पनया निरसनीयः । कथमन्यथा "भस्मीभवन्ति काष्ठानि" इत्यादिप्रयोगा इति चेद् ? न ।

'घटपटौ दृश्येते' इत्यत्र द्वित्वस्यैवोभयसाधारणविशेष्यतावच्छेदकाऽपरिचयेन विकारविकारिणोर्द्वयोरेवाख्याताऽर्थविशेष्यत्वे वा वाक्यभेदापत्तेः । न चेष्टाऽपत्तिः । तथा सति 'काष्ठं नाश्यते भस्म क्रियत' इति वाक्यजबोधस्येव 'काष्ठं भस्म क्रियत' इति वाक्यजबोधस्यापि भस्म काष्ठविकृतिरन्यविकृतिर्वेतिसंशयनिवर्त्तकत्वानुपपत्तेः । समूहालम्बनजनकत्वाविशेषेण काष्ठभस्मनोः प्रकृतिविकृतिभावस्योक्तवाक्यादलाभात् । सत्यामेवैकवाक्यतायां कर्तृप्रत्यये प्रयोज्यप्रयोजकभावस्य विशिष्टाऽन्वयविवक्षानियमेन लाभ इव कर्मप्रत्ययस्थलेऽपि तथा विवक्षाया नियमवशादेव कर्माऽऽत्मनेपदेन भस्मनि काष्ठोच्छेदप्रयोज्योत्पत्तिकत्वरूपकाष्ठविकृतित्वस्य लाभात् ।

न च विकृतिवाचकाद् द्वितीयापत्तिः । लकारेण विकृतिकर्मत्वस्यानभिधानेऽपि कर्मत्वान्तरविशेषणतापन्नक्रियायां तस्य विकृत्यर्थसंसर्गत्वाऽभ्युपगमेनैव द्वितीयापत्त्यसम्भवात् । प्रातिपदिकार्थविशेष्यतया कर्मत्वादिविवक्षायामेव द्वितीयाद्यवसरात् ॥

न चैवं घटः करोतीत्यापत्तिः । कर्मत्वान्तरविशेषणतानापन्नक्रियायां क्रियान्तरकर्त्तृत्वविशेष्यतापन्नाऽर्थकस्यैव कर्मतासंसर्गेण भानाभ्युपगमात् । अत एव काष्ठं भस्मराशिः करोति' इति न प्रयोगः । भस्मराशेः क्रियान्तरकर्त्तृत्वविशेष्यतानापन्नत्वात् । उपपद्यते च 'पश्य मृगो धावति' इत्यादिः ।

प्रकृते च 'नीलो घटो भवति'इत्यादावसाधारणधर्मरूपभवने नीलादेराधेयत्वरूपकर्त्तृतासम्बन्धेनाऽन्वयवद् व्युत्पत्तिवैचित्र्येण प्रकृतिकर्मत्वविशेषणतापन्नायां कृधात्वर्थंकृतौ भस्मादिरूपविकृतिकर्मणः कर्मतासम्बन्धेनान्वयोपगमेन एकवाक्यत्वोपपत्त्योक्तसंशयनिवर्त्तकत्वोपपत्तेः । तथाचोत्पादकत्वेन भस्मसम्बन्धिकृतिप्रयोज्यनाशप्रतियोगीनि काष्ठानीति 'काष्ठं भस्मराशिः क्रियत' इति वाक्यजो बोधः । सम्बन्धस्य प्रातिपदिकार्थविशेष्यतया अविवक्षणादेव न तत्र षष्ठ्यपि ।

एवम्–"मृदो न घटो ने"त्यत्रापि प्रकृतिविकृतिभावस्थले कर्मत्वान्तरविशेषणतानापन्नधात्वर्थान्विय्यर्थबोधने द्वितीयायाः साधुत्वमितिनियमोपगमे नोक्तस्थले द्वितीयाप्रसङ्गो, नापि 'दुह्यते गोः क्षीरम्' इत्यादौ तदनुपपत्तिः । एवमेकत्वावच्छिन्ने द्वित्वावच्छिन्नारोपस्थलेऽप्येको द्वौ ज्ञायते इत्यादौ आरोप्यविशेष्यवाचकसमानवचनत्वमाख्यातस्य । 'प्रयुञ्जते च कवयः–"एकोऽपि त्रय इव भाति कन्दुकोऽयम्" इति । न च तत्राऽपि भान्तोत्येव पाठः, कथमन्यथा—

"अमानि तत्तेन निजायशोयुगं द्विफालबद्धाश्चिकुराश्शिरःस्थितम्" ।

इत्यत्राऽऽरोप्यनिजायशोयुगसमानवचनममानीत्याख्यातं प्रयुक्तं श्रीहर्षेणेति वाच्यम् । तत्रापि पूर्वार्द्धसमर्थितायशोयुगस्य वास्तवत्वेन तस्मिन् फालद्वयबद्धचिकुराणामेव राज्ञ आरोप्यत्वेन कवेरुत्प्रेक्षितत्वात् । अत एव न तत्राविमृष्टविधेयांशतादोषावकाश इत्याहुः ।

अत्र केचित्—"पुनरावृत्तः सुवर्णपिण्डः पुनरपरयाऽऽकृत्या युक्तः खदिराङ्गारसवर्णे कुण्डले भवतः" इति महाभाष्यप्रयोगादाख्यातस्य विकृतिसमानवचनत्वमेव ।

गृह्णाति वाचकः संख्यां प्रकृतेर्विकृतेर्नहि ।

इति तु च्विप्रत्ययमात्रविषयकम् । एवञ्च 'काष्ठानि भस्म राशिः क्रियन्त' इत्यादिप्रयोगाणामसाधुत्वमेवेति ॥

अपरे तु—'खदिराङ्गारसवर्णे' इति विशेषणेन तत्र कुण्डलयोः प्रकृतित्वं गम्यते । सिद्धाया विकृतेः पाकानपेक्षणात् । पुनरपरयाऽऽकृत्या युक्त इति विशेषणेन तु सुवर्णपिण्डस्य विकृतित्वम्, आकृत्यन्तरयोगस्य प्रकृतित्वाप्रयोजकत्वात् । युज्यते चैतत् । "मृत्तिकेत्येव सत्यम्" इतिवत् संहृतिमुखेन पुनरावृत्त इति विशेषणेनापि सुवर्णपिण्डस्य विकृतित्वं गम्यते ।

तथाहि—पूर्वोपक्रान्ताऽऽकृतिपरम्परायास्तत्पर्य्यवसायित्वेन सिषाधयिषितसुवर्णनित्यत्वस्य सिद्धेः । तस्मात् पूर्वनिर्द्दिष्टाऽऽकृतिविशिष्टसुवर्णस्य कुण्डलादिप्रकृतेरप्यनिर्द्दिष्टाऽप्रकृतिविशिष्टस्य तस्य विकृतित्वमेव भाष्यकृत्तात्पर्यविषय इत्यस्यापि वक्तुं शक्यतया न तन्निर्देश आख्यातस्य विकृतिसमानवचनत्वे उपष्टम्भक इति ।

अत्रेदमाभाति—वैयाकरणमते प्रकृते प्रकृतिविकृत्योर्द्वयोरपि कर्त्तृत्वेनाख्यातेन कर्त्तृद्वयमेव अभिधानीयम् । एवं तद्गतसंख्याऽपि । तत्रैकेनाख्यातेन विरुद्धसंख्यावतोस्तयोः संख्याया अभिधातुमशक्यतया भगवता, कुण्डले भवत इति विकृतिसंख्यैवोक्ता, न तु प्रकृतिगता नाख्यातप्रतिपाद्येति मुनित्रयस्याऽऽज्ञाऽस्ति । एवञ्च प्रयोगवशेन पर्य्यायेणाऽन्यतरसमानवचनत्वमाख्यातस्य निराबाधमिति ॥

*क्रियाकृतेति* । क्रियाप्रयोज्याऽसाधारणधर्मप्रकारकप्रतीतिविषयताऽनाश्रयत्वे सति फलाश्रयत्वम् । निर्वर्त्यादावतिव्याप्तिवारणाय सत्यन्तम् । तत्रापि विषयतानाश्रयत्वस्य धर्मप्रकारकप्रतीतिविषयतानाश्रयत्वस्याऽसाधारणधर्मघटितस्य वा तस्य 'घटं जानाति' इत्यादौ घटादावसम्भव इति प्रयोज्यान्तं धर्मविशेषणम् । तत्रैव क्रियाप्रयोज्यासाधारणधर्मसंयोगप्रतीतिविषये ग्रामादिकर्मण्यव्याप्तिनिरासाय असाधारणेति । क्रियाजन्यफलानाश्रये अतिप्रसक्तिनिरासाय—विशेष्यम् ।

न च घटं जानाति'इत्यादौ क्रियाजन्यफलाभावात् सामान्यलक्षणस्याऽव्याप्तिः । तद्वारणाय तत्राऽऽवरणभङ्गाभ्युपगमे तु तस्यैव क्रियाप्रयोज्याऽसाधारणधर्मतयाऽयं घट एतेन ज्ञात एतद्व्यवहारविषयत्वादित्यनुमानजन्यप्रमाविषयत्वेन सत्यन्ताभावाद्विशेषलक्षणाऽव्याप्तिरिति वाच्यम् । कर्त्तृभिन्नत्वे सति कर्त्तृकर्मोभयसाधारणक्रियाजन्य-

फलाश्रयत्वे उक्तलक्षणवाक्यतात्पर्य्याद्विषयताज्ञानरूपफलाश्रयत्वाच्च न सामान्यलक्षणाऽव्याप्तिरावणभङ्गफलमादाय जानात्यादिकर्म्मणि लक्षणसङ्गमनेऽपीच्छत्यादिकर्मण्यव्याप्तिवारणायोक्तरीतेरेवानुसर्तव्यत्वादिति ।
एवमग्रेऽपि ।

निर्द्देशक्रमेणोदाहरणान्याह—*घटमिति* । *आद्यमिति* । निर्वर्त्यमित्यर्थः ।

*संज्ञान्तरैरनाख्यातमिति* । अपादानत्वादितत्तद्रूपविशेषैरविवक्षितमित्यर्थः । "अकथितञ्च" इत्यत्राऽकथितशब्दोऽविवक्षितपरो, नत्वप्रधानपरः । तथा सति 'पाणिना कांस्यपात्र्यां दोग्धि' इत्यत्र करणाधिकरणयोः कर्मसंज्ञा प्रसज्ज्येतेति । दुहादीनां परिगणनात् तत्संज्ञयोः करोत्यादियोगे सावकाशत्वादिति भावः । तथाच पूर्वविधिप्रसक्तिपूर्वकं तदविवक्षायां सर्वथा पूर्वविधेरप्रसक्तौ च तत्प्रवृत्तिरिति बोध्यम् । यद्यपि विभागानुकूलव्यापारानुकूलव्यापारस्यापि दुह्यर्थत्वेन "कर्त्तुरीप्सिततमम्" इत्यनेनैव कर्मसंज्ञा सिद्ध्यति । कर्तृनिष्ठव्यापाराविशेषणफलाश्रयतया गोः प्रधानकर्मतया न तत्र लाद्यनुपपत्तिः । पयोनिष्ठविभागानुकूलगोनिष्ठव्यापारानुकूलव्यापारस्य शब्दतः प्राधान्याद्, अन्यथासिद्धप्रयोजनकमेतत्सूत्रमित्याभाति, तथापि विभागानुकूलव्यापार एव यदि धात्वर्थस्तदा अपादानत्वाद्यविवक्षायामन्यसूत्राप्राप्तकर्मत्वार्थमिदभावश्यकम् । एतस्मिन्नर्थे "त्वप्रधाने दुहादीनामि"त्यनुशासनाद्गवावेव लादयः ।

अप्रधानकर्मत्वं चोक्तकर्मभिन्नत्वम् । तच्चोक्ताऽर्थे गवादीनामक्षतम् धात्वर्थफलानाश्रयत्वात् । तथाचैतत्कल्पे अन्तःस्थितद्रवद्रव्यनिष्ठविभागानुकूलव्यापारो दुहेरर्थः । तत्र गोरपादानत्वाऽविवक्षायामनेन कर्मत्वम् । तद्विवक्षायां पञ्चमी । गोः पयस्यन्वये तु षष्ठी । एवञ्च गोकर्मकपयोनिष्ठविभागानुकूल एककर्तृको व्यापार इति बोधः । विभागावधित्वमेव गोः कर्मत्वम् । आद्यकल्पे तु पयोनिष्ठविभागाकूलगोनिष्ठव्यापाराऽनुकूल एककर्त्तृको वर्त्तमानो व्यापार इति । तत्र विभागाश्रयत्वात् पयसः कर्मता । तदनुकूलव्यापाराश्रयत्वात्तु गोः, न तु विभागाश्रयत्वेन पयोनिष्ठविभागीयसम्बन्धस्यैव फलतावच्छेदत्वादेवमन्यत्राप्यूह्यम् ।

*अन्यपूर्वकमिति* । अन्यसंज्ञाबाधनपूर्वं शास्त्रबोधितमित्यर्थः । 'क्रूरमभिक्रुध्यति' इत्यत्र "क्रुधद्रुहेर्ष्या" इतिप्रसक्तसम्प्रदानसंज्ञायाः "क्रुधद्रुहोरुपसृष्टयोः कर्म" ( पा० सू० १।४।३८ ) इति बोधनात् । एवं 'वैकुण्ठमधिशेते' इत्यादावपि बोध्यम् । 'अजां ग्रामं गमयति, 'शिष्यं शास्त्रं बोधयति' ब्राह्मणमन्नं भोजयति' 'यजमानं मन्त्रं पाठयति,' 'घटं जनयति' नाशयति' इत्यादौ "गतिबुद्धि" इति सूत्रेण गम्यादिधात्वर्थकर्तुः कर्मसंज्ञाविधानात् गम्यादिप्रकृतिकणिजन्तधातुसमभिव्याहृतद्वितीयाया अप्याश्रयोऽर्थः । यद्यपि णिजन्तधात्वर्थप्रेरणाजन्यव्यापाररूपफलाश्रयत्वादजादीनामपि कर्मत्वं "कर्त्तुरीप्सिततमम्" इत्यनेनैव सिद्धं, तथापि णिजन्तेन आप्यमानस्य

चेद्भवति गत्याद्यर्थव्यापाराश्रयस्यैवेति नियमार्थं सूत्रम्। तेन 'पाचयत्योदनं देवदत्तेन' इत्यादौ न। तदुक्तम्—

गुणक्रियायां स्वातन्त्र्यात् प्रेषणे कर्मतां गतः। ( वाक्य० साधनसमु० १२७ )
नियमात् कर्मसंज्ञायाः स्वधर्मेणाभिधीयते। इति।

वाचकतासम्बन्धेन स्वनिष्ठया तृतीययेत्यर्थात्। यद्यपि कर्तृसंज्ञायाः परत्वात् "हेतुमति च" इत्यनुशासनात् स्वकारकविशिष्टक्रियायां णिजर्थसम्बन्धाऽवगतेरन्तरङ्गत्वाच्च कर्मसंज्ञायास्तया बाध एवोचितस्तथाप्यन्यानधीनत्वलक्षणाऽर्थप्राधान्यशाब्दप्राधान्ययोः प्रयोजकव्यापारे सत्त्वेन प्रधानकार्य्यस्य च सर्वतो बलवत्त्वस्य "आकडार' ( पा० सू० १।४।१ ) सूत्रे कैयटेनोक्तत्वात् "हेतुमति च" इतिसूत्रस्थभाष्यप्रामाण्याच्च तदनुरोधिकर्मत्वस्याऽन्तरङ्गादपि कर्तृत्वाद् बलवत्त्वात् नियमत्वमेव साम्प्रतम्।

परे तु—"हेतुमति च" इत्यनुशासनादन्यनिष्ठकर्तृत्वनिर्वाहकव्यापाररूपा स्वतन्त्रप्रेरणा णिजर्थः। कर्तृत्वं च क्वचित् प्रयत्नः, क्वचिदाश्रयत्वादि। येन यादृशधातूत्तराख्यातेन यादृशं कर्तृत्वमभिधीयते; तादृशधातूत्तरणिच्प्रत्ययेन तादृशकर्तृत्वनिर्वाहको व्यापारोऽभिधीयते। निर्वाहकत्वं च स्वरूपसम्बन्धविशेषो, नाऽतो "नाशयती"=त्यादावन्वयाऽनुपपत्तिः।

एवञ्च पाकादिकर्तुस्तत्कर्मत्वविरहेऽपि ण्यन्तधातुप्रतिपाद्यताऽवच्छेदककर्तृत्वस्य फलत्वेन तदाश्रयत्वात् पाकादिकर्तुः कर्मत्वं, तादृशकर्तृत्वविशेषणतया सहायादिरूप=स्वतन्त्रकर्तृवृत्तित्वविवक्षायां पाचयत्योदनं सहायमित्यपि प्रयोगः साधुरेव। अत एव "अजिग्रहत्तं जनको धनुस्तद्" इति भट्टिप्रयोगः स्वरसतः सङ्गच्छते। ग्रहेर्ज्ञानलाक्षणिकतया तदुपपादनं त्वगतिकगतिः। यदा तु णिच्प्रकृत्यर्थव्यापारे स्वतन्त्रकर्तृवृत्तित्वस्य विशेषणतया विवक्षा; तदा सहायेनेत्येव। "गतिबुद्धि" इति सूत्रं गत्याद्यर्थकधातुयोगे तादृशकर्तृत्वविशेषणतया स्वतन्त्रकर्तृवृत्तित्वविवक्षा नियता, नाऽन्यत्रेत्यर्थबोधनद्वारा तत्र कर्तृप्रत्ययाऽसाधुत्वज्ञापकम्। तेन 'पाचयत्योदनं सहायेन' इतिवद् 'अजया ग्रामं गमयति' इति न।

एवञ्च 'अजां ग्रामं गमयति' इत्यत्र ग्रामनिष्ठसंयोगाऽनुकूलव्यापारस्य यदजानिष्ठं कर्तृत्वं निर्वाहकत्वसम्बन्धेन तद्विशिष्टो यो व्यापारस्तदनुकूलकृतिमानितिबोधः। 'पाचयत्योदनं सहायेन' इत्यत्र सहायकर्तृको यो विक्लित्त्यनुकूलो व्यापारो, निर्वाहकत्वसम्बन्धेन तत्कर्तृत्वसम्बन्धेन तत्कर्तृत्वविशिष्टव्यापारानुकूलकृतिमानिति बोधः।

'चैत्रेण ग्रामं गम्यतेऽजा' इत्यत्र कर्माख्याते तु तादृशव्यापारनिर्वाह्यकर्तृकव्यापारनिर्वाह्यकर्तृत्वनिरूपकं यद् ग्रामवृत्तिसंयोगानुकूलं गमनं तत्कर्त्र्यजेति बोधः। 'सहायेन पाच्यते तण्डुलश्चैत्रेण' इत्यत्र तु चैत्रकर्तृकप्रेरणानिर्वाह्यकर्तृत्वनिरूपको यः सहायरूपस्वतन्त्रकर्तृवृत्तिव्यापारस्तज्जन्यविक्लित्त्याश्रयस्तण्डुल इति बोधः। अर्थविवेकः स्वयमूह्यः।

ये त्वनुकुलव्यापार एव णिजर्थस्तदन्वयिनी गमनादिक्रियैव धात्वर्थतावच्छेदकं फलं, तच्छालितयाऽजादीनां प्राप्तमेव कर्मत्वं "गतिबुद्धि" (पा० सू० १।४।५२) इति सूत्रेण नियम्यत इति वदन्ति। तेषां मते 'पाचयत्योदनं सहायेन'इत्यादौ द्वितीयातृतीययोर्नियामकालाभः। अधिकमन्यत्राऽनुसन्धेयमित्याहुः।

'वैकुण्ठमधितिष्ठति'इत्यादावपि द्वितीयाया आधार एवाऽर्थः। अध्याद्युपसृष्टशीङादियोगे "अधिशीङ्" (पा० सू० १।४।४५) इत्यादिसूत्रैराधारस्य कर्मसञ्ज्ञाविधानात्। यद्यपि कृत्रर्थव्यापारान्तर्भावेणाऽध्याद्युपसृष्टशीङादीनां लक्षणामुपगम्य "कर्त्तुरीप्सिततमम्"इत्यनेनैव कर्मसञ्ज्ञा सुसाधा, तथापि मुख्यार्थकतद्योगेऽपि कर्मप्रत्ययसाधुत्वबोधनार्थमपि "अधिशीङ्स्थासाम्" इत्यादिसूत्राणामप्यावश्यकतेति। कर्मप्रवचनीययोगविहितविभक्तेस्तु यथायथं लक्ष्यलक्षणभावादिः सम्बन्धो द्योत्य इति वक्ष्यते।

उपपदविभक्तीनां तु षष्ठ्यपवादकत्वात् सम्बन्ध एवार्थः। "कालाऽध्वनोरत्यन्तसंयोगे" (पा० सू० २।३।५) इति विहितद्वितीयाया व्यापकत्वमर्थः। 'मासमधीत' इत्यादौ मासव्यापकाऽध्ययनमिति बोधात्। द्वितीयादीनामाश्रयोर्थ इत्यत्र विभक्तिपदस्य कारकविभक्तिपरत्वेन तदविरोधादित्यन्यत्र विस्तर।

अर्थ-कर्म के सात भेद हैं—निर्वर्त्य, विकार्य और प्राप्य के भेद से ईप्सिततम कर्म तीन प्रकार का है। ईप्सिततम से भिन्न कर्मका चार भेद है—इष्ट और द्वेष्य से भिन्न अर्थात् औदासीन्य से जो प्राप्य है, इच्छोद्देश्य से भिन्न अर्थात् द्वेष्य, अपादानादि संज्ञा से अविवक्षित तथा अन्य संज्ञापूर्वक इस प्रकार इसके चार भेद हैं। यह भेद निर्देश वाक्यपदीय से लिया गया है।

जो पहले नहीं रहता बाद में कारण व्यापार से उत्पन्न होता है या सूक्ष्मरूप से अवस्थित कारण से अभिव्यक्त होता है उसको निर्वर्त्य कर्म कहते हैं। विकार्य कर्म के दो भेद हैं।

प्रकृतिभूतस्वरूप के उच्छेद = विनाश से सम्भूत = प्राप्त अर्थात् प्रकृतिनाश से उत्पन्न, यह एक भेद है। उदाहरण "काष्ठं भस्म करोति" = काष्ठ को भस्म करते हैं। काष्ठ के उच्छेद से भस्म उत्पन्न हुआ अतः यह विकार्य का प्रथम भेद है। द्वितीय भेद—गुणान्तर की उत्पत्ति से होता है। जैसे "सुवर्णं कुण्डलं करोति" = सुवर्ण को कुण्डल बनाते हैं। यहाँ सुवर्ण में गुणान्तर आकारविशेष की उत्पत्ति से तात्पर्य है। पूर्वकाल की अवयव रचना से विलक्षण अवयवरचना से युक्तता। कुण्डल में पूर्वरचना से विलक्षण रचना होने से लक्षण सङ्गति है।

क्रियाकृतविशेषाणाम्—क्रिया = व्यापार द्वारा उत्पन्न किसी असाधारणधर्म के ज्ञान की विषयता का अनाश्रय जो फलाश्रय है वही प्राप्य कर्म है। अर्थात् क्रिया के द्वारा जहाँ किसी असाधारण धर्म का ज्ञान नहीं होता है और फलाश्रय है वहाँ प्राप्य कर्म है। क्रिया का ज्ञान देखने पर अनुमान से ही लगाया जाता है। क्रिया के द्वारा उत्पन्न किसी धर्म की सिद्धि से नहीं यह भाव है।

घट बनाते हैं यह निर्वर्त्य कर्म का उदाहरण है। काष्ठ को भस्म करते हैं। यह विकार्य का उदाहरण है। घर को देखते हैं यह प्राप्य कर्म का उदाहरण है। तृण का स्पर्श करते हैं

उदासीन कर्म का और विष खाते हैं यह द्वेष्य कर्म का उदाहरण है। अपादानादि संज्ञा से अविवक्षित का "गां दोग्धि पयः" उदाहरण है। एवं अन्य पूर्वक का "क्रूरमभिक्रुध्यति" यह उदाहरण है।

हिन्दी भाष्यः—कर्म सात प्रकार का है—निर्वर्त्य, विकार्य, प्राप्य, औदासीन्य से प्राप्य, द्वेष्य, अपादानादि से अविवक्षित और अन्य पूर्वक अर्थात् सूत्रान्तर प्राप्त संज्ञा का बाधपूर्वक शास्त्र से बोधित।

"प्रकृतेस्तु विवक्षायां विकार्यं कैश्चिदन्यथा" इस कारिका के बाद "विकार्यन्तु द्वेधा कर्म व्यवस्थितम्" इसका पाठ वाक्यपदीय में मिलता है। इसका यह अर्थ है कि किसी ने प्रकृति की विवक्षा में जो उत्पाद्य है उसको विकार्यकर्म कहा है। उसकी अविवक्षा में उत्पाद्य को निर्वर्त्य कहते हैं। मूल में इस कारिका का पाठ होना चाहिए था। अन्यथा विकार्य का सामान्य ज्ञान कराये विना विशेषरूप से भेद प्रदर्शन असङ्गत हो जायेगा। परिणामिनी प्रकृति के रहने पर भी शब्दतः परिणामित्वेन विवक्षा न होने पर निर्वर्त्य कर्म होता है। "घटं करोति" इत्यादि स्थल में मृत्तिका प्रकृति को परिणामी के रूप से विवक्षा नहीं करने पर यह निर्वर्त्य कर्म हुआ है।

विकार्य कर्म–प्रकृति-विकृति भाव की प्रतीति के साथ-साथ क्रिया से उत्पाद्य विशिष्ट का असत्त्व अथवा क्रिया से निर्वाह्य उत्पत्ति के आश्रय को कहते हैं। "घटं करोति" इसमें क्रियानिर्वाह्य उत्पत्ति रहने पर भी प्रकृति विकृति भाव की विवक्षा नहीं है, अतः विकार्य कर्म नहीं है। "काष्ठं भस्म करोति" इस स्थल में प्रकृति काष्ठ, विकृति भस्म है। काष्ठ में क्रियोत्पाद्य विशिष्ट का असत्त्व और भस्म में क्रियानिर्वाह्य उत्पत्ति है। अतः प्रकृति विकृति दोनों में विकार्य लक्षण की सङ्गति है।

इस प्रसङ्ग में प्रकृति-विकृति कर्म के उक्त अनुक्त की व्यवस्था तथा आख्यात का प्रकृति समान वचनकत्व का विचार करना अप्रासङ्गिक नहीं होगा।

शङ्काः—"देवदत्तः काष्ठानि भस्म करोति" = देवदत्त काष्ठों को भस्म करता है इस वाक्य में प्रकृति और विकृति दो कर्म हैं। इस वाक्य को कर्मवाच्य में परिणत करने पर देवदत्तेन काष्ठानि भस्म क्रियन्ते या क्रियते। इसके दो कर्म हैं। किस कर्म के अनुसार क्रिया में वचन की व्यवस्था होगी यह शङ्का स्वभावतः उत्पन्न होती है।

समाधानः—"गौणे कर्मणि दुह्यादेः" प्रधाने नीहृकृष्वहाम्" इसके द्वारा कारिका पठित धातुओं के कर्म के सम्बन्ध में प्रधान कर्म और कहीं अप्रधान कर्म के अभिधान का नियम किया गया है। परन्तु प्रकृति विकृति कर्म के विषय में ऐसा कोई नियम न होने से अविशेषात् दोनों कर्मों का अभिधान माना जायेगा।

क्रिया की विभक्ति "गृह्णाति वाचकः संख्यां प्रकृतेः विकृतेर्न हि" = वाचक अर्थात् आख्यात, प्रकृति (यह उद्देश्य का भी उपलक्षण है) की संख्या का ग्रहण करता विकृति की संख्या का ग्रहण नहीं करता है। इस प्रमाण से प्रकृति की संख्या के अनुरोध से काष्ठानि भस्म क्रियन्ते" ऐसा प्रयोग साधु होगा। अर्थात् प्रकृति संख्या के अन्वय तात्पर्य से अगृहीत आख्यात पद से उपस्थिति रहने पर विकृति संख्या का उस आख्यातार्थ में अन्वय होता है।[1] अतएव "भस्मी भवन्ति काष्ठानि" ऐसा प्रयोग

१. अन्यत्र नहीं। अर्थात् प्रकृति विकृति दोनों के उपादान रहने पर प्रकृत्यर्थ संख्या का ही आख्यातार्थ में अन्वय होता है ऐसा नियम है।

उपपन्न होता है। "जिज्ञासा इह पदतो वाक्यतश्च प्रधानं[1] विवक्षितव्या" ( भामती १ सूत्र ) इस प्रयोग के द्वारा भामतीकार की सम्मति भी उक्तार्थ में प्रतीत होती है।

किसी का मत है प्रकृति कर्म ही आख्यात से अभिहित ( उक्त ) होता है विकृति कर्म नहीं।

शङ्काः—ऐसी अवस्था में काष्ठानि भस्म राशिः क्रियन्ते यहाँ पर विकृति कर्म भस्म, राशि इससे द्वितीया विभक्ति होने लगेगी।

समाधान—कर्मत्वान्तर में विशेषणीभूत क्रिया में विकृति कर्म के अर्थ का अन्वय होने से द्वितीया की आपत्ति नहीं होगी। द्वितीया उसी स्थल में होती है जहाँ कर्मत्वान्तर विशेषणता से अयुक्त क्रिया रहती है। "घटं करोति" यहाँ कर्मत्वान्तर नहीं है।

कर्मत्वान्तरविशेषणतानापन्नधात्वर्थान्वयी अर्थ के बोध में द्वितीया विभक्ति होती है। यह भाव है। आरोपस्थल में आरोपविषय के समान आख्यात का वचन होता है। एकत्वावच्छिन्न में द्वित्वावच्छिन्न का आरोपस्थल जैसे "एको द्वौ ज्ञायते" यहाँ आरोपविषय के समान वचन आख्यात से होता है। अत एव "एकोऽपि त्रय, इव भाति कन्दुकोऽयम्" इसकी साधुता होती है।

शङ्का :—अमानि[2] तत्तेन निजायशोयुगं "द्विफालबद्धाश्चिकुराः शिरःस्थितम् ॥" ( सर्ग १ श्लोक १६ ) इस नैषधीय पद्य में "चिकुराः निजायशोयुगम् अमानि" ऐसा अन्वय विवक्षित है। "चिकुराः" इसके समान वचन क्रिया में होना चाहिए। पर वैसा नहीं किया इससे उक्त नियम के साथ इसका विरोध होता है।

समाधान :—"निजायशोयुगम्" इसको उद्देश्य कर "द्विफालबद्धाः चिकुराः" इसको विधेय मान लेने से पूर्वोक्त दोष नहीं होगा। अपने अयशोयुग में ही द्विफालबद्धचिकुर का आरोप होने से अयशोयुग के समान वचन आख्यात का प्रयोग ठीक ही है।

शङ्का :—"पुनरावृत्तः सुवर्णपिण्डः अपरयाकृत्या युक्तः खादिराङ्गारसवर्णे कुण्डले भवतः" इस महाभाष्य के साथ विरोध है। यहाँ प्रकृतिभूत सुवर्णपिण्ड के समान आख्यात का वचन होना था पर ऐसा नहीं किया।

समाधान :—यहाँ कुण्डल को ही प्रकृतित्वेन विवक्षा हैं सुवर्ण ही विकृति है। संहार क्रम से कुण्डल ही सुवर्ण के रूप में परिणत होता है। इस प्रकार भाष्य के साथ विरोध नहीं है।

दर्पणकार इस विषय का मन्थन कर इस निष्कर्ष पर पहुँचे हैं कि प्रकृति और

---

१. प्रधानशब्द नित्यनपुंसक होने से प्रधान का जिज्ञासा शब्द के अनुसार स्त्रीलिंग प्रयोग नहीं किया।

२. विभज्य मेरुर्न यदर्थिसात्कृतो न सिन्धुरुत्सर्गजलव्ययैर्मरुः।

( यह श्लोक का पूर्वार्ध है। )

इसका भाव यह है कि राजा सुमेरु पर्वत को खण्ड-खण्ड कर याचकों के अधीन नहीं कर दिया एवं दानजल से समुद्र को मरुस्थल नहीं बना दिया इस प्रकार शिरःस्थित अपनी द्विविध अपकीर्ति के रूप में दो भागों में विभक्त केशविन्यास ( जुल्फी ) को माना।

विकृति इनमें से किसी के समान वचन आख्यात [होता है। विवक्षा के अधीन प्रयोग होने से दोनों प्रकार का प्रयोग साधु हैं।

संज्ञान्तर से अनाख्यात = अर्थात् अपादानादि तत्तद् विशेषरूप से विवक्षित न हो। जिस प्रकार "गां दोग्धि पयः" यहाँ गो को अपादानत्व विवक्षा नहीं करने पर "अकथितं च" इस सूत्र से कर्मसंज्ञा होती है।

अन्य पूर्वक—अन्य संज्ञा का बाधपूर्वक कर्म संज्ञा से शास्त्र द्वारा बोधित। उदाहरण—"क्रूरमभिक्रुध्यति"। यहाँ "क्रुधद्रुहेर्ष्यासूयार्थानां यं प्रति कोपः" (१–४–३७) इससे प्राप्त सम्प्रदान संज्ञा को बाधकर "क्रुधद्रुहोरुपसृष्टयोः कर्म" (१–४–३८) इस सूत्र से कर्मसंज्ञा होती है। उपसर्गपूर्वक क्रुध् द्रुह् धातु के प्रयोग में जिसके प्रति कोप हो उस कारक को कर्मसंज्ञा होती है यह सूत्रका अर्थ है। इसी प्रकार "वैकुण्ठमधिशेते" यहाँ पर "आधारोऽधिकरणम्" (१।४।४५) इस सूत्र को बाधकर "अधिशीङ्स्थासां कर्म" (१।४।४६) इससे कर्म संज्ञा होने से यह भी अन्यपूर्वक का उदाहरण है।

कर्त्तृतृतीयाया आश्रयोऽर्थः। तथाहि-"स्वतन्त्रः कर्त्ता" (पा० सू० १।४।५४)। स्वातन्त्र्यञ्च—धात्वर्थव्यापाराश्रयत्वम्।

धातुनोक्तक्रिये नित्यं कारके कर्त्तृतेष्यते ॥

इति वाक्यपदीयात्। अत एव यदा यदीयो व्यापारो धातुनाऽभिधीयते तदा स कर्तेति, स्थाली पचति, अग्निः पचति, एधांसि पचन्ति, तण्डुलः पच्यते स्वयमेवेत्यादि सङ्गच्छते।

नन्वेवं "कर्म्मकर्त्तृव्यपदेशाच्च" (ब्र० सू० १।२।४) इति सूत्रे, "मनोमयः प्राणशरीरः" इति वाक्यस्थमनोमयस्य जीवत्वे वाक्यशेषे तस्य "एतमितः प्रेत्याभिसम्भवितास्मि" इति प्राप्तिकर्म्मत्वकर्त्तृत्वव्यपदेशो विरुद्ध इति भगवता व्यासेन निर्णीतं कथं सङ्गच्छताम्।

उच्यते-जीवस्यैव ज्ञेयत्वे प्राप्तिकर्म्मत्वमपि वाच्यम्। कर्तृत्वञ्च तस्य आख्यातेनोक्तम्। नचैकस्यैकदा संज्ञाद्वयं युक्तम्। कर्तृसंज्ञया कर्म्मसंज्ञाया बाधात्। तथाचैतमिति द्वितीया न स्यात्। कर्म्मकर्तृतायाञ्च यगाद्यापत्तिरिति शब्दविरोधद्वारा भवति स भेदहेतुः।

एवञ्च व्यापारांशस्य धातुलभ्यत्वादाश्रयमात्रं तृतीयार्थः। कारकचक्रप्रयोक्तृत्वं, कृत्याश्रयत्वं वा, दण्डः करोतीत्यत्राव्याप्तम्।

अयञ्च त्रिविधः-शुद्धः, प्रयोजको हेतुः, कर्म्मकर्त्ता च। मया हरिः सेव्यते कार्यते हरिणा' गमयति कृष्णं गोकुलम्'। मदभिन्नाश्रयको हरिकर्मक सेवनानुकूलोव्यापारः। हर्यभिन्नाश्रयक उत्पादनानुकूलो व्यापारः। गोकुलकर्मकगमनाऽनुकूलकृष्णाश्रयकताद्दशव्यापाराऽनुकूलो व्यापारः इति शाब्दबोधः।

क्रमप्राप्तं तृतीयार्थं निरूपयति—*कर्तृतृतीयाया इति*। करणतृतीयाया व्यापारार्थकत्वस्यापि वक्ष्यमाणत्वादुक्तम्—*कर्त्रिति*। *आश्रय इति*। आश्रय-

-मात्रमित्यर्थः आश्रयार्थकत्वे मानमुपन्यस्यति—*तथाहीत्यादिना* । ननु स्वातन्त्र्य-मितरव्यापारानधीनव्यापारवत्त्वम् । तच्च 'काष्ठं पचति' इत्यादौ काष्ठादावप्रसक्तं; तद्व्यापारस्य चेतनव्यापाराधीनत्वादत आह—*स्वातन्त्र्यञ्चेति* । व्यापाराश्रय-त्वस्य करणे धात्वर्थाश्रयत्वस्य कर्मण्यतिप्रसक्तत्वात् तद्व्यावृत्तये क्रमेणोभयम् ।

अन्ये तु—कर्तृप्रत्ययसमभिव्याहारे व्यापारतावच्छेदकसम्बन्धेन धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयतद्धात्वर्थाश्रयत्वं स्वातन्त्र्यम् । तदेव च कर्तृत्वम् । कालिकसम्बन्धेन व्यापाराश्रयेऽतिप्रसङ्गवारणाय व्यापारतावच्छेदकसम्बन्धेनेति । 'ग्रामं गच्छति' इत्यादावुत्तरसंयोगात्मके फले तादृशधात्वर्थत्वाभावान्न तदाश्रयेऽतिप्रसङ्गः । 'पक्वस्तण्डुलो देवदत्तेन'इत्यादौ फलस्य विशेष्यत्वेन देवदत्तेऽव्याप्तिपरिहाराय कर्तृप्रत्ययसमभिव्याहार इति । सामग्रीसाध्यायां क्रियायां सर्वेषां स्वस्वव्यापारे स्वातन्त्र्येऽप्युक्तस्वातन्त्र्यस्य युगपत्सर्वेष्वभावान्न सूत्राऽनर्थक्यमिति । तत्तु कर्मप्रत्ययसमभिव्याहृतकर्तृव्यावृत्तधात्वर्थव्यापाराश्रयत्वस्यैव सम्यक्त्वे गुरुविशेषणस्याऽनतिप्रयोजनकत्वाच्चोपेक्ष्यम् । कर्मकर्त्तरि तु नव्यमते फले व्यापारत्वाऽऽरोपान्नाऽव्याप्तिः । व्यापारत्वेन कृतेरपि सङ्ग्रहान्न तदनाश्रयेऽचेतने स्वरसतः कर्तृव्यवहारः । तदतिरिक्तव्यापारस्य धातुना विवक्षायां तु क्वचित् कर्तृत्वव्यवहारोऽपि । वक्ष्यति च-यदा यदीयो व्यापार इत्यादि । एवमेव 'मत्तो भूतं न तु मया कृतम्' इत्याद्युपपाद्यमिति भावः । तत्र हरिवाक्यं प्रमाणयति—*धातुनेति* । उक्तक्रिय इति विशेषणादस्मदुक्तमेव स्वातन्त्र्यं हरिसम्मतमिति सूचयति—*अत एवेति* । उक्तस्वातन्त्र्यस्य कर्तृत्वादेवेत्यर्थः ।

*सङ्गच्छत इति* । कृत्याश्रयत्वादेस्तत्त्वे तु तदसङ्गतिरिति भावः । उक्तविवक्षायाः प्रयोगनियामकत्वं द्रढयितुं पृच्छति—*नन्वेवमिति* । एवंविवक्षाया एव प्रयोगनियमकत्वे, मनोमयस्य मनोमयशब्दप्रतिपाद्यस्येत्यर्थः । जीवत्वे सङ्कल्पकर्तृरूपत्वे ब्रह्मभिन्नत्वे इति यावत् । एतमित इत्यादेरितः शरीरात् प्रेत्य निःसृत्य एतच्छरीरं परित्यज्येति यावत् । एतं स्वप्रकाशत्वादिगुणविशिष्टं पूर्वोक्तमात्मानम्; अभिसम्भवितास्मि प्राप्तास्मीत्यर्थः । *कथं सङ्गच्छतामिति* । भवन्मते वैवक्षिकयोः कर्तृत्वकर्मत्वयोरेकस्मिन्नपि सम्भवादिति भावः ।

सञ्ज्ञानिबन्धनविरोधं समर्थयन् कर्तृत्वकर्मत्वयोर्वास्तवाविरोधं दर्शयति—*उच्यते इत्यादिना* । *जीवस्यैव ज्ञेयत्व इति* । 'स क्रतुं कुर्वीत'इत्यनेन जीवस्येवोपास्यत्वबोधने इत्यर्थः । *प्राप्तिकर्मत्वमिति* । अन्योपासनाया अपरप्राप्त्यफलकत्वादिति भावः । *आख्यातेनेति* । अभिसम्भविताऽस्मीत्येतद्घटकेनेत्यर्थः । *बाधादिति* । सञ्ज्ञयोराकडारीयतया समावेशाऽसम्भवेन परया कर्तृसञ्ज्ञया बाधादित्यर्थः । *यगाद्याऽऽपत्तिरिति* । अभ्युच्चयवादः । प्राप्ये कर्मणि कर्मवद्भावाऽप्रसक्तेः । शब्दविरोधद्वारा—एकदा सञ्ज्ञाद्वयप्रयुक्तकार्योत्पत्तिद्वारा,

सः—सञ्ज्ञाद्वयविरोधस्तत्र कर्तृकर्मत्वव्यवहारभेदहेतुरित्यर्थः। न तु कर्तृत्वकर्म्मत्वयोः पारमार्थिकं भेदमादायेति भावः।

ननु विशिष्टाश्रयस्य तावत् तृतीयाऽर्थत्वमायातमत आह—*एवञ्चेति*। धातूपात्तव्यापाराश्रयस्य कर्तृत्वे चेत्यर्थः। *आश्रयमात्रमिति*। अनन्यलभ्यत्वादिति भावः। मतान्तरं दूषयति—*कृत्याश्रयत्वमित्यादिना*। *अव्याप्तमिति*। अचेतने तस्मिंस्तद्बाधादिति भावः।

अत्र वदन्ति—दण्डादिनिष्ठव्यापारस्य धात्वर्थत्वविवक्षया भवदुक्तस्वातन्त्र्यवत् वास्तवकारकचक्रप्रयोक्तृत्वस्य दण्डादावभावेऽपि तदारोपात्कर्तृत्वव्यवहारस्तस्मिन् सूपपादः। अत एव हरिणा—

प्रागन्यतः शक्तिलाभान्न्यग्भावाऽऽपादनादपि। ( तृ० का० कर्तृविचार )
तदधीनप्रवृत्तत्वात् प्रवृत्तानां निवर्त्तनात्॥ १.१
अदृष्टत्वात्प्रतिनिधेर्व्यतिरेके च दर्शनात्।
आरादप्युपकारित्वे स्वातन्त्र्यं कर्त्तुरिष्यते॥ ( तृ० का० १०२ )

इत्यनेन करणादिव्यापारात् पूर्वं करणादिसम्पादकशक्तिमत्वेन करणादीनामात्माधीनत्वसम्पादनेन च तदायत्तव्यापारत्वेनाऽतिप्रवृत्तानां निवर्त्तनेन कर्त्तुः फलप्राप्तौ स्वत एव निवृत्त्या प्रतिनिध्यभावेन कारकान्तराभावेऽप्यस्त्यादौ कर्त्तुर्दर्शनेन च दूरादप्युपकारित्वेऽपि स्वातन्त्र्यमित्यर्थकेन कारकचक्रप्रयोक्तृत्वमेव स्वातन्त्र्यमभिहितम्।

वस्तुत एषां धर्माणामभावेऽपि शब्देन यस्यैते प्रतिपाद्यन्ते स कर्त्तेति तदाशयः। 'पाचयति मैत्रेण चैत्र' इत्यादौ प्रयोज्यस्य प्रयोजकव्यापाराधीनत्वेऽपि णिच्प्रकृत्यर्थसाधनान्तरविषये उक्तस्वातन्त्र्यस्य सत्त्वात् कर्तृत्वोपपत्तिः। धातुवाच्यक्रियाकृतस्वातन्त्र्यस्यैव विवक्षणात् कर्तृपरतन्त्रकरणादेर्न स्वव्यापारमादाय कर्तृत्वम्, प्रयोज्यस्य स्वार्थसिध्यर्थमपि प्रवृत्त्या करणादीनां कर्त्रधीनत्ववत् प्रयोज्यस्य प्रयोजकाऽनधीनत्वाच्च। न हि फलोद्देशाऽधीना करणादीनां व्यापारवत्ता। प्रयोज्यस्य तु तादृशप्रवृत्तौ "सर्वं इमे स्वभूत्यर्थं प्रवर्तन्ते" इति "हेतुमति च" इतिसूत्रस्थभाष्यमनुभवश्च सार्वजनीनः प्रमाणमित्याहुः।

कृत्याश्रयत्वं दण्डादावव्याप्तमित्युक्त्या नैयायियोक्तकर्तृत्वस्योपेक्षणीयत्वमावेदितम्। तेषां त्वयमाशयः—कर्तृत्वं मुख्यं पूर्वोक्तमेव, आश्रयप्रतियोगित्वादिरूपं तु गौणम्, उभयमपि कर्तृतृतीयया प्रतिपाद्यते।

तथाहि—'चैत्रेण पच्यते' इत्यादौ कृतिमदभेदेन तज्जन्यत्वं वा क्रियाविशेषणतया तृतीययाऽभिधीयते। अचेतनकाष्ठादेरपि कर्तृत्वविवक्षायां तु काष्ठं पचतीतिवत् 'काष्ठेन पच्यते तण्डुल' इत्यपि प्रयोगाद् व्यापाररूपे कर्तृत्वे तज्जन्यत्वरूपे सकर्तृकत्वे वा तस्य लक्षणा। एवं 'चैत्रेणज्ञायते' इत्यादावाश्रयत्वरूपे कर्तृत्वे आधेयत्वरूपे कर्तृमत्वे वा नश्यते घटेन' इत्यादौ प्रतियोगित्वात्मककर्तृत्वे अनुयोगित्वरूप-

कर्तृमत्वे वा लक्षणा । 'चैत्रः पचति' इत्यादावुक्तस्थले कर्तृत्वमेव मुख्यं गौणं वा क्रियाविशेष्यतयाऽऽख्यातेन बोध्यते । अचेतने स्वरसतः कर्तृव्यवहाराभावेन तत्र कर्तृपदमपि भाक्तमेव ।

नच यत्नवत एव मुख्यकर्तृत्वे तदादायैव "कर्तृकरणयोः" (पा० सू० २३।६।६२) इत्यादेश्चारितार्थ्ये गौणकर्तृत्वे तृतीयाद्यनुपपत्तिरिति वाच्यम् । तत्सूत्रस्थकर्तृपदस्य पारिभाषिककर्तृपरत्वात् । तत्सूत्रप्रणयनस्यैव तत्परत्वे मानत्वात् । सूत्रे स्वातन्त्र्यं च समभिव्याहृतकारकान्तराऽनधीनत्वे सति कारकत्वम् । पुरुषव्यापाराऽधीनक्रियाऽनुकूलव्यापारवतामेव काष्ठादीनामन्यानधीनत्वविवक्षया 'काष्ठं पचति' इत्यादौ कर्तृत्वम् । अनधीनत्वान्तविशेषणं च 'चैत्रः काष्ठैः स्थाल्यां पचति' इत्यत्र 'चैत्रः काष्ठानि स्थाली पचन्ति' इति प्रयोगवारणाय । चैत्रः पचति, स्थाली पचतीत्यादौ यत्र कारकान्तराप्रसिद्धिस्तत्रानधीनान्तविशेषणं न प्रतीयत एव । तन्निर्वाहश्च स्वतन्त्रशक्तिकल्पनात् । विशिष्टशक्तेर्विशेषणविषयकविशेष्यबोधाजनकत्वात् । विशिष्टशक्त्याऽनिर्वाहात् । चैत्रेण पाचयतीत्यादौ हेतुकर्तृसमभिव्याहारे प्रयोज्यस्य हेतुकर्त्रधीनत्वेऽपि ण्यन्तप्रतिपाद्यपाचनादिक्रियायामेव प्रयोजकस्य कारकतया प्रयोज्यस्य पच्याद्यर्थक्रियाकारकाऽनधीनताया अवैकल्येन न तद्वाचकपदोत्तरं तृतीयानुपपत्तिः । स्वतन्त्रकर्तृप्रयोजकव्यापारस्य तण्डुलक्रयणादिवत् पाकादावन्यथासिद्धत्वादकारणत्वेन तस्य पाकादिप्रयोजकव्यापारवत्वेऽपि तत्क्रियाकारकत्वाभावाच्च । अत एव 'चैत्रेण मैत्रः पाचयति' इत्यत्र, मैत्रः पचतीति न ।

नन्वस्तूपदर्शितरीत्या चैत्रादेः स्वतन्त्रकर्तृतानिर्वाहः, तथापि तद्वाचकपदोत्तरं तृतीयाऽनुपपत्तिः कर्तृत्वनिर्वाहकव्यापारस्य णिजर्थत्वेन स्वतन्त्रनिष्ठस्य तस्य णिचाऽभिधानादिति चेद् ? न ।

कर्तृत्वनिर्वाहकत्वसम्बन्धेन पाकाद्यन्वितहेतुकर्तृव्यापारस्य णिजर्थतापक्षेऽदोषात् । कर्तृत्वरूपफलाऽवच्छिन्नव्यापारस्य णिजर्थतामतेऽपि तदुपरक्ताश्रयस्याऽन्यतोभानानिर्वाहेणानभिधानस्याऽक्षतत्वात् । अबोधनस्यैव तत्राऽनभिधानपदार्थत्वादभिधानस्य "तिङ्कृत्तद्धितसमासै" रिति परिगणनाच्च ।

आख्यातस्य धर्म्यवाचकत्वेऽपि कृत्यादिविशिष्टकर्तृबोधकत्वरूपाऽभिधानस्य तत्र सत्वान्न 'चैत्रः पचति' इत्यादौ तृतीयाऽऽपत्तिः । मुख्यविशेष्यतया तद्विवक्षायां 'चैत्रेण पचति' इत्यादिप्रयोगापत्तिरित्यपि न । आश्रयातिरिक्ते विशेषणतया कृतिबोधनस्यैवाऽनभिधानपदार्थत्वात् । तथाभिधानं च 'लकृत्तद्धितसमासैः' एवेति त एवाभिधायकतया वृत्तिकृतोपात्ताः ।

यद्यपि स्वतन्त्रव्यापार एव तृतीयादेरनुशासनम्, तथापि कृतिरूपकर्तृत्व एव लाघवाच्छक्तिर्व्यापारादौ तु लक्षणेत्युक्तमनुशासनस्याऽनादितात्पर्यमात्रग्राहकत्वाल्लाघवसहकृतस्यैव तस्य शक्तिकल्पकत्वात् । व्यापारे तत्सत्त्वेऽपि गौरवेण तदसिद्धेः ।

एवञ्च कृतिरूपकर्मत्वबोधस्थले कारकान्तरव्यापारानधीनत्वं न प्रतीयत एवेति न तदन्तर्भावेण शक्तिः। प्रमाणाऽभावात्। व्यापारलाक्षणिककर्तृप्रत्ययेन लक्षणया तदन्तर्भावेण व्यापारबोधनादेव पूर्वोक्तातिप्रसङ्गस्य वारणात्। अन्यथा तदन्तर्भावेण कृतौ शक्तावपि पूर्वोक्तातिप्रसङ्गस्य दुष्परिहरत्वात्। 'घटो जायते' 'ओदनः सिद्धयति' इत्यादौ घटादेः कारकत्वं च सत्कार्यवादमवलम्ब्यैवोपपादनीयम्।

मुख्यं क्रियाकर्तृत्वं च न तदनुकूलकृतिमात्रम्। एकक्रियाविषयककृतेर्यत्र नान्तरीयकक्रियानिर्वाहस्तत्र तत्क्रियाकर्तृत्वाऽव्यपदेशात्। किन्तु तत्क्रियाविषयकत्वे सति तदनुकूलकृतिस्तत्कर्तृत्वम्। गुरुतरभारोत्तोलनादौ तु यत्र क्रियाया अनिष्पत्तिस्तत्र गतिरुक्तैव। अन्योद्देशेन नाराचक्षेपाद् यत्र ब्राह्मणवधस्तत्र मरणानुकूलनाराचक्षेपरूपव्यापारस्य कृतिविषयत्वेऽपि हिंसालक्षणस्योद्देश्यताघटितत्वया तस्य विप्रमरणानुकूलव्यापारत्वेनानभिसंहितत्वात्तेन रूपेण कृतिविषयत्वस्य तादृशव्यापारे असत्त्वेन न ब्राह्मणत्वविशिष्टवधकर्तृत्वं तादृशव्यापारकर्तुरिति न सम्पूर्णं प्रायश्चितं तस्येति ॥

कर्तृविभागमाह—*अयश्चेति*। अनुपदं तृतीयार्थत्वेन निरुक्तः कर्त्तेत्यर्थः। *शुद्ध इति*। हेतुत्वकर्मकर्तृत्वानधिकरणमित्यर्थः। प्रेरणार्थकणिच्प्रकृतिधातूपात्तव्यापाराश्रय इति यावत्। *हेतुरिति*। णिजर्थप्रेरणाश्रय इत्यर्थः। *कर्मकर्त्तेति*। धातूपात्तव्यापाराऽऽश्रयत्वे सति णिजर्थव्यापारेणाऽऽप्यमानत्वेन विवक्षित इत्यर्थः। क्रमेणोदाहरणान्याह—*मया हरिः सेव्यत इत्यादिना*। अत्र व्यापारविशेष्यबोधोत्कीर्त्तनं तु कैयटानुसारेण। तत्त्वं तु प्रागेवाऽवोचाम।

अर्थ—कर्ता में होनेवाली तृतीया का आश्रय अर्थ है। इसमें "स्वतन्त्रः कर्ता" (१।४।५४) यह सूत्र प्रमाण है। स्वातन्त्र्य = धात्वर्थ व्यापार का आश्रयत्व अर्थ है। "धातुनोक्त" इत्यादि धातु से उक्त (वाच्य) जो क्रिया व्यापार उसके आश्रय कारक में कर्तृत्व नियमतः इष्ट है। इस प्रकार वाक्यपदीय से पूर्वोक्त अर्थ का निर्णय होता है। इसीलिये जब जिसके व्यापार की धात्वर्थ के रूप में जहाँ विवक्षा होती है तब वहाँ वह कर्ता होता है। अत एव "स्थाली पचति"=स्थाली पकाती है, अग्नि पाककर्ता है, लकड़ियाँ पकाती हैं, तण्डुल स्वयं पकता है इत्यादि प्रयोगों की सङ्गति होती है।

शङ्काः—यदि विवक्षा के अधीन कर्ता और कर्म का प्रयोग माना जायगा तो "कर्तृकर्मव्यपदेशाच्च" (१।२।४) इस ब्रह्मसूत्र के द्वारा "मनोमयः प्राणशरीरः" इत्यादि वाक्यघटक 'मनोमयं' शब्द से जीव के ग्रहण करने पर वाक्य के शेष=अन्त में "एतमितः प्रेत्य अभिसम्भवितास्मि"=इतः शरीर से प्रेत्य-निकलकर एतं=मनोमयत्वादिगुणविशिष्ट जीव को प्राप्त होगा इस प्रकार प्रेत्य का कर्म और अभिसम्भवितास्मि का कर्ता दोनों ही जीव नहीं हो सकता। क्योंकि कर्तृत्व तथा कर्मत्व दोनों परस्पर विरुद्ध होने से एक में नहीं होगा। अतः मनोमयादि पद से ब्रह्म का ग्रहण है। इस प्रकार भगवान् वेदव्यास का निर्णय सङ्गत नहीं होगा। क्योंकि कर्तृकर्म का प्रयोग विवक्षाधीन होने के कारण परस्पर विरोधी नहीं है। एक में भी दोनों का प्रयोग विवक्षा के भेद से हो सकता है।

समाधान :—"मनोमयः प्राणशरीरः इत्यादि वाक्य से जीव का ज्ञेयरूप से ग्रहण करने पर प्राप्ति का कर्मत्व और अभिसम्भवितास्मि" इससे कर्तृत्व कहा गया है। युगपद् एक को दो संज्ञायें नहीं होतीं। कर्तृ संज्ञा से कर्म संज्ञा का बाध हो जाता है। विभक्ति में संज्ञा नियामक होने से कर्म संज्ञा न होने पर 'एतम्' इस पद में द्वितीया विभक्ति नहीं होगी। कर्म को कर्तृत्वरूप से विवक्षा करने पर "कर्मवत्कर्मणा०" (३-१-८७) इत्यादि सूत्र से यक् की आपत्ति हो जायगी।[1] इसलिए संज्ञाओं के परस्पर विरोध से तत्प्रयुक्त कार्य की अनुत्पत्ति रूप शब्द-विरोध के द्वारा सः= [2]संज्ञाद्वयविरोधः उसमें कर्मकर्तृत्वव्यपदेश के भेद का हेतुः=कर्मकर्ता के परस्पर भेद का हेतु होता है।

धात्वर्थ व्यापार के आश्रय भूत कर्ता में विशेषणीभूत व्यापार का धातु के द्वारा लाभ हो जाने से अवशिष्ट केवल आश्रय कर्तृ तृतीया का अर्थ है। कारकसमूह का प्रयोक्ता अथवा कृतिका आश्रय कर्ता ये दोनों लक्षण "दण्डः करोति" इसमें समन्वित नहीं होने से दूषित हैं। दण्ड अचेतन है। अतः उसमें प्रयोक्तृत्व और कृतित्व इन दोनों का सम्भव नहीं है।

तृतीया विभक्त्यर्थ कर्ता, शुद्ध, प्रयोजक हेतु और कर्मकर्ता इसके भेद से तीन प्रकार का है।

"मया हरिः सेव्यते" (मुझसे हरि सेवित होते हैं) यहाँ मया इसमें तृतीया विभक्ति का अर्थ शुद्ध कर्ता है।

"कार्यते हरिणा" (हरि के द्वारा कराया जाता है) कृ धातु से णिच् प्रत्यय होने पर कर्म में लट् लकार होता है। हरिः कारयति इसका कर्मवाच्य में "हरिणा कार्यते" यहाँ प्रयोजक हेतु तृतीयार्थ है।

"कृष्णं गोकुलं गमयति" (कृष्ण को गोकुल जाने को प्रेरित करता है) इसमें प्रयोज्यकर्ता कृष्ण को कर्मसंज्ञा तथा द्वितीया विभक्ति हो गई है। अतः कर्मरूप कर्ता है।

प्रथम वाक्य से तृतीयार्थ आश्रय में अस्मद् के अर्थ का अभेद से अन्वय होने के कारण मदभिन्नाश्रयनिष्ठ हरिकर्मक जो सेवा उसके अनुकूल व्यापार। द्वितीय वाक्य से— हरि से अभिन्न जो आश्रय उसमें जो उत्पादनानुकूल व्यापार। तृतीय वाक्य से— गोकुलरूप जो कर्म तन्निष्ठ जो संयोग तदनुकूल कृष्णाश्रय निष्ठ जो गमनानुकूलव्यापार तदनुकूलव्यापार इस प्रकार का शाब्द बोध होता है।

हिन्दी भाष्य :—द्वितीयार्थ निरूपण के बाद क्रमप्राप्त कर्तृ तृतीया के अर्थ का निरूपण करते हैं—करण में तृतीया का आश्रय और व्यापार दोनों अर्थ होने से तृतीया सामान्य न लिखकर "कर्तृ तृतीया" ऐसा लिखा है। कर्तृतृतीया का आश्रय मात्र अर्थ है। "स्वतन्त्रः कर्ता" इस सूत्र से स्वतन्त्र को कर्ता कहा गया है। दूसरे के व्यापार के अधीन जिसका व्यापार न हो वह स्वतन्त्र है। ऐसा स्वीकार करने पर "काष्ठं पचति" इस कर्मकर्तृ वाक्य में काष्ठ कर्ता नहीं होगा। क्योंकि काष्ठ अचेतन होने के कारण इसका व्यापार किसी चेतन व्यापार के अधीन है अतः स्वतन्त्र न होने से कर्ता नहीं होगा इसलिये स्वातन्त्र्य का दूसरे प्रकार का अर्थ करते हैं—धात्वर्थ व्यापार का

१. वस्तुतः प्राप्य कर्म में कर्मवद्भाव नहीं होता एवं "अभिसम्भवितास्मि" यहाँ तास् से यक् का बाध होने से भी यक् प्रत्यय का प्रसङ्ग नहीं है।

२. कर्तृकर्मव्यवहारभेदहेतुः = जीव ब्रह्म के भेद का हेतु (काशिका)

आश्रयत्व ही स्वातन्त्र्य है। व्यापाराश्रयत्वमात्र कहने पर करण भी व्यापाराश्रय है। अतः धात्वर्थ विशेषण दिया। करण का व्यापार धातु का अर्थ नहीं है। धात्वर्थ मात्र कहने पर फल भी धात्वर्थ होने से तदाश्रय कर्म भी कर्ता हो जायगा। अतः धात्वर्थ व्यापाराश्रयत्व रूप कर्तृत्व का निर्वचन किया गया।

कर्तृप्रत्ययसमभिव्याहार में धात्वर्थनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्व तथा तद्धात्वर्थाश्रयत्वरूप कर्तृत्व हैं, ऐसा भी कुछ लोगों का मत है। कर्ता में प्रत्यय करने पर शाब्दबोध में व्यापार की प्रधानता होती है ऐसा नव्य वैयाकरण मानते है। कर्तृ-प्रत्यय के योग में धात्वर्थनिष्ठविशेष्यता व्यापार में रहने से तादृशविशेष्यतानिरूपित-प्रकारता का अनाश्रय और धात्वर्थ जो व्यापार उसका आश्रय कर्ता है। कर्मवाच्य में फल की प्रधानता होने से कर्तृप्रत्ययसमभिव्याहार यह विशेषण दिया हैं। व्यापारता-वच्छेदक सम्बन्ध से प्रकारतानाश्रय लेते हैं इत्यादि विचार अन्यत्र स्पष्ट है।

जब जिसका व्यापार धात्वर्थरूप से विवक्षित है तब वह कर्ता है। इस प्रकार काष्ठ आदि को कर्ता मानने में कोई आपत्ति नहीं है। क्योंकि वहाँ काष्ठ के व्यापार की धात्वर्थ रूप से विवक्षा है। अतएव हरि जी ने भी "धातुनोक्तक्रिये" ऐसा लिखा है। जिस कारक की क्रिया धातु से कही गई हो वह कर्ता है। अतएव "काष्ठानि पचन्ति" तण्डुलः पच्यते" इत्यादि प्रयोगों में काष्ठ तण्डुल आदि कर्ता माना जाता है।

विवक्षाधीन कर्तृकर्मादिव्यवहार मानने पर ब्रह्मसूत्र के विरोध होने की सम्भावना संक्षेप से दी जा रही है।

"मनोमयः प्राणशरीरोभारूपः" (छा० उ०) इससे मनोमयत्वादि धर्म से शरीर आत्मा (जीव) उपास्य है अथवा परब्रह्म इस प्रकार के सन्देह में "अप्राणो ह्यमनाः शुभ्रः" (मु. २।१।) के अनुसार परब्रह्म के साथ प्राण मन आदि का सम्बन्ध नहीं होने से मन आदि से सम्बद्ध जीव का ग्रहण होना चाहिये। अतः मनोमयत्वादिरूप से जीव की उपासना विवक्षित है। इस पूर्वपक्ष के समाधान के लिए भगवान् वेदव्यास ने "विवक्षितगुणोपपत्तेश्च (१-२-२) "अनुपपत्तेश्च न शारीरः" (१-२-३) "कर्मकर्तृव्य-पदेशाच्च" (१-२-४) इत्यादि सूत्रों की रचना की है। अन्तिम सूत्र का व्याख्यान प्रकृतोपयोगी होने से वही दिया जा रहा है। यदि "मनोमयः प्राणशरीरः" इस वाक्य में मनोमयादि शब्द से जीव का ग्रहण होगा तो "एतमितः प्रेत्य अभिसम्भवितास्मि"—इतः = शरीर से निकलकर एतं = जीव को प्राप्त करेगा (यह अर्थ है)। इसमें एतं इस पद से पूर्वनिर्दिष्ट मनोमयत्व आदि धर्म से युक्त जीव का ग्रहण होगा। क्योंकि तद् एतद् आदि पूर्व में निर्दिष्ट अर्थ के परामर्शक माने गये है। अतः एवं जो "अभिसम्भवितास्मि" इसमें प्राप्ति क्रिया का कर्म है उस "एतं" इस पद से जीव का ग्रहण होगा और अभि-सम्भवितास्मि इस क्रिया का कर्ता भी वही जीव होगा तब जीव ही प्राप्तिकर्ता और जीव ही प्राप्ति का कर्म इस प्रकार ये दोनों परस्पर विरोधी एक ही नहीं हो सकते। कर्तृत्व कर्मत्व विरुद्ध धर्म होने के कारण एक ही जीव में दो विरुद्ध धर्म नहीं रह सकते। अतः मनोमयत्वादि रूप से परब्रह्म की विवक्षा है जीव की नहीं। ऐसा होने पर 'एतं' इस पद से पूर्वोक्त ब्रह्म का बोध होगा। इस प्रकार "अभिसम्भवितास्मि" इसका कर्ता जीव और उस क्रिया का कर्म ब्रह्म होने से एक में कर्तृत्व कर्मत्व नहीं रहने के कारण विरोध नहीं हुआ। कर्मकर्तृव्यवहार से भी उक्त श्रुति में जीव का ग्रहण नहीं है यह सूत्रार्थ है।

कर्ता कर्म यदि विवक्षाधीन माना जायगा तो कर्ता भी कर्म, कर्म भी कर्ता विवक्षा के द्वारा हो सकता है पुनः दोनों का एक में समावेश होने पर विरोधापादन क्यों किया गया। इस विरोधापादन से कल्पना होती है कि कर्म और कर्ता विवक्षाधीन नहीं है। अभिसम्भवितास्मि यह रूप भू प्राप्तौ के लुट् लकार के उत्तमपुरुष के एकवचन का है।

समाधान—एक में कर्तृत्व कर्मत्व के रहने से विरोध होगा यह उक्त सूत्र का तात्पर्य नहीं है। किन्तु कर्तृसंज्ञा कर्म संज्ञा दोनों एक को एक समय में नहीं हो सकती। प्राप्ति क्रिया का कर्म और तिङ् से वाच्य कर्ता एक ही नहीं हो सकता। कर्तृसंज्ञा होने पर कर्म संज्ञा नहीं होगी कर्तृसंज्ञा से कर्मसंज्ञा का बाध हो जाता है। व्यापाराश्रय होने से कर्तृसंज्ञा हो जायगी कर्मसंज्ञा नहीं होगी "आकडारादेका संज्ञा" (१।४।१) इससे एक को एक ही संज्ञा होगी। अतः "एतम्" इसमें द्वितीया नहीं होगी। इस प्रकार शाब्द[1] विरोध के द्वारा जीव ब्रह्म के भेद हेतुत्व का उद्भावन वेदान्तसूत्र से किया गया है यह भाव है।

"हरिणा सेव्यते" आदि कर्म प्रत्यय स्थल का मूलोक्त शाब्द बोध प्राचीन मत से है। नवीन मत से कर्म प्रत्ययस्थल में फलविशेष्यक बोध होता है। तदनुसार मद्भिन्नाश्रयनिष्ठव्यापारजन्या हरिकर्मकसेवा ऐसा बोध होगा। सेवा पादसंवाहनादि अथवा प्रीति। "कार्यते हरिणा" इस स्थल में हरि से अभिन्न जो-आश्रय तन्निष्ठ व्यापारजन्या उत्पादना ऐसा शाब्द बोध होगा।

करणतृतीयायास्त्वाश्रयव्यापारौ वाच्यौ। तथाहि—"साधकतमं करणम्" (पा० सू० १।४।४९)। तमबर्थः प्रकर्षः। सचाव्यवधानेन फलजनकव्यापारवत्ता। तादृशव्यापारवत्कारणञ्च करणम्। उक्तञ्च वाक्यपदीये—

क्रियायाः परिनिष्पत्तिर्यद् व्यापारादनन्तरम्। (३ का० ९०)
विवक्ष्यते यदा यत्र करणं तत्तदा स्मृतम्॥
वस्तुतस्तदनिर्देश्यं न हि वस्तु व्यवस्थितम्।
स्थाल्या पच्यत इत्येषा विवक्षा दृश्यते यतः॥ इति।
(तृ० का० ९१)

विवक्ष्यत इत्यनेन सकृदनेकेषां तदभावात् द्वितीयासप्तम्यादेरवकाशं सूचयति। नचैवं "कर्त्ता शास्त्रार्थवत्त्वात्" (ब्र० सू० २।३।३३) इत्युत्तरमीमांसाधिकरणे "शक्तिविपर्य्ययात्" इति सूत्रेणान्तः करणस्य कर्तृत्वे करणशक्तिविपर्य्ययापत्तिरुक्ता न युज्येतेति वाच्यम्। 'तदेतेषां प्राणानां विज्ञानेन विज्ञानमादाय" इति श्रुत्यन्तरे करणतया क्लृप्तस्य कर्तृतां प्रकल्प्य शक्तिविपर्य्ययापत्तिर्निष्प्रमाणा कल्प्येतेत्यभिप्रायात्।

वस्तुतस्तु अन्वाचयमात्रमेतदिति, "यथा च तक्षोभयथा" (ब्र० सू० २।३।४०) इत्यधिकरणे भाष्य एव स्पष्टमित्यादि प्रपञ्चितं भूषणे॥

१. एक समय में संज्ञाद्वय प्रयुक्त कार्यद्वय कर्त्रर्थक तथा कर्मार्थक विभक्ति की अनुत्पत्ति के द्वारा।

*आश्रयव्यापाराविति*। ननु व्यापारस्य धातुनैव लाभात् तत्र शक्तिकल्पनमपार्थमित्याशङ्कचैकस्य कर्तृनिष्ठव्यापारस्य धातोर्लाभेऽप्यनुभूयमानकरणनिष्ठव्यापारस्य पदार्थत्वमन्तरेण शाब्दविषयताऽनुपपत्त्या शक्तिरावश्यकी। आख्यातान्निवृत्तभेदाया एव क्रियाया अवगमाद् व्यापारद्वयस्य धात्वर्थत्वासम्भवाच्चेत्यभिप्रेत्य स्वोक्तार्थस्य सप्रमाणतां दर्शयितुं करणसंज्ञाप्रतिपादकं सूत्रमुपन्यस्यति—*तथाहीत्यादिना*। "साधकतमम्" इति सूत्रस्य कारकाधिकारीयत्वात् सूत्रोपात्तसाधकशब्दादेव प्रकर्षलाभेऽपि गौणाधाराधिकरणसंज्ञाफलकस्य "कारकप्रकरणे शब्दसामर्थ्यगम्यः प्रकर्षो नाश्रीयत' इत्यर्थस्य बोधनाय तमबुपादानमिति सूचयन्नाह—*तमबर्थः प्रकर्ष इति*। प्रकर्षश्च कारकान्तरापेक्षो न तु करणान्तरापेक्षः। कारकसामान्यवाचिसाधकशब्दादुत्पन्नेन तमपा तदवधिकप्रकर्षस्यैव द्योतनात् 'तेनाश्वेन दीपिकया व्रजति' इति प्रयोगोपपत्तिः। अन्यथा करणान्तराऽपेक्षिकप्रकर्षस्य करणान्तरे अभावेन तदनुपपत्तेः। *तादृशेति*। फलोत्पत्त्यव्यवहितपूर्ववर्त्तीत्यर्थः।

परे तु—फलायोगव्यवच्छिन्नकारणत्वं करणत्वम्। स्वव्याप्येतरयावत्कारणसमवधाने सति यदव्यवहितोत्तरक्षणे फलनिष्पत्तिस्तत्त्वमिति यावत्। स एव तृतीयार्थः। सत्यन्तनिवेशाच्चक्षुषोऽन्धकारे फलाऽयोगेऽपि न तत्राऽप्रसङ्गः। प्रयोजकेऽतिप्रसङ्गनिरासायाव्यवहितेति वदन्ति।

तत्र हरिसम्मतिमप्याह—*उक्तञ्चेति*। अत्र क्रियापदं फलपरम्। 'बाणेन हत' इत्यत्र बाणव्यापाराव्यवहितोत्तरक्षणे प्राणवियोगरूपफलाऽनाश्रयत्वाभावलक्षणसमन्वयः। विवक्ष्यते इत्यनेन विवक्षैव विभक्तौ प्रयोजिका, न वास्तवकरणत्वादिसत्तेत्युक्तम्। अत एव दात्राऽनादरेण बलस्य तत्त्वविवक्षायां, बलेन लुनातीति प्रयोगः। *वस्तुत इति*। यत इदमेव वस्तु करणमिति न नियमोऽत एव निश्चिताधिकरणत्वाऽपि स्थाली तनुतरकपालत्वाद्विवक्षिककरणत्ववतीत्यर्थः। *अवकाशमिति*। 'तण्डुलं स्थाल्यां पचति' इत्यादौ करणत्वाविवक्षायां तत् तत् संज्ञाप्रयुक्तद्वितीयादेरवकाशमित्यर्थः। तथाच 'काष्ठैः पचति' इत्यादौ प्रकृत्यर्थकाष्ठादेरभेदेनाश्रयरूपतृतीयाऽर्थेऽन्वयः। तस्य च व्युत्पत्तिवैचित्र्येण समानप्रत्ययोपात्तत्वप्रत्यासत्त्या व्यापाररूपतदर्थान्तरे आधेयतासम्बन्धेन फलोपहिततादृशव्यापारस्य चानुकूलतासम्बन्धेन विक्लित्त्यनुकूलव्यापारे। एवञ्च काष्ठाऽभिन्नाश्रयको यः फलोपहितव्यापारस्तद्विशिष्टो विक्लित्त्यनुकूल एकाश्रयको वर्त्तमानो व्यापार इति बोधः। वैशिष्ट्यञ्च—जन्यजनकभावसम्बन्धेन बोध्यम्। अत्र च "यत्सन्निहितेषु सर्वेषु कारकेषु कर्त्ता प्रवर्त्तयिता भवति" इति सकलकारकव्यापारस्य कर्त्रधीनत्वप्रतिपादकं, "कारके" इति सूत्रस्थं भाष्यं प्रमाणम्॥

अपरे तु—'क्रियायाः परिनिष्पत्तिर्यद्व्यापारादनन्तरम्' इति वाक्यस्थाऽनन्तर-

पदस्वारस्यात् तृतीयार्थव्यापारस्य जन्यतासम्बन्धेन फलेऽन्वयः। तथाच जन्यतासम्बन्धेन काष्ठाश्रयकव्यापारविशिष्टफलानुकूलो व्यापार इति बोधमाहुः।

तृतीयार्थकरणत्वस्य व्यापार एवान्वयः, शब्दशक्तिस्वभावान्न फलांशे। अत एव मत्वर्थलक्षणया सोमादिपदस्य नामधेयत्वं सिद्धान्तितम्। अन्यथा व्यापारं प्रति करणत्वेनाऽन्विते फलांशे करणत्वेनाऽन्वयोपपत्तौ लक्षणाया अप्रसङ्ग एव। अत एव 'सोमेन यजेत' इत्यत्र मत्वर्थलक्षणेति मीमांसका इत्यन्ये।

वस्तुतस्तु "आश्रयोऽवधिरुद्देश्य" इति मूलस्वारस्यात् करणतृतीयाया अप्याश्रयमात्रमर्थः। प्रकृत्यर्थान्वितस्य स्वनिष्ठव्यापारजन्यत्वसम्बन्धेन धात्वर्थव्यापारेऽन्वय इत्येव ज्यायः।

नैयायिकास्त्वसाधारणं कारणं करणम्। कारणे असाधारण्यं च—व्यापारवत्त्वमेव। न तु फलाऽयोगव्यवच्छिन्नत्वम्। तस्य यावत्कारणघटिततया गौरवेण तद्धर्माऽवच्छिन्ने शक्त्यसिद्धेः। स एव च प्रकर्षः "साधकतमम्" इति तमपा बोध्यते। व्यापारस्य तज्जन्यत्वविशिष्टतज्जन्यजनकत्वरूपतयाऽव्यवधानांशस्यापि जनकत्वघटकतया लाभात्। तत्र पृथक्शक्त्यभावेन व्यापारमात्रं करणतृतीयार्थः। तस्मिन् प्रकृत्यर्थस्याधेयतासम्बन्धेनाऽन्वयः। शेषं पूर्ववदित्याहुः।

*एवमिति*। एकस्मिन्नपि धर्मिणि कर्तृकरणशक्त्योरविरोध इति यावत्। *शक्तिविपर्ययादिति*। 'एष हि द्रष्टा श्रोताऽनुमन्ता बोद्धा विज्ञानाऽऽत्मा पुरुष' इत्यादीनां तथा कर्तुः कर्तव्यविशेषप्रतिपादकानां यजेत जुहुयादित्यादीनां च सार्थक्याय जीवस्य, "कर्ता शास्त्रार्थवत्त्वात्" इत्यनेन कर्तृत्वे बोधिते बुद्धिपदव्यवहार्यं विज्ञानमेवाऽस्तु कर्त्रित्याशङ्कायां विज्ञानशब्दवाच्यबुद्धेः कर्तृत्वाऽभ्युपगमे लोके समर्थस्याऽपि कर्तुः सर्वाऽर्थकारिकरणान्तरसापेक्षस्यैव कार्य्यकारित्वदर्शनेन विज्ञानपदव्यपदेश्यत्वबुद्धेः करणशक्तिहान्यापत्तिरतस्तदतिरिक्तजीवस्यैव कर्तृत्वमुचितमित्यर्थप्रतिपादकेन, "शक्तिविपर्ययात्" इति सूत्रेणेत्यर्थः।

*न युज्येतेति*। कर्तृकरणशक्त्योरविरोधस्यैव भवद्भिरभिधानादिति भावः। *तदेतेषामिति*। *प्राणानाम्* इन्द्रियाणां, विज्ञानं-ग्रहणशक्तिं, विज्ञानेन--विज्ञानशब्दवाच्येन मनसा तज्जन्यबुद्ध्यात्मकप्रवृत्त्येति यावत्। आदाय—गृहीत्वा हृदयं स्वापे गच्छतीति श्रुत्यर्थः।

करणतयेति। विज्ञानेनेत्यत्र करणतया क्लृप्तस्येत्यर्थः। निष्प्रमाणेत्यादेः कर्तरि करणशक्तिस्वीकारेऽपि द्वयोः शक्त्योरेकदा विवक्षायामसम्भवेन "विज्ञानं यज्ञं तनुते" इत्यादौ कर्तृत्वविवक्षायां करणशक्तिविवक्षाप्रयुक्तविज्ञानेनेति तृतीयान्तनिर्देशादपादानासम्भवेन तद्विपर्ययप्रसङ्गाभावादित्याशयादित्यर्थः।

नन्विदमयुक्तम्, आपादनप्रतिपादकग्रन्थस्यैवापत्तावप्रामाण्यप्रतिपादकत्वाऽसम्भवात्, आपत्तेः प्राक्तनसूत्रादप्रक्रान्तत्वाच्चेत्यत आह–*वस्तुतस्त्विति*। *अन्वाचयमात्रमेतदिति*। एतत्–शक्तिहान्यापत्तिरूपं दूषणम्। मानपदेन तात्पर्यविषय-

न्त्वस्य व्यवच्छेदः। अन्वाचयत्वं च, तात्पर्य्यज्ञानविषयाऽर्थसन्निहितत्वम्। उपेक्षाविषयत्वं वा। तच्च बुद्धेः करणशक्तिविपर्ययेऽस्ति। दृष्टान्तप्रतिपादकसूत्राद् बुद्धेः कर्तृत्वनिरासस्यैव मुख्यत्वावगतेरिति भावः।

भूषणे तु तदेतेषामित्याद्यभिप्रायादित्यन्तः पाठो नास्त्येव। नन्वेवं कर्त्तेत्यादिः न युज्येतेति चेत्? सत्यम्। 'अन्वाचयमात्रमेतद्' इति पाठः। *अन्वाचयेति*। विज्ञानशब्दार्थस्य, जीवत्वे शक्तिविपर्य्ययापत्तिः सम्भाव्यते, न तु निर्भरस्तत्रेत्यर्थः। उपाधिवशेन परमात्मन्येव तत्सम्भवादिति भावः। तदेव विशदयति—*यथा चेति*। सूत्रे च—शब्दस्त्वर्थे, पराभिमतबुद्धिकर्तृत्वनिरासार्थः। 'न हि परमात्मनोऽन्यो जीवो नाम कर्त्ता भोक्ता वा सम्भवति। नित्यशुद्धबुद्धमुक्तात्मनः कर्तृत्वाऽऽद्यसम्भवादनिर्मोक्षप्रसङ्गाच्च।

किन्तु "ध्यायतीव लेलायतीव" इति श्रुतरेध्यस्तं तत्तत्र वाच्यम्। अविद्योपस्थापितं तत् परस्यापि सम्भवति। "यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति" इति श्रुतेः विद्याऽवस्थायां तु तदभावो "यत्र तु सर्वमात्मैव स्यात्, किं केन पश्येत्" इति श्रुतेः। यथा तक्षा वास्यादिकरणहस्तः कर्त्ता दुःखी भवति, स एव गृहस्थो विमुक्तवास्यादिर्निर्व्यापारः सुखी भवतीति तदर्थः। तथाच शक्तिविपर्य्ययादित्यस्य पराभ्युपगतबुद्धिकर्तृत्वनिरासे तात्पर्य्यम्, न तु बुद्धेः कर्तृत्वेन करणशक्तिपरित्याग इति न तद्विरोध इति भावः॥

अर्थ—करण तृतीया का व्यापार एवं आश्रय-वाच्य हैं। इसमें "साधकतमं करणम्" (१।४।४२) यह सूत्र प्रमाण है। साधकतम का तम प्रकृष्ट अर्थ में है। अन्यवधान से फल का उत्पादक जो व्यापार तादृशव्यापारवत्ता प्रकृष्टता है। एतादृश व्यापारवान् कारण को करण कहते हैं। वाक्यपदीय में लिखा है—

क्रियायाः परिनिष्पत्तिः (तृ० का० ९०) इत्यादि। जिसके व्यापार के बाद क्रिया अर्थात् फल की उत्पत्ति की विवक्षा जहाँ जब की जायगी तब वही वहाँ करण होता है। यही वस्तु करण है ऐसा नियम नहीं है। तत्—करणत्व वस्तुतः-वस्तु विशेषनिष्ठत्व रूप से अर्थात् वस्तु विशेष में रहता है इस प्रकार निर्देश करने योग्य नहीं है। हि-यस्मात् हेतोः करणत्वादि की गोत्वादि के समान वस्तुविशेष में वृत्ति निश्चित नहीं है। इसमें कारण का निर्देश करते हैं—अधिकरणतया निश्चित स्थाली को लघुतर=पतला अवयव होने के कारण करणत्व से विवक्षा करने पर "स्थाल्या पच्यते" ऐसा प्रयोग भी इष्ट है। एक समय में ही सभी की करणत्वेन विवक्षा नहीं होती है। अत एव सप्तमी तथा द्वितीया विभक्ति सावकाश है। इसकी सूचना विवक्ष्यते इस पद से कारिका में दी गई है।

शङ्का—विवक्षा करनेपर कारकान्तर भी यदि करण माना जायगा तो "कर्ता शास्त्रार्थवत्वात्" (ब्र. सू. २।४।२३) के अधिकरण में "शक्तिविपर्ययात्" इस सूत्र से, [1]अन्तःकरण

१. यद्यपि शाङ्करभाष्य में बुद्धि में कर्तृत्व मानने पर शक्ति विपर्यय की आपत्ति दी है अन्तःकरण में कर्तृत्व शङ्का नहीं है तथापि अन्तःकरण का ही परिणाम बुद्धि है। परिणाम और परिणामी का अभेद है। इसलिए बुद्धिरूप परिणाम से परिणामी अन्तः करण अभिन्न होने के कारण मूल में बुद्धि के स्थान में अन्तःकरण का उपादान किया है।

को कर्त्ता मानने पर करणशक्ति का विपर्यय अर्थात् बुद्धि से करणत्वशक्ति की निवृत्ति की आपत्ति दी गई है उसकी असङ्गति हो जायगी। क्यों कि कर्त्ता भी विवक्षा के कारण हो सकता है। अतः कर्तृत्व का करणत्व के साथ विरोध न होने से कर्तृत्व मानने पर भी बुद्धिरूपान्तःकरण से करणत्व शक्ति की निवृत्ति प्राप्त होगी इस शङ्का की सङ्गति नहीं हो सकती है। इसलिये करणत्व विवक्षाधीन नहीं है।

समाधान—"तदेतेषाम् प्राणानाम्" ( बृ० आ० २ ब्रा० ) इन्द्रियों का विज्ञानेन = मन से विज्ञानम् = ग्रहणशक्ति को आदाय = ग्रहण करके इत्यर्थक दूसरी श्रुति में करण-रूप से निश्चित जो अन्तःकरण ( विज्ञान ) उसमें अनिश्चित कर्तृत्वशक्ति की कल्पना करने से शक्ति के विपर्यय की अप्रामाणिक कल्पना करनी पड़ेगी इस आशय से दोष प्रदर्शन है।

एक स्थान में करणत्व से निश्चित को अन्यत्र कर्तृत्व की विवक्षा में किसी प्रकार की बाधा नहीं है किन्तु निश्चित करणत्व को छोड़कर उसमें अक्लृप्त = अनिश्चित कर्तृत्व की कल्पना अयुक्त है इस आशय का ग्रन्थ है।

वस्तुतः विज्ञान (बुद्धि) को कर्त्ता मानने पर करणत्वशक्ति की उसमें हानि हो जायगी यह दोष, अन्वाचय = तात्पर्य ज्ञान विषय अर्थ के प्रसङ्ग से अर्थान्तर के सम्बन्ध का बोधन मात्र है। जीव में कर्तृत्व के साधन में तात्पर्य है करणत्वशक्ति की अन्तःकरण में हानि की आपत्ति में तात्पर्य नहीं है।

जीव में कर्तृत्व स्वाभाविक नहीं है किन्तु औपाधिक है। अन्यथा अग्नि की उष्णता के समान कर्तृत्वादि की आत्मा से निवृत्ति नहीं होने से मोक्ष नहीं होगा इत्यादि विशद विवेचन "यथा च तक्षोभयथा" ( ब्र० सू० २।३।४० ) इस सूत्र के अधिकरण में शाङ्कर-भाष्य में तथा इसी को विशेषरूप से बृहद् वैयाकरणभूषण में स्पष्ट किया गया है।

हिन्दी भाष्य :—

शङ्का—करण में होनेवाली तृतीया का आश्रय और व्यापार दोनों ही वाच्य हैं। व्यापार का धातु से ही लाभ हो जाने से तृतीया का आश्रयमात्र ही अर्थ क्यो नहीं मानते ?

समाधान—कर्ता के व्यापार का धातु द्वारा लाभ होने पर भी करण में प्रतीत होने वाले प्रकृष्ट व्यापार की उपस्थिति शब्द द्वारा जब तक नहीं होगी तब तक उसका शाब्द बोध में भान नहीं होगा। अतः उसमें शक्ति स्वीकार आवश्यक है।

तिङन्त से किसी प्रकार के भेद से युक्त व्यापार का भान नहीं होता। इसमें प्रमाण के लिए "साधकतमं करणम्" इस सूत्र का उपन्यास किया है। तमप् का प्रकर्ष अर्थ है। प्रकर्ष का स्वरूप अव्यवधान से फल का जनक जो व्यापार तादृशव्यापाराश्रयत्व है। साधकतम ही करण होता है। इससे करण में व्यापार बोधकत्व स्पष्ट है। व्यापाररूप करण हो नहीं सकता अतः अव्यवधान से फलजनक व्यापाराश्रय करण है। इससे व्यापार और आश्रय करण तृतीयार्थ सिद्ध होता है।

प्रकर्ष कारकान्तर की अपेक्षा से विवक्षित है। करण की अपेक्षा से नहीं। अन्यथा "अश्वेन राजमार्गेण देवदत्तो जगाम" ( अश्व से राजमार्ग के द्वारा देवदत्त गये ) इस वाक्य में करणान्तर की अपेक्षा प्रकर्ष लेने पर एक ही को किसी के प्रकृष्ट होने से करण संज्ञा होगी दूसरे को नहीं होगी। ऐसी दशा में तृतीया-विभक्ति किसी एक से ही होगी। अतः कारकान्तरापेक्ष ही प्रकर्ष लिया जाता है।

कारकाधिकार से साधक का लाभ हो जायगा पुनः साधकग्रहण साधकतम अर्थ का बोधक हो जाने से तम का ग्रहण व्यर्थ है। अतः तम से शब्दसामर्थ्यगम्य प्रकर्ष का आश्रयण कारक में नहीं होता ऐसा ज्ञापन करने के लिये उसकी आवश्यकता है। इसीलिये "आधारोऽधिकरणम्" (१।४।४५) इसमें मुख्य और गौण दोनों प्रकार का आधार लिया जाता है इत्यादि अन्यत्र देखिये।

हरिकारिका में क्रिया पद फल का बोधक है। "काष्ठैः पचति" इस वाक्य से शाब्द बोध इस प्रकार का होता है। काष्ठ का तृतीया विभक्ति के अर्थ आश्रय में अभेद सम्बन्ध से अन्वय होता है आश्रय का तृतीया से उपस्थापित व्यापार में निष्ठत्व सम्बन्ध से अन्वय है। फलजनकत्वोपहित तृतीयार्थ व्यापार का अनुकूलता सम्बन्ध से धात्वर्थ विक्लित्यनुकूल व्यापार में अन्वय है। इस प्रकार काष्ठाभिन्नाश्रयनिष्ठ जो फलोपहित-व्यापार तादृश व्यापार से विशिष्ट जो विक्लित्यनुकूलव्यापार। वैशिष्ट्य जन्यजनकभाव सम्बध से लेना होगा। व्यापार जन्य विक्लित्ति का जनक धात्वर्थ व्यापार है। अतः पूर्व व्यापार से जन्य का जनक उत्तर व्यापार है।

वस्तुतः तृतीयार्थ व्यापार का फल में अन्वय करना उचित है। काष्ठाभिन्नाश्रयनिष्ठ जो व्यापारतज्जन्य जो विक्लित्ति तदनुकूल व्यापार।

जिसके व्यापार के अनन्तर फलोत्पत्ति की विवक्षा करेंगे वही वहाँ उस समय करण है इत्यादि अर्थ पहले कहा जा चुका है।

शङ्का—विवक्षा से करण मानने पर उत्तर मीमांसा के अधिकरण के साथ विरोध होगा—

"यजेत् जुहुयात्" इत्यादि स्थलों में याग होमादि क्रिया का निर्देश किया है। उन क्रियाओं का कर्ता जीव अथवा विज्ञान (बुद्धि) है इस सन्देह में जीव कर्ता है बुद्धि नहीं इस उत्तर पक्ष का साधक "कर्ता शास्त्रार्थवत्वात्" यह सूत्र है। प्रवृत्ति या निवृत्तिरूप कर्म का कर्ता जीव है। इसी से विधि या निषेधरूप शास्त्र का अर्थवत्त्व अर्थात् सफलत्व सिद्ध होता है। जीव के कर्ता होने पर ही विधिनिषेधरूप शास्त्र सार्थक होगा। अन्यथा बुद्धि के अनित्य होने से जन्मान्तर कृत पुण्य पाप के फल का भोग किसके द्वारा होगा। शास्त्र का लक्षण इस प्रकार किया है—

प्रवृत्तिर्वा निवृत्तिर्वा नित्येन कृतकेन वा।
पुंसां येनोपदिश्येत तच्छास्त्रमभिधीयते॥

जिस किसी नित्य अथवा अनित्य के द्वारा प्रवृत्ति या निवृत्ति का उपदेश किया जाता है वही शास्त्र है। उसकी अर्थवत्ता=सफलता के लिये जीव कर्ता है। जीव नित्य होने से इहलोक परलोक दोनों में एक ही कर्ता एवं फल भोक्ता होता है। अन्यथा इह लोक में कर्म करने वाला दूसरा होगा परलोक या जन्मान्तर में फल भोग किसी दूसरे को होगा। अच्छा या निकृष्ट कार्य करनेवाले को ही लोक में फल की प्राप्ति देखी जाती है। अतः विपरीत फल कल्पना असङ्गत है। इसी कारण परमात्मा में वैषम्य और नैर्घृण्य दोष भी नहीं होता। ईश्वर सृष्ट जगत् में अनेक प्रकार की विषमतायें हैं। कोई धनी है कोई निर्धन है कोई पुत्रवान् है कोई अपुत्र है कोई अन्धा है कोई पङ्गु है इत्यादि विभिन्नता के कारण यदि ईश्वर हैं तो उनमें निर्दयता और पक्षपात का प्रसङ्ग प्राप्त होता है। अतः कर्म की विषमता से ही जगत् में वैषम्य है यह मानना होगा।

यह कर्मानुसार फल की सङ्गति तभी होगी जब कर्म करने वाला और फल प्राप्त करने वाला दोनों एक होगा। इत्यादि विचार अन्यत्र देखिये।

विवक्षाधीन करणत्व के मानने पर दूसरा दोष शक्ति विपर्यय है। "एष हि द्रष्टा श्रोता मन्ता बोद्धा विज्ञानात्मा पुरुषः" इत्यादि, एवं कर्तव्य प्रतिपादक "यजेत् जुहुयात्" इत्यादि वचनों की सार्थकता के लिए जीव को कर्ता न मानकर विज्ञान वाच्य बुद्धि को कर्त्री मानने पर समर्थ कर्ता भी लोक में करण की अपेक्षा करके ही कर्ता होता है। करण सर्वार्थ साधन में कर्ता का सहायक है। बुद्धि को कर्ता माननेपर करणान्तर की अपेक्षा उसको होगी। ऐसी दशा में इससे करणत्व हट जायगा और दूसरे में करणता माननी होगी। अतः जीव कर्ता है इसी आशय से सूत्र है "शक्ति विपर्ययात्" अर्थात् शक्ति के विपर्यय=व्यतिक्रम से विज्ञान शब्द जीव का बोधक है।

शङ्का—'तदेतेषां प्राणानाम्' इत्यादि उपनिषद् वाक्य में विज्ञानेन=(बुद्धिरूपवृत्ति) से विज्ञानम्=ग्रहणशक्ति को आदाय=लेकर इस प्रकार बुद्धि को करण रूप से निर्देश होने पर कर्तृत्व शक्ति की कल्पना ठीक नहीं है। बुद्धि में कर्तृत्व मानने पर करणत्व की उसमें निवृत्ति हो जायगी। परस्पर विरुद्ध होने से दोनों शक्तियों का एक में समावेश नहीं हो सकता इस आशय का "शक्तिविपर्ययात्" यह सूत्र है। यदि विवक्षा से करणत्व मानिएगा तो कर्तृत्व और करणत्व दोनों का एक में विवक्षा भेद से समावेश होने के कारण करणत्व शक्ति के विपर्यय का प्रदर्शन विरुद्ध हो जायगा। अतः करणत्व विवक्षाधीन नहीं है।

समाधान—एक में कर्तृत्व और करणत्व शक्ति का समावेश न होने के कारण शक्ति विपर्ययापत्ति दोष नहीं है। किन्तु श्रुति में करणत्व रूप से कल्पित बुद्धि को श्रुत्यन्तर में कर्तृत्वरूप से कल्पना होने पर निश्चित करणत्व का त्याग अनिश्चितकर्तृत्व शक्ति का स्वीकार अयुक्त एवं निष्प्रमाण है इस आशय से उक्त सूत्र है।

एक श्रुति में करणतया निर्दिष्ट का श्रुत्यन्तर में कर्तृत्व विवक्षा असङ्गत नहीं है इस अभिप्राय से लिखते हैं—वस्तुतः—शक्तिहानि रूप दोष अन्वाचय मात्र है। तात्पर्य ज्ञान का विषयरूप जो अर्थ है उसके सन्निहितत्व=समीपवृत्तिता अन्वाचयत्व है। बुद्धि में कर्तृत्व का निरास ही मुख्य होने से तात्पर्य का विषय वही अर्थ है। उसके सन्निहित बुद्धि में करणत्व शक्ति का व्युत्क्रम रूप दोष है। अतः यह अन्वाचय[1] रूप है इस दोषोद्भावन में सूत्रकार का तात्पर्य नहीं है। भिक्षा ले आओ मार्ग में गाय मिल जाने पर लेते आना। यहाँ भिक्षा में तात्पर्य है गऊ के आनयन में औदासीन्य=उपेक्षा है। इसी प्रकार शक्तिविपर्यय में उपेक्षा है। बुद्धि में कर्तृत्व के निरास की उपेक्षा है। "यथा च तक्षोभयथा" इस वेदान्त सूत्र के देखने से ऊपर लिखी गई युक्ति प्रमाणित होती है। जिसका जो स्वाभाविक धर्म होता है उससे उसकी अत्यन्त निवृत्ति नहीं होती। अग्नि का धर्म उष्णता जल का धर्म शीतलता है। कारणवश कुछ समय के लिये उष्णता और शीतलता की निवृत्ति होने पर भी उपाधि के निवृत्त होने पर पुनः स्वाभाविक धर्म की उपलब्धि होने लगती है। इसी प्रकार आत्मा में कर्तृत्व स्वाभाविक नहीं है। किन्तु उपाधि के सम्बन्ध से है। जिस प्रकार बढ़ई (लोहार)

१. तात्पर्य विषय जो अर्थ उसके निरूपण प्रसङ्ग से जहाँ अर्थान्तर का भी सम्बन्ध प्रतीत होता है।

वसुला को हाथ में लेने पर कार्य करने के कारण श्रान्ति जन्य दुःख का अनुभव करता है। वसुला हाथ से हट जाने पर वही लोहार घर पर व्यापार रहित होने से सुख का अनुभव करता है। उसी प्रकार आत्मा, बुद्धि आदि करण के सम्पर्क से अपने में कर्तृत्व का अनुभव करता है। वस्तुतः उसका स्वाभाविक धर्म कर्तृत्वादि नहीं है। प्रकृत में वासी ( वसुला ) आदि करण की अपेक्षा करके ही लोहार कर्त्ता है केवल शरीर से तो अकर्ता है उसी प्रकार यह आत्मा बुद्धि आदि की अपेक्षा करके ही कर्ता है अन्यथा स्वयं अकर्ता है। इसका सादृश्य यही है कि करण की अपेक्षा से ही आत्मा में कर्तृत्व है स्वतः नहीं। जैसे बढई में वासी के द्वारा कर्तृत्व है स्वतः नहीं यही तात्पर्य विषय है। बुद्धि में करणत्वशक्ति के निरास में नहीं।

सप्तम्या अप्याश्रयोऽर्थः। "सप्तम्यधिकरणे च" ( पा० सू० २।३।३६ ) इत्यधिकरणे सप्तमी। तच्च "आधारोऽधिकरणम्" ( पा० सू० १।४।३४ ) इति सूत्रादाधारः। तत्त्वञ्चाश्रयत्वम्। तत्राश्रयांशः शक्यः। तत्त्वमवच्छेदकम्। नचाश्रयत्वमात्रेण कर्त्तृकर्म्मकरणानामाधारसंज्ञा स्यात्। स्यादेव यदि ताभिरस्या न बाधः स्यात्। "कारके" ( पा० सू० १।४।२३ ) इत्यधिकृत्य विहितसप्तम्याः क्रियाश्रय इत्येव यद्यपि तात्पर्य्यम्, तथाप्यत्र कर्त्तृकर्म्मद्वारा तदाश्रयत्वमस्त्येव स्थाल्यादेर्भूतलकटादेश्चेति स्थाल्यां पचति' 'भूतले वसति, कटे शेते' इत्याद्युपपद्यते। उक्तञ्च वाक्यपदीये—

कर्त्तृकर्मव्यवहितामसाक्षाद्धारयत् क्रियाम्।

( साधन समुद्देश १४८ )

उपकुर्व्वत् क्रियासिद्धौ शास्त्रेऽधिकरणं स्मृतम् ॥ इति।

एतच्च त्रिविधम्। औपश्लेषिकं, वैषयिकमभिव्यापकञ्च। 'कटे शेते' 'गुरौ वसति' 'मोक्षे इच्छास्ति' 'तिलेषु तैलम्' इति। एतच्च "संहितायाम्" ( पा० सू० ६।१।७२ ) इति सूत्रे भाष्ये स्पष्टम्।

सप्तम्यर्थन्निरूपयति—*सप्तम्या अपीति*। ननु तावता सूत्रादाधारस्य वाच्यत्वं लभ्यते, नाश्रयस्येत्यत आह—*तत्त्वञ्चेति*। आधारत्वं चेत्यर्थः। *आश्रयत्वमिति* आश्रयत्वविशिष्टत्वमित्यर्थः। विशिष्टे सूत्रेण शक्तिबोधनेऽप्याश्रयांऽश एव सा, न तु विशेषणीभूताश्रयत्वेऽपि। तत्प्रकारकशाब्दबोधे आश्रयशक्तिज्ञानस्य हेतुताकल्पनयैव तद्भानोपपत्तेरित्याशयेनाह—*तत्राश्रयांशः शक्य इति*। यद्वा ननु तावता परम्परया क्रियाश्रयस्य सप्तम्यर्थत्वं लब्धं, नाऽऽश्रयमात्रस्येत्यत आह—*आश्रयांश इति*। पूर्वोक्तरीत्या क्रियाया धातोरेव लाभादनन्यलभ्याश्रय एव शक्य इत्यर्थः। तत्त्वम्—आश्रयत्वम्। आश्रयत्वमात्रेणेति*। शक्यताऽवच्छेदकस्य कर्त्रादिसाधारण्यात् करणतृतीयायाश्च व्यापारोऽपीत्यपिना आश्रयार्थकत्वप्रतिपादनादिति भावः॥

*कर्तृकर्मद्वारेति*। एतादृशाऽर्थलाभश्च तत्सूत्रसामर्थ्यादेव। तथाहि—कारकाधिकारीयेणैतेन क्रियाऽऽश्रयस्याऽधिकरणसंज्ञा विधीयते। क्रिया च धात्वर्थः।

साक्षात्तदाधारयोः पराभ्यां कर्तृकर्मसंज्ञाभ्यामाक्रान्तत्वादिदं सूत्रमनवकाशं सत् परम्परया धात्वर्थाश्रयस्याधिकरणसंज्ञाविधानेन चरितार्थम् । परम्पराघटके च कर्तृकर्मणी एवेति परया कर्मसंज्ञया बाधादेव, मोक्षे इच्छास्तीतिवन्मोक्षे इच्छति भवतीति न प्रयोगः ॥

*औपश्लेषिकमिति* । सामीप्यसम्बन्धनिबन्धनमित्यर्थः । सामीप्यस्याऽपि संयुक्तसंयोगरूपतया संयोगपदेन तस्याऽपि सङ्ग्रहात्, आधेयव्याप्यतावच्छेदकयत्किञ्चिदवयवकमिति यावद् । *वैषयिकमिति* । विषयतासम्बन्धनिरूपकमित्यर्थः । *अभिव्यापकमिति* । आधेयव्याप्यतावच्छेदकयावदवयवकमित्यर्थः । तत्राद्यस्य 'कटे शेते' 'गुरौ वसति' इत्युदाहरणे, द्वितीयस्य—मोक्षे इच्छास्तीति, अन्त्यस्यान्त्यम् । 'कटे शेते' इत्यत्र परम्परया कटाभिन्नाश्रयकः शयनानुकूलो व्यापार इति बोधः । एवमन्यत्राऽप्यूह्यम् ॥

*भाष्ये स्पष्टमिति* । तत्र हि संहिताधिकारखण्डनाय "संयोगः शक्योऽवक्तुम् । अधिकरणं नाम त्रिप्रकारं—व्यापकमौपश्लेषिकं वैषयिकमिति । इक्शब्दस्य अच्छब्देन कोऽन्यौऽभिसम्बन्धो भवितुमर्हत्यन्यदत उपश्लेषात् "इको यणचि" उपश्लिष्टस्येति तत्राऽन्तरेण संहिताग्रहणेन संहितायामेव भविष्यति । इत्युक्तम् अत्रोपश्लिष्टपदाऽध्याहारेण सप्तमीत्यर्थे इदमेव भाष्यं मानम् । संहितायामित्युपलक्षणम् "तत्र च दीयते कार्य्यं भववत्" इत्यादिसूत्रस्थभाष्यस्यापि । तत्राऽधिकरणत्रैविध्यप्रतिपादनादिति ॥

नैयायिकास्तु—संयोगेनाधारः समवायेनाधार इत्याद्यनुगतप्रतीतिबलादाधारत्वमखण्डोपाधिः । संयोगादिरूपं तु न तत् । कुण्डसंयोगिनो बदरादेरपि कुण्डाधारतापत्तेः ।

ननु बदरप्रतियोगिकत्वविशिष्टसंयोगानुयोगितायाः कुण्डाधारताव्यवहारनियामकत्वाऽभ्युपगमान्नोक्तदोषो, न वा कुण्डे कुण्डसंयोगाऽनुयोगितासत्त्वेऽपि कुण्डे कुण्डमिति प्रतीत्यापत्तिः । कुण्डप्रतियोगिकत्वविशिष्टसंयोगानुयोगितायास्तत्र विरहादिति चेदेवमपि मल्ले मल्लाऽन्तरसंयोगसत्त्वे उक्तानुयोगिताध्रौव्यान्मल्ले मल्ल इति व्यवहारापत्तेरशक्यवारणत्वेनोक्तप्रकारस्यैवाऽनुसर्त्तव्यत्वात् । तथाच तादृशमाधारत्वमाधेयत्वं वा सप्तम्यर्थः । कस्याधारत्व इत्याकाङ्क्षायां क्रियानिरूपितस्य तस्य बाधादुपस्थितत्वाद् कर्तृकर्मणोराधार एव स इति तयोरेव तदन्वयः ।

'भूतले घट' इत्यादौ न यत्र क्रियाश्रवणं तत्राऽपि कारकत्वनिर्वाहाय तदध्याहारस्यावश्यकता । ईदृशस्थले परम्परासम्बन्धस्याऽपि क्रियाऽन्वयित्वरूपकारकत्वघटकता; शास्त्रप्रामाण्यात् । अत एवाऽक्षशौण्ड इत्यादौ सामर्थ्योपपत्तिः, एवञ्च भूतले घटोऽस्तीत्यत्र भूतलवृत्तिर्घटो वर्त्तमानसत्ताऽऽश्रय इति बोधः । नञ्समभिव्याहारे तु तादृशसप्तम्यर्थाऽभावो घटांशे भासत इत्याहुः ॥

**अर्थ**—द्वितीया तृतीया विभक्ति के समान सप्तमी विभक्ति का भी आश्रय अर्थ है । "सप्तम्यधिकरणे च" (२।३।३६) इस सूत्र से अधिकरण में सप्तमी का विधान किया

गया है। "आधारोऽधिकरणम्" (१।४।४५) इस सूत्र से आधार को अधिकरण संज्ञा की गई है। आधार और आश्रय दोनों का समान अर्थ है। अतः आश्रय सप्तम्यर्थ होने में सूत्र प्रमाण है। आधारत्व आश्रयत्वरूप है। इसमें आश्रयांश शक्य (वाच्य) है आश्रयत्व शक्यता का अवच्छेदक है।

शङ्का—आश्रयत्वमात्र को पुरस्कृत कर विहित, फल का आश्रय कर्म, व्यापाराश्रय कर्ता और करण को भी आधार संज्ञा अर्थात् आधार की संज्ञा=अधिकरण संज्ञा हो जायगी?

समाधान—कर्म, कर्ता तथा करण संज्ञाओं से यदि अधिकरण संज्ञा का वाध नहीं होता तो अधिकरण संज्ञा हो जातीं। पर कर्मादि संज्ञाओं से बाध होने के कारण उक्त स्थानों में अधिकरण संज्ञा नहीं हो सकती।

"कारके (१।४।२३) इसके अधिकार में विहित सप्तमी विभक्ति का क्रियाश्रय अर्थ में ही यद्यपि तात्पर्य है तथापि कर्ता अथवा कर्म के द्वारा क्रिया का आधार विवक्षित है।

साक्षात् क्रिया के आधार को कर्तृसंज्ञा और साक्षात् फल के आधार को कर्मसंज्ञा होने से वहाँ अधिकरण संज्ञा नहीं होसकती।

"स्थाल्यां पचति" यहाँ विक्लित्ति रूप क्रिया (फल) का आश्रय तण्डुल इसका आश्रय स्थाली है। अतः साक्षात् क्रिया (फल) के आश्रय का आश्रय स्थाली को अधिकरण संज्ञा होती है। "भूतले वसति" कटे शेते" इत्यादि में वसन और शयन क्रिया (व्यापार) का साक्षात् आश्रय कर्ता है उसका आधार भूतल एवं कट है। अतः साक्षात् वास और शयन व्यापार का आश्रय कर्ता उसका आधार भूमि और कट है उसको अधिकरण संज्ञा होने से तादृश प्रयोग उपपन्न होता है।

वाक्यपदीय में भी लिखा है—

कर्ता कर्म से व्यवहित क्रिया का परम्परा से धारण करनेवाला अर्थात् क्रिया का आश्रित कर्ता या कर्म उसका आश्रित, और क्रिया की सिद्धि में उपकार करनेवाले को शास्त्र में अधिकरण माना गया है।

अधिकरण के तीन भेद हैं—औपश्लेषिक, वैषयिक और अभिव्यापक। औपश्लेषिक का उदाहरण "कटे शेते" गुरौ वसति" वैषयिक का "मोक्षे इच्छास्ति" और अभिव्यापक का "तिलेषु तैलम्" दध्नि सर्पिः" उदाहरण हैं। संहितायाम् (६।१।७२) इस सूत्र के भाष्य में इसका विशेष रूप से स्पष्टीकरण है।

हिन्दी भाष्य—"सप्तम्यधिकरणे च" (२।३।३६) इस सूत्र से अधिकरण में सप्तमी का विधान है। आधार को अधिकरण कहते हैं। आधार और आश्रय दोनों का समान अर्थ है। अतः आश्रय सप्तमी विभक्ति का अर्थ है। यद्यपि परम्परा सम्बन्ध से क्रिया के आश्रय को सप्तमी का अर्थ होना चाहिये तथापि क्रिया धातु से लब्ध हो जाती है अतः आश्रय मात्र ही अर्थ है। इसी तात्पर्य से मूल में आश्रयांश को शक्य लिखा है।

क्रिया इस सूत्र में फल और व्यापार दोनों का बोधक है। साक्षात् फल का आश्रय कर्म साक्षात् व्यापार का आश्रय कर्ता है। अतः कर्ता और कर्म के द्वारा अर्थात् फलाश्रय कर्म का आधार फलाधार व्यापाराश्रय कर्ता के आधार द्वारा व्यापाराधार मानकर सप्तमी की उत्पत्ति होती है।

प्राचीन मत में "कटे शेते" इत्यादि स्थलों में स्ववृत्तिवृत्तित्व परम्परा सम्बन्ध है स्वशब्द से अधिकरण कट आदि तद्वृत्ति देवदत्त इसमें वृत्तित्व शयन क्रिया का है।

अतः पूर्वोक्त सम्बन्ध से कट का क्रियान्वय होने से कारक का क्रिया में अन्वय होता है यह नियम उपपन्न हो जाता है।

नवीन मत में अधिकरण का कर्ता कर्म में साक्षात् अन्वय होता है। बाद में कर्ता और कर्म के द्वारा क्रिया में उसका अन्वय होता है। इसीलिये "अक्षेषु शौण्डः" यहाँ अक्ष का साक्षात् शौण्ड में अन्वय होने से समास होता है। अन्यथा क्रिया में अन्वय होने पर शौण्ड में अन्वय नहीं होने से असामर्थ्यात् समास नहीं होगा। प्राचीन मत में इसके लिए शौण्ड पद की आसक्त शौण्ड में लक्षणा मानकर शौण्डपदार्थैकदेश आसक्त-क्रिया में अन्वय होने से समास सिद्ध होता है।

आधार का प्रथम भेद औपश्लेषिक है। उपसमीपे श्लेषः संयोगः उपश्लेषः ततः आगतम् अध्यात्मादित्वात् ठञ् प्रत्यय होने से औपश्लेषिकप्रयोग सिद्ध होता हैं। इसके दो उदाहरण मूल में दिये गये हैं—कटे शेते तथा गुरौ वसति"। और भेदों के एक एक उदाहरण दिया है। इसका तात्पर्य यह है कि औपश्लेषिक आधार का दो भेद होता है। उप का अर्थ समीप होने से समीप में श्लेप संयोग ऐसा प्रतीत होता है। सामीप्य संयुक्त संयोग को कहते है। शिष्य से संयुक्त जो देश उसमें जो संयोग हैं तदवच्छेदेन संयोग गुरु का है। अतः गुरु अधिकरण होने से उस पद से सप्तमी होती है। जैसे "गुरौ वसति"। अर्थात् शिष्य संयुक्त देश में संयोग गुरु का है अतः सप्तमी।

एकदेशावच्छेदेन श्लेप को भी उपश्लेष कहते हैं। श्लेषस्य समीपम् उपश्लेषम्। इसमें अव्ययीभाव समास करने के बाद "ततः आगतम्" इस अर्थ में ठञ् करने पर उक्तरूप की सिद्धि होगी। आरोपित संयोग वाला ऐसा अर्थ मानने से "कटे शेते" इसमें कट के एक देश के संयोग का अवयवी समग्र कट में आरोप होता है। अतः कट में सप्तमी होती है।

उपश्लेष से अधिकरणता आती है अधिकरण रूप धर्मी नहीं परन्तु धर्म और धर्मी को एक मानकर वैसा प्रयोग किया गया। संयोगनिबन्धन औपश्लेषिक है।

विषयता सम्बन्ध निबन्धन वैषयिक अधिकरण है। औपश्लेपिक और अभिव्यापक से भिन्न अधिकरण वैषयिक है। इसी लिये जहां तहां घटकत्व आदि सप्तमी के अर्थ कहे गये हैं। नैयायिक मत से उदाहरण—"मोक्षे इच्छा अस्ति" यह है। मोक्षविषयिणी इच्छा यह अर्थ प्रतीत होता है।

सर्वावयव को व्यापकर आधेय जिसमें रहता है उसको अभिव्यापक अधिकरण कहते हैं। जैसे—तिलेषु[1] तैलम्।

अधिकरण के तीनों भेद "संहितायाम्" इस सूत्र के भाष्य में स्पष्ट है। वहां का भाष्य इस प्रकार का है। "संहितायाम्" (६।१।७२) इस अधिकार सूत्र की आवश्यकता नहीं है। अधिकरण तीन प्रकार के होते हैं। अभिव्यापक औपश्लेपिक और वैषयिक। इक् इसका अच् इसके साथ इस उपश्लेप से अतिरिक्त दूसरा कौन सम्बन्ध हो सकता है इत्यादि। अच् से उपश्लिष्ट इक् को यण् विधान करने से संहिता में ही यणादि कार्य होगा। वही उपश्लेष है। संहिता न रहने पर उपश्लेप नहीं है क्योंकि विलम्ब

---

१. तिल के सभी अवयवों में तेल की व्याप्ति है। सर्वावयवावच्छेदेन तिल में तेल व्याप्त होने से अभिव्यापक का उदाहरण है।

से उच्चारण होने से दूर है। अतः संहिताधिकार की आवश्यकता नहीं है। इसी प्रकार "तत्र च दीयते" (५।१।९६) इस सूत्र के भाष्य में भी इसका विचार मिलता है।

अवधिः पञ्चम्यर्थः। "अपादाने पञ्चमी" (पा० सू० २।३।२९) तच्च ध्रुवमपायेऽपादानम्" (पा० सू० २।४।२४) इति सूत्राद्, अपायो-विश्लेष-स्तज्जनकक्रिया, तत्रावधिभूतमपादानमित्यर्थकादवधिभूतमिति भावः। उक्तञ्च वाक्यपदीये—

अपाये यदुदासीनं चलं वा यदि वाऽचलम्।
ध्रुवमेवाऽतदावेशात्तदपादानमुच्यते ॥
पततो ध्रुव एवाश्वो यस्मादश्वात् पतत्यसौ।
तस्याप्यश्वस्य पतने कुड्यादि ध्रुवमुच्यते ॥
उभावप्यध्रुवौ मेषौ यद्यप्युभयकर्म्मके।
(तृ० का० साधन समुद्देश १४०)
विभागे प्रविभक्ते तु क्रिये तत्र व्यवस्थिते ॥
मेषान्तरक्रियापेक्षमवधित्वं पृथक् पृथक्।
(तृ० का० साधन समुद्देश १४१)
मेषयोः स्वक्रियापेक्षं कर्तृत्वञ्च पृथक् पृथक् ॥

अस्यार्थः—अपाये = विश्लेषहेतुक्रियायाम्। उदासीनम्—अनाश्रयः। अतदावेशात् = तत्क्रियानाश्रयत्वात्। एवञ्च विश्लेषहेतुक्रियानाश्रयत्वे सति विश्लेषाश्रयत्वं फलितम्। वृक्षात् पर्णं पततीत्यत्र पर्णस्य तद्वारणाय सत्यन्तम्। धावतोऽश्वात् पततीत्यत्राश्वस्य क्रियाश्रयत्वाद्विश्लेषहेत्विति। कुड्यात् पततोऽश्वात् पततीत्यत्राऽश्वस्य विश्लेषजनकक्रियाश्रयत्वेऽपि तन्न विरुद्धमित्याह—*यस्मादश्वादिति*। तद्विश्लेषहेतुक्रियानाश्रयत्वे सतीति विशेषणीयमिति भावः। एवमश्वनिष्ठक्रियानाश्रयत्वात् कुड्यादेरपि ध्रुवत्वमित्याह—*तस्यापीति*।

उभयकर्मजविभागस्थले विभागस्यैक्यात् तद्विश्लेषजनकक्रियानाश्रय-त्वाभावात् परस्परस्मान्मेषावपसरत इति न स्यादित्याशङ्क्य समाधत्ते—*उभावपीति*। *मेषान्तरेति*। यथा निश्चलमेषादपसरद्द्वितीयमेषस्थले निश्चलमेषस्यापसरन्मेषक्रियामादाय ध्रुवत्वम्। तथात्रापि विभागैक्येऽपि क्रियाभेदादेकक्रियामादाय परस्य ध्रुवत्वमिति। तथा च विश्लेषाश्रयत्वे सति तज्जनकतत्क्रियानाश्रयत्वं तत्क्रियायामपादानत्वं वाच्यम्। क्रिया चात्र धात्वर्थो न तु स्पन्दः। तेन वृक्षकर्म्मजविभागवति वस्त्रे, वृक्षाद् वस्त्रं पततीति सङ्गच्छते।

वस्तुतो नैतावत् पञ्चम्या वाच्यम्। किन्तु अवधेर्लक्षणमात्रम्। द्वितीयार्थोक्तरीत्या प्रयोगातिप्रसङ्गस्यासम्भवेन वाच्यकोटौ प्रवेशस्य

गौरवेणाऽसम्भवादिति तु प्रतिभाति। न चैवमपि 'वृक्षात् स्पन्दत' इति स्यादिति शङ्क्यम्। आसनाच्चलित इतिवद् इष्टत्वात्। एतेन पञ्चमीजन्यापादानत्वबोधे अकर्मकधातुजन्योपस्थितेर्हेतुत्वमिति समाधानाभासोऽप्यपास्तः।

नचैवमपि 'वृक्षात् त्यजति' इतिदुर्वारम्। कर्मसंज्ञया अपादानसंज्ञाया बाधेन पञ्चम्यसम्भवात्। भ्रमात् कृते तथा प्रयोगे यदि बोधाभावोऽनुभवसिद्धः, तर्हि पञ्चमीजन्यापादानत्वबोधे त्यज्यादिभिन्नधातुजन्यबुद्धेर्हेतुत्वं वाच्यम्। 'वलाहकाद् विद्योतत विद्युत्' इत्यादौ निःसृत्येत्यध्याहार्य्यम्। रूपं रसात् पृथगित्यत्र तु बुद्धिपरिकल्पितमपादानत्वं द्रष्टव्यम्। "पृथग्विना" इति पञ्चमी वा। इदञ्च—

निर्दिष्टविषयं किञ्चिदुपात्तविषयं तथा।
(वृ० का० साधन स० १३६)
अपेक्षितक्रियञ्चेति त्रिधाऽपादानमुच्यते॥

इति वाक्यपदीयात् त्रिविधम्। यत्र साक्षाद्धातुना गतिर्निर्दिश्यते; तन्निर्दिष्टविषयम्। यथाऽश्वात् पतति। यत्र धात्वन्तरार्थाङ्गं स्वार्थं धातुराह तदुपात्तविषयम्। यथा वलाहकाद् विद्योतते। निःसरणाङ्गे विद्योतने द्युतिर्वर्त्तते। अपेक्षिता क्रिया यत्र तदन्त्यम्। यथा कुतो भवान् पाटलिपुत्रात्। अत्रागमनमर्थमध्याहृत्यान्वयः कार्यः।

पञ्चम्यर्थं निरूपयति—*अवधिः पञ्चम्यर्थ इति*। *विश्लेष इति*। विभाग इत्यर्थः। अवधित्वं च, प्रकृतधात्वर्थविभागजनकतत्क्रियाऽनाश्रयत्वे सति प्रकृतधात्वर्थजन्यविभागाश्रयत्वम्, करणादिकारकेऽतिव्याप्तिवारणाय विशेष्यम्। यत्किञ्चित् क्रियाजन्यविभागस्य तत्राऽपि सत्त्वादतिप्रसङ्गतादवस्थ्यमतस्तद्विशेषणम्—प्रकृतेति। एवञ्च वृक्षात् पततीत्यादौ विभागजनकक्रिया पतत्यर्थः। यद्वक्ष्यति—यत्र धातुना गतिर्निर्दिश्यते तन्निर्दिष्टविषयमिति। अधिकं हरिपद्यव्याख्याऽवसरे ग्रन्थकृतैव स्फुटीकरिष्यते।

उदासीनं—विभागजनकक्रियानाश्रयः। तद्द्वैविध्यमाचष्टे—*चलमित्यादि*। चलोऽश्वादिरचलो ग्रामादिः॥ *तत्क्रियानाश्रयत्वादिति*। तद्विभागजनकतत् क्रियाऽनाविष्टत्वादित्यर्थः॥ *क्रियाश्रयत्वादिति*। तथाचाऽव्याप्तिरिति भावः॥ *विशेषणीयमिति*। तथाच विभागस्तत्तद्व्यक्तित्वेन निवेशनीय इति भावः। समाधत्ते—*प्रविभक्ते त्वित्यादिना*। तत्तन्मेषवृत्तित्वविशिष्टत्वेन भिन्नतयाऽवगत इत्यर्थः। *व्यवस्थिते इति*। तत्तन्मेषवृत्तित्वविभागजनकक्रिये तत्तन्मेषानाश्रिते भवतएवेत्यर्थः। तदेवाऽऽह—*मेषान्तरक्रियापेक्षमित्यादि*। परस्परपदोपात्तयोरपादानत्वं, तत्तत्क्रियाश्रयत्वान्मेषपदोपात्तयोः कर्तृत्वञ्चोपपद्यत इत्यर्थः। तत्तद्व्यक्तित्वेनाऽपि धात्वर्थक्रिया विशेषणीयेत्याह—*क्रिया चेति*। *धात्वर्थे इति*।

प्रकृतधात्वर्थ इत्यर्थः। *न तु स्पन्दमात्रमिति*। यथाकथञ्चित्प्रतीयमानक्रियापीत्यर्थः। वृक्षकर्मजविभागवति वस्त्रे इत्युक्तया वस्त्रद्वारकसम्बन्धेन क्रियान्वयित्वं वृक्षस्य सूच्यते। क्रियाजनकत्वं कारकत्वमिति मते तु तत्र वृक्षस्याऽपादानत्वं दुरुपपादमेव॥ *सङ्गच्छत इति*। तादृशवृक्षनिष्ठक्रियायाः प्रकृतपतधात्वर्थत्वाऽभावेन तद्वति वृक्षे नाव्याप्तिरिति भावः।

अत्र वदन्ति—पञ्चम्या आश्रय इव विभागोऽप्यर्थोऽविभागार्थकपतत्यादिसमभिव्याहारे करणतृतीयाया व्यापारवद् अनेकधातूनां विभागे शक्तिकल्पनाऽपेक्षया एकस्या पञ्चम्यास्तत्र शक्तिकल्पनायां लाघवात्। विभागस्य धात्वर्थत्वे द्वितीयादिस्थले इव विभागस्य धातुना लाभादाश्रयमात्रं पञ्चम्यर्थ इत्येव ब्रूयात्, अवधेराश्रयात् पृथगुपादानवैयर्थ्यात्, त्यजिपत्योः पर्यायतापत्तेश्च। प्रकृतेऽधोदेशसंयोगानुकूल क्रियैव पतत्यर्थः। अधोदेशश्च संयोगांऽशे उपलक्षणम्। गम्युपात्तसंयोगफल उत्तरदेशवत् विभागाऽधीनपूर्वदेशसंयोगनाशमन्तरेण क्रियायाः संयोगजनकत्वाऽसम्भवात्। तस्याऽविभागजनकत्वमक्षुण्णमेव। समानप्रत्ययोपात्तत्वप्रत्यासत्त्या व्युत्पत्तिवैचित्र्येणाश्रयरूपपञ्चम्यर्थस्य विभागरूपाऽऽपरपदार्थे आधेयतयाऽन्वयस्तस्य चाऽनुकूलतासम्बन्धेन पतत्यर्थक्रियायाम्। एवञ्च विभागस्य धात्वर्थत्वाभावान्न कर्मताप्रसङ्गलेशोऽपि।

यद्वा अवधिरित्यनुगतव्यवहारादवधित्वमाश्रयत्वव्याप्यमखण्डोपाधिस्तदवच्छिन्न एव पञ्चम्यर्थः। एवञ्चावधेराश्रयात् पृथगुपादानम्, तस्य च स्वनिष्ठाऽवधित्वनिरूपकविभागजनकत्वसम्बन्धेन क्रियायामन्वयः। एवञ्च पूर्वकल्पे वृक्षात् पर्णं पततीत्यत्र वृक्षाऽभिन्नाश्रयकविभागजनकपर्णाऽऽश्रयकः संयोगानुकूलव्यापार इति बोधः। द्वितीये तु वृक्षाभिन्नाऽवधिविशिष्टा तादृक् क्रियेति विभागजन्यसंयोगो विभागजनकक्रिया वा न पतत्यर्थः, पत्लृ गतावित्यनुशासनाद्, गतिशब्दस्य गम्लृगतावित्यादौ संयोगानुकूलव्यापार एवं प्रसिद्धेः। त्यजत्यर्थे गतिव्यवहाराभावाच्च। फलाऽवच्छिन्न व्यापारे व्यपारावच्छिन्नफले वा धातोः शक्तिमङ्गीकुर्वतः स्वोक्तफलत्वानाक्रान्तविभागस्य धात्वर्थव्यापारावच्छेदकत्वासम्भवाच्च।

पततेः संयोगरूपफलाऽर्थकत्वे ग्रामं गच्छतीतिवत् ग्रामं पततीत्यापत्तिरिति तु न। शब्दशक्तिस्वाभाव्येन तदुपस्थितसंयोगस्याऽधोदेश एवान्वयात्। ग्रामस्य तत्त्वे तु विहगो ग्रामं पततीति त्विष्टमेव। अत एव नरकं पतित इति विग्रहे "द्वितीयाश्रिते"ति द्वितीयासमासविधानं सङ्गच्छते। न च वृक्षमजहत्यपि पर्णे भूमिं स्पृशति वृक्षात् पर्णं पततीत्यापत्तिः। तदुपस्थाप्यक्रियाजन्यदेशाऽन्तरविभागे वृक्षावधित्वानुपगमात्। अन्यथा क्रियाजन्यसंयोगमात्रस्यैव विभागजन्यत्वेन भूमिपर्णसंयोगस्यापि तथात्वाद् त्वन्मतेऽपि तादृशप्रयोगस्य दुर्वारतापत्तेः। अत एव—

गतिर्विना त्ववधिना नाऽपाय इति कथ्यते।
वृक्षस्य पर्णं पततीत्येव भाष्ये निदर्शितम्॥

इत्यवध्यस्य अवधिविभागाऽनुकूलत्वं विना संयोगजनिका क्रिया नाऽपायः।

अत एव पर्णविशेषणतया वृक्षविवक्षायामपायस्याविवक्षणाद् वृक्षस्य पर्णं पततीत्यत्र भाष्ये षष्ठ्युक्तेत्येतदर्थकं हरिणोक्तम् । विभागजन्यसंयोगस्य पूर्वापरीभूतानवयवकत्वेन च व्यापारत्वाभावेन विभागस्य तदुक्तफललक्षणानाक्रान्तत्वेन तदुभयार्थकस्य पततेर्धातुत्वानापत्तेश्च ।

यत्र च 'वृक्षादपसरति' इत्यादौ विभाग एव धात्वर्थस्तत्राश्रयोऽवधिमात्रं वा पञ्चम्यर्थः । तस्याधेयतया स्वनिष्ठाऽवधित्वनिरूपकत्वेन वा यथायथं विभागेऽन्वयः । 'परस्परस्मान्मेषावपसरत' इत्यादौ तु मेषपदवाच्यत्वावच्छेदेनैव कर्तृत्वविवक्षा, न परस्परवाच्यत्वावच्छेदेनेति, न पञ्चम्यनुपपत्तिरिति ।

उक्ताऽपादानत्वस्य पञ्चमीवाच्यतावच्छेदकत्वे गौरवं मनस्याधायाह— *वस्तुत इति* । *लक्षणमात्रमिति* ॥ मात्रपदेन शक्यताऽवच्छेदकत्वव्यवच्छेदः । तथाच व्यावृत्त्यादिफलकं निरुक्ताऽवधित्वमेव । पञ्चम्यर्थस्तु विभागाश्रयमात्रमेवेति भावः । *द्वितीयार्थोक्तरीत्येति* । चैत्रो ग्रामं गच्छतीतिवच्चैत्रः स्वं गच्छतीति वारणाय परया कर्तृसंज्ञया बाधादित्युक्तरीत्येत्यर्थः । नन्वेवं 'वृक्षात् पर्णं पतति' इत्यत्र पर्णेऽपि विभागाश्रयत्वस्यावैकल्यात् तदुत्तरं पञ्चम्यापत्तिरत आह—*अतिप्रसङ्गस्येति* । स्पन्द्यर्थप्रस्रवणजन्यविभागाश्रयत्वस्य वृक्षे सत्त्वादतिप्रसङ्गमाशङ्क्य निषेधति— *नचेति* । *एवमिति* । विभागाश्रयत्वमात्रस्याऽपादानसंज्ञानियामकत्वे इत्यर्थः ।

*स्यादिति* । प्रस्रवणस्याऽधोदेशसंयोगाऽनुकूलद्रवद्रव्यक्रियारूपतया विभागस्य धात्वर्थाऽभावेन परमते आपत्त्यसम्भवादित्याशयः । *इष्टत्वादिति* । चलत्यर्थक्रियाजन्यविभागाश्रयत्वस्यैवैतदर्थक्रियाजन्यविभागाश्रयत्वस्यापि पञ्चमीनियामकत्वे क्षतिविरहादित्यर्थः । चलतेर्गत्यर्थकत्वेऽपि राज्याच्चलित इति प्रयोगे विभागानुकूलक्रियापरत्ववत् स्पन्देरपि तदर्थत्वमुपगम्यापत्तेरिष्टत्वमिति भावः । जलमत्र कर्तृ वृक्षस्यैव कर्तृत्वविवक्षायां तु परया कर्तृसंज्ञया बाधेनोक्तापत्तेरसम्भवादिति भावः ।

*नचैवमपीति* । एवमपि धात्वर्थविभागाऽऽश्रयत्वस्याऽपादानसंज्ञानियामकत्वेऽपीत्यर्थः । *दुर्वारमिति* । धात्वर्थक्रियाजन्य विभागाऽऽश्रयत्वादिति भावः । *कर्मसंज्ञयेति* । वृक्षस्य त्यजत्यर्थव्यापारजन्यविभागाश्रयत्वादिति भावः । पूर्वमतिप्रसङ्गः कर्तृसंज्ञामादायैवोक्तः । इदानीं तु कर्मसंज्ञामादाय प्राप्तः स निवारित इति बोध्यम् । *अनुभवसिद्ध इति* ।

वस्तुतो विभागाऽवधित्वस्य वृक्षेऽबाधात्तज्जन्यबोधस्य प्रमात्वमिष्टमेव । विभागाश्रयस्यैवाऽवधित्वोक्तेः । त्यजतेः पतत्यर्थे लक्षणाग्रहदशायां, वृक्षाद् पर्णं त्यजतीति प्रयोगस्य प्रामाणिकत्वेन कारणतावच्छेदककोटौ त्यज्यादिभिन्नत्वस्य धात्वंशे निवेशयितुमशक्यत्वादित्यभिप्रेत्योक्तम्—*यदीति* । *बलाहकादिति* । धूममरुज्ज्योतिःसमूहो बलाहकः । ततोऽवयवभूतज्योतिषामेव विभागविवक्षणात् सोऽवधिः । द्युतिश्च लक्षणया निःसरणपूर्वकविद्योतनबोधकः । तथाच बलाहकाऽवधिकनिःसरणोत्तरकालिकं विद्युत्कर्तृकं विद्योतनमिति बोधः । *निस्सृत्येति* । निःसरणपूर्वके विद्यो-

तने धातोर्वृत्तिमुपगम्य पञ्चम्युपपाद्येत्यर्थः। अत एवोपात्तविषयेऽस्याऽन्तर्भावो वक्ष्यमाणः सङ्गच्छते।

*बुद्धिपरिकल्पितमिति*। बौद्धविभागाऽवधित्वमाश्रित्येत्यर्थः। तादृशापादानत्वाश्रयणे प्रमाणशैथिल्यं मत्वाऽऽह—*पृथगिति*। *साक्षादिति*। मुख्यवृत्त्येत्यर्थः। धातुनेत्यस्य समभिव्याहृतेत्यादिः। *गतिरिति*। विभागजनकक्रियेत्यर्थः। *उपत्तविषयमिति*। समभिव्याहृतधातुनोपात्तोऽलक्षितो गतिरूपो यत्रेत्यर्थः। *अपेक्षितक्रियमिति*। अनुपात्तधात्वर्थक्रितासाकाङ्क्षमित्यर्थः।

अध्याहृत्येति। अर्थाध्याहाराभिप्रायेण। पदाध्याहारवादे तु आकाङ्क्षितक्रियावाचकपदाऽनुसन्धानेऽप्यनुपात्तत्वरूपविशेषणघटितलक्षणस्यावैकल्यं वोध्यम्। प्रमाणं तत्र 'पुष्पेभ्यः स्पृहयति' इत्यादौ स्पृहयर्त्यादियोगे सम्प्रदानादिसञ्ज्ञाविधायकानि, "स्पृहेरीप्सितः" (पा० सू० १।४।३६) इत्यादिसूत्राणि। तैस्तत्तद्धातुयोग एव तद्बोधनात्। अर्थाध्याहारे तु "क्रियार्थोपपदस्य" इत्यादिसूत्रे "ल्यब्लोप" इत्यादिवार्त्तिकानि च।

अन्ये त्विदमित्थं व्याचक्षते—यत्र विभागस्तज्जनकक्रिया चोभयं धातुनाऽभिधीयते तदाद्यम्। यत्र विभागोऽध्याहृतधातुना तथा तद्द्वितीयम्। यत्र तूभयमप्यध्याहृतधात्वभिधेयं तत्तृतीयमिति। अधिकमन्यतोऽवधार्य्यम्।

अर्थ—पञ्चमी विभक्ति का अवधि अर्थ है।

प्रकृतिधातु के अर्थरूप विभाग का जनक जो क्रिया=व्यापार उसका अनाश्रय और प्रकृत धातु के अर्थ विभाग का आश्रय, अवधि शब्द से कहा जाता है।

इसमें प्रमाण "अपादाने पञ्चमी" (२।३।२८) यह सूत्र है। अपादान में पञ्चमी विभक्ति होती है। अपादान के स्वरूप का बोधन "ध्रुवमपायेऽपादानम्" (१।४।२४) इस सूत्र से होता है।

अपाय=विश्लेष=विभाग (ये तीनों समानार्थक हैं) अपाय शब्द अपायजनक क्रिया तात्पर्य से प्रयुक्त है। अत एव मूल में "तज्जनक क्रियायाम्" ऐसा अर्थ किया गया है। विभाग का जनक जो क्रिया उसमें ध्रुव अर्थात् अवधिभूत उसको अपादान संज्ञा होती है।

ध्रुव स्थिर ये दोनों पद लोक में पर्याय माने गये हैं। स्थिर, व्यापार का अनाश्रय ही होता है। प्रत्यासत्त्या प्रकृत धातु का अर्थ रूप जो व्यापार उसका अनाश्रय विवक्षित है। अतः अवधि ही यही ध्रुव पदार्थ है। स्थिर या अस्थिर प्रकृत में विवक्षित नहीं है।

वाक्यपदीय में उक्तार्थ का स्पष्ट निर्देश है।

अपाये यदुदासीनं चलं वा यदि वाऽचलम् इत्यादि। अपाये=विभागजनक क्रिया में जो उदासीनं=विभागजनक क्रिया का अनाश्रय एवं चल अथवा अचल अर्थात् स्थिर या अस्थिर हो विभागजनक क्रिया का अनाश्रय होने से वह ध्रुव ही है। उसको अपादान कहते हैं। ॥ १ ॥

जिस गिरते हुए घोड़े से जहाँ कोई सवार गिरता है वहाँ भी गिरने वाले व्यक्ति की अपेक्षा से वह घोड़ा ध्रुव ही है।

क्योंकि अश्व की पतन क्रिया से जन्य विभागजनक व्यापार और उस पर सवार व्यक्ति का क्रियाजन्यविभाग जनक व्यापार भिन्न-भिन्न है। इस लिये घुड़सवार की विभागजनक क्रिया का आधार घुड़सवार है न कि अश्व। अतः वह उस पतन क्रिया में ध्रुव है।

उस अश्व की विभागजनक क्रिया का अनाधार और विभागाश्रय कुड्य ( भित्ति ) है। वहां अश्व के गिरने की अवधि वह ( भित्ति ) है। अतः "कुड्यात् पततः अश्वात् पतति" ऐसा प्रयोग होता ही है ॥ २ ॥

अर्थात् कुड्य से गिरते हुए अश्व से वह गिरता है।

"परस्परस्मात् मेषौ अपसरतः = परस्पर मेष अलग होते हैं। यहाँ पर दोनो मेषों ( भेड़ा ) में विभाग उत्पन्न करने वाली क्रिया है। क्योंकि दोनों एक से एक विभक्त हो रहे हैं। ऐसी अवस्था में दोनों ही मेष विभाग जनक क्रिया का आधार होने से अध्रुव है अपादान संज्ञा कैसे होगी—इस आशय से लिखते हैं उभावप्य ध्रुवौ इति।

यद्यपि दोनों की क्रिया से उत्पन्न विभाग स्थल में दोनों अध्रुव हैं। ( क्यों कि विभाग जनक क्रिया का अनाश्रय नहीं है किन्तु आश्रय है। इसीलिये तो दोनों का दोनों से विभाग हुआ है। ) तथापि व्यक्ति भेद से क्रिया का भेद है अतः एक मेष की जो विभाग जनक क्रिया है उसका आश्रय वही मेष है दूसरा मेष उस क्रिया का अनाश्रय है। इसी प्रकार दूसरे मेष की विभाग जनक क्रिया का अनाश्रय पहला मेष है। एक मेष की क्रिया का अनाश्रय दूसरा मेष दूसरे मेष की क्रिया का अनाश्रय पहला मेष है। अतः अपादान संज्ञा सिद्ध हो जायेगी। इस आशय से कारिका में "प्रविभक्ते" इत्यादि है।— दोनों की क्रियायें विभक्त अर्थात् अलग-अलग व्यवस्थित हैं ॥ ३ ॥

मेषान्तर—इत्यादि दूसरे मेष की क्रिया को लेकर पहला और पहले मेष की क्रिया को लेकर दूसरे मेष में इस प्रकार पृथक् पृथक् अवधित्व है। अपनी अपनी क्रिया के आधार होने से अपनी क्रिया के प्रति उन दोनों मेषों में कर्तृत्व भी अलग-अलग है ॥ ४ ॥

कारिका का अर्थ मूल में भी लिखते है—अपाये अर्थात् विश्लेष = विभाग तज्जनक क्रिया में उदासीन अर्थात् उस क्रिया का अनाश्रय = अनाधार। अतद्वावेशात् अर्थात् विभाग जनक क्रिया का अनाश्रय होने से। इससे यह स्पष्ट होता है कि विभाग जनक व्यापार का अनाश्रय होता हुआ जो विभाग का आश्रय है उसको ध्रुव कहते हैं। वृक्षात् पर्णं पतति = वृक्ष से पत्ता गिरता है। यहाँ विभाग दो में होने से जिस प्रकार वृक्ष में विभाग है उसी प्रकार विभक्त होते हुये पत्ते में भी वह है। अतः पत्ता को भी विभाग का आश्रय होने से अपादान संज्ञा न हो जाय इसीलिये विभागजनक व्यापार के अनाश्रयत्व का लक्षण में निवेश है। पत्ता तादृश क्रिया का आश्रय है। अत एव पतन क्रिया का कर्त्ता है। अनाश्रय नहीं होने से अपादान संज्ञा नहीं हुई। "धावतोऽश्वात् पतति" = दौड़ते हुए घोड़े से गिरता है यहाँ अश्व धावन रूप क्रिया का अनाश्रय नहीं है किन्तु आश्रय है। अतः अपादान संज्ञा की प्राप्ति नहीं होगी। इसी कारण से क्रिया में विश्लेष हेतु अर्थात् विभाग हेतु विशेषण दिया। धावनक्रिया विभाग हेतु नहीं है। किन्तु पतन क्रिया उसका हेतु है।

"कुड्यात्[1] पततः अश्वात् पतति" = कुड्य से गिरते हुए घोड़े से गिरता है यहाँ अश्व विभागजनकक्रिया का आश्रय होने पर भी अपादान संज्ञा होने में बाधा नहीं है। इस अभिप्राय से "यस्मादश्वात्" इत्यादि द्वितीय कारिका का अंश लिखा है। विभाग का सामान्य रूप से निर्देश नहीं है किन्तु तत्तद् व्यक्तित्वेन विशेष रूप से विभाग के निवेश करने से चैत्र का अश्व से विभाग और अश्व का कुड्य से विभाग भिन्न-भिन्न होने के कारण कर्त्ता के विभाग का जनक व्यापार अश्व में नहीं है अश्व निष्ठ विभाग जनक व्यापर कुड्य में नहीं है। अतः "कुड्यात् पततः अश्वात् पतति" इस प्रयोग की उपपत्ति हो जाती है। विभाग भिन्न-भिन्न होने से विभागजनक क्रिया का भी भेद हो जाता है।

इसी प्रकार अश्व वृत्ति विभाग के जनक व्यापार का अनाश्रय कुड्य है। अतः ध्रुव है।

परस्पर विभाग स्थल में विभाग के एक होने से "परस्परात् मेषौ अपसरतः" यहाँ पर विभागजनक क्रिया का आश्रय ही मेष है अनाश्रय नहीं है। अतः उक्त प्रयोग नहीं होगा। इस प्रकार की आशंका "उभावपि" इस कारिका से करके "मेषान्तर,' इस कारिका से उसका समाधान किया गया है।

जिस प्रकार एक निश्चल मेष से दूसरा मेष हटता है। वहाँ हटने वाले मेष की विभागजनक क्रिया का अनाश्रय मानकर निश्चल मेष को ध्रुव कहते हैं। उसी प्रकार जहाँ परस्पर मेष हटते हैं वहां पर भी दोनों के विभाग एक होने पर भी विभागजनक क्रिया व्यक्ति के भेद से वह भिन्न-भिन्न है। अतः एक की क्रिया का अनाश्रय दूसरा दूसरे की क्रिया का अनाश्रय पहला है। इसलिये ध्रुवत्व स्पष्ट है। इस प्रकार विचार करने पर विभागाश्रय और तद्विभागजनकव्यापार का अनाश्रय तत्तत् क्रिया निरूपित अपादान है।

क्रिया यहाँ धात्वर्थ ली जाती है। स्पन्दरूप नहीं। स्पन्द अर्थात् जिस किसी रूप से प्रतीयमान क्रिया उसका ग्रहण नहीं है। इसीलिये वृक्ष के हिलने डुलने से वस्त्र के गिरने पर "वृक्षात् वस्त्रं पततिः" = वृक्ष से कपड़ा गिरता है। इस स्थल में वृक्ष को अपादान संज्ञा सिद्ध होती है। अन्यथा वृक्ष को कम्पनादि क्रिया से ही वस्त्र का पतन हुआ है। अतः विभाग जनकक्रिया का आश्रय वृक्ष अपादान कैसे होगा। क्रिया धात्वर्थ मानने पर वृक्षवृत्तिविभागजनक कम्पादि क्रिया पत् धातु का वाच्य नहीं है। इसलिये पूर्वोक्त दोष नहीं हुआ।

वस्तुतः विश्लेषजनक क्रियानाश्रयत्वादि अवधि के केवल परिचायक मात्र है—पञ्चमी का वाच्य अर्थ नहीं है। पञ्चमी का वाच्य अवधि (विभागाश्रय) मात्र है। "देवदत्तो ग्रामाद् विभजते" इसमें विभाग द्विनिष्ठ होने से ग्राम के समान देवदत्त में भी है, उसको अपादान संज्ञा की व्यावृत्ति, परा कर्तृ संज्ञा से अपादान संज्ञा के बाध होने से हो जायगी। विभक्ति में संज्ञा नियामक है उसका अर्थ नहीं। द्वितीया का अर्थ आश्रय है परसमवेतत्व आदि नहीं। "चैत्रः चैत्रं गच्छति" इत्यादि स्थल में द्वितीया की व्यावृत्ति परत्वेन कर्तृसंज्ञा से कर्मसंज्ञा का बाध होने से जिस प्रकार द्वितीया नहीं होती इसी प्रकार यहाँ भी समझना चाहिये। अतः गौरव के कारण पञ्चमी का वाच्यार्थ केवल अवधि है।

---

१. भित्तिः स्त्री कुड्यम्—इत्यमरः।

शङ्का—नन्वेवमित्यादि[1]। "वृक्षात् स्पन्दते" = वृक्ष से जल चूता है यहाँ अधोदेश-संयोगानुकूलव्यापार रूप प्रस्त्रवणार्थक स्पन्द धातु के योग में वृक्ष को अपादान संज्ञा होनी चाहिये। क्योंकि विभाग का आश्रय और विभागजनक व्यापार का अनाश्रय वृक्ष है।

समाधानः—स्पन्द धातु का विभाग अर्थ है। समाधान तादृश प्रयोग को इष्ट मान कर दिया गया है। अर्थात् "वृक्षात् स्पन्दते" यह प्रयोग इष्ट है। चल् धातु का विभाग अर्थ न होने पर भी "आसनाच्चलितः" "राज्यात् चलितः" इत्यादि स्थल में चल् धातु का विभाग अर्थ मानकर पञ्चमी होती है। विभागाश्रय आसन राज्य आदि को अपादान संज्ञा होती है उसी प्रका यहाँ स्पन्द धातु का विभाग अर्थ मानकर अपादान संज्ञा इष्ट है। विभाग में धात्वर्थ विशेषण देने वालों के मत में चल् धातु का उक्त प्रयोग में विभागानुकूलव्यापार अर्थ माना जाता है उसी प्रकार स्पन्द धातु का भी विभागानुकूलव्यापार अर्थ मानकर अपादान संज्ञा इष्ट है। पञ्चमी जन्य अपादानत्वप्रकारक बोध में सकर्मक धातु जन्य उपस्थिति कारण है यह समाधान ठीक नहीं है।

शङ्काः—धात्वर्थ विभाग के आश्रय को अपादान संज्ञा का नियामक मानने पर भी त्यज् धातु के योग में वृक्ष को अपादान संज्ञा होनी चाहिये। त्यज् धातु का विभागानुकूलव्यापार अर्थ होने से धात्वर्थ विभागाश्रय वृक्ष हो जाता है।

समाधानः—विभागरूप फल का आश्रय वृक्ष हो जाने से प्राप्त कर्म संज्ञा के द्वारा अपादान संज्ञा का बाध हो जाता है। अतः पञ्चमी नहीं होती हैं। भ्रम से "वृक्षात् त्यजति" इसके प्रयोग करने पर यदि अपादानत्व का बोधाभाव अनुभव सिद्ध है तो पञ्चमी जन्य अपादानत्वप्रकारक बोध में त्यज् आदि धातु से भिन्न धातुजन्योपस्थिति की कारणता कल्पना करनी चाहिये।

शङ्काः—विभागजनकव्यापार की अनुपस्थिति रहने से "बलाहकाद् विद्योतते" (मेघ से बिजुली चमकती है) इत्यादि स्थल में अपादान संज्ञा नहीं होगी।

समाधानः—निःसृत्य का अध्याहार होने से अर्थात् विभाग पूर्वक संयोगानुकूलव्यापाररूप निस्सरण है। तत् पूर्वक विद्योतन में द्युत् धातु की लक्षणा होने से अपादान संज्ञा हो जायगी। "रूपं रसात् पृथक्" यहाँ पर बौद्ध (बुद्धिस्थ) आरोपित विभाग की अवधिता कल्पित कर अपादान संज्ञा की उपपत्ति करनी चाहिये। अथवा "पृथग् विना" (२।३।३२) इत्यादि सूत्र से पञ्चमी होती है।

अपादान के तीन भेद हैं। वाक्यपदीय में इन भेदों का उल्लेख इस प्रकार है। (१) निर्दिष्ट विषय, (२) उपात्त विषय और (३) अपेक्षित क्रिय।

जहाँ धातु से साक्षात् गति = विभागजनक क्रिया का निर्देश होता है उसको निर्दिष्ट विषय कहते हैं। जैसे—अश्वात् पतति।

धात्वन्तर = निस्सरणादि[2] उसका अर्थ जिसमें अङ्ग = विशेषण है ऐसे अर्थ को धातु जहाँ कहती है उसको उपात्त विषय कहते हैं। जैसे—बलाहकाद् विद्योतते। निस्सरण

---

१. एवम् = अपादान संज्ञा का विभागाश्रयत्वमात्र नियामक है ऐसा मानने पर।

२. धात्वन्तरस्य निस्सरत्यादेरर्थो धात्वन्तरार्थः सोऽङ्गं = विशेषणं यत्रेत्यर्थः। इसी प्रकार "निस्सरणाङ्गे" यहाँ भी निस्सरणं = विभागपूर्वकं गमनं अङ्गं यत्रेति इस प्रकार बहुव्रीहि समास है। षष्ठी तत्पुरुष विवक्षित नहीं है।

विभागपूर्वक गमन यह अङ्ग विशेषण जिसमें है ऐसी जो विद्योतन क्रिया उसमें द्युत धातु की लक्षणा से वृत्ति है।

जहाँ क्रिया की अपेक्षा होती है वह अन्त्य अर्थात् अपेक्षित क्रिय कहा जाता है। जैसे—"कुतो भवान् पाटलिपुत्रात्"। यहाँ आगमन क्रिया का अध्याहार करके अन्वय करना चाहिये। "कुतो भवान् आगतः," "पाटलिपुत्रात् आगतः" ऐसी योजना करनी चाहिये।

हिन्दीभाष्यः—स्थैर्य अर्थ में ध्रुव धातु से अच् प्रत्यय करने से ध्रुव शब्द सिद्ध होता है। लोक में ध्रुव शब्द निश्चल अर्थ में आता है। परन्तु इस सूत्र में ध्रुव तत्तद् विभाग जनक तत्तद् व्यापार का अनाश्रय और विभाग के आश्रय को कहते हैं। निर्व्यापार ही निश्चल हो सकता है। इसलिये ध्रुव निश्चल अर्थात् व्यापार का अनाश्रय यह विवक्षित है। जिस किसी के व्यापार लेने की अपेक्षा उपस्थित धातु का ही व्यापार गृहीत होता है। साधारण धात्वर्थ व्यापार का ग्रहण नहीं है। किन्तु विभागजनकव्यापार का ग्रहण है। इसी उक्तार्थ में ध्रुव शब्द का तात्पर्य है। इसीलिये चल अचल दोनों ध्रुव हैं। क्योंकि प्रकृत धातु = उस वाक्य में निर्दिष्ट धातु इसका जो अर्थ व्यापार उसका आश्रय नहीं है अतः चल होने पर भी वह ध्रुव है।

"धावतः अश्वात् पतति" = दौड़ते हुए घोड़े से गिरता हैं। यहाँ अश्व स्थिर नहीं है प्रत्युत दौड़ने के कारण चल है फिर भी पतनक्रिया = विभागजनकक्रिया उसका आश्रय देवदत्त आदि है घोड़ा नहीं है। घोड़ा पतन की अवधि है। अतः अपादान संज्ञा होती है।

"कुड्यात् पततोऽश्वात् पतति" = कुड्य = दिवाल से गिरते हुये घोड़ा से गिरता है। यहाँ अश्व का दिवाल से विभाग और देवदत्तादि कर्ता का अश्व से विभाग पृथक्-पृथक् माना जाता है। अतः देवदत्त के विभाग की जनकक्रिया देवदत्त में है अश्व में नहीं है। इसी प्रकार अश्व को भित्ति से विभाग करनेवाली क्रिया अश्व में है कुड्य में नहीं है। अतः उक्त स्थल में कोई अनुपपत्ति नहीं है।

शङ्काः—"परस्परस्माद् मेषौ अपसरतः" इसमें दोनों मेषों का विभाग एक ही होने से विभागजनक क्रिया दोनों में है। अतः उसका अनाश्रय नहीं होने से अपादान संज्ञा नहीं होगी।

समाधानः—परस्पर व्यापारों में भेद है। विभाग मेषद्वय में एक होने पर भी उसका जनक व्यापार कर्ता के भेद से भिन्न-भिन्न है। प्रथम मेष के व्यापार से द्वितीय मेष का व्यापार भिन्न है। इस कारण प्रथम मेष के व्यापार का अनाश्रय दूसरा मेष और दूसरे मेष के विभागजनक व्यापार का अनाश्रय पहला मेष को मानकर अपादान संज्ञा की प्राप्ति सुलभ है।

शङ्का—कर्ता के भेद से क्रिया का भेद होने पर भी व्यवहार में भिन्नरूप से प्रतीति नहीं होती। अतएव "सरूपाणाम्०" इस सूत्र में भाष्यकार ने "न वै तिङन्तान्येकशेषारम्भं प्रयोजयन्ति" ऐसा लिखा है। तिङन्त में सुबन्त के समान एक शेष नहीं होता क्योंकि तिङन्त स्थल में क्रियाओं का परस्पर भेद न होने से अनेक कर्ता की समान क्रियाओं का एक ही धातु से बोध होता है। भेद होने पर ही विभिन्न क्रियाओं के बोध के लिए अनेक समान धातु का प्रयोग प्राप्त होगा उसकी निवृत्ति के लिये एकशेष की आवश्यकता हो सकती थी पर ऐसा नहीं है यह भाष्य का भाव है। अतः यहाँ क्रिया के भेद से अपादान संज्ञा का विधान ठीक नहीं है।

समाधान—शब्द भेद से क्रिया का भेद मानकर व्यवस्था करनी चाहिये। परस्पर और मेष इन दोनों का वाच्य समान हैं। केवल शब्दभेद से वाच्य का भेद मानकर अपादानत्व कर्तृत्व दोनों का निर्वाह होता है। परस्पर शब्द वाच्य मेष में तादृश क्रियानाश्रयत्व, मेष पदवाच्य में क्रियाश्रयत्व मानकर उक्त प्रयोग सिद्ध होता हैं। अन्तःकरणोपाधि के भेद से जिस प्रकार आत्मभेद होता है उसी प्रकार शब्दोपाधिकृत भेद भी माना जाता है।

शङ्का—वृक्ष की क्रिया ( कम्पनादि ) से जहाँ वस्त्र का विभाग होता है वहाँ वृक्षविभागजनक क्रिया = वृक्ष की कम्पन क्रिया उसका आश्रय वृक्ष होता है। अतः अपादान संज्ञा कैसे हुई।

समाधानः—क्रिया धातुवाच्य विवक्षित है। कम्पनादि क्रिया पत् धातु का वाच्य नहीं है।

पञ्चमी विभक्ति का आश्रय के समान विभाग भी अर्थ है। जिनका विभाग अर्थ नही है ऐसी पत् आदि धातुओं के योग में विभाग अर्थ के बोध के लिए उन अनेक धातुओं की विभाग में शक्ति-कल्पना करने से गौरव होगा। अतः एक पञ्चमी विभक्ति का ही विभागार्थ कल्पना उचित है। पत् धातु का विभाग पूर्वक संयोगानुकूल व्यापार अर्थ में मूलकार का तात्पर्य नहीं है। विभाग पत् धातु का अर्थ होता तब विभाग धातु से लब्ध हो जाने से आश्रयमात्र पञ्चमी का अर्थ है ऐसा भूषणकार को लिखना था। अतः पञ्चमी का अर्थ विभाग है धातु का नहीं। त्यज् और पत् में पर्यायता का प्रसङ्ग भी नहीं हुआ अन्यथा विभाग दोनों का अर्थ होने से पर्यायता की आपत्ति हो जायगी। त्यज् का विभागानुकूल व्यापार अर्थ और पत् का अधोदेशसंयोगानुकूल व्यापार अर्थ है। अधोदेश गम् धातु में उत्तर देश के समान उपलक्षण है विशेषण नहीं है। अतः धात्वर्थ से संगृहीत इसका कर्म नहीं हुआ। अधोदेशरूप कर्म धातु का शक्य नहीं है। यही कारण है धात्वर्थ-संगृहीत कर्म प्रयुक्त अकर्मकत्व का प्रसङ्ग नहीं हुआ। प्रकृति वृक्षादि के साथ पञ्चम्यर्थ आश्रय का अभेद सम्बन्ध से आश्रय का पञ्चम्यर्थ विभाग में आधेयता सम्बन्ध से विभाग का धात्वर्थ क्रिया में अनुकूलता सम्बन्ध से अन्वय होता है। विभाग धात्वर्थ न होने से विभागाश्रय में कर्म संज्ञा का प्रसङ्ग भी नहीं है।

अथवा अवधित्व अखण्डोपाधि है। तदवच्छिन्न में पञ्चमी विभक्ति की शक्ति है। अवधि का स्वनिष्ठावधित्वनिरूपकविभागजनकत्व सम्बन्ध से क्रिया में अन्वय है।

प्रथम पक्ष में वृक्षाभिन्नाश्रयनिष्ठविभागानुकूल पर्णाश्रयनिष्ठ संयोगानुकूलव्यापार ऐसा बोध "वृक्षात् पर्णं पतति" इससे होता है।

अथवा पक्ष में वृक्षाभिन्नावधिविशिष्टा अधोदेशसंयोगानुकूला क्रिया। वैशिष्ट्य उपरिलिखित सम्बन्ध से।

"गृहादपसरति" इत्यादि स्थल में अपपूर्वक सृ धातु की विभागपूर्वक संयोग में शक्ति है। वहाँ आश्रयमात्र या अवधि को अर्थ मानते है। इत्यादि अन्यत्र देखिये।

जिस प्रकार द्वितीया विभक्ति का आश्रय मात्र अर्थ होता है। फल और व्यापार धातु से ही लब्ध होने के कारण द्वितीया का अर्थ नहीं है। जो दूसरे से लभ्य न हो वही शब्दार्थ माना गया है। "चैत्रः चैत्रं गच्छति" इसमें संयोग देवदत्त और ग्राम दोनों में होने से चैत्र से भी प्राप्त एवं विभागाश्रय प्रयाग को "प्रयागात् काशीं गच्छति" इसमें प्राप्त द्वितीया विभक्ति की कर्मसंज्ञा के अभाव से व्यावृत्ति हो जाती है। उसी

प्रकार देवदत्तः प्रासादाद्याति यहाँपर विभागाश्रय देवदत्त कर्त्ताको अपादान संज्ञा, परत्वात् कर्तृसंज्ञा से बाध होने के कारण नहीं होती। अतः पञ्चम्यर्थ में तत्तद् विभागजनक व्यापार इत्यादि का निवेश आवश्यक नहीं है।

नैयायिकों के मत में परसमवेतत्व तथा विभाग पञ्चमी विभक्ति का अर्थ है। विभागमात्र अर्थ के मानने पर "पर्णात् पर्णं पतति" = पत्ता से पत्ता गिरता है ऐसा भी प्रयोग "पर्णं पतति" इसके स्थान में प्राप्त होगा। परसमवेतत्व विशेषण देने से पर्ण का विभाग परसमवेत नहीं है। क्योंकि विभाग और विभागजनकव्यापार दोनों पर्ण में होने से विभाग, विभागजनक व्यापाराश्रय से पर = भिन्न में समवेत नहीं हुआ।

शङ्का—धात्वर्थतावच्छेदक फल का अनाश्रय ऐसा कहने से उक्त दोष का निराकरण हो जायगा। संयोगाश्रय पर्ण के होने के कारण फलानाश्रयत्व पर्ण में नहीं है। अतः "पर्णात् पर्णं पतति" इस प्रयोग की आपत्ति नहीं होगी।

समाधानः—अधोदेश में गिरे हुये पत्ते से वृक्ष का संयोग रहने पर "वृक्षात् पर्णं पतति" ऐसा इष्ट प्रयोग नहीं होगा। क्योंकि संयोग रूप फल का वृक्ष अनाश्रय नहीं है।

शङ्काः—पञ्चम्यर्थ विभाग का परसमवेतत्वविशिष्ट विभाग में लक्षणा मानकर उक्त प्रयोग में पञ्चमी विभक्ति की आपत्ति का परिहार हो जाने से परसमवेतत्व पञ्चम्यर्थ नहीं मानना चाहिये।

समाधानः—शक्यार्थमात्र में प्रयोग अन्यत्र कहीं मिलने पर जहाँ कहीं शक्यार्थ का सम्बन्ध बाधित होता है वहाँ लक्षणा मानी जाती है। जहाँ केवल मुख्यार्थ (शक्यार्थ) में प्रयोग होता ही नहीं वहाँ कुछ अंश को शक्यार्थ नहीं माना जायगा। किन्तु सम्पूर्ण शक्यार्थ होगा। अन्यथा फल मात्र को द्वितीया का अर्थ मानकर परसमवेतत्व की प्रतीति लक्षणा द्वारा हो जाने से उसमें शक्ति के स्वीकार का अनौचित्य हो जायगा।

इस प्रकार "वृक्षात् पर्णं पतति" इस वाक्य से वृक्षनिष्ठविभागानुकूलवृक्षान्यसमवेतपतनानुकूलव्यापारजनककृतिमान् इस प्रकार का बोध होता है।

वस्तुतः कर्तृसंज्ञा पर होने से अपादान संज्ञा को बाध लेती है। एक स्थल में एक ही आकाङ्क्षारीय संज्ञा होती है। अतः अपादान संज्ञा का बाध होने के कारण पञ्चमी विभक्ति का आपादन नहीं हो सकता। विभक्ति की उत्पत्ति में संज्ञा नियामक है अर्थ नहीं। ऐसा नहीं मानने पर "ग्रामं त्यजति" इसमें भी विभागाश्रय ग्राम से पञ्चमी विभक्ति की प्राप्ति होगी। अतः संज्ञा ही विभक्ति में नियामक होने से परसमवेतत्वविशिष्ट विभाग को पञ्चम्यर्थ मानना युक्त नहीं है।

"वृक्षात् स्पन्दते" और कहीं स्यन्दते ऐसा पाठ है। "स्पदि किञ्चिच्चलने" इससे स्पन्दते "स्यन्दू प्रस्रवणे" इससे "स्यन्दते" इसकी सिद्धि होती है। स्पन्द् इसका किञ्चिच्चलन और स्यन्द् इसका प्रस्रवण (चूना) अर्थ है। प्रथम में वस्त्र कर्ता है द्वितीय में जल कर्ता है। देवदत्त (कर्ता) को अपादान संज्ञा की व्यावृत्ति होने पर भी "वृक्षात् स्पन्दते" इसमें वृक्ष को विभागाश्रय एवं विभागजनकधात्वर्थव्यापार का अनाश्रय होने से अपादान संज्ञा हो जायगी इसका समाधान इष्टापत्ति से किया गया है। अर्थात् ऐसा प्रयोग होता है। जिसके मत में विभाग को धात्वर्थ होना चाहिये उस मत में विभागपूर्वक अधोदेशसंयोगानुकूलव्यापार को पतन मानते हैं। "आसनात् चलितः"

इत्यादि स्थल में विभाग पूर्वक संयोगानुकूल व्यापार चल् का अर्थ मानकर अपादान संज्ञा मानी गई है। उसी प्रकार यहाँ भी समझना चाहिये।

उद्देश्यश्चतुर्थ्यर्थः। तथाहि–सम्प्रदाने चतुर्थी। तच्च "कर्मणा यमभिप्रैति स सम्प्रदानम्" (पा०सू०१।४।३२) इति सूत्रात् कर्मणाकरणभूतेन यमभिप्रैति–ईप्सति तत् कारकं सम्प्रदानमित्यर्थकादुद्देश्यम्।

इदमेव शेषित्वम्। तदुद्देश्यकेच्छाविषयत्वं च शेषित्वमित्येव पूर्वतन्त्रे निरूपितम्। अत एव "प्रासनवन्मैत्रावरुणाय दण्डप्रदानम्" (अ० ४ पा० २ अ० ६) इत्यधिकरणे क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छतीति विहितं दण्डदानं न प्रतिपत्तिः, किन्तु चतुर्थीश्रुत्यार्थकर्मेति तत्र निर्णीतम्।

रजकाय वस्त्रं ददातीत्यपि, खण्डिकोपाध्यायः शिष्याय चपेटां ददातीति भाष्योदाहरणादिष्टमेव।

वृत्तिकारास्तु—सम्यक् प्रदीयते यस्मै तत् सम्प्रदानमित्यन्वर्थसंज्ञया स्वस्वत्वनिवृत्तिपर्यन्तमर्थं वर्णयन्तो रजकस्य वस्त्रमित्येवाहुः। इदञ्च—

अनिराकरणात् कर्तुस्त्यागाङ्गं कर्मणेप्सितम्।
प्रेरणानुमतिभ्यां च लभते सम्प्रदानताम्।

इति वाक्यपदीयात् त्रिविधम्। 'सूर्यायार्घ्यं ददाति' इत्याद्यम्। नात्र सूर्यः प्रार्थयते, नानुमन्यते, न निराकरोति। प्रेरकम्—'विप्राय गां ददाति'—'अनुमन्तृ–'उपाध्यायाय गां ददाति'॥

चतुर्थ्यर्थं निरूपयति—*उद्देश्य इति*। ननूद्देश्यत्वं कामनाविषयत्वं, तच्च 'विप्राय गां ददाति' इत्यत्र क्रियाजन्यफलभागितया कामनाविषये गवादावतिप्रसक्तमतस्तद्व्यावृत्तम्, तत्सूत्रप्रामाण्येन दर्शयति–*तच्च कर्मणेत्यादि* कर्मणेत्यनन्तरम्, सम्बन्धुमिति शेषः। कर्मचाऽत्र पारिभाषिकम्। "कर्मणा यमभिप्रैति" (पा० सू० १।४।३२) इति क्रियाव्याप्यमानस्य सम्प्रदानसञ्ज्ञाविधानात्। अत एव तदकर्मकविषयम्।

ननु 'ग्रामं गच्छति' इत्यत्र ग्रामरूपकर्मजन्यसुखादिफलभागितयोद्देश्ये कर्त्तर्यप्यतिप्रसङ्गोऽत आह—*करणभूतेनेति*। करणत्वं च सम्बन्धक्रियाऽपेक्षम्। क्रियाव्यवहितव्यापारवत एव करणतया व्यापारे कर्मवृत्तित्वलाभेन तद्वृत्तित्वस्य धात्वर्थतावच्छेदकफल एव सम्भवात्। कर्मवृत्तितज्जन्यत्वस्य ग्रामजन्यसुखे असत्त्वान्नोक्तातिप्रसङ्ग इति भावः। यमित्यस्यानुपादाने योऽभिप्रैतीत्यर्थस्यापि लाभात् प्रथमान्तकर्त्तर्यतिप्रसङ्गः स्यादतस्तदुपात्तम्।

यद्यपि 'गौर्ब्राह्मणस्य भवतु' इतिच्छा विशेष्यतया गामेवाऽवगाहते; तथापि तस्य सूत्रफलितार्थपरत्वान्न दोषः। तथाच कर्मजन्यतद्वृत्तिफलभागित्वप्रकारको यद्वि-

शेष्यकोऽभिप्रायः स सम्प्रदानमिति सूत्रार्थः। तादृशफलसम्बन्धिप्रकारतानिरूपितविशेष्यताश्रय इति यावत्।

'विप्राय गां ददाति' इत्यादौ परस्वत्वजनकस्वस्वत्वध्वंसावच्छिन्नेच्छात्मकस्त्यागो दाधात्वर्थः। उद्देश्यत्वं चतुर्थ्यर्थः। गोरूपकर्मणश्चाऽऽश्रयत्वेन स्वत्वरूपफलेऽन्वयः। तथाच गोवृत्तिस्वत्वजनकस्वस्वत्वध्वंसाऽनुकूलो विप्राऽभिन्नोद्देश्यकस्त्याग इति वैयाकरणमते बोधः। उद्देश्यत्वं च विप्रे गोजन्यस्वत्वभागितयेच्छाविषयत्वमेव। एवं 'वृक्षायोदकमासिञ्चति' इत्यत्राप्युदकनिष्ठक्रियाजन्यसंयोगफलभागितयेच्छाविषयत्वात् सम्प्रदानत्वमूह्यम्।

नैयायिकास्तु—परस्वत्वेच्छाधीनस्वस्वत्वध्वंसेच्छा त्याग इति मते स्वस्वत्वध्वंसावच्छिन्नत्यागो ददात्यर्थः। विशेष्यत्वं चतुर्थ्यर्थः। तस्य स्वनिरूपकनिरुक्तेच्छाजन्यत्वसम्बन्धेन ददात्यर्थत्यागे गोरूपकर्मणस्त्वाधेयतया स्वस्वत्वध्वंसरूपफले। तथाच गोवृत्तिस्वस्वत्वध्वंसजनको निरुक्तसम्बन्धेन विप्रनिष्ठविशेष्यताविशिष्टो यस्त्यागस्तदाश्रयश्चैत्र इति वाक्याद् बोधः। यदि तु 'गौर्विप्रस्य भवतु न मम' इतीच्छैव त्यागः। स च गवि स्वस्वत्वध्वंसमिव परस्वत्वमप्यवगाहते; तदा स्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्यवच्छिन्नत्यागो दाधात्वर्थः। एवञ्च उक्तस्थले निरूपितत्वेनेच्छाविषयत्वं चतुर्थ्यर्थः। तस्य च स्वस्वत्वध्वंसेऽन्वयाद् विप्रनिरूपितत्वेन इच्छाविषयगोवृत्तिस्वस्वत्वध्वंसपूर्वकपरस्वत्वोत्पत्यवच्छिन्नत्यागाऽऽश्रय इति बोधः। जन्यस्वत्वस्य गोवृत्तित्वेऽवगतेऽर्थात्तस्मिंस्तज्जन्यत्वं लभ्यते एवेति गोजन्यस्वत्वनिरूपकत्वेनेच्छाविषयत्वरूपमुद्देश्यत्वं विप्रस्याऽक्षतम्। 'वृक्षायोदकमासिञ्चति' इत्यत्र तु संयोगाऽवच्छिन्नद्रव्यक्रियाऽवच्छिन्नव्यापारो धात्वर्थः। वृत्तित्वेनेच्छाविषयत्वं चतुर्थ्यर्थः। स च धात्वर्थतावच्छेदकसंयोगाऽन्वयी। द्वितीयार्थवृत्तित्वं तु द्रवद्रव्यक्रियान्वयि। तथाच वृक्षवृत्तित्वेनेच्छाविषयो यः संयोगस्तदवच्छिन्नायोदकवृत्तिर्द्रवद्रव्यक्रिया तदवच्छिन्नव्यापारानुकूलकृतिमानितिबोधः।

न चैवं सिच्धात्वर्थताऽवच्छेदकद्रवद्रव्यक्रियायां द्वितीयार्थवृत्तित्वान्वये 'पयसा वृक्षं सिञ्चति' इति न स्यात्, तादृशक्रियाया वृक्षावृत्तित्वादिति वाच्यम्। तत्र संयोगावच्छिन्नद्रवद्रव्यक्रियाया एव धात्वर्थतया तदवच्छेदकीभूतसंयोग एव वृक्षवृत्तित्वाऽन्वयान्नाऽनुपपत्तिरित्याहुः।

अपरे तु—विजातीयत्यागजन्यफलभागितयोद्देश्यत्वं सम्प्रदानत्वं चतुर्थ्यर्थः। एवञ्च 'विप्राय गां ददाति' इत्यादौ त्यागजन्यफलभागित्वप्रकारकब्राह्मणवृत्त्युद्देश्यताकगोविषयकत्यागाश्रय इति बोधः। रुद्राय गां ददातीत्यत्र रुद्रस्य त्यागजन्यफलभागितयोद्देश्यत्वमस्त्येव। स्वत्वं तु तस्य जायते न वेत्यन्यत्। त्यागजन्यं फलं तु स्वत्वरूपे ग्राह्यम्। तेन पितृस्वर्गमुद्दिश्य दत्तायां गवि ब्राह्मणस्य सम्प्रदानत्वोपपत्तिः। पितुः स्वत्वरूपं फलं नोद्देश्यं, किन्तु स्वर्गः।

'पितृभ्यो दद्यात्' इत्यादौ तु 'रुद्राय गां ददति' इतिवत् सम्प्रदानत्वमस्त्येव । त्यागे वैजात्यनिवेशाच्च न कर्तुः सम्प्रदानत्वम् । 'वृक्षायोदकमासिञ्चति' इत्यादौ तु चतुर्थ्यर्थे गौणसम्प्रदानत्वम् । तत्र सिचेर्द्रवद्रव्यवृत्तिसंयोगाऽनुकूला क्रिया । उदकादिपदसमभिव्याहारे च संयोगाऽनुकूलक्रियामात्रमर्थः । चतुर्थ्यर्थस्तु वृत्तित्वम् । इत्थञ्च वृक्षवृत्त्युदकीयसंयोगाऽवच्छिन्नक्रियेत्यादिबोधः ।

अत्र चतुर्थीद्वितीयाभ्यां तुल्यबोधजननात्तत्र द्वितीया मा भूदिति सम्प्रदानसञ्ज्ञाऽनुशिष्यते । 'वृक्षं पयसा सिञ्चति' इत्यादौ तु वृक्षशब्दात् द्वितीय भवत्येव । तत्र तृतीयाऽर्थोऽभेदस्तस्य द्रवद्रव्येऽन्वयः । द्वितीयार्थवृत्तित्वस्य तु संयोगेऽन्वयः । तथा च—वृक्षवृत्तिसंयोगाऽनुकूलोदकाभिन्नद्रव्यक्रियेति बोधः ।

'शत्रवेऽस्त्रं मुञ्चति' इत्यत्र दुःखोद्देश्यकत्वं चतुर्थ्यर्थः । मोचनं विभागावच्छिन्नक्रिया, क्रियानुकूलव्यापारो वा प्रकृत्यर्थस्य वृत्तित्वेन चतुर्थ्यर्थैकदेशे दुःखेऽन्वयः । एवं 'मित्राय दूतं प्रेषयति' इत्यत्र वार्त्तादानोद्देश्यकत्वम् 'पुत्राय धनं प्रेषयति' इत्यत्र प्रीत्युद्देश्यकत्वं चतुर्थ्यर्थं इत्याद्यूह्यमित्याहुः ।

तन्न सम्यक् । सम्प्रदाने हि चतुर्थी । न च भवदुक्तसम्प्रदानत्वे किञ्चिन्मानं, येन वृक्षायेत्यत्र चतुर्थी स्यात् । किञ्च संयोगरूपधात्वर्थान्वयित्वाऽविशेषादुदकपदादपि चतुर्थ्यापत्तिः । बाधकं कर्मत्वं तु वृक्षेऽप्यक्षतमिति न किञ्चिदेतत् । *इदमेवेति* । निरुक्तोद्देश्यत्वमेवेत्यर्थः । पूर्वतन्त्रे—मीमांसायाम् । *अत एवेति* । शेषित्वस्याऽर्थकर्मप्रयोजकत्वादेवेत्यर्थः ।

*प्रासनवदिति* । "प्रासनवन्मैत्रावरुणाय दण्डप्रदानं कृतार्थत्वात्" इत्यधिकरणे । प्रासनदृष्टान्तश्चायं ज्योतिष्टोमे श्रूयते—"नीतासु दक्षिणासु चात्वाले कृष्णविषाणं प्रास्यति" इति । यदा यजमानेन दत्ता दक्षिणा ऋत्विग्भिर्नीतास्तदा यजमानः स्वहस्ते धृतं कृष्णमृगशृङ्गं चात्वालनामकगर्त्ते प्रक्षिपेदिति तदर्थः । तत्रैवं सन्दिह्यते । किमेतत् प्रासनमर्थकर्मेति, प्रतिपत्तिकर्मेति वा, अर्थकर्मैव भवितुमर्हति सप्रयोजनत्वात् । प्रतिपत्तिकर्मतायां तु अपूर्वाभावे निरर्थकमेव स्यादिति पूर्वपक्षे—"कृष्णविषाणया कण्डूयति" इति श्रुत्या कृताऽर्थस्य प्रतिपत्त्यपेक्षत्वात् प्रतिपत्तिकर्मतैव युक्ता । न चानर्थक्यम् । प्रासनक्रियाप्रयुक्तापूर्वाभावेऽपि चात्वाल एवेति नियमापूर्वसद्भावादिति सिद्धान्तितम् । तद्वद्दण्डदानं न प्रतिपत्तिरिति योजना । *इत्यधिकरण इति* । चतुर्थाध्याय इति शेषः ।

ज्योतिष्टोमं प्रकृत्यैव, 'मैत्रावरुणाय दण्डं प्रयच्छति" इति श्रूयते । तत्र दण्डदानस्याऽर्थप्रतिपत्तिकर्मभावसन्देहेऽऽध्वर्युणा दीक्षासिद्ध्यै दत्तदण्डस्याऽऽसोमक्रयाद्यजमानधारणे कृताऽर्थत्वादुपयुक्तस्य तस्य दानं प्रतिपत्तिकर्मैवेति पूर्वपक्षे, "दण्डी प्रैषानन्वाह" इति श्रवणान्मैत्रावरुणस्य प्रैषाऽनुवादेऽवलम्बनाय दण्डोऽपेक्षितः । एवञ्च भविष्यदुपयोगसद्भावात् दानव्याप्यमानदण्डव्याप्यमानत्वेन मैत्रावरुणस्य

प्राधान्याच्च दण्डदानस्य प्रतिपत्तिकर्मण उपयुक्तसंस्काररूपादर्थकर्मैवोपयोक्ष्यमाण-संस्काररूपत्वेन प्राशस्त्याच्चार्थकर्मतैवोचिता। उपयोजयितुमेव सर्वत्र संस्कार-प्रवृत्तेः। उपयुक्ते तु प्रतिपत्तिरूपसंस्कारस्यासत्कारमात्रपर्य्यवसायित्वेन कार्य्यपर्य्यव-सानाऽभावादप्रशस्तत्वमतो मैत्रावरुणसंस्काराय तद्दानमर्थकर्म। तथा सति निरूढ-पशौ असत्यपि दीक्षिते दण्डसम्पादनस्यैतद् दानं प्रयोजकमिति सिद्धान्तितम्।

अर्थकर्मत्वे च शेषित्वं प्रयोजकम्। तच्च चतुर्थीश्रुत्या मैत्रावरुणस्य बोध्यत इत्याह—*चतुर्थीश्रुत्येति*।

ननु यत्र दा-धातुरधीनीकरणाद्यर्थस्तत्राऽधीनत्वादिरूपफलनिरूपकतयेच्छाविषय-त्वरूपसम्प्रदानत्वस्य रजकादावपि सम्भवात् "रजकाय वस्त्रं ददाति" "होत्रे उष्ट्रं ददाति" इत्यादिप्रयोगाः प्रसज्येरन्नित्याशङ्कामिष्टापत्त्या परिहरति—*रजकायेति*। तत्र प्रमाणमुपन्यस्यति—*खण्डकोपाध्याय इति*। *ददातीति*। दाधात्वर्थसंयोगसम्बन्धित्वेनेच्छाविषयत्वरूपोद्देश्यत्वस्य तत्र स-त्त्वादिति तद्भावः। अस्मिन् प्रयोगे ददातिः संयोगानुकूलव्यापाराऽर्थकः। चपे-टापदार्थस्तु प्रसृतकरतलम्। "न शूद्राय मतिं दद्यात्" इत्यत्र ददातिर्बोधनार्थकः। मतिपदार्थश्च तज्जनकम्—वेदादिशास्त्रमिति बोध्यम्।

*स्वस्वत्वनिवृत्तीति*। परस्वत्वोत्पत्त्यवच्छिन्नस्वस्वत्वध्वंसेच्छारूपं व्यापा-रम्, अर्थं—दाधात्वर्थमित्यर्थः। तथाचोक्ताऽर्थकदाधात्वर्थकर्मनिष्ठफलभागितयेच्छा-विषयत्वमेव सम्प्रदानत्वम्। अन्वर्थमहासञ्ज्ञाकरणसामर्थ्यादुक्तस्थले च ददातेस्तदर्थ-कत्वाभावेन 'रजकस्य वस्त्रं ददाति' इत्येवेति तेषामाशयः। उक्तभाष्यप्रामाण्यादन्व-दर्थत्वमेवाऽसिद्धम्, महासञ्ज्ञाकरणं तु प्राचामनुरोधादेव, सर्वनामस्थानसञ्ज्ञावदित्य-स्वरसादाहुरिति।

ननु 'अजां गामं नयति' इत्यत्राजायां निरुक्तसम्प्रदानत्वस्य सत्त्वात्तद्वाचकाच्च-तुर्थ्यापत्तिरिति चेद्? स्यादेव; 'यदि परया कर्म्मसंज्ञया सम्प्रदानत्वस्य न बाध इति। 'यूपाय दारु' इत्यादौ न सम्प्रदानचतुर्थी, अपि तु तादर्थ्ये। तादर्थ्यं च स एवाऽर्थः प्रयोजनमस्य तत्त्वम्। समभिव्याहृताऽर्थे तादर्थ्यविवक्षायां तद्वाचकाच्चतु-र्थीति 'तादर्थ्ये चतुर्थी वाच्या' इति वार्त्तिकार्थः।

प्रयोजनत्वं च न जन्यत्वं दुःखाय पापमित्यस्याऽप्यापत्तेः नाऽपि जन्यतयेच्छा-विषयत्वम्, स्वर्गादेः पुण्यादिजन्यतयेच्छाविषयत्वेन स्वर्गाय पुण्यमित्यापत्तेः। नचे-ष्टापत्तिः। तथा सति पक्तुं व्रजतीत्यर्थे पाकाय व्रजतीति प्रयोगनिर्वाहाय "तुमर्थाच्च" (पा० सू० २।३।१४) इतिसूत्रप्रणयनवैयर्थ्यापत्तेः। पाकादेर्निरुक्तव्रजनाद्यर्थतयैव तद्वा-चकाद्वार्तिकेन चतुर्थ्युपपत्तेः। अपि तु समभिव्याहृतपदाऽर्थनिष्ठव्यापारेच्छानुकूले-च्छाविषयत्वम्। तत्प्रयोजनकत्वरूपं तादर्थ्यं तु तदिच्छाधीनेच्छाविषयव्यापाराश्र-यत्वम्। दारुणो यूपेच्छाधीनेच्छाविषयतक्षणादिरूपव्यापारवत्तया यूपाऽर्थत्वात्तद्धि-

वक्षया यूपपदाच्चतुर्थी । तदर्थश्चेच्छाऽधीनेच्छाविषयव्यापाराश्रयत्वम् । प्रथमेच्छायां यूपादेः प्रकृत्यर्थस्य विषयित्वेनाऽन्वयः । तस्याऽऽश्रयतया दार्वादौ, एवं 'रन्धनाय स्थाली'इत्यादावप्यूह्यमिति केचित् ।

तन्न मनोरमम् । तादर्थ्यस्योक्तरूपत्वे 'मुक्तये हरिं भजति' इत्यत्र चतुर्थ्यनुपपत्तेः। न हि भजनस्य मुक्तीच्छाऽधीनेच्छाविषयव्यापारवत्ता । नाऽपि मुक्तेः सम्प्रदानता, कर्मजन्यफलभागितयाऽनुद्देश्यत्वात् । तस्मात्तदिच्छाधीनेच्छाविषयत्वमेव तत्तादर्थ्यम् । 'स्वर्गाय पुण्यम्' इत्यादयस्त्विष्यन्त एव । वार्तिकं दृष्ट्वा सूत्रकृतोऽप्रवृत्तेर्न "तुमर्थात्" इतिसूत्रानुपपत्तिरपीति । नमः स्वस्त्यादिशब्दयोगेऽपि तदर्थविशेषणवाचकात् "नमः स्वस्ति" ( पा० सू० २।३।१६ ) इति सूत्रेण चतुर्थी विधीयते । तत्र नमः पदार्थ-स्त्यागो नतिश्च । तत्र नतिः स्वापकर्षबोधनाऽनुकूलो व्यापारः । 'हरये नमः' इत्यादौ 'एषोऽर्थः शिवाय नमः' इत्यादौ च त्यागः । चतुर्थ्या च तत्रोद्देश्यत्वं प्रत्याय्यते । त्यागश्च यदि शिवस्यायं भवत्विति फलेच्छाऽधीनो न ममेत्याकारकः स्वस्वत्वेच्छाभावरूपस्तदा तदुद्देश्यत्वं त्यागजनकेच्छायाः स्वत्वभागितया विषयत्वम् । यदि त्यागरूपेच्छैवाऽन्यदीयत्वेन त्यज्यमानगतं स्वत्वमपि विषयीकरोति; तदा स्वत्व-भागितया विषयत्वमेव तदुद्देश्यत्वम् न तु स्वीकाराश्रयत्वम् । शिवादेर्विग्रहवतोऽपि स्वीकाराभावात्तदाऽकारकतया ध्यातस्य मन्त्रस्य त्यागोद्देश्यतामते तदभावाच्च ।

त्यज्यमानोपचारादौ शिवादिनिरूपितस्वत्वाभावेऽपि तदीयत्वेन तत्र द्रव्ये स्वत्वाऽवगाहिनीच्छाविसम्वादिरूपैव । अन्यदीयस्वत्वे बाधितं शिवादिनिरूपितत्वं शिवादिनिरूपितप्रसिद्धस्वत्वान्तरे वा बाधितं तद्द्रव्यसम्बन्धमवगाहते ।

तत्र प्रथमे स्वत्वप्रकारकेच्छाजन्यत्वं जन्यतासम्बन्धेन तादृशेच्छावत्त्वं वा चतु-र्थ्यर्थः । तत्र प्रकृत्यर्थस्य शिवादेर्विषयताविशेषसम्बन्धेनाऽन्वयः, द्वितीये विषयता-विशेष एव सः । तत्र च प्रकृत्यर्थशिवादेर्निरूपितत्वसम्बन्धेनाऽन्वयः । नमः पदार्थत्या-गस्य विषयताविशेषसम्बन्धेनाऽर्घादिद्रव्येऽन्वयः । द्रव्यस्यैव वा विशेष्यतया भास-मानत्यागेऽन्वयः । शिवायोत्सृजतीत्यादाविव नात्रानिराकर्तृसम्प्रदानता, नमः पद-स्याऽधातुत्वात् ।

नमः पदेन च स्वप्रयोक्तृपुरुषकर्तृकत्वोपरागेणैव त्यागो बोध्यते । अन्योच्चरित-नमः- पदेनान्यदीयत्यागाबोधनात् । तत्पुरुषोच्चारितनमः पदात्यागबोधे त्यागे त्यज्य-मानद्रव्ये च तदीयत्वसंशयाऽनुदयात् । अत एव तदीयत्वबोधनायाऽहं दद इतिवद्, 'अहं नम' इत्यादि न प्रयुज्यते । ऋत्विजा च यजमानरूपपुरुषान्तरीयद्रव्यत्यागे स्वीयत्वमारोप्यैव पूजायां नमः पदं प्रयुज्यते । स चारोपस्तस्मिन् विशेषदर्शनदशा-यामहार्यतयोपपद्यते । प्रतिनिधिप्रयुक्तदानवाक्यस्येव च पूजायां नमःपदघटितवाक्यस्य बाधितार्थकत्वेऽप्यदृष्टजनकत्वं न विरुद्धम् । शास्त्रप्रामाण्यादित्याद्यन्यत्र विस्तरः ।

तद् विभजते—*इदमिति* । "कर्मणायमभिप्रैति" ( पा० सू० १।४।३२ ) इति सङ्केतितं सम्प्रदानं चेत्यर्थः । त्रिविधमित्यनेनाऽन्वितम् । त्यागाङ्गं कर्मणेप्सितं

कर्तुरनिराकरणादिभिः सम्प्रदानव्यपदेशं लभत इति योजना। स्वनिष्ठोद्देश्यतानिरूपकत्वसम्बन्धेन त्यागे समभिव्याहृतधात्वर्थे विशेषणतया प्रतीयमानत्वं तदङ्गत्वम्। तेन 'वृक्षायोदकमासिञ्चति' इत्यादौ न वृक्षादेराधिक्यम्॥ *कर्मणेप्सितमिति*। कर्मजन्यफलभागितयेच्छाविषयः।

इदं च विशेष्यं, तद्भेदनियामकमाह—*अनिराकरणादिति*। प्रवृत्तिनिवृत्त्यन्यतराऽनुकूलव्यापारशून्यत्वादित्यर्थः। *प्रेरणेति*। अप्रवृत्तस्य कर्त्तुस्त्यागादाविष्टसाधनताबोधनं प्रेरणा। जातेष्टसाधनताबोधे अप्रामाण्यशङ्कया शिथिलस्य कर्तुस्तादृशाशङ्काविधूननक्षमप्रमाणोपन्यासेन प्रवर्त्तनं कर्मनिष्ठस्वत्वादिफलाऽभ्युपगममात्राऽनुकूलव्यापारवत्त्वं वाऽनुमतिस्ताभ्यामित्यर्थः। एवञ्च प्रकृतधात्वर्थकर्मजन्यफलभागितयेच्छाविषयत्वे सति कर्तृप्रवृत्तिनिवृत्त्यन्यतरानुकूलव्यापाराऽभाववत्त्वमनिराकर्त्तृत्वम्। निरुक्तविषयकत्वे सति कर्त्तृसम्बन्धित्यागादिविषयकेष्टसाधनताबोधौपयिकव्यापारवत्त्वं प्रेरकत्वमित्याद्यूह्यम्।

*सूर्यायार्घ्यं ददातीति*। अत्र मतभेदेन दाधातोः परस्वत्वेच्छाधीनस्वस्वत्वाभावेच्छारूपः, परस्वत्वगोचरस्वस्वत्वाभावेच्छारूपो वा त्यागोऽर्थः। अन्वयबोधस्तु "नमः स्वस्ति" (पा० सू० २।३।१६) इतिसूत्रोक्तदिशोहनीयः।

अर्थ—चतुर्थी विभक्ति का "सम्प्रदाने चतुर्थी" इस सूत्र के प्रमाण से उद्देश्य अर्थ है। "कर्मणायमभिप्रैति स सम्प्रदानम्" इस सूत्र से सम्बन्धन क्रिया का करणभूत जो दाधात्वर्थ का कर्म उसका जिसके साथ सम्बन्ध करने की इच्छा हो उस कारक को सम्प्रदान संज्ञा होती है। इससे सिद्ध होता है कि सम्प्रदान का अर्थ उद्देश्य है।

इदमेव अर्थात् धात्वर्थकर्मभूतगवादिवृत्ति जो स्वत्व तत्सम्बन्धजन्यसुखाश्रयो विप्रो भवतु इत्याकारक जो इच्छा एतद् इच्छीयविशेष्यतारूप उद्देश्यत्व ही शेषित्व और ब्राह्मणाद्युद्देश्यकेच्छीयप्रकारताश्रयत्व रूप शेषत्व है। इसी प्रकार का निर्णय पूर्वमीमांसा शास्त्र में किया गया है।

इसीलिये मीमांसादर्शन के चतुर्थाध्याय में "मैत्रावरुणाय दण्डं प्रयच्छति" इस अधिकरण में "नीतासु दक्षिणासु चात्वाले कृष्णविषाणं प्रास्यति" = दक्षिणा देने के वाद कृष्णमृग की सींग का गड्ढा में प्रासन = प्रक्षेप कर देना चाहिये। यहाँ जिस प्रकार गर्त में प्रक्षेप प्रतिपत्ति[1] कर्म है। क्योंकि खुजलाने में कृष्णमृग की सींग का उपयोग होने के बाद उसका गर्त में प्रक्षेप प्रयोजनरहित है। उसी प्रकार गवानयन में उपयुक्त दण्ड का मैत्रावरुण को देना भी प्रतिपत्ति कर्म होना चाहिये। इसके वाद निर्णय किया गया कि मैत्रावरुण में चतुर्थी के श्रवण से उद्देश्यत्वरूप शेषित्व है। शेषित्व अर्थकर्मता का प्रयोजक है। अतः अर्थकर्म[2] है। प्रैषमन्त्र के उच्चारण में "दण्डी प्रैषान् अन्वाह" इसके अनु-

१. यागादि प्रधान कर्म में जिसका उपयोग हो गया है उसका अदृष्टाजनक संस्कारविशेष प्रतिपत्ति कर्म है।

२. जिसका उपयोग होने वाला हो उसके अदृष्टजनक संस्कारविशेष को अर्थकर्म कहते हैं।

सार दण्ड लेकर प्रैष मन्त्र के उच्चारण का विधान होने से दण्ड का उपयोग होनेवाला है। अतः प्रयोजनशून्य नहीं होने से अर्थ कर्म है।

अधीन करने अर्थ का वाचक दाधातु के योग में भी "रजकाय वस्त्रं ददाति"=धोबी को कपड़ा (धोने के लिये) देता है। यहाँ पर भी सम्प्रदान में चतुर्थी होती है। भाष्यकार ने "खण्डिकोपाध्यायः शिष्याय चपेटां ददाति"=बालकों का अध्यापक छात्र को थप्पड़ मारते हैं। यहाँ पर चतुर्थी का प्रयोग किया है। अतः पूर्ववाक्य में भी चतुर्थी विभक्ति इष्ट ही है।

वृत्तिकार के मत में सम्यक् रूप से जिसको वस्तु दी जाती है उसको सम्प्रदान कहते है। इस प्रकार संज्ञा के सार्थक नामकरण से अपने अधिकार की निवृत्ति के साथ जिसको उसका अधिकार दिया जाय उसको सम्प्रदान मानने से रजक को इस प्रकार के अधिकार नहीं देने के कारण सम्प्रदान संज्ञा नहीं होगी। अतः "रजकस्य वस्त्रं ददाति" ऐसा प्रयोग होगा।

प्रकृत दाधात्वर्थ त्याग में विशेषण रूप से प्रतीयमान होने के कारण त्यागाङ्ग अर्थात् त्याग में अङ्ग विशेषण तथा क्रिया (दान) और कर्म (गो) के सम्बन्ध से जायमान सुखरूप फल के आश्रय रूप से इच्छा के विषय में कर्ता-दाता की प्रवृत्ति या निवृत्ति के अनुकूल व्यापार से रहित होने से उसमें सम्प्रदान के प्रथम भेद का व्यवहार होता है।

कर्ता=दाता को प्रेरणा देकर जहाँ त्यागाङ्ग क्रिया जन्यफलाश्रयरूप से इच्छा का विषय होता है वह सम्प्रदान का द्वितीय भेद है।

अपनी अनुमति देकर जो त्यागाङ्ग; कर्म से सम्बन्ध करने की इच्छा का विषय है। वह सम्प्रदान का तृतीय भेद है। इसी अर्थ का निरूपण वाक्यपदीय की कारिका से किया गया है।

तीनों भेदों का क्रमशः उदाहरण—"सूर्याय अर्घ्यं ददाति"=सूर्य नारायण को अर्घ्य देते हैं। यहाँ अर्घ देनेवाले से भगवान् सूर्य अर्घदान के लिये प्रार्थना अनुमति (स्वीकृति) अथवा निराकरण कुछ भी नहीं करते। अतः प्रथम भेद का उदाहरण है। प्रेरणा करने पर जहाँ ब्राह्मण को गौ का दान होता है—"विप्राय गां ददाति" यह द्वितीय भेद का उदाहरण है। जहां स्वीकृति से "उपाध्यायाय गां ददाति"=उपाध्याय=अध्यापक को गऊ देते हैं उसका तीसरा भेद है।

हिन्दी भाष्यः—चतुर्थी का "कर्मणा यमभिप्रैति" इत्यादि सूत्र के अनुसार उद्देश्य अर्थ है। प्रकृत वाक्य में उपात्त जो धातु उसका जो अर्थ उसके कर्म (जिस प्रकार दाधात्वर्थ का कर्म गऊ) में वृत्ति जो स्वत्वनिवृत्तिपूर्वक परस्वत्वोत्पत्तिरूप फल उसका निरूपकत्वेन इच्छाविषय विप्र[1] वही सम्प्रदान है। केवल इच्छाविषयत्वरूप उद्देश्यत्व स्वीकार करने पर गाय भी दानक्रियाजन्यफलभागी होने से अतिप्रसङ्ग हो जायगा। अतः "कर्मणा यमभिप्रैति" इस सूत्र के अनुसार उसकी व्याख्या मूल में की गई। कर्मणा यह करण तृतीयान्त है। सहार्थ में तृतीया यहाँ नहीं है। अतः क्रिया का जो कर्म उसके सम्बन्ध से जन्य फलाश्रयत्व से इच्छाविषयत्व उद्देश्यत्वफलित होता है। अर्थात्

१. तत्तद्धात्वर्थ कर्म निष्ठ फलनिरूपकत्वेन च विषयो यः तत्सम्प्रदानम्।

गवादिनिष्ठ जो स्वत्वादिरूप फल उसका जो निरूपकत्व आदि सम्बन्ध तद्वत्ता से इच्छाविषय उद्देश्य रूपसम्प्रदान है।

वस्तुतः "कर्मणा यमभिप्रैति" इत्यादि सूत्रों के अक्षरों से इस प्रकार का उद्देश्यत्व प्रतीत नहीं होता। "विप्राय गां ददाति" इत्यादि स्थल में इस प्रकार का शाब्दबोध नहीं होता। यदि इच्छाविषयत्व उद्देश्यत्व है तो "देवो रूपवान्" यहाँ उद्देश्यविधेयभाव से अन्वय होने के कारण देव में उद्देश्यत्व की प्रतीति होने पर भी इच्छाविषयत्व की प्रतीति नहीं होती है। अतः उद्देश्यत्व का उक्तस्वरूप नहीं है। चतुर्थ्यर्थ उद्देश्यत्व से भिन्न "देवोरूपवान्" इसमें उद्देश्यत्व है ऐसा मानने पर उद्देश्यत्व अनेकरूप होने से गौरव दोष से ग्रस्त होगा। अत एव आधुनिक टीकाकारों का उद्देश्यत्व वर्णन भी गौरव ग्रस्त होने से अनुपादेय है।

उद्देश्यत्व उद्देश्यत्वपदशक्यतावच्छेदक रूप से सिद्ध पदार्थान्तर है। किसी किसी स्थल में इस पदार्थान्तर उद्देश्यत्व के साथ इच्छाविषयत्व का सामानाधिकरण्य है यह दूसरी बात है। लघुमन्जूषा ( सुबर्थ नि १२३१ पृ० )

शङ्का :—दान-ब्राह्मण के लिये होने से ब्राह्मण में "तादर्थ्ये चतुर्थी" इस वचन से चतुर्थी सिद्ध हो जायगी पुनः सम्प्रदान में चतुर्थी की आरम्भकथा वृथा है।

समाधान—दान क्रिया के लिये सम्प्रदान ( ब्राह्मण ) है। सम्प्रदान के लिये दान क्रिया नहीं है। कारक क्रिया के लिये होता है कारक के लिये क्रिया नहीं होती है। सम्प्रदान के लिये दान क्रिया का कर्म है दान क्रिया नहीं। इस प्रकार वाक्यार्थीभूत दान क्रिया का तादर्थ्य नहीं होने से तादर्थ्य चतुर्थी से सम्प्रदान चतुर्थी गतार्थ नहीं है।

स एव अर्थः प्रयोजनमस्य स तदर्थस्तस्य भावः तादर्थ्यम्। तदिच्छाधीनेच्छाविषयत्व रूप है। अर्थात् उसकी इच्छा के अधीन इच्छा का जो विषय है वह उसके लिये तदर्थ है। "यूपाय दारु" यूप की इच्छा के अधीन इच्छा का विषय दारु तदर्थ है। "मुक्तये हरिं भजति" यहाँ मुक्ति की इच्छा के अधीन इच्छाविषय हरिभजन है।

ज्योतिष्टोम के प्रकरण में यह वाक्य मिलता है "नीतासु दक्षिणासु चात्वाले कृष्णविषाणं प्रास्यति"। यजमान ऋत्विक्गण को दक्षिणा देने के बाद कृष्णमृग की सींग को चात्वालनामक गड्हे में छोड़ दे यह उक्त वाक्य का अर्थ है। यजमान यज्ञ में दीक्षित होने पर "कृष्णविषाणया कण्डूयति" अर्थात् कृष्णमृग को सींग से कण्डूयन ( खुजलाना ) करे। यज्ञ की समाप्ति के बाद खुजलाने के लिये हाथ में ली गई सींग को क्या करें क्योंकि उसका प्रयोजन यज्ञ के बाद नहीं रहा। इसी प्रसङ्ग में पूर्ववाक्य से गड्हे में त्यागना अर्थकर्म है या प्रतिपत्ति कर्म है इस सन्देह में अर्थ कर्म होना चाहिये! क्योंकि इसके प्रक्षेप से प्रयोजन होता है। प्रतिपत्ति कर्म मानने पर फल नहीं होगा अतः अर्थकर्म है। इस प्रकार पूर्वपक्ष होने पर निर्णय किया गया कि यह प्रतिपत्ति कर्म है। कारण कि कण्डूयन में कृष्ण विषाण का उपयोग हो जाने के बाद पुनः प्रयोजन नहीं होने से यह कर्म प्रतिपत्ति कर्म होता है।

इसी प्रकार मीमांसा के चतुर्थाध्याय द्वितीयपाद में "क्रीते सोमे मैत्रावरुणाय दण्डं प्रयच्छति" गऊ के क्रयण के बाद मैत्रावरुण को दण्ड देते हैं। यहां दण्ड प्रदान अर्थ या प्रतिपत्ति[1] कर्म है इस सन्देह में यजमान की दीक्षा सिद्धि के लिये दिये गये दण्ड को

१. पदसङ्कीर्णतानिवर्तकं कर्म प्रतिपत्तिकर्मेत्युच्यते इति परीक्षा।

सोमलता के क्रयण पर्यन्त यजमान के धारण करने के बाद मैत्रावरुण को दण्डदान प्रतिपत्तिकर्म है। क्योंकि दण्ड का उपयोग पूर्व में हो चुका है। इस प्रकार पूर्वपक्ष के बाद यह निर्णय हुआ कि यह अर्थकर्म है। शेषित्व अर्थकर्म का प्रयोजक है। चतुर्थ्यर्थ उद्देश्यत्व शेषित्व है।

दण्डी प्रैषान् अन्वाह=दण्डी ( दण्ड धारण करनेवाला ) प्रैष ( मन्त्रविशेष ) का उच्चारण करे। इसके अनुसार मैत्रावरुण को प्रैषमन्त्र के उच्चारण के समय अवलम्ब के लिये दण्ड का धारण आवश्यक होने से उपयोग सम्भावित है। अतः अर्थकर्म है प्रतिपत्ति कर्म नहीं है। उपयुक्त संस्कारक कर्म की अपेक्षा जिससे उपकार होनेवाला हो वह कर्म प्रशस्त होने से बलवान् है। जिसका उपयोग भावी है। उसके संस्कार न होने पर असंस्कृत द्रव्य से याग सम्पन्न नहीं होगा अतः प्रशस्त है यह भाव है।

परन्तु यहाँ भूषण का भाव यह है कि चतुर्थी के श्रवण से उद्देश्यत्व की प्रतीति होती है। उद्देश्यत्वलक्षण आर्थप्राधान्य मैत्रावरुण का है। इसलिये मैत्रावरुण के लिये दण्ड का प्रदान प्रैषमन्त्र के उच्चारण में अवलम्ब के लिये दृष्टार्थक है। द्वितीया के श्रवण से दण्ड की प्रधानता मानकर मैत्रावरुण के हाथ में सोमक्रयण में उपयुक्त दण्ड का श्रृंग के प्रक्षेप के समान प्रक्षेप कर देना असङ्गत है।

स्व–( अपना ) स्वत्व ( स्वामित्व ) निवृत्ति के साथ परस्वत्वोत्पत्ति के अनुकूल व्यापार का बोधक दाधातु के योग में चतुर्थी होती है ऐसा नियम नहीं है। किन्तु अर्थान्तर जैसे अधीनीकरण, करतल से संयोग आदि के अनुकूल व्यापार वाचक दाधातु के योग में भी चतुर्थी विभक्ति होती है। इसमें प्रमाण है "खण्डिकोपाध्यायः[1] शिष्याय चपेटां ददाति" यह भाष्य प्रयोग। गोदान के समान चपेटादान नहीं हो सकता किन्तु करतलसंयोगरूप दान ही यहाँ सम्भव है।

अन्य लोगों का मत है कि सम्यक्प्रदान ही सम्प्रदान है। संज्ञा का स्वरूप लघु ( छोटा ) होना चाहिये। जैसा कि भाष्यकार ने लिखा है कि "लध्वर्थं हि संज्ञाकरणम्"। इस नियम के रहते संप्रदान इस गुरुसंज्ञा का भाव है कि संज्ञा के स्वरूप से भी प्रतीत होनेवाले अर्थ को संज्ञा में निमित्त माना जाय। इस प्रकार अपने स्वत्वनिवृत्ति और दूसरे के स्वत्व की उत्पत्ति से ही दान का सम्यक्त्व ( समीचीनत्व ) हो सकता है अतः "रजकस्य वस्त्रं ददाति" यही प्रयोग होगा।

वस्तुतः "शिष्याय चपेटां ददाति" इस भाष्य प्रयोग की अनुपपत्ति होने से उक्त मत अनादरणीय है। महासंज्ञा ( सम्प्रदान ) पूर्वाचार्यों के अनुरोध से है। "स्वस्वत्व-निवृत्तिपर्यन्तम्"—इस मूल का तात्पर्य स्वस्वत्वनिवृत्त्यनुकूलव्यापार पर्यन्त में है। दानमात्र से पर के स्वत्व की उत्पत्ति नहीं होती किन्तु प्रतिग्रह से उत्पन्न होती है—इस अभिप्राय से परस्वत्वोत्पत्ति को दाधात्वर्थ नहीं लिखा। अथवा स्वस्वत्वनिवृत्तिपूर्वक परस्वत्वोत्पत्ति के अनुकूल व्यापारपर्यन्त में तात्पर्य है। स्वत्व दानादि से नाश्य और प्रतिग्रह से जन्य पदार्थान्तर है।

शङ्काः—"शिष्याय चपेटां ददाति" की सिद्धि के लिये संयोगानुकूलव्यापारार्थक

---

१. खण्डिकोपाध्याय=बालकों का शिक्षक। खण्डिका=खल्ली के द्वारा उपाध्याय=अध्यापक।

दाधातु के योग में चतुर्थी मानने पर "अजा ग्रामं नयति" यहाँ पर भी अजा का संयोग ग्राम से इष्ट होने से चतुर्थी होनी चाहिये।

समाधान :—यदि द्वितीयानियामक कर्म संज्ञा पर होने से सम्प्रदान संज्ञा की बाधिका नहीं होती तो सम्प्रदान संज्ञा हो जाती।

जहाँ सम्प्रदान किसी दाता को देने के लिये प्रेरणा नहीं करता हो स्वीकृति और निराकरण भी नहीं करता हो उदासीन हो जैसे "सूर्याय अर्घ्य ददाति" अर्घ्य देनेवाले को सूर्यनारायण प्रेरित नहीं करते—यह सम्प्रदान का एक भेद है। प्रेरणा से जहाँ दाता दान में प्रवृत्त होता है जैसे "विप्राय गां ददाति।" यहाँ विप्र की प्रेरणा से दान में प्रवृत्ति है अतः उसका द्वितीय भेद है।

दान में अपनी अनुमति ( स्वीकृति ) प्रकट करने वाला सम्प्रदान तृतीय सम्प्रदान का भेद है। जैसे "उपाध्यायाय गां ददाति"। इस प्रकार अनिराकर्ता प्रेरयिता तथा अनुमन्ता के भेद से सम्प्रदान तीन प्रकार का होता है।

अत्र सर्वत्र प्रकृतिप्रत्ययार्थयोरभेदः संसर्गः। विभक्तीनां धर्मिवाचकत्वात्। धर्ममात्रवाचकत्वे, "कर्मणि द्वितीया" ( पा० सू० २।३।२ ) इति सूत्रस्वरसभङ्गापत्तेः। कर्मार्थककृत्तद्धितादौ तथादर्शनाच्च। द्वितीयाद्यर्थकबहुव्रीहौ 'प्राप्तोदक' इत्यादौ धर्मिवाचकत्वालाभाच्च।

सुपां कर्मादयोऽप्यर्थाः सङ्ख्या चैव तथा तिङाम्।

इति भाष्याच्चेति दिक्।

आश्रयस्यापि प्रकृत्यैव लाभान्न विभक्तिवाच्यता, किन्त्वाश्रयत्वमात्रं वाच्यम्। तदेव च तादात्म्येनावच्छेदकम्। करणतृतीयायाश्च व्यापारोऽपि, पञ्चम्या विभागमात्रम्, चतुर्थ्या उद्देश्यत्वमात्रम्। अत एवाऽऽकृत्यधिकरणमपि न विरुद्ध्यत इत्यभिप्रेत्याह—*शक्तिरेव वेति। षण्णामपीति शेषः। "षष्ठी शेषे" ( पा० सू० २।३।५० ) इति सूत्रात् तस्याः सम्बन्धमात्रं वाच्यम्। कारकषष्ठ्यास्तु—शक्तिरेवेत्यूह्यम्॥

"सप्तमीपञ्चम्यौ कारकमध्ये" ( पा० सू० २।३।७ ) इति सूत्रे शक्तिः कारकमिति पक्षस्य भाष्ये दर्शनात्। एवञ्च 'देवदत्तस्य गौर्ब्राह्मणाय गेहाद् गङ्गायां हस्तेन मया दीयते' इत्यत्र देवदत्तसम्बन्धिनी या गौस्तदभिन्नाश्रयकत्यागाऽनुकूलो ब्राह्मणोद्देश्यको गेहनिष्ठविभागजनको गङ्गाऽधिकरणको हस्तकरणको मन्निष्ठो व्यापार इति बोधः। *यथायथम्*—उक्तप्रकारेण।

अत्र मानमुपदर्शयन् 'घटं जानाति' इत्यादौ द्वितीयाया विषयतायां लक्षणेति बद्धाकुलं वदतो नैयायिकादीन् प्रत्याह—सुपां कर्मेतीति। अयम्भावः—

सुपां कर्मादयोऽऽप्यर्थाः सङ्ख्या चैव तथा तिङाम्।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वा॥

इति वार्त्तिकतद्भाष्याभ्यां कर्मादेर्वाच्यतायास्तन्नियमस्य च लाभः।

तथाहि—"स्वौजसमौट्" ( पा० सू० ४।१।२ ) "कर्मणि द्वितीया" ( पा० सू० २।३।२ ) इति "द्व्येकयोर्द्विवचनैकवचने" ( पा० सू० १।४।२२ ) इत्यादेः, "लस्य" ( पा० सू० ३।४।७७ ) "तिप्तस्झि" (पा० सू० ३।४।७८) "तान्येकवचनद्विवचन" ( पा० सू० १।४।१०१ ) इत्यादेश्चैकवाक्यतया कर्मादेस्तत्सङ्ख्यायाश्च वाच्यता लभ्यते। तथा तन्नियमश्च द्विविधो लभ्यते। द्वितीया कर्मण्येव, तृतीया करण एवेत्येवमादिः शब्दनियमः। कर्मणि द्वितीयैव, करणे तृतीयैवेत्यर्थनियमश्च। उभयथाऽपि सिद्धनियमविरुद्धं लक्षणादिकमसाधुत्वप्रयोजकमिति, याज्ञे कर्मणि "नाऽनृतं वदेत्" इति निषेधविषयो भवत्येवेति स्वेच्छया लक्षणाऽपि विभक्तावप्रयोजिकैव। अत एव 'विभक्तौ न लक्षणा' इत्यादिनैयायिकवृद्धानां व्यवहार इति दिक् ॥ २४ ॥

इति श्रीरङ्गोजिभट्टात्मजकौण्डभट्टविरचिते वैयाकरणभूषणसारे सुबर्थनिर्णयः समाप्तः ॥ ३ ॥



*सर्वत्रेति* । तत्तत्सूत्रविहितद्वितीयाद्यन्तप्रयोगेष्वित्यर्थः ॥ *अभेदः संसर्ग इति* । अभेदात्मकः संसर्गो विशिष्टबुद्धिनियामको विशेष इत्यर्थः । अभेद संसर्गकप्रकृत्यर्थप्रकारकबोधं प्रति सम्बन्धार्थकविभक्तिभिन्नप्रत्ययजन्योपस्थितेर्हेतुत्वादिति भावः ।

यत्तु सम्बन्धस्य सम्बन्धिभेदनियतत्वादभेदस्य सम्बन्धत्वे मानाभावादभेदः संसर्ग इत्यस्य अभेदेऽपि संसर्गः—इतरसम्बन्धानवच्छिन्नविशेष्यविशेषणभाव इति; तन्न। विशेष्यविशेषणभावस्याऽपि सम्बन्धनियतत्वेन तदसत्त्वे तस्याऽप्यसम्भवात् । अत एव भासमानवैशिष्ट्यप्रतियोगित्वं विशेषणत्वमिति टीकाकृतः। कथमन्यथा 'द्विष्ठोऽप्यसौ परार्थत्वात्'इति विशेषणत्वेन विवक्षितस्य सम्बन्धं विना विशेषणत्वाऽसम्भवेन तदाकाङ्क्षित्वादिति स्वयं व्याख्यातम् ।

न च तस्य सम्बन्धत्वे 'नीलो घट' इत्यादौ षष्ठ्यापत्तिरिति वाच्यम्। 'राहोः शिर'इत्यादावौपाधिकभेदसम्बन्धमादाय षष्ठ्युपपादनपरस्य "अनेकाऽवस्थायुक्तराहोः इदमेकाऽवस्थायुक्तं शिरोऽवयव" इति भाष्यप्रामाण्येन भेदमूलकसम्बन्ध एव षष्ठी इत्यर्थलाभादभेदसम्बन्धे तदापादनाऽसम्भवात् । तादृशभाष्येणाऽभेदसम्बन्धस्य प्रातिपदिकाऽर्थविशेष्यत्वाऽविवक्षणाद्वा। सम्बन्धस्य सम्बन्धिभेदनियतत्वं त्वसिद्धमेव। यदि भेदनियतत्वमेवेत्याग्रहस्तदा सर्वसाधारण्याय सम्बन्धिताऽवच्छेदकभेद एव नियामकत्वेनाऽभ्युपेयताम् ।

न च तत्सम्बन्धत्वे मानाऽभावः। सर्वसिद्धनीलादिविशिष्टबुद्धेरेव मानत्वात्। शाब्दबोधे तद्भाननियामकं च प्रकृतिप्रत्ययविशेषयोः समानाधिकरणप्रातिपदिकाऽर्थ-

योश्च समभिव्याहाररूपाकाङ्क्षादिः । अत एव "अर्थवत्सूत्रे" ( पा० सू० १।२।४५ ) भाष्ये "एषां पदानां सामान्ये वर्तमानानां यद्विशेषे पर्य्यवसानं स वाक्यार्थः" इत्युक्तम् ।

अन्विताभिधानवादिमतेन चेदम् । तन्मतेऽन्वितस्यैव पदार्थत्वात् । तथाच सामान्यरूपेण सम्बन्धवाचकानां पदानां यद्विशेष इत्यादेस्तत्तदनुयोगिप्रतियोगित्व-वैशिष्ट्यबोधकत्वम् । आकाङ्क्षादिसमवधानात् स एव वाक्यार्थो वाक्यजन्यबोधविषय इत्यर्थः । वाक्यशक्त्यभिप्रायेण वा तथाऽभिधानम् । प्रातिपदिकार्थसूत्रे भाष्ये "पदसामानाधिकरण्यमुपसङ्ख्यानमधिकत्वाद्" इत्यस्य तु 'वीरः पुरुष' इत्यादौ विशेष्यविशेषणभावप्रयोजकप्रातिपदिकार्थातिरिक्ताऽभेदसंसर्गस्याऽपि भानात् प्रातिपदिकार्थमात्राऽभावात् प्रथमा न प्राप्नोतीत्यतः प्रथमाया उपसङ्ख्यानमारब्धव्यमित्यर्थान्न तद्विरोधोऽपि ।

कैयटेनाऽपि न वाक्यार्थत्वादिति तत्प्रत्याख्यानावसरे वीरप्रातिपदिकादनपेक्षितशब्दान्तरोहितविशेषणभावात् स्वार्थमात्रनिष्ठात् प्रथमा विधीयते इत्यत्र प्रतिपादितपदमपहायोहितशब्दं प्रयुञ्जानेन विशेष्यविशेषणभावनियामकत्वमितरसम्बन्धस्यैवाङ्गीकृतम् ।

वस्तुतस्तु प्रकृते विशेष्यविशेषणभावस्य सम्बन्धतानुपपन्नैव सम्बन्धस्य सम्बन्धिभेदनियतत्वादिति तदुक्तेः । विशेष्यविशेषणयोर्भाव इति व्युत्पत्त्या तस्या विशेष्यत्वविशेषणत्वमात्रपर्य्यवसायितया प्रत्येकं तयोरद्विष्ठत्वाच्चाऽनुयोगित्वप्रतियोगित्वाभ्यां द्विष्ठत्वोपपादनेऽप्येकस्यैव सा स्यान्न समुदितयोर्द्वयोः, स्वस्वामिभाववत् शब्दानुगममात्रस्याऽर्थाऽपरिच्छेदकत्वात् सम्बन्धान्तरे षष्ठी, न विशेष्यविशेषणभावसम्बन्धे इत्यत्र मानाभावाच्च । तस्माद्यथोक्तमेव रमणीयमिति । ननु विभक्तीनां धर्मवाचकत्वस्य तन्त्रान्तरसिद्धतया कथं तत्र प्रकृत्यर्थस्याभेदेनाऽन्वयः, अयोग्यत्वादत आह —*विभक्तीनामिति* । कारकविभक्तीनामित्यर्थः । *धर्मिवाचकत्वात्* । शक्तिमच्छक्तत्वादित्यर्थः ।

नन्वस्तु शक्तिरेवाऽर्थोऽत आह —*धर्मवाचकत्व इति* । *सूत्रस्वरसभङ्गापत्तेरिति* । तद्घटकर्मादिपदानां धर्मपरतां विनोक्ताऽर्थाऽलाभात्तत्परत्वे तद्भङ्गः स्पष्ट एवेत्यर्थः । तथाऽर्थस्य सूत्रकारसम्मतत्वे, कर्मत्वे द्वितीयेत्याद्येव ब्रूयादिति भावः ।

ननु 'कर्मणि'इत्यादौ विषयसप्तमीबोध्य इत्यर्थः । तथाच विभक्तीनां धर्माऽवाचकत्वेऽपि तस्याश्रयतया प्रकृत्यर्थेऽन्वयेन कर्मबोधान् तत्फलान्वयिनी वृत्तिरेव द्वितीयार्थ इतिमतेऽपि तुल्यवित्तिवेद्यतया तण्डुलादीनां फलाश्रयकर्मत्वादिना भानान्न सूत्रस्वरसभङ्गोऽत आह-*कर्मार्थेकेति* । कृति—पक्वस्तण्डुल इत्यादौ । तद्धिते—शत्योऽश्व इत्यादौ । आदिपदात्, पच्यमानास्तण्डुला इत्यादौ लडादेशशानच्संग्रहः ॥

*तथा दर्शनादिति* । धर्मिवाचकतादर्शनादित्यर्थः । तथाच कर्मपरामर्शक-

तच्छब्दघटित "तयोरि"त्यादिसूत्रविहितक्तादीनां धर्मिवाचकत्ववदत्राऽपि तद्वाचकत्वमेव न्याय्यमिति भावः। ननु तत्र पदार्थान्तरसामानाधिकरण्याऽनुपपत्त्याऽस्तु तथात्वमत्र तूक्तापत्त्यभावेनाऽस्तु धर्मवाचकत्वमेवेत्यत आह—*द्वितीयाद्यर्थकेति*। द्वितीयादिविभक्तीनां धर्मवाचकत्वे तदर्थविहितसमासस्यापि धर्मवाचकत्वापत्त्या 'प्राप्तोदकः' इत्यादावुदककर्तृकप्राप्तिकर्मत्वस्य समासार्थस्य समानविभक्तिकपदोपस्थाप्यग्रामादावभेदान्वयाऽनुपपत्तेरत्राऽपि जागरूकतया द्वितीयादिविधायकसूत्रस्थकर्मादिपदानां धर्मिवाचकत्वमावश्यकमिति भावः।

ननु त्वन्मतेऽपि षष्ठ्याः सम्बन्धार्थकतया तदर्थविहितबहुव्रीहेः पदार्थान्तरसामानाधिकरण्यानुपपत्तेस्तौल्येन तत्र लक्षणया विशिष्टशक्त्या वा सामानाधिकरण्यस्योपपाद्यतयाऽन्यत्राऽपि तथैव रीत्या निर्वाहे कृतं सुपां धर्मिवाचकत्वेनेत्यत आह—*सुपां कर्मादयोऽप्यर्था इति*।

यदि कर्मत्वादिधर्मो द्वितीयादिवाच्यतया विवक्षितोऽभविष्यत्; तदा कर्मत्वादयोऽप्यर्था इत्येवाऽवक्ष्यत्। तदनुक्त्या तु तेषां द्वितीयाद्यर्थत्वमप्रामाणिकम्। मुनित्रयाऽनुक्तत्वादिति भावः। शक्तिवादपक्षमवलम्ब्याह—*आश्रयस्यापीति*। आश्रयत्वेन भानं त्वसिद्धमेवेति भावः॥ *आश्रयत्वमात्रमिति*। द्वितीयातृतीयासप्तमीनामिति शेषः। मात्रपदेनाश्रयव्यवच्छेदः।

नन्वाश्रयत्वस्य शक्यत्वे आश्रयत्वत्वं शक्यताऽवच्छेदकं वाच्यम्। तच्चाश्रयत्वेतरावृत्तित्वघटितत्वाद् गुर्विति शक्यतावच्छेदकगौरवमेवैतस्मिन् कल्पे दोष इत्यत आह—*तदेवेति*। आश्रयत्वमेवेत्यर्थः। एवकारेण निरुक्ताश्रयत्वत्वव्युदासः। तस्याखण्डत्वस्योपपादितत्वान्नानाव्यक्तिविशेष्यकशक्तिग्रह एव स्वेतरधर्मस्याऽवच्छेदकत्वापेक्षणादिति भावः। कर्तृतृतीयाया आश्रयमात्रार्थकत्वादाह—*करणेति*। व्यापारोऽपीत्यपिनाऽऽश्रयसमुच्चयः॥

*विभागमात्रमिति*। मात्रपदेनाश्रयत्वव्यवच्छेदः। विभागस्याश्रयतयाऽन्वयादेव वृक्षादाववधित्वलाभादिति भावः वस्तुतस्तु वृक्षादेरवधित्वरूपसम्बन्धेन पञ्चम्यर्थविभागेऽन्वय इत्युक्तम्। उद्देश्यत्वमात्रमित्यनेनाप्याश्रयत्वस्य सः॥ *अत एवेति*। कर्मत्वादिशक्तेस्तत्तद्विभक्तिवाच्यत्वकथनादेवेत्यर्थः॥

*न विरुद्ध्यत इति*। शक्तिग्रहे जातिव्यक्त्योरुभयोर्भानाविशेषेऽपि जातिरेव शक्या, 'नागृहीतविशेषणन्यायाद्' 'विशेष्यं नाभिधागच्छेत्' इतिन्यायाच्च। व्यक्तिशक्तौ व्यभिचारात् तासामानन्त्याच्चेति तत्र सिद्धान्तितमिति भावः॥ कारकविभक्त्यर्थं निरूप्य प्रसङ्गात् षष्ठ्यर्थं निरूपयति—मूले—*सम्बन्ध इति*। "षष्ठी शेषे" (पा० सू० २।३।५०) इति सूत्रात् कारकप्रातिपदिकार्थभिन्नः स्वस्वामिभावादिसम्बन्धश्च तत्र शेषपदार्थः। तत्राऽन्यविभक्तीनां मतभेदेन धर्मिधर्मवाचकत्ववदेतस्यास्तथा भ्रमो माभूदित्याशयेनाह मूले—*सम्बन्धमात्रमिति*। पक्षद्वयेऽपीति शेषः।

स च क्वचित् सम्बधत्वेन सामान्यधर्मेण वाच्यः, क्वचिच्च विशेषरूपेणैव। तत्र सामान्यरूपेण "मातुः स्मरति" इत्यादौ। विशेषरूपेण विवक्षायां स्वस्वविषये तत्तद्विभक्तीनां प्रसरात्। "राज्ञः पुरुषः" इत्यादौ तु विशेषरूपेणैव। अनेकसम्बन्धसत्त्वेऽपि सम्बन्धविशेषविवक्षया 'नेदं चैत्रस्य' इति प्रयोगात्। सम्बन्धश्च सर्वत्र क्रियाकारकभावमूलक एव। "षष्ठी शेषे" इति सूत्रे, 'राज्ञः पुरुष' इत्यत्र राजा पुरुषाय ददातीति सम्प्रत्ययाद्राजा कर्त्ता पुरुषः सम्प्रदानं वृक्षस्य शाखेत्यत्र वृक्षे शाखेति लौकिकप्रसिद्धया वृक्षः शाखाया अधिकरणम्। "यदेतत् सम्प्रदानं स्वं नाम चतुर्भिः प्रकारैरेतद्भवति—'क्रयणादपहरणाद्याच्ञायाः परिवर्तनरूपाद्विनिमयादित्यनेन यत्राश्रूयमाणा क्रिया; तत्राऽपि तत्फलसम्बन्धानुमितकरणत्वादिशक्तेर्वस्तुतः सत्त्वादित्यर्थकेन भाष्येण शेषपदार्थाऽप्रसिद्धिमाशङ्क्यैवं तर्हि "कर्मादीनामविवक्षा शेष इति शेषोक्तेः"। क्रियाकारकसम्बन्धस्य वस्तुतः सर्वत्र सत्त्वेऽपि तन्निमित्तस्य स्वस्वामिभावादेः सम्बन्धत्वेन विवक्षणे तस्याऽविवक्षा। अविवक्षणात् शेषपदार्थसौलभ्यमिति तद्भावः।

न च सम्बन्धस्योभयनिरूप्यत्वात् 'राज्ञः पुरुष' इत्यत्र राजपदोत्तरमिव पुरुषपदोत्तरं षष्ठ्यापत्तिरितिचेद्? न, यदा राज्ञः उपकारकत्वविवक्षा; तदा राजपदादेव। यदा तु पुरुषस्य तद्विवक्षा तदा पुरुषपदादपि, पुरुषस्य राजेति। नत्वेकैदोभयत्र सेति नोक्ताऽतिप्रसङ्गः। तदुक्तं हरिणा—

द्विष्ठोऽप्यसौ परार्थत्वाद् गुणेषु व्यतिरिच्यते। (साधनसमुद्देश १५७)
तत्राऽभिधीयमानश्च प्रधानेऽप्युपचर्य्यते॥ इति।

परार्थत्वात्=परं प्रति गुणानां विशेषणत्वाद्, विशेषणत्वेन विवक्षितस्य सम्बन्धं विना विशेषणत्वाऽसम्भवेन सम्बन्धो व्यतिरिच्यते; उद्भूततया प्रतीयते इति तत्रैव षष्ठी। विशेष्यस्य तु पदाऽन्तराऽसमभिव्याहारे स्वरूपेणैव प्रतीयमानत्वान्न विशेष्यतानियामकसम्बन्धाकाङ्क्षा। तत्र विशेषणे अभिधीयमानः षष्ठ्या प्रतीयमानः प्रधाने विशेष्येऽपि उपयुज्यते; तस्य द्विष्ठत्वस्वभावाद्राजनिरूपितविशेष्यताया राजपदसन्निधाने प्रतीयमानाया उपकारको भवतीति तदर्थः॥

*कारकषष्ठ्या इति*। "कर्तृकर्मणोः कृति" (पा० सू० २:३।६५) इत्यादिसूत्रविहितषष्ठ्या इत्यर्थः। शेषविहितषष्ठ्याः सम्बन्धरूपधर्मवाचकतया षष्ठीत्वेनैतस्या अपि तद्वाचकत्वस्य न्याय्यत्वादिति भावः। ननु कर्तृकर्मादिकारकविहिततृतीयादीनां कथं कर्त्रादिधर्मवाचकत्वमत अत—*सप्तमीपञ्चम्याविति*। तथाच—धर्मस्याऽपि कारकत्वस्य भाष्यसम्मतत्वेन तासां तद्वाचकत्वे न दोष इति भावः॥

*दर्शनादिति*। तत्र हि द्रव्यं कारकमिति पक्षे 'अद्य भुक्त्वाऽयं द्व्यहे द्व्यहाद्वा भोक्ता' इत्यादौ देवदत्तरूपकर्तृकारकस्यैक्यान्मध्यव्यपदेशासम्भवादप्राप्तसप्तमीपञ्चम्योरुपपदनाय प्रवृत्तस्य 'क्रियामध्य इति वक्तव्यम्' इति वार्तिकखण्डमायोक्तम्।

नान्तरेण साधनं क्रियायाः प्रवृत्तिर्भवति । क्रियामध्यं च कारकमध्यमपि भवति, तत्र कारकमध्ये इत्येव सिद्धमिति तत्र साधनमित्यस्य शक्तिमित्यर्थः ।

तथाच देवदत्तादिरूपकर्तृद्रव्यस्यैक्येऽपि कालभेदभिन्नभुजिक्रियाऽनुमितकारकपदार्थकर्तृत्वशक्त्योर्भेदात् तन्निमित्तमध्यव्यपदेशाऽबाधाद्यथोक्तेऽनुपपत्त्यभावात् 'क्रियामध्ये' इति वार्त्तिकं नारम्भणीयमिति तद्भावः ।

इदमुपलक्षणमनभिहितसूत्रभाष्यस्य । तत्र 'संख्या विभक्त्यर्थे' इति पक्षेणाऽनभिहिताधिकारं समर्थ्य द्वयोः कारकयोरन्यतराऽभिधाने विभक्त्यभावप्रसङ्गः, क्व? प्रासाद आस्ते, शयन आस्ते, किं कारणम्? यदि प्रत्ययेनाऽभिहितमधिकरणमिति कृत्वा सप्तमी न प्राप्नोतीत्याशङ्क्य, न वाऽन्यतरेणाभिधानात्, अनभिहिते विधानमित्यादिना प्रसज्यप्रतिषेधे पर्य्युदासे वा नञर्थे दूषणं परिहृत्य यदि साधनं द्रव्यं स्यात् तदेकमेव तच्चाऽभिहितमिति पूर्वोक्तपरिहारो न सम्भवति । अथ शक्तिः साधनम् तदा तस्या भेदादनभिहितत्वसम्भवाद्भवत्युक्तपरिहार इत्यभिप्रेत्य किं पुनर्द्रव्यं साधनमाहोस्विद् गुण इत्याशङ्कयोक्तं, किं पुनःसाधनं न्याय्यम्? गुण इत्याह । कथं ज्ञायते । एवं हि कश्चित् कञ्चित् पृच्छति, क्व देवदत्त इति?। स तस्मायाचष्टेऽसौ वृक्षे इति । कतरस्मिन् यस्तिष्ठति स वृक्षोऽधिकरणं भूत्वाऽन्यशब्देनाभिसम्बध्यमानः कर्त्ता सम्पद्यते । द्रव्ये साधने यत् कर्म कर्मव स्याद्यत् करणं करणमेव यदधिकरणमधिकरणमेव'' इति ।

कैयटेनाऽपि 'यदि द्रव्यं साधनं स्यात् तदा तस्यैकरूपत्वात् तन्निबन्धनाबाधितप्रत्यभिज्ञाविषयत्वाद् नानाऽर्थक्रियाकरणनिबन्धनो 'घटेन जलमाहर' 'घटं कुरु' 'घटोऽस्ती''ति व्यपदेशो न स्यात् । दृश्यते चाऽसौ । तस्मान्नानाशक्तिभावावगमः सिद्धः' इति तद्विवृतम् ।

एवं च शक्तिपक्षस्याऽऽकरसम्मततया द्वितीयादीनां कर्मत्वादौ शक्तिरिति वदतां मतमपि सम्यगेवेति भावः । "प्रातिपदिकार्थ" इतिसूत्रविहितप्रथमाया यथायथं प्रातिपदिकार्थो लिङ्गं परिमाणं चाऽर्थः ।

कर्माऽऽद्याधिक्ये प्रथमा मा भूदिति तत्र मात्रग्रहणम् । द्वन्द्वान्ते श्रूयमाणस्य तस्य प्रत्येकं द्वन्द्वघटकपदार्थेऽन्वयात् प्रातिपदिकार्थमात्रे प्रथमेत्यादिवाक्यभङ्गः । प्रातिपदिकार्थत्वं च नामनिष्ठशक्त्यवच्छिन्नजनकतानिरूपितजन्यताश्रयोपस्थितित्वव्यापकविषयताप्रतियोगित्वम् । उच्चैरित्याद्यर्थविषयितायास्तादृशोपस्थितित्वव्यापकत्वात् तत्र प्रथमोपपत्तिः ।

एवं कृष्ण इत्यादौ कृष्णादिविषयिताया इव पुंल्लिङ्गादिविषयिताया अपि तदुपस्थितित्वनैयत्यं व्यक्तमेव । यद्यपि 'द्विकं प्रातिपदिकार्थः' इति पक्षे लिङ्गस्योपस्थितिविषयत्वं दुर्घटं, तथाप्यनुभवाऽनुरोधेन शक्यार्थोपस्थितेः प्राग् लिङ्गोद्बोधकसमवधानस्य नियमेन कल्पनात् तस्य तत्त्वं बोध्यम् । एवञ्चालिङ्गा नियतलिङ्गाश्च प्राति-

पदिकार्थमात्र इत्यस्योदाहरणानि, तटादिशब्दजन्योपस्थितौ तु पुंलिङ्गादिभानस्यानैयत्यात्तत्राऽप्राप्तप्रथमाविधानाय लिङ्गग्रहणम् ।

'सिंहो माणवकः' इत्यादौ सादृश्याऽद्याधिकार्थस्य प्रतीतावप्यन्तरङ्गत्वात् स्वाऽर्थमात्रनिष्ठात् तस्मात् प्रथमा सुलभैव । तत्र प्रथमाऽर्थलिङ्गस्य विशेषणतया प्रकृत्यर्थेऽन्वयो योग्यताबलादनुभवाच्च । तथैव कार्य्यकारणभावकल्पनात् । एवं 'द्रोणो व्रीहिः' इत्यादौ द्रोणप्रातिपदिकार्थातिरिक्तद्रोणपदात् परिमाणस्याधिक्येन भानात्तत्र परिमाणग्रहणम् ।

न च व्रीह्यादिपदसमभिव्याहारात् तद्भानेऽप्यन्तरङ्गत्वात् प्रातिपदिकार्थमात्र एव साऽस्त्विति वाच्यम् । तथा सति द्रोणपदार्थस्य भेदसम्बन्धेनाऽन्वयानुपपत्तेः । प्रथमार्थस्य तस्य तु भेदेनाऽन्वये न किञ्चिद् बाधकमिति सम्प्रदायः ।।

नव्यास्तु—प्रातिपदिकार्थस्तत्तत्पदप्रवृत्तिनिमित्तं, तदाश्रयश्च । अत एव लिङ्गग्रहणं चरितार्थम् । अन्यथा "स्वमोर्नपुंसकात्" ( पा० सू० ७।१।२३ ) इति सूत्रप्रामाण्यात् तस्याऽपि प्रातिपदिकार्थतया तदुपादनवैयर्थ्यापत्तेः । आश्रयत्वं च वैज्ञानिकम् , शक्यताऽवच्छेदकारोप एव लक्षणेत्यन्यत्र व्यवस्थापितत्वात् । गोपीत्यादौ प्रकृत्यर्थस्य लाक्षणिकत्वेऽपि न क्षतिः । तटादिशब्दानां लिङ्गं वाच्यमेव । विसर्गादयस्तद्द्योतकाः ।

एवञ्च प्रातिपदिकार्थं इत्यस्यालिङ्गालिङ्गप्रवृत्तिनिमित्तका अव्ययस्त्रीपुंसादिशब्दाश्चोदाहरणमितरे लिङ्गमात्राद्याधिक्यस्य । द्रोणत्वादिप्रवृत्तिनिमित्तकद्रोणादिशब्दानां-परिमाणत्वेन परिमाणमपि लिङ्गवद् विशेष्यान्वय्यर्थः । एवञ्च लिङ्गवत् प्रातिपदिकार्थत्वाभावात् परिमाणग्रहणम् । "वीरः पुरुषः" इत्यादौ पुरुषादिपदसन्निधाने विशेष्यविशेषणभावस्याधिकस्य भानेऽपि तत्समभिव्याहारात् पूर्वं स्वार्थमात्रनिष्ठात्तस्मात् सेत्याहुः ।।

"सम्बोधने च" ( पा० सू० २।३।४७ ) इति विहितप्रथमायास्तु सम्बोधनमर्थः । प्रातिपदिकार्थापेक्षया तस्याधिक्येन भानात् पूर्वसूत्राविषयत्वात् तत्सूत्रारम्भः । तच्चाभिमुखीभवनानुकूलो व्यापारः क्रियान्वय्येवेतिप्रतिपादितं प्राक् । 'यथायथं विभक्त्यर्थाः' इत्यत्रत्यं यथायथपदं व्याचष्टे—*उक्तप्रकारेणेति* । यदर्थबोधे या विभक्तिः समर्था तस्याः सोऽर्थोऽवसेयः । तथैवोक्तं प्राग्, द्वितीयातृतीयासप्तमीनामित्यादिनेति भावः ।।

*अत्रेति* । सुपां कर्मादिवाचकत्व इत्यर्थः । *नैयायिकान् प्रतीति* । प्राचीनान् प्रतीत्यर्थः । यथा तन्मतं तथाख्यातशक्तिनिरूपणावसरे प्रतिपादितम् ।

ननु 'सुपां कर्मादयोऽप्यर्थाः' इति भाष्यात् सिध्यतु तेषां कर्मादौ शक्तिः । विषयत्वादौ लक्षणायां तु किं बाधकम् । क्रियाजन्यफलशालित्वरूपमुख्यकर्मत्वबाध एव तत्प्रसरादत उत्तरार्द्धप्रदर्शितनियमं बाधकत्वेनोपदर्शयिष्यन्नाशयं प्रकाशयति—*अय-

म्भात्र इत्यादि*। "स्वौजसमौ" (पा० सू० ४।१।२) इत्यत्र कारकविभक्तिष्वादौ द्वितीयाया उपादानाद् वार्तिकेऽपि तदर्थकर्मणः प्राङ्निर्देशः। कर्मादीत्यादिना कारकान्तरसंग्रहः, अपिना शक्तिः कारकमितिपक्षोक्तकर्मेत्यादिशक्तीनां समुच्चयः।

*तथा तिङामिति*। तद्वत्तिङामपि सङ्ख्याकर्माद्यर्थ इत्यर्थः। तत्र—सुप्तिङ्क्षु। प्रकृतेषु—अर्थेष्वित्यर्थः। *वार्तिकतद्भाष्येति*। लोकादेव बहुत्वादिषु बहुवचनादि भविष्यति, किमर्थं, "बहुषु बहुवचनम्"। (पा० सू० १।४।२१) इत्यादिसूत्रमित्याक्षेपे सुप्तिङामविशेषेण विधानाद् दृष्टिविप्रयोगत्वाच्च नियमार्थं वचनमितिसन्धाय, नियमाकारप्रदर्शकमिदं श्लोकवार्त्तिकम्।

अथवा प्रकृतार्थानपेक्ष्य नियमः। के च प्रकृताः, एकत्वादयः एकस्मिन्नेवैकवचनं, न द्वयोर्न बहुषु इत्यादि तद्भाष्यं च ताभ्यामित्यर्थः।

नियमाकारमाह—*द्वितीया कर्मण्येवेति*। प्रकृताऽभिप्रायम्। *उभयथापीति*। विभक्त्यपेक्षया अर्थापेक्षया चेत्यर्थः। विभक्तिनियमोऽपि द्विधा—अर्थविशेषाऽपेक्षस्तत्सामान्याऽपेक्षश्च। तत्राद्यः—कर्मार्थयोग्यप्रातिपदिकाच्चेद् द्वितीया तदा कर्मण्येव, न करणादौ। कर्मादियोग्ये तद्रहितप्रातिपदिकाऽर्थ एव प्रथमा, न कर्मादौ। संख्यावदर्थयोग्यप्रातिपदिकाच्चेदेकवचनं तदा एकत्वे एव न द्वित्वादावित्याकारकः। द्वितीयस्तु—प्रातिपदिकाच्चेद् द्वितीया कर्मण्येवेत्याकारकः। अर्थनियमस्तु—कर्मार्थयोग्यप्रातिपदिकाच्चेत् कर्मणि विभक्तिस्तदा द्वितीयैव। कर्मादिरहिते तद्योग्यप्रातिपदिकार्थे प्रातिपदिकात्प्रथमैवेत्याकारक इति। सिद्धस्यैकवाक्यताबलेनेत्यादिः। तथाच विषयत्वस्य निरुक्तकर्मत्वाऽनात्मकत्वेन तत्र द्वितीयादेः शास्त्रेणाऽविधानाद् तदर्थतात्पर्य्येण तदुच्चारणस्याऽनृतत्वादित्यर्थः। *अत एवेति*। विभक्तौ लक्षणाया अप्रयोजकत्वादेवेत्यर्थः।

ननु व्याकरणस्य शक्तिनिरूढलक्षणान्यतरप्रतिपादकत्वेन यत्र मुख्याऽर्थबाधप्रतिसन्धानादि तत्र शक्यसम्बन्धिनि लक्षणास्वीकारे बाधकाऽभावः। 'घटं जानाति' इत्यादितो घटादिविषयकज्ञानबोधस्य सर्वानुभवसिद्धस्य द्वितीयाया वृत्तिं विनाऽनुपपन्नस्यैव लक्षणाकल्पकत्वाच्च; "विभक्तौ न लक्षणा" इति प्रवादस्त्वेकविभक्तेरपरविभक्त्यर्थे न लक्षणेत्येतत्परः। अत एव न व्यत्ययानुशासनवैयर्थ्यम्। 'सुपां कर्मादयोऽप्यर्था' इत्यत्र कर्मादिपदस्य गौणमुख्यसाधारणकर्मत्वपरतयाऽप्युपपत्तेर्न तद्विरोधोऽपीत्यत आह—*दिगिति*।

तदर्थस्तु मुख्यार्थमादाय शास्त्रचारितार्थ्ये गौणे तद्व्यापारे मानाभावः। नच घटं जानातीतिप्रसिद्धप्रयोगानुरोधेन गौणेऽपि तद्व्यापारकल्पनाऽवश्यिकेति वाच्यम्। जानातेर्ज्ञानविषयत्वापत्त्युपसर्ज्जनविषयत्वापादनार्थकतया मुख्यकर्मतयैवाऽस्मन्मते प्रयोगोपपत्तिसम्भवात्। स्वानुभवैकगम्येऽर्थे लक्षणाऽभ्युपगमेऽर्थनिर्द्देशस्य वैयर्थ्यापत्तेश्चेत्यादिः।

अत्र वदन्ति—शास्त्रस्य गौणे प्रवृत्त्यनभ्युपगमे स्वादीनां फलत्वेनाभिमते गत्यभावे

कि विशिष्ट में कारणता मानने में गौरव होगा। शक्ति वैयाकरणमत में बोधजनकत्वरूपा है। इस प्रकार घटत्व विषयक बोधजनकत्वरूप शक्ति का ज्ञान उक्त विषयक शाब्दबोध में कारण है। शक्तिज्ञानविषयबोधांश में प्रकारितया अवच्छेदिका घटत्वादि जात एक है इसी कारण से कारिका में "एकम्" ऐसा लिखा। अर्थात् शक्तिज्ञाननिष्ठा जो कारणता उसका अवच्छेदक जाति रूप एक ही है। अतः एक नामार्थ है इसकी उपपत्ति करनी चाहिये।

शङ्काः—"घटो घटपदशक्यः" = घट घटपद का शक्य है इस प्रकार के शक्ति ग्रह से स्वरूपतः (अन्याप्रकारक) घटत्वप्रकारक घट विषयकबोध के समान जातित्वेन जाति-प्रकारक अथवा घटत्वत्वेन घटत्व प्रकारक शाब्दबोध भी होना चाहिये। क्योंकि शक्तिज्ञान उभयविध शाब्दबोध के अनुकूल है।

समाधान—स्वरूपतः घटत्व प्रकारक शाब्दबोध के प्रति ऐसा शक्ति ज्ञान कारण है जिसमें घटत्वांश में दूसरा कोई प्रकार (विशेषण) नहीं हो। इसी को अन्याप्रकारक शब्द से मूल में लिखा है। घटत्वत्वरूप से घटत्व के जातित्वरूप से जाति के बोध के प्रति घटत्वांश में घटत्वत्व या जातित्व प्रकारक शक्तिज्ञान की कारणता मानते हैं। अतः केवल (स्वरूपतः) घटत्व प्रकारकबोध के प्रति घटत्वांश में अन्याप्रकारक शक्तिज्ञान की कारणता होने से जातित्वरूप से जाति प्रकारक या घटत्वत्वरूप से घटत्व प्रकारक बोध की आपत्ति नहीं हुई।

तदेतदभिप्रेत्याह —*द्विकमिति*। जातिव्यक्ती इत्यर्थः। पूर्वपक्षविरोधपरिहारः पूर्ववत्॥ *त्रिकमिति*॥ जातिव्यक्तिलिङ्गानीत्यर्थः। सत्त्वरजस्तमोगुणानां साम्यावस्था नपुंसकत्वम्। आधिक्यं पुंस्त्वम्। अपचयः स्त्रीत्वम्। तत्तच्छब्दनिष्ठं तत्तच्छब्दवाच्यं च। तमेव विरुद्धधर्ममादाय तटादिशब्दा भिद्यन्ते।

केषाञ्चिदनेकलिङ्गत्वव्यवहारस्तु समानाऽपूर्व्वीकत्वेन शब्दानामभेदारोपात्।

एवञ्च पदार्थपदे पुंस्त्वमेव। व्यक्तिपदे स्त्रीत्वमेव। वस्तुपदे नपुंसकत्वमेवेति। सर्वत्रैवायं पदार्थः, इयं व्यक्तिः इदं वस्तु, इति व्यवहारः, तटस्तटीतटमिति चोपपद्यते।

तच्च लिङ्गमर्थपरिच्छेदकत्वेन अन्वेतीति पश्वादिशब्दोक्तं पशुस्त्रियां नास्तीति पशुनेत्यादिविधिर्न छाग्यादीनङ्गत्वेन प्रयोजयतीतिविभावनीयम्। नच व्यक्त्यादिशब्दोक्तलिङ्गस्येव पश्वादिशब्दोक्तस्यापि साधारण्यं शङ्क्यम्। व्यक्तिशब्दस्य नित्यस्त्रीलिङ्गत्वेन तथा सम्भवेऽपि पशुशब्दस्य नित्यपुंलिङ्गत्वे प्रमाणाभावात्।

"पश्वाऽनतायुं गुहा चरन्तं" "पश्वे नृभ्यो यथा गवे" इत्यादिवेददर्शनाच्च॥ मीमांसायां चतुर्थे "पशुना यजेत" इत्यत्रैकत्वपुंस्त्वयोर्विवक्षितत्वाभावाऽनेकपशुभिः पशुस्त्रिया वा यागः इति प्रतिपादितत्वाच्च॥

वस्तुतस्तु विशेषविध्यभावे उप्रत्ययान्तानां पुँस्त्वस्य व्याकरणेन निर्णीतत्वाद् वेदभाष्येऽपि "जसादिषु छन्दसि वा वचनम्" इति नाभावाऽभाव इत्युक्तेः पशुशब्दस्य नित्यपुँस्त्वनिर्णयात्। प्रकृते-"छागो वा मन्त्रवर्णात्" इति न्यायेनैव निर्णयः। मन्त्रवर्णे हि-"छागस्य वपाया मेदसः" इति श्रूयते। तत्र छागस्येति च्छाग्यामसम्भावितमिति भवति ततः पुंस्त्वनिर्णय इति विस्तरेण प्रपञ्चितं भूषणे।

*चतुष्कम्*॥ संख्यासहितं त्रिकमित्यर्थः॥ *पञ्चकम्*॥ कारकसहितं चतुष्कमित्यर्थः॥

नन्वन्वयव्यतिरेकाभ्यां प्रत्ययस्यैव तद्वाच्यम्, तत एव लिङ्गादीनामुपस्थितौ प्रकृतिवाच्यत्वे मानाभावाच्चेति चेत्? सत्यम्। प्रत्ययवर्जिते 'दधि' 'पश्य' इत्यादौ प्रत्ययमजानतोऽपि बोधात् प्रकृतेरेव वाचकत्वं कल्प्यते। लिङ्गानुशासनस्य प्रकृतेरेव दर्शनाच्च। अत एवैषु पक्षेषु न निर्बन्धः। प्रत्ययस्यैव वाचकताया युक्तत्वात्।

द्योतिका वाचिका वा स्युर्द्वित्वादीनां विभक्तयः॥

इति वाक्यपदीयेऽपि पक्षद्वयस्य व्युत्पादनात्॥ *शास्त्रइति*। बहुषु स्थलेषु व्युत्पादनं व्यञ्जयितुम्। प्राधान्येन तु सरूपसूत्रादौ व्यक्तम्॥ २५॥

*तदभिप्रेत्येति*। उक्तरीत्या विशिष्टस्य शक्यत्वमुपगम्येत्यर्थः। *जातिव्यक्ती इति*। विशेष्यविशेषणभावापन्ने ते इत्यर्थः॥

*पूर्वपक्षादिति*। एकमिति पक्षादित्यर्थः। तत्पक्षे हि शाब्दज्ञानकारणतायां बोधांशे प्रकारितयावच्छेदकत्वं शक्तिरिति जातिरेव शक्या। विशेष्यितयावच्छेदकत्वमिति मते केवलव्यक्तिरेव शक्येति सिद्धान्तितम्। अत्र तु विषयितात्वेन प्रकारिताविशेष्यिते अनुगमय्य तत्र विषयितयाऽवच्छेदकत्वं शक्तिरित्युपगमाद् द्वयोरपि नाऽमार्थत्वसिद्धिरिति न तयोः परस्परविरोधशङ्केति भावः। एतेषां मतानामाकराऽऽरूढत्वेऽपि व्यक्तिः पदार्थ इति पक्ष एव क्षोदक्षमः। प्रत्येकपदशक्तिनिर्णयस्त्वन्यतोऽवधार्य्यः॥

*लिङ्गानीति*। लिङ्गत्वं च प्राकृतगुणवतो धर्मविशेषः। तद्विशेषश्च नपुंसकत्वादीत्याशयेनाऽऽह—*सत्त्वेति*। *साम्यावस्थेति*। उपचयापचयराहित्येनावस्थानमित्यर्थः। उपचयो वृद्धिः, अपचयस्तन्न्यूनत्वम्॥ *तत्तच्छब्दनिष्ठमिति*॥ जातिगुणक्रियादिभेदभिन्नशब्दनिष्ठम्॥ तत्तच्छब्दवाच्यं चेति*। स्वाश्रयशब्दवाच्यं चेत्यर्थः। पुंलिङ्ग शब्द इति व्यवहारात्, "तस्माच्छसो नः" (पा० सू० ६।१।१०३) "स्वमोर्नपुंसकात्" (पा० सू० ६।१।२३) इत्यादिसूत्रप्रामाण्याच्चेति भावः॥ *तमेवेति*। समानाऽनुपूर्वीकत्वेऽप्युपचयाद्यवस्थारूपं परस्परसमानाधि-

करणं लिङ्गमादयैवेत्यर्थः ॥ *भिद्यन्ते इति* ॥ पुंस्त्वादिलिङ्गकेतरव्यावृत्तिविधेयकानुमित्युद्देश्या भवन्तीत्यर्थः ॥

ननु लिङ्गस्योक्तावस्थारूपत्वे तासां परस्परविरुद्धानामेकत्राऽवस्थानासम्भवेन केषुचिच्छब्देष्वनेकलिङ्गकत्वव्यवहारः किं निबन्धनोऽत आह—*केषाञ्चिदिति* ॥ तटादिशब्दानामित्यर्थः ॥

वस्तुतस्तेषां विरुद्धत्वेऽपि शब्दानां समानानुपूर्वीकत्वनिबन्धनाभेदाध्यासादनेकलिङ्गकत्वव्यवहारोपपत्तिरित्यर्थः । अर्थनिष्ठम्—'स्तनकेशवती नारी लोमशः पुरुषः स्मृतः' इत्यादिस्मृतिलक्षितं लिङ्गं तु नात्राऽश्रयितुं शक्यम् । दारानित्यादौ शस्प्रकृत्यर्थे तदभावेन नत्वाद्यनापत्तेः । तथाच भाष्यम्—"एकार्थशब्दान्यत्वाद् दृष्टं लिङ्गान्यत्वमवयवान्यत्वाच्च" इति । एकस्मिन्नर्थे "पुष्यस्तारकानक्षत्रम्" इति लिङ्गनानात्वदर्शनात्, 'कुटीकुटीर' इत्यादौ रेफस्याऽवयवस्योपजनेऽपि लिङ्गभेददर्शनाच्चान्यदेव शब्दनिष्ठं लिङ्गमिति तदर्थः । अर्थनिष्ठत्वे तु—पुंलिङ्गः शब्द इति सामानाधिकरण्यानुपपत्तिश्चेति भावः ॥

*एवञ्चेति* ॥ पारिभाषिकशब्दनिष्ठलिङ्गस्य व्यवहारोपयिकत्वे चेत्यर्थः ॥ *व्यवहार इति* ॥ अर्थनिष्ठस्य तस्य तन्नियामकत्वे तु स्त्रीव्यक्तिर्वस्तुपदार्थपदाभ्यां न व्यवह्रियेत; एवं पुरुषादिरपि व्यक्त्यादिशब्दैः स्तनकेशादिरूपलौकिकलिङ्गस्य खट्वादावभावेन तद्वाचकात् स्त्रीप्रत्ययाद्यनापत्तेश्चेति भावः । *तटस्तटीति* ॥ अर्थे लौकिकलिङ्गाभावेऽपि परस्पराऽसमानाधिकरणपारिभाषिकलिङ्गवत्त्वेन विभिन्नानां तटादिशब्दानां तत्तत्कार्यभाक्त्वमुपपद्यत इत्यर्थः ।

ननु शब्दनिष्ठोक्तलिङ्गस्यैव स्त्रीपुंसादिव्यवहारोपयिकत्वे तस्य स्त्रीवाचकपशुशब्देऽपि सत्त्वात् 'पशुना यजेत' इत्यत्र पशुस्त्रीकरणकयागादप्यदृष्टसिद्धिः स्यात्; तदुपात्तलिङ्गस्य व्यक्त्यादिशब्दोक्तलिङ्गवत् स्त्रीपुंसादिसाधारण्येनाऽर्थापरिच्छेदकत्वादत आह—*तच्चेति* ॥ शब्दनिष्ठमेवेत्यर्थः ॥ *अर्थेति* ॥ अर्थमपि परिच्छिनत्तीत्यर्थः । तदेवाह—*पश्वादिशब्दोक्तमिति* । लिङ्गमिति शेषः । यदि स्त्रीपशुर्यागाङ्गत्वेन विवक्षितोऽभविष्यत्तदा, अस्त्रीविहितनाभावं विभक्त्यन्ते न प्रायोक्ष्यत् । तदन्तपशुशब्दप्रयोगात्तु पुम्पशुरेव यागाङ्गमिति निर्णीयते इत्यर्थः । स्त्रीलिङ्गार्थकपशुशब्दाद् "आङो नाऽस्त्रियाम्" ( पा० सू० ७।३।१२० ) इति विहितनाभावस्य तृतीयैकवचनेऽसम्भवेन तदन्तपशुशब्दप्रयोगात् तदर्थस्य पुंस्त्वाऽवगतेरिति भावः ।

ननु व्यक्त्यादिशब्दानामर्थनिष्ठलिङ्गानादरेण प्रवृत्तिवत्पशुशब्दस्य तथा प्रवृत्तौ बाधकाभावादुक्तदोषो दुरपह्नव इत्याशङ्क्य निराचष्टे—*नचेति* ॥ व्यक्त्यादीत्यादिना वस्त्वादिपदसंग्रहः । साधारण्यं स्वाश्रयवाच्यत्वसम्बन्धेन, स्त्रीपुंसवृत्तित्वं स्त्रीत्वलिङ्गत्वेनेति 'स्त्रियां क्तिन्' (पा० सू० ३।३।९४) इत्यनुशासनादिति भावः ।

ननु 'पशुना यजेत' इति वैदिकप्रयोग एव तस्य नित्यपुंस्त्वे मानं स्यादत आह—*पश्वेति*। तथा च वेदे पशुशब्दस्य स्त्रीलिङ्गत्वस्याऽपि दर्शनेन न तस्य व्यक्त्यादिशब्दसाम्यमिति भावः। स्वोक्तेऽर्थे मीमांसकसम्मतिमाह—*मीमांसायामिति*। वक्ष्यमाणाऽस्वरसादाह—*वस्तुतस्त्विति*। ननु उप्रत्ययान्तानां नित्यपुंस्त्वे पश्वेत्यादिस्त्रीलिङ्गप्रयोगाऽनुपपत्तिरत आह—*नेदं भाष्येऽपीति*। तथा च व्यक्त्यादिशब्दोक्तलिङ्गस्येव पशुशब्दोक्तलिङ्गस्यापि स्त्रीपुंससाधारण्यान्न तस्यार्थपरिच्छेदकत्वमिति भावः।

ननु कथं तर्हि पुम्पशोरेव यागाङ्गत्वनिर्णयोऽत आह—*छागो वेति*। न्यायेनैवेत्येवकारेण लिङ्गस्याऽर्थपरिच्छेदकस्य व्युदासः। यथा—"सारस्वती मेषो" इत्यत्र तद्धितप्रकृतिशब्दः स्त्रीलिङ्गः पुंल्लिङ्गो वेति सन्देहे, "सन्दिग्धे वाक्यशेषात्" (मी० सू० १।४।१६।२६) इति न्यायेन "एतद्वै दैव्यं मिथुनम्" इत्यर्थवादाद् द्वयोरेवैकशेषेण ग्रहणं तद्वन्मन्त्रवर्णादत्र पुम्पशोर्यागाऽङ्गत्वनिर्णय इति भावः। *तत्रेति*। मन्त्रवर्ण इत्यर्थः। *असम्भावितमिति*। छागशब्दस्य व्यक्त्यादिवन्नित्यलिङ्गत्वाभावादिति भावः। *प्रपञ्चितमिति*। लौकिकलिङ्गमेव नामाऽर्थः। तच्चावयवविशेषसंस्थानरूपम्। दारानित्यादौ पुंस्त्वारोपेणैव तत्प्रयुक्तकार्यम्। "रात्राह्नाहाः पुंसि" (पा० सू० २।४।२९) इत्यादिलिङ्गानुशासनस्यैवोक्तार्थे मानत्वात्। अत एव न पशुस्त्रिया यागसिद्धिः। अथवा स्त्रीत्वादिर्जातिरेव।

तिस्रो जातय एवैताः केषाञ्चित् समवस्थिताः। वाक्य० लिङ्ग ४
अविरुद्धा विरुद्धाभिर्गोमहिष्यादिजातिभिः॥

इत्यादि तत्रोक्तमिति। परे तु—

स्तनकेशवती नारी लोमशः पुरुषः स्मृतः। म० भा०
एतयोरन्तरं यच्च तदभावे नपुंसकम्॥

इति स्मृत्युक्तलक्षणलक्षितलिङ्गस्याऽसार्वत्रिकत्वेन दारानित्यादौ नत्वाऽनापत्त्या "स्त्रियाम्" इति सूत्रे "अवश्यं कश्चित् स्वकृतान्त आस्थेयः" इत्यादिना सार्वत्रिकगुणाऽवस्थारूपपारिभाषिकलिङ्गस्य शास्त्रीयकार्योपयोगिनोः भाष्यकृताऽभ्युपगमेऽपि गुरुसञ्ज्ञाविज्ञानान्नत्वादिशास्त्रप्रवृत्तौ लौकिकलिङ्गस्याप्याश्रयणं पुमादिसञ्ज्ञानां सङ्ख्यासञ्ज्ञाया इवाधिकसङ्ग्रहार्थं प्रवृत्तत्वेऽपि प्रसिद्धार्थनिरासार्थमप्रवृत्तेः। अत एव—

आविर्भावस्तिरोभावस्थितिश्चेत्यप्यपायिनः। वाक्य० लिङ्ग १३
धर्मा मूर्तिषु सर्वासु लिङ्गत्वेन व्यवस्थिताः॥

इत्यत्रापि नाऽलौकिकलिङ्गमपि समुच्चितवान् हरिः। तत्र सति सम्भवे सामानाधिकरण्यसम्बन्धेन लौकिकपुंस्त्वविशिष्टशास्त्रीयलिङ्ग एव पुमादिशब्दानां शक्तिर्न केवलशास्त्रीये, नाऽपि लौकिके। असम्भवे तु शास्त्रीय एव। अत एव 'पशुना यजेत'

इत्यादौ पशुस्त्रिया कृते यागे वैगुण्यम्। तत्र लौकिकपुंस्त्वविशिष्टशास्त्रीयपुंस्त्वस्यैव शब्देन प्रतिपादनादित्याहुः।

अथ लिङ्गे शक्तिग्रहविषयताया अभावेन प्रातिपदिकाऽर्थत्वाभावात्, त्रिकमिति पक्षोऽनुपपन्न इति चेद्? न। "स्वमोर्नपुंसकाद्" (पा० सू० १।१।८३) इत्यादिसूत्र-प्रामाण्येन पुंल्लिङ्गादिविशिष्टोऽयं घटो घटपदवाच्य इत्याकारकशक्तिग्रहाऽभ्युपगमेन सामञ्जस्यात्। शब्दनिष्ठमेव लिङ्गं नत्वादिप्रवृत्तौ निमित्तमिति मते शब्दाऽर्थयोर-भेदे लिङ्गस्य साक्षादित्यर्थात् स्वाश्रयवाच्यत्वसम्बन्धेनाऽर्थांशे प्रकारकत्वाद्धर्मिताऽ-वच्छेदकत्वेन धर्मिताऽवच्छेदकसमानाधिकरणत्वेन वा शक्तिग्रहविषयताया निया-मकत्वस्य फलबलेन कल्पनात्।

वस्तुतस्तु पारिभाषिकलिङ्गमप्यर्थ एव स्वीकर्त्तुमुचितम्। पुंल्लिङ्गः शब्द इत्यादौ पुंल्लिङ्गाऽऽदिशब्दा अर्शआद्यजन्ताः। आत्मनि सर्वस्याध्यस्तत्वेन परम्परया तत्रापि स्त्यानादिसत्त्वात् "आत्मा ब्रह्म" इत्यादिप्रयोगोपपत्तिः। स्त्यानं तिरोभावोऽपचय इति यावत्। उपचयादिविवक्षाया एव प्रयोगनियामकत्वेन तेषामेकत्र विरोधेऽपि क्षत्यभावात्। अत एव "सामान्ये नपुंसकम्" (वा०) इति तत्र तत्रोक्तं सङ्गच्छते। उत्कर्षापकर्षसत्त्वेऽपि तदविवक्षायामिति तदर्थं इत्याद्यन्यतोऽवधार्यम्।

लिङ्गादित्रयस्य नामार्थत्वं साधयितुं शङ्कते—*नन्विति*। *अन्वयव्यति-रेकाभ्यामिति*। टाबादिसमभिव्याहारे अश्वादिपदात् स्त्रीत्वबोधादभावे च तद-बोधादेवंरूपाभ्यामित्यर्थः। एवमन्यत्राऽप्यूह्यम्। तथा च ताभ्यां लिङ्गादेः प्रत्ययार्थ-त्वाऽवधारणान्न लिङ्गादित्रिकस्य प्रकृत्यर्थत्वमित्यर्थः। 'दधि' 'पश्य' इत्यादावित्या-दिना 'अयं याति' 'इयमायाति' इत्यादिपरिग्रहः। *बोधादिति*। कर्मत्वादि-बोधादित्यर्थः। तथाच व्यतिरेकव्याभिचारेणान्यलभ्यत्वाच्च तदर्थत्वाऽभावान्नामा-र्थत्वमेव तेषामावश्यकमिति भावः। वक्ष्यमाणयुक्त्या सङ्ख्याकारकयोः प्रत्ययार्थ-त्वेऽपि लिङ्गस्य प्रकृत्यर्थत्वमेव युक्तमित्याशयेनाह—*लिङ्गेति*। *अत एवेति*। प्रकृतिप्रत्यययोरन्यतरस्य वाचकत्वे युक्तिसाम्यादेवेत्यर्थः। *निर्बन्ध इति*। इदमेव मतं मुख्यमित्यभिनिवेश इत्यर्थः। तदेवाह—*प्रत्ययस्यैवेति*। *युक्तत्वादिति*। अनन्तानां प्रकृतीनां शक्तत्वकल्पनापेक्षया कतिपयस्वादीना-मेव तत्कल्पने लाघवादिति भावः।

केचित्तु टाबादिकं विनापि वागादिशब्देभ्यः स्त्रीत्वस्याऽव्युत्पत्तिपक्षे रामज्ञाना-दिशब्देभ्यः पुन्नपुंसकत्वयोर्बोधस्य सार्वजनीनाऽनुभवसिद्धत्वाल्लिङ्गत्वं प्रातिपदिका-ऽर्थत्वमेव। लुप्तविभक्तिस्मरणादपि बोधाऽङ्गीकारेण सङ्ख्याकारकयोर्विभक्ति-वाच्यतैव उक्तञ्च—

स्वार्थो द्रव्यं च लिङ्गं च संख्या कर्मादिरेव च।
अमी पञ्चैव नामार्थास्त्रयः केषाञ्चिदग्रिमाः॥ इति।

अग्रिमा—लिङ्गान्ता इत्याहुः।

नन्वेकवचनत्वादेरनुगतस्य दुर्वचतया कथं तेन रूपेण स्वादीनामेकत्वादिवाचकत्वम्। तथाहि—न तावदेकत्वादिवाचकत्वं तत्। वाचकतायाः शक्ततारूपत्वेनात्माश्रयात्। बोधकतारूपत्वे तु द्विवचनादीनामपि शक्तिभ्रमेणैकत्वादिबोधकतयातिप्रसङ्गात्। बोधकत्वं शक्तिरिति मते आत्माश्रयस्य दुर्वारत्वाच्च। नाप्येकवचनत्वादिकं जातिः। सुत्वादिना साङ्कर्य्यात्। न च पाणिनिसङ्केतसम्बन्धेनैकवचनादिपदवत्त्वं तत् तादृशसङ्केतस्य संकेतत्वेन सम्बन्धत्वे कस्यचिदेकवचनादिपदादोजसादिर्बोद्धव्य इत्याकारकसङ्केतस्यापि सम्भवेनाऽतिप्रसङ्गतादवस्थ्यात्। पाणिनिसङ्केतत्वेन तत्त्वे तु व्याकरणान्तरप्रणेतृपुरुषान्तरस्यापि पाणिनिसंकेततुल्यसंकेतसम्बन्धेन एकवचनादिपदवत्त्वस्य 'डित्थादिपदात् स्वौजसादिर्बोद्धव्य' इत्याकारकपुरुषविशेषीयसंकेतसम्बन्धेन डित्थादिपदवत्त्वस्य वा विनिगमनाविरहेण शक्तताऽवच्छेदकत्वाऽऽपत्तेरिति चेद् ?

न। सुत्वाम्त्वादिनैवैकवचनस्य शक्तत्वाभ्युपगमेनोक्तदोषाऽनवकाशात्। कार्य्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशाच्च न परस्परजन्योपस्थितौ व्यभिचारः। न च दधि मध्वित्यादौ व्यभिचारः। तत्र लुप्तविभक्त्यनुसन्धानेनैव बोधाभ्युपगमात्। कथमन्यथा द्योतकतादिमतेऽपि केवलप्रातिपदिकात् तदुपपत्तिर्द्योतकस्यैवाऽभावात्।

नचाऽनेकसुत्वादीनां शक्तत्वाऽवच्छेदककत्वे गौरवात् प्रादिपदिकत्वस्यैकस्य तत्वमुचितं, लाघवादिति शङ्कयम्। उक्तरीत्या प्रातिपदिकत्वस्याऽप्यनुगतस्य दुर्वचत्वात्। तदज्ञानेऽप्येकत्वादिबोधस्याऽनुभवसिद्धत्वात्। पदत्वेन वर्णत्वेन वा शक्यत्वे तु विभक्तेरपि वाचकतासिद्धेः। एकत्वाद्युपस्थितेःप्राग्वर्णत्वाद्युपस्थितेरप्यनावश्यकत्वात् तदनुरोधेन तत्कल्पने गौरवाच्च। पदार्थयोर्विशेष्यविशेषणभावेनाऽन्वये विभिन्नपदजन्योपस्थितेस्तत्र तयैकप्रकृत्युपस्थाप्यघटैकत्वाद्योस्तदभावेन परस्परमनन्वयापत्तिश्चेति स्वादीनां संख्यादिवाचकत्वमेवेति भावः।

द्योतकतावादिनां पुनरयमाशयः-न प्रकृतीनां घटैकत्वाद्योर्विशकलितयोः शक्तिर्येनोक्तदूषणावकाशः स्यात्, किन्त्वेकत्वविशिष्टे घटादौ पृथक्शक्त्यनभ्युपगमेनाऽन्वयस्यैवाऽभावात्। अनन्तप्रकृतीनामेकत्वादिशक्तताकल्पनगौरवस्याऽप्यभावाच्च। घटपदस्यैकत्वे शक्तिभ्रमदशायां 'घटः प्रमेयः' इत्यादिवाक्यादेकत्वं प्रमेयमिति बोधस्य सर्वसिद्धतया तदनुरोधेनैकत्वादिविषयकशाब्दबोधे घटादिपदजन्यैकत्वाद्युपस्थितेर्हेतुताया आवश्यकत्वाच्च।

किञ्च विभक्तेः संख्यावाचकत्वमते समानविषयकाऽनुमितिसामग्रीप्रतिबन्धकतायां प्रातिपदिकजन्यघटाद्युपस्थितिः स्वादिजन्यैकत्वाद्युपस्थितिश्च निवेश्या। तथा च तयोर्विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबद्धप्रतिबन्धकभावबाहुल्यम्। मन्मते तदुभयस्थलीयैकैविशिष्टविषयकोपस्थितिस्तत्र निवेश्येति लाघवम्। विशिष्टविषयकोपस्थितेरप्येकत्वादिप्रकारतानिरूपितघटादिविशेष्यताशालित्वेन घटादिविशे—

-ष्यतानिरूपितैकत्वादिप्रकारताशालित्वेन वा निवेश इत्यत्र विनिगमकाऽभावात् साम्यमिति तु न। भवन्मते यत्र योग्यताज्ञानघटोपस्थित्येकत्वोपस्थितीनां तिसृणां विशेष्यविशेषणभावे विनिगमनाविरहेण प्रतिबध्यप्रतिबन्धकभावषट्कं, तत्र मन्मते योग्यताज्ञाने विशिष्टविषयकोपस्थितेः प्रत्येकं विशिष्टोभयरूपेण वैशिष्टचं निवेश्य द्वयं, प्रत्येकं तादृशरूपावच्छिन्नायामुपस्थितौ योग्यताज्ञानस्य वैशिष्टचं निवेश्य च द्वयमिति चतुष्टयमिति लाघवात्। अतिप्रसङ्गपरिहारस्तु तत्तत्संख्याबोधे तत्तद्वचनसमभिव्याहारस्य हेतुत्वकल्पनात्।

एवं 'कारकं विभक्त्यर्थः' इति कल्पे तत्तत्कारकबोधे स्वोत्तरतत्तद्विभक्तिसमभिव्याहारस्य हेतुत्वकल्पनात् स बोध्यः। स चाऽम् घट इत्यतो बोधवारणाय वाचकतावादिनामप्यावश्यकः। एवं रीत्योपसर्गाणामपि द्योतकत्वं बोध्यमिति पक्षद्वयेऽपि हरिसम्मतिमाह—*द्योतिका वाचिका वेति* ।

यद्वा संख्यावतोऽर्थस्य समुदायोऽभिधायकः।

इति स्वस्योत्तरार्द्धम्। घट इत्याद्याकारकाऽनुपूर्व्यवच्छिन्नविभक्त्यन्तसमुदायो वैकत्वादिविशिष्टघटादिवाचक इति तदर्थः। पदस्फोटमवलम्ब्य चेदम्। नामाऽर्थधात्वर्थयोः साक्षादभेदाऽतिरिक्तसम्बन्धेनान्वयस्याव्युत्पन्नत्वादभिधानानभिधानव्यवस्थानुपपत्तेश्च कारकं विभक्त्यर्थ एव।

यदि च नामाऽर्थधात्वर्थयोर्भेदेन परस्पराऽन्वयापादनं, तण्डुलकर्मकपाकविशेष्यकबोधे द्वितीयान्ततण्डुलपदसमभिव्याहृतपचतीत्याद्यनुपूर्वीविशेषज्ञानस्य हेतुत्वकल्पनयैव निरसितुं शक्यम्। अनभिहिताऽधिकारस्यापि 'संख्या विभक्त्यर्थः' इति पक्ष एवोपयोगस्तत्पक्षे "कर्मणि द्वितीया" (पा० सू० २।३।२) "द्वयेकयोः" (पा० सू० २।२।२२। इत्यादीनामेकवाक्यतयैव प्रवृत्तैस्तत्र विशेष्यविशेषणभावे कामचारात्। एकस्य यत्कर्म, कर्मणि यदेकत्वमिति द्विधा वाक्यार्थसम्पत्तिः। प्रथमकल्पे द्वितीयादीनां तिङादीनां च कर्मादिवाचकतयाऽन्यतरेणाभिधानेऽन्यतरस्य गतार्थत्वादनभिहितसूत्रमफलम्। द्वितीये तु कृता कर्मणोऽभिधानेऽपि तद्गतसंख्याया अनभिधानात् प्राप्तां द्वितीयां वारयितुं तदवसरः। सति तस्मिन्ननभिहितकर्मगतत्वाभावान्न द्वितीयादिप्रसङ्गः। संख्यापि यदि प्रातिपदिकाऽर्थस्तदोक्तवाक्यार्थाऽसम्भवात् सूत्रवैयर्थ्यमेव।

नन्वनभिहितसूत्राऽभावे 'भीष्मं कटं करोति' इत्यादौ भीष्मादिपदाद् द्वितीयाद्यनुपपत्तिः विशिष्टस्यैव कटादेः क्रियये्प्सिततमत्वात् प्रातिपदिकार्थमात्रे प्रथमाप्रसङ्गात्। तत्सूत्रपक्षे त्वभिधानस्य कृदादिभिः परिगणनात् कटप्रकृतिद्वितीययाऽभिहितेऽपि तस्मिन् भीष्मादिपदेभ्यो द्वितीयादिविभक्तेः सूपपादत्वादिति चेद्? न।

विशिष्टस्य विधित्सायां धर्मिमात्रेण तोषाऽभावाद्धर्मिणामपीप्सिततमत्वात् कर्मत्वम्। तस्य चान्यवाचकपदोत्तरद्वितीययानभिधानात्। कृतः कट इत्यादौ तु प्रत्ययस्य

धातूत्तरवर्त्तित्वेन तेन प्रातिपदिकार्थविशेषनिष्ठकर्मत्वस्यानभिधानादविशेषाद्धर्म-धर्मिनिष्ठतदभिधानमिति भीष्मादिविशेषणवाचकपदेभ्यः प्रथमोपपत्तिरिति न काऽपि तद्वनारम्भेऽनुपपत्तिः । तदुक्तंभाष्ये—"कटोऽपि कर्म भीष्मादयोऽपि" इति तदास्तु कारकमपि प्रातिपदिकार्थः । अस्मिन्नपि पक्षे कारकस्य प्रकृत्यर्थव्यक्तिविशेषणतैव विभक्तिद्योत्यत्वादिति केचित् ।

नचैवं प्रातिपदिकाऽर्थप्रकारकबोधे सुब्जन्योपस्थितेर्हेतुत्वं विलीयेतेति नाच्यम् । इष्टत्वात् । एतत्कल्पे जातिलिङ्गसंख्याकारकविशिष्टद्रव्यस्य प्रातिपदिकाद् बोधेनोक्तहेतुहेतुमद्भावस्य गगनकुसुमायमानत्वाद् विशेष्यतैव तु कारकस्योचिताऽनुभवात् क्रियाऽन्वयानुरोधाच्चेति पञ्चकपक्षस्योपपत्तिरिति । *बहुषु स्थलेष्विति* । भाष्याद्याकरग्रन्थेष्वित्यर्थः । तत्र पञ्चकचतुष्कपक्षौ, "तत्रोपपदमि"त्यत्र कैयटेनोपन्यस्तौ त्रिकमिति पक्षस्तु वृत्तिकारेण । प्राधान्येनेति* ॥ तत्र सर्वेषामेव पक्षाणां भाष्यकृतोपन्यासादिति भावः । सूत्रादावित्यादिनाऽनभिहितादिसूत्रसङ्ग्रहः ॥ २५ ॥

अर्थ—जाति व्यक्ति दोनों के नामार्थ होने पर एकम् इस पक्ष से प्राप्त विरोध का परिहार पूर्वप्रदर्शित रीति से समझना चाहिये ।

जाति, व्यक्ति और लिङ्ग ये तीन नामार्थ है ऐसा भी पक्ष है । सांख्यमत में सत्त्व रजः और तमः ये तीन गुण हैं । (सभी पदार्थों में ये तीनों गुण रहते हैं) ये तीनों गुणों की साम्यावस्था=समान रूपा नपुंसकत्व है । इन तीनों में किसी गुण की अधिकता=उपचय पुंस्त्व तथा इन गुणों का अपचय=न्यूनता स्त्रीत्व है । ये लिङ्ग, शब्द में रहते हुये उन शब्दों से वाच्य भी हैं । भिन्न-भिन्न लिङ्गों के रहने से शब्दों का भेद माना जाता है । किसी एक शब्द में अनेक लिङ्गता का व्यवहार वस्तुतः भिन्न-भिन्न शब्दों की आनुपूर्वी समान होने से एक मानकर उपपन्न होता है । इस प्रकार शब्द वृत्ति लिङ्ग से व्यवहार मानने पर पदार्थ पद में पुंस्त्व ही व्यक्तिपद में स्त्रीत्व ही तथा वस्तुपद में नपुंसकत्व इस प्रकार एकावस्था रहती है । अतः सभी वस्तुओं में अयं पदार्थः इयं व्यक्तिः इदं वस्तु इस प्रकार का व्यवहार एवं एक ही अर्थ में 'तटः' 'तटी' तथा 'तटम्' इस प्रकार विभिन्न लिङ्ग का प्रयोग उपपन्न होता है ।

शङ्का:—शब्दनिष्ठ उक्त पुंस्त्वादि लिङ्ग ही स्त्री पुमान् आदि व्यवहार का कारण मानने पर "पशुना यजेत=अर्थात् पशु से याग करो इस वाक्य से बोधित पशु याग स्त्री पशु अर्थात् बकरी से भी प्राप्त होता है क्योंकि स्त्री पशु में भी शास्त्रीय पुंस्त्व रहता है । इसीलिये स्त्री को "अयं पदार्थः" पुरुष को "इयं व्यक्तिः" आदि शब्दों से भी कहा जाता है । यदि लौकिक लिङ्ग नियामक होता तो उक्त शब्दों का उक्त अर्थों में प्रयोग नहीं हो सकता ।

पूर्वोक्त लिङ्ग अर्थ का परिच्छेदक=निश्चायक होकर अन्वित होता है । इस प्रकार पशुना यजेत इस वाक्य के अन्तर्गत पशुशब्दोक्त नाभाव से पुंलिङ्ग बोधित होने के कारण स्त्रीत्व पशु में नहीं है । इसलिये "पशुना यजेत" यह विधि छागी (बकरी) को यागाङ्ग बोधित नहीं करती ऐसा समझना चाहिये ।

शङ्का:—व्यक्ति आदि शब्दों से प्रतीत शास्त्रीय लिङ्ग जिस प्रकार स्त्री पुमान् नपुंसक सभी व्यक्ति से सम्बद्ध है अर्थात् अर्थनिष्ठ लिङ्ग का जिस प्रकार अनादर है उसी प्रकार

पश्वादि शब्द से कल्पित पुंलिङ्ग भी तीनों लिङ्ग वाले अर्थों से सम्बद्ध होगा। ऐसी अवस्था में पुरुष छाग का बोध होगा स्त्री छाग का नहीं यह निर्णय ठीक नहीं है।

समाधानः—व्यक्ति शब्द नित्य स्त्रीलिङ्ग होने से तीनों लिङ्ग वालों से समान रूप से सम्बद्ध होने पर भी पशु शब्द को नित्य पुंलिङ्ग होने में कोई प्रमाण नहीं है।

"पशुना न तायुं गुहाचरन्तम्" "पश्वे नृभ्योयथा गवे" इत्यादि वेदमन्त्रों में स्त्रीलिंग में भी पशु शब्द का प्रयोग देखा जाता है।

एवं मीमांसकों ने चतुर्थाध्याय में यह निर्णय किया है कि "पशुना यजेत" इसमें पशु शब्द से एकत्व तथा पुंस्त्व की विवक्षा होने से अनेक पशुओं से तथा स्त्री पशु से याग नहीं होता।

वस्तुतः विशेष अनुशासन के न रहने पर उ-प्रत्ययान्त शब्दों को पुंलिङ्ग में व्याकरण से साधुत्व बताया गया है। वेदभाष्य में भी "जसादिषु छन्दसि वा वचनम्" इससे घिसंज्ञा विकल्प होने से घिसंज्ञा के अभाव पक्ष में टा विभक्ति को ना आदेश नहीं हुआ। अतः पश्वा इत्यादि वेदोक्त प्रयोग सिद्ध हो जाने से पशु शब्द को नित्य पुंलिङ्ग होने में कोई बाधक नहीं है। पुरुषपशु से ही याग होने में प्रमाण "छागो मन्त्रवर्णात्" यह मीमांसा सूत्र है "छागस्य वपाया मेदसः" इस मन्त्र में छाग का निर्देश है। इसका प्रयोग छागी का संग्राहक नहीं होगा। इसलिये मन्त्र के द्वारा छाग वर्णन से पशु का ग्रहण नहीं हो सकता। विस्तृत विवेचन बृहद् वैयाकरणभूषण में देखिये।

जाति, व्यक्ति, लिङ्ग तथा संख्या इस प्रकार चार नामार्थ हैं। कारक को भी इन चारों के साथ जोड़ने पर पांच प्रातिपदिकार्थ हैं। जाति व्यक्ति लिङ्ग संख्या तथा कारक ये नामार्थ हैं यह प्रकरणार्थ है।

शङ्काः—उसके रहने पर रहना यह अन्वय है उसके न रहने पर न रहना यह व्यतिरेक है। इन दोनों नियमों से लिङ्ग संख्या तथा कारक ये तीनों प्रत्यय के ही वाच्य सिद्ध होते हैं। प्रत्यय से ही लिङ्गादि की उपस्थिति हो जाने से प्रकृति वाच्य मानने में कोई प्रमाण भी नहीं है।

समाधानः—"दधि पश्यति" इत्यादि प्रत्यय से रहित स्थल में प्रत्यय को नहीं जाननेवालों को भी इससे "दधि को देखते है" ऐसा बोध होता है। अतः प्रकृति को ही वाचक मानते हैं। लिङ्गानुशासन से प्रकृति के ही लिङ्ग का अनुशासन देखा जाता है। इसी कारण से पूर्वोक्त किसी भी पक्ष में आग्रह नहीं है। अनन्त प्रकृति का लिङ्गादि अर्थ मानने की अपेक्षा कुछ प्रत्ययों में इनकी शक्ति मानने में लाघव है। अतः प्रत्यय को ही वाचक मानना युक्त है।

द्वित्वादि संख्या का विभक्तियां द्योतक या वाचक हैं इस आशय के वाक्यपदीय से भी पक्षद्वय की सिद्धि होती है। अनेक स्थलों में इसका विवेचन है यह समझाने के लिये "शास्त्रे" ऐसा लिखा है। वस्तुतः विशेषतया "सरूप" एवं "अनभिहिते" इन सूत्रों में वर्णित है ॥ २५ ॥

हिन्दी भाष्यः—द्विकमिति—

पूर्व मत में एक नामार्थ है। इस मत में जाति व्यक्ति दो नामार्थ है। इस प्रकार परस्पर विरोध है। इसका परिहार इस प्रकार है। शक्ति ज्ञान में विषयिता सम्बन्ध

से कारणतावच्छेदक एक है। विषयिता पद प्रकारिता और विशेष्यिता इन दोनों का संग्राहक है।

"स्तनकेशवती नारी" इत्यादिरूप से प्रदर्शित स्त्रीत्व पुंस्त्वादि लौकिक लिङ्ग के ग्रहण करने पर स्त्रीवाची दार शब्द पुंलिङ्ग नहीं हो सकता। क्योंकि उस शब्द का वाच्य अर्थ स्त्री होने से लौकिक स्त्रीत्व है पुंस्त्व नहीं है। ऐसी अवस्था में "तस्माच्छसो नः पुंसि" इससे नत्व नहीं होगा।

शङ्का—वहाँ पुंस्त्व का आरोप कर तादृश प्रयोग होता है।

समाधानः—विशेषदर्शियों को आरोप न होने से तादृश ( दारान् ऐसा ) प्रयोग नहीं होगा। आहार्य आरोप सबको हो सकता है। अतः विशेष जानकर भी आहार्य आरोप से उस प्रयोग की सिद्धि हो सकती है। ऐसा नहीं कह सकते क्योंकि आहार्यारोप के बिना भी "दारान्" यह प्रयोग इष्ट है। एवं अचेतन नदी पर्वत आदि में लौकिक लिङ्ग की सम्भावना भी नहीं है ऐसी अवस्था में वहाँ लिङ्ग की व्यवस्था नहीं हो सकेगी। इसलिये शास्त्रीय लिङ्ग का ग्रहण है।

शास्त्रीय तत्तल्लिङ्ग का स्वरूप इस प्रकार है। सत्त्व रजस्तम ये तीनों गुणों के उपचय ( वृद्धि ) अपचय ( ह्रास ) इन दोनों से रहित अवस्था को नपुंसक इनकी अपचयावस्था को स्त्रीत्व कहते हैं। उक्त गुणों की उपचय अपचय तथा साम्य की अवस्था ही क्रम से पुंस्त्व स्त्रीत्व नपुंसकत्वरूप है। यह अवस्था गुणों की है। अतः गुणगत धर्म विशेष लिङ्ग है। प्रकृति त्रिगुणात्मक है। संसार के सभी पदार्थ प्रकृति से ही उद्भूत हैं। अतः प्रकृति के गुण, पदार्थ मात्र में है। एक ही स्त्री पति के लिये सुखद जिसने प्रयास करने पर भी उसको नहीं पाया उसके लिये दुःखद एवं साधारण जन के लिये मोहप्रद होने से यह सिद्ध होता है कि वह स्त्री त्रिगुणात्मक है। अन्यथा तोनों गुणों के कार्य सुख-दुःख और मोह कैसे होता। इस प्रकार पदार्थ मात्र में तोनों गुणों की अवस्थायें हैं। अतः पदार्थ मात्र में तीनों लिङ्ग हैं। स्वभावतः किसी शब्द से उपचयावस्था वैशिष्ट्य से किसी से अपचयावस्था वैशिष्ट्य से किसी से साम्यावस्था वैशिष्ट्य से किसी से त्रितयावस्था वैशिष्ट्य से बोध होने के कारण कोई नियत लिङ्ग कोई द्विलिङ्ग और कोई त्रिलिङ्ग शब्द होते हैं। शब्द भी अर्थ के समान प्राकृत ही है। अतः गुणों की अवस्थायें ( अवस्थान ) दोनों में होने से लिङ्ग को शब्दनिष्ठ और अर्थनिष्ठ दोनों मानते हैं।

शास्त्रीय लिङ्ग अर्थ का भी परिच्छेदक—निर्णायक होता है। "पशुना" इसमें पशु शब्द से आई हुई टा विभक्ति के स्थान में "आङोनाऽस्त्रियाम्" इस सूत्र से ना आदेश होता है किन्तु स्त्रीवाचक शब्दोत्तर टा को ना आदेश नहीं होता। पशु शब्द "पश्वा न तायुं गुहाचरन्तम्" इत्यादि मन्त्रों में ना आदेश नहीं देखने से निश्चित होता है कि पशु शब्द स्त्रीलिङ्ग भी है। अन्यथा यहाँ ना आदेश करना चाहिये था। ना आदेश न होने से पशु नित्य पुंलिङ्ग न होकर उभयलिङ्ग मानते है। यहाँ "पशुना" इसमें टा को ना करने से शास्त्रीय पुं पशु से ही याग होगा स्त्री पशु से नहीं। स्त्री पशु में भी शास्त्रीय पुंस्त्व रहता है। इसीलिये स्त्री को भी "अयं पदार्थः से कहते हैं। अन्यथा पुंलिङ्ग पदार्थ शब्द का प्रयोग स्त्री में कैसे हो सकता यह शङ्का नहीं हो सकती। पदार्थः व्यक्तिः वस्तु आदि शब्द नियत लिङ्ग होने से स्त्री पुरुष साधारण का बोधक उक्त पद हैं। पशु शब्द उक्त मन्त्रों से अनियतलिङ्ग होने पर भी स्त्री पुरुष साधारण उक्त शब्द

का प्रयोग यहाँ नहीं है किन्तु ना आदेश से पशु शब्दार्थ में पुंस्त्व अर्थ ही विशेषणत्वेन विवक्षित है। अतः पुंस्त्वविशिष्टपशुशब्दार्थ पुरुष पशु ही है स्त्रीपशु नहीं। पदार्थः व्यक्तिः इत्यादि स्थलों में शब्दनिष्ठपुंस्त्वादि विवक्षित नहीं है क्योंकि नियतलिङ्ग होने से स्त्रीपुरुष साधारण शब्द है—यह अभिप्राय है।

मीमांसा के चतुर्थाध्याय में इसी आशय का निर्णय किया गया है "पशुना" इससे पशुगत एकत्व एवं पुंस्त्व की विवक्षा होने से स्त्री पशु से एवं अनेक पशु से याग नहीं होता।

वस्तुतः उप्रत्ययान्त नित्यपुंलिङ्ग होते हैं। इस प्रकार के अनुशासन से पशु शब्द भी पदार्थ व्यक्ति के समान नियतलिङ्ग ही हैं। पश्वा इत्यादि वेदोक्त प्रयोग घिसंज्ञा के विकल्प होने से उसके अभाव पक्ष का रूप है अतः स्त्रीलिङ्ग पशु शब्द में प्रमाण नहीं है। इस प्रकार पदार्थ आदि शब्दों के समान पशु शब्द भी नियत पुंलिङ्ग ही है। अतः स्त्री पुरुष साधारण होने से अर्थनिर्णायक नहीं होता। पुरुष पशु से ही याग करने में प्रमाण "छागो मन्त्र वर्णात्" इस सूत्र से बोधित "छागस्य वपाया मेदसः" यह मन्त्र है। इसमें छागस्य-छाग की वपा लिखने से छागी की वपा का बोध नहीं होता। क्योंकि छाग यह रूप स्त्रीलिङ्ग में नहीं होता अपितु छागी ऐसा होता है। अतः छाग की वपा याग में अपेक्षित होने से पशुना में पशु यह शब्द पुरुषपशु का ही वाचक है।

लिङ्ग संख्या और कारक को अन्वय व्यतिरेक से प्रत्यय वाच्य ही मानना चाहिये प्रकृति का वाच्य नहीं। प्रत्ययवाच्य मानने पर प्रकृति अनन्त और प्रत्यय परिगणित होने से प्रत्यय शक्ति में लाघव भी है।

"अत एवैषु पक्षेषु न निर्बन्धः" इसके अनन्तर "प्रत्ययस्यैव वाचकतायाः युक्तत्वात्" इस पंक्ति से प्रत्यय की वाचकता का समर्थन युक्तिसंगत प्रतीत नहीं होता है। क्यों कि दोनों पक्षों में युक्ति प्रदर्शन करने के बाद प्रत्ययवाचकत्व पक्ष में किसी असाधारण प्रमाण का निर्देश नहीं किया है। प्रतिज्ञा मात्र से पक्ष की सिद्धि नहीं होती है। अतः "प्रत्ययस्यैव वाचकतायाः युक्तत्वात्" यह पंक्ति भ्रम से आयी हुई है। अत एव बृहद्-वैयाकरणभूषण में इस आशय का कोई वाक्य उपलब्ध नहीं है ऐसा भी किसी का मत है।

शब्दस्तावच्छाब्दबोधे भासते।

न सोऽस्ति प्रत्ययो लोके यः शब्दाऽनुगमादृते॥

वाक्य० प्रकी० का० १५२

अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।

इत्याद्यभियुक्तोक्तेः॥

विष्णुमुच्चारयेत्यादावर्थोच्चारणासम्भवेन विना शब्दविषयं शाब्दबोधासङ्गतिश्चेति सोऽपि प्रातिपदिकार्थः। नच लक्षणया निर्वाहः। निरूढलक्षणायाः शक्त्यनतिरेकात् जवगडदशमुच्चारयेत्यादौ शक्याग्रहेण शक्यसम्बन्धरूपलक्षणाया अग्रहाच्च।

अज्ञातायाश्च वृत्तेरनुपयोगाद्, गावमुच्चारय इति भाषाशब्दानामनुकरणे साधुतासम्प्रतिपत्तेस्तेषां शक्त्यभावेन परनये लक्षणाया असम्भवाच्चेत्यभिप्रेत्य षोढाऽपि क्वचित् प्रातिपदिकाऽर्थं इत्याह—

शब्दोऽपि यदि भेदेन विवक्षा स्यात् तदा तथा।
नोचेच्छ्रोत्रादिभिः सिद्धोऽप्यसावर्थो व भासते ॥ २६ ॥

यद्यनुकार्याऽनुकरणयोर्भेदविवक्षा; तदा शब्दोऽपि प्रातिपदिकार्थः। यदि न भेदविवक्षा, तदा श्रोत्रादिभिरुपस्थितोऽप्यर्थवद् भासते। अपिर्हेतौ। उपस्थितत्वाद्भासत इत्यर्थः।

अयम्भावः—अनुकार्याऽनुकरणयोर्भेदे अनुकार्यस्य पदानुपस्थितत्वात् तत्सिद्धये शक्तिरुपेया। शब्दार्थयोरभेदे, प्रत्यक्षे विषयस्य हेतुत्वात्। स्वप्रत्यक्षरूपां पदजन्योपस्थितिमादाय शाब्दबोधविषयतोपपत्तिरिति।

यद्यप्यतिप्रसङ्गवारणाय वृत्तिजन्यपदोपस्थितिरेव हेतुस्तथाप्यत्राश्रयतया वृत्तिमत्त्वस्य सत्त्वान्नाऽनुपपत्तिः। निरूपकताश्रयताऽन्यतरसम्बन्धेन वृत्तिमत एव शाब्दबोधविषयत्वं कल्प्यत इत्यनवद्यम्। सम्बन्धस्योभयनिरूप्यत्वात्, पदादर्थस्येव तद्बोधकत्वेन स्वस्याऽपि ज्ञानसम्भवाच्चेति।

उक्तञ्च वाक्यपदीये—

ग्राह्यत्वं ग्राहकत्वं च द्वे शक्ती तेजसो यथा। प्र० का० ५५
तथैव सर्वशब्दानामेते पृथगवस्थिते ॥ इति ॥
विषयत्वमनादृत्य शब्दैर्नाऽर्थः प्रकाश्यते ॥ इति च।

घटमानयेत्यादिशाब्दबोधे घटादिशब्दस्य भाने प्रमाणाऽभावेन तस्य प्रातिपदिकार्थत्वसाधनमनुचितमित्याशङ्क्यां परिहरति—*शब्दस्तावदिति*। तत्र हरिवाक्यं प्रमाणयति-*न सोऽस्तीति* ॥ *प्रत्ययः*-शाब्दबोधात्मकः। *शब्दाऽनुगमादिति* ॥ शब्दविषयकत्वादित्यर्थः। *अनुविद्धमिति*। विशिष्टमित्यर्थः। अनुव्यवसायो यथाऽर्थेन विशिष्टज्ञानं विषयीकरोति; तथा शब्देन विशिष्टमपीत्यर्थः। वैशिष्ट्यं चाऽर्थद्वारकं बोध्यम्। घटपदजन्यबोधाऽनन्तरं घटं शाब्दयामीत्येवाऽनुव्यवसायान्न कलशं कुम्भं वेत्यत एव "उदेति सविता ताम्रः" इत्यादौ न पौनरुक्त्यम्। तत्पदाऽनुपादाने उदयाऽस्तयोः शाब्दबोधे ऐकरूप्याऽनिर्वाहादिति भावः।

ननु तावताऽपि शब्दभानं सिद्धं, न विशेष्यत्वेनेति कथं शब्दस्य शब्दाऽर्थत्वसिद्धिरत आह—*विष्णुमिति*। अर्थोच्चारणासम्भवेनेति वदता लक्षणावसरोऽपि सूचितः ॥ *असङ्गतिरिति* ॥ अनुपपत्तिरित्यर्थः। *सोऽपि*—शब्दोऽपि ॥ *प्रातिपदिकार्थ इति*। प्रकाराऽन्तरेणोपस्थितस्य विशेष्यत्वाऽसम्भवादिति भावः। लक्षणया—स्ववाच्यवाचकत्वसम्बन्धरूपया ॥ *निर्वाह इति* ॥ तावताऽपि पदवाच्यत्वासिद्धेरिति भावः ॥*निरूढेति* ॥ निरूढत्वं च लक्षणायामनादितात्पर्यग्रहाऽधीनत्वम्, अनादित्वञ्च—तत्र स्वजन्यबोधसमानाकारपूर्वपूर्वबोधध्वंसवत्त्वम्। *शक्त्यन-

तिरेकात्—इत्यस्याऽस्मन्मत इत्यादि। एतत्तत्त्वमग्रे वक्ष्यते। तस्या असार्वत्रिकत्वमप्याह-*जबगडदशमिति* ॥ तत्र समुदायस्य कुत्राप्यशक्तत्वादिति भावः।

*अग्रहादिति*। मन्मते तु तादृशसमुदायस्यैव तत्पदशक्यतया न बोधाऽनुपपत्तिरिति भावः।

ननु तत्र समुदायस्याशक्तत्वेऽपि तद्घटकजकारादिवर्णानामेकाक्षरकोशादौ जैन्द्रादौ शक्तिप्रतिपादनात्तत्तदर्थवाचकत्वरूपलक्षणायास्तत्र नाऽनुपपत्तिरत आह—*अज्ञाताया इति*। गङ्गापदस्य वस्तुतः स्वशक्यप्रवाहसामीप्यरूपसम्बन्धस्याग्रहे लक्ष्यार्थबोधस्यानुदयेन ज्ञाताया एव तस्याः पदार्थोपस्थित्यौपयिकत्वेन प्रकृते तदग्रहादुक्तानुपपत्तिस्तदवस्थैवेति भावः।

ननु शाब्दबोधाव्यवहितप्राक्काले तादृशवृत्तिग्रहासत्त्वेऽपि यदा कदाचिज्ज्ञाततादृशवृत्तिग्रहादिनोद्बुद्धसंस्कारेण पदार्थोपस्थितिद्वारातादृशशाब्दबोधोपपत्तिः सुकरेत्यत आह—*गावमिति* ॥ गोशब्दाद्यनुकरणे साधुत्वस्य सर्वैरेवाऽभ्युपगमादित्यर्थः। *परनय इति*। परो नैयायिकस्तन्मते, तेषां शक्त्यभावेन तद्घटितलक्षणाया अप्यऽप्रसराद् वृत्तिमत्वात्मकार्थवत्वनिबन्धनप्रादिपदिकत्वाद्यनुपपत्तिरिति भावः।

*षोढाऽपीति* ॥ पूर्वोक्तपञ्चकसहितः। शब्दोऽपीत्यर्थः ॥ क्वचिद्—अनुकरणस्थले। तच्चाऽनुकरणं द्विविधम्। ध्वनेर्वर्णस्य च। तत्राद्यम् पटत्करोतीत्यादि। द्वितीयम्—भुवो वुगित्यादि ॥ *भेदविवक्षेति*। पटदित्यादौ ध्वनिमयत्ववर्णमयत्वाभ्यां, "भुवो वुक्" इत्यादावर्थपदाऽर्थकत्वशब्दपदार्थकत्वाभ्यां तद्विवक्षेत्यर्थः ॥ *शब्दोऽपि प्रातिपदिकाऽर्थ इति* ॥ तथा च "मतौ छः सूक्तसाम्नोः" (पा० सू० ५।२।५९) इति सूत्रे योऽसावाम्नायेऽस्य वामशब्दः पठ्यते स छप्रकृतेरस्य वामीयेत्यादौ पदार्थोऽत एव प्रातिपदिकत्वाच्छसिद्धिरितीति भावः ॥ मूले—अर्थेऽवभासते इति पाठे—अर्थे घटादिस्वरूपे, अवभासते—विशेषणतया विषयो भवतीत्यर्थः।

वस्तुतस्तु भूषणपर्यालोचनयाऽसावर्थो व भासते इति पाठः। तत्र वशब्दः सादृश्ये। तथा च भेदपक्षे यथाऽनुकार्य्यरूपोऽर्थो विशेष्यतया शाब्दबोधे भासते; तथाऽभेदपक्षेऽनुकार्य्याभिन्नाऽनुकरणशब्दोऽपीत्यर्थः। तत्राऽनुपस्थितस्य कथं भानमित्याकाङ्क्षायामुक्तम्—*श्रोत्रादिभिरिति* ॥ आदिना वृत्तिज्ञानतज्जन्यसंस्कारसंग्रह इति केचित्।

वस्तुतस्तु लिप्याद्यनुसंहितस्य तस्य शाब्दे भानसम्पत्तये-*आदीति* ॥ पदोपस्थितमेव शाब्दबोधे भासते इति तत्सार्वत्रिकमिति भावः। अत एव सारकृताऽर्थवद्भासते इति तद्विवृतम्। एतेनाऽभेदपक्षेऽनुकरणस्यार्थाभावेन तदंशे भानवर्णनमसम्भवदुक्तिकमित्याशङ्का समाहिता।

नन्वभेदपक्षेऽप्यनुकार्य्यस्य शाब्दे कथं भानम्। पदवृत्तिजन्योपस्थित्यभावादत आह—*अयम्भाव इति*। पदाऽनुपस्थितत्वादित्यस्य शाब्दबोधे भानाऽनुपपत्त्येति शेषः ॥ *तत्सिद्धये*—शाब्दबोधजनकपदजन्योपस्थितये इत्यर्थः ॥

*शक्तिरिति* । असम्बद्धस्य तत्स्मृत्यजनकत्वादिति शेषः । तथाच पदवृत्तिज्ञानजन्योपस्थितिसद्भावात्तस्य शाब्दविषयता सुलभेति । *अभेदे इति* । अभेदविवक्षायामित्यर्थः । तत्पक्षे निरूप्यनिरूपकत्वयोर्भेदनिबन्धनत्वेनानुकरणे तद्वृत्त्यसम्भवादिति भावः । *हेतुत्वादिति* । उपस्थितिनिष्ठजन्यतायामन्वेति । *स्वप्रत्यक्षेति* । अनुकरणप्रत्यक्षरूपमित्यर्थः ।

*शाब्दबोधविषयतोपपत्तिरिति* । अयमाशयः—अभेदपक्षे स्वप्रत्यक्षरूपामुपस्थितिमादाय यथा शाब्दे शब्दस्य भानं तथैव घटमानयेत्यादौ घटाऽऽदिपदानामपि तां सामग्रीमादाय भानस्य दुर्वारतया शाब्दबोधमात्रस्य शब्दविषयकत्वसिद्धिः ।

तदुक्तं "स्वं रूपम्" इति सूत्रभाष्ये "नैतद्वक्तव्यं, किं कारणं, शब्दपूर्वको ह्यर्थे सम्प्रत्ययः । आतश्च शब्दपूर्वः । योऽपि ह्यसौ नाम्नाऽऽहूयते; नाम च तेन यदा नोपलब्धं तदा पृच्छति, किं भवानाहेति । शब्दपूर्वकश्चाऽर्थस्य सम्प्रत्ययः । इह शास्त्रे शब्दे सम्भवादर्थस्य निवृत्तिः" इति ।

तत्र शब्दपूर्वको हीत्यादिना शब्दवृत्तिज्ञानस्य पदार्थोपस्थित्यादावन्वयव्यतिरेकौ प्रदर्श्य शब्दपूर्वक इत्यादिग्रन्थेन प्रकारान्तरं प्रदर्श्यते । शब्दविशेषणक इत्यर्थः । तदाऽर्थे असम्भवेऽर्थविशेषणतयोपस्थिते शब्दे कार्य्यमित्यर्थः । तथाचोक्तभाष्याच्छब्दतदर्थयोरुभयोरेव शब्दाद्भानम् । यत्र च लोके शब्दे इतरपदार्थान्वयबाधस्तत्राऽर्थांशे शब्दस्य विशेषणता । यत्र त्वर्थे 'विष्णुमुच्चारय' "अग्नेर्ढक्" (पा० सू० ४।२।३३) इत्यादौ तत्र शब्दांऽशेऽर्थस्य विशेषणतेति स्पष्टप्रतिपत्तेर्विषयत्वमनादृत्येति वाक्यपदीयाच्चेति । *अतिप्रसङ्गमिति* । घटो ऽस्तीत्यतः समवायेनैकज्ञानविषयत्वाऽऽदिना वोपस्थितस्याऽऽकाशादेः शाब्दे भानाऽऽपत्तिवारणायेत्यर्थः । *वृत्तिजन्येति* । वृत्तिज्ञानजन्येत्यर्थः । *पदोपस्थितिरिति* । घटपदं शृणिवत्यादौ तादृशपदोपस्थितेर्हेतुताया दर्शनात्, प्रकृते च तदभावेऽनुकरणस्य शाब्दविषयत्वं दुर्घटमिति भावः । *आश्रयतयेति* । इदं च बोधकत्वं शक्तिरित्यभ्युपेत्य । बोध्यत्वं सेति पक्षे तु निरूपकतयेति बोध्यम् ।

नन्वाश्रयतासंसर्गेण वृत्तिमत्त्वस्यैव शाब्दबोधविषयत्वे तन्त्रत्वे निरूपकतासंसर्गेण वृत्तिमतः शाब्दे भानाऽनुपपत्तिरत आह—*निरूपकतेति* प्रामाणिकगौरवस्यादोषत्वादिति भावः । *अनवद्यमिति* । वृत्तिनिरूपकार्थबोधकत्वस्यैव प्रातिपदिकत्वे तन्त्रत्वान्नाऽभेदपक्षे तत्संज्ञाप्रसक्तिरिति भावः ।

ननु स्वप्रतियोगिकत्वविशिष्टसम्बन्धाऽश्रयतायाः स्वस्मिन्ननभ्युपगमेन कथमनुकरणस्य वृत्तिमत्तेत्यत आह–*सम्बन्धस्येति* । *तद्बोधकत्वेनेति* । प्रत्यक्षाऽऽत्मकशाब्दबोधजनकत्वेनेत्यर्थः । तथाच ह्यर्यादिवाक्यप्रामाण्यात् प्रकृते स्वस्मिन्नपि तादृशसम्बन्धाश्रयताऽभ्युपगमान्न तस्य शाब्दे भानाऽनुपपत्तिरित्यनयैव रीत्या शब्दमात्रस्य शाब्दे भानं निर्वाह्यमिति भावः । स्वीयप्रत्यक्षाऽऽत्मकबोधजनकत्वस्य वृत्तित्वं

दुरुपपादम् । शाब्दबोधजनकपदार्थोपस्थितिजनकज्ञानविषयतावच्छेदकसम्बन्धस्यैव तत्त्वात् । न चैतादृशज्ञानेन शाब्दबोधात् प्राक् शब्दरूपपदार्थोपस्थितिर्जन्यते; नाऽपि बोधकत्वेऽपि बोधकत्ववदिति ज्ञानं तदानीमस्तीति येन साऽपि सम्भाव्येत । तस्मात् कथमेतदिति चेत् ?

अत्र वदन्ति—सम्बन्धस्येत्यादिग्रन्थस्य पदवृत्त्युपस्थितेनार्थेन सम्बन्धाऽविशेषाच्छब्दोपस्थितिस्ततः शब्दाऽर्थयोरुभयोरपि शाब्दे भानं शब्दवृत्तिप्रयोज्यत्वस्योपस्थितिद्वये सत्त्वादित्यर्थपरत्वान्नोक्ताऽनुपपत्तिः । तत्राऽर्थस्येवेत्यनन्तरं बोध्यत्वादिति शेषः । तद्बोधकत्वेनेत्यत्र तदाऽव्यवहितप्रागुपस्थितार्थपदार्थपरामर्शस्यैवौचित्यादर्थबोधकत्वेनेत्यर्थात् । तदुक्तम्—

यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम् ।
पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षमः ।। इति ।।

शाब्दबोधस्तु वक्ष्यमाणहर्य्यादिवाक्यप्रामाण्यात् क्षणविलम्बेनैवाऽभ्युपगन्तव्यः । अनुकार्य्यस्याऽभेदपक्षे भानाय प्रकारान्तरमेवाऽनुसर्त्तव्यमिति ।

परे तु—उक्तमते पदार्थोपस्थितेः शाब्दबोधहेतुतायां तदवच्छेदककोटौ तत्तत्सम्बन्धावच्छिन्नवृत्तिज्ञानजन्यत्वनिवेशावश्यकत्वेन वृत्तेर्द्वेधा प्रवेशे गौरवम् । अन्यतरत्वेन सम्बन्धनिवेशे त्वन्यतरत्वघटकभेदयोर्विशेष्यविशेषणभावे विनिगमनाविरहात्तत्तादवस्थ्यमेव । तदपेक्षयाऽभेदपक्षे सादृश्यसम्बन्धेनाऽनुकरणादनुकार्य्योपस्थितिस्तथोपस्थितस्याऽपि तात्पर्य्यवशाच्छाब्दे भानं वृत्तिज्ञानजन्यतावच्छेदककोटौ सादृश्यज्ञानाऽजन्यत्वनिवेशात् तद्धेतुतायां न व्यभिचारः । अत एव 'गवित्ययमाह' इत्यादौ न विभक्त्युत्पत्तिः वृत्त्यार्थबोधकत्वरूपाऽर्थवत्त्वाऽभावेनाऽप्रातिपदिकत्वात् । स्पष्टश्चाऽयमर्थो "मतौ छः सूक्तसाम्नोः" ( पा० सू० ५।२।५९ ) इत्यत्र भाष्यकैयटयोः ।

स्वप्रतियोगिकत्वविशिष्टसम्बन्धस्य स्वस्मिन् सत्तां तेजोदृष्टान्तव्याजेन दर्शयन् स्वोक्ते हरिसम्मतिमाह—*उक्तञ्चेति* । *ग्राह्यत्वम्*—बोध्यत्वम् । *ग्राहकत्वं*—बोधकत्वम् । *एते*—ग्राह्यत्वग्राहकत्वे । *पृथगवस्थिते* । इत्यनेन तयोरसमनैयत्यं दर्शयति । दीपादिरूपतेजसो विषयसन्निधाने शक्तिद्वयं लोके प्रत्यक्षसिद्धम् । तदसमवधाने तु ग्राह्यत्वमेव यथा, तथा शब्दानामर्थाबाधे उक्तशक्तिद्वयं, तद्बाधे तु ग्राह्यत्वमेवेति तदर्थः ।

"स्वं रूपम्" इति सूत्रभाष्यादप्युक्तार्थस्यैव लाभादिति तस्यैव पद्यान्तरमाह—विषयत्वमिति* । स्वस्य विषयतामसम्पाद्य शब्दैरर्थो न बोध्यत इत्यर्थः । स्वजन्यार्थबोधत्वस्य स्वविषयकत्वव्याप्यत्वादिति यावत् ।

अयम्भावः—शब्दार्थयोरभेदमते तन्मूलकाध्यासाच्छब्दादर्थाऽऽकारवृत्तौ जायमानायां शब्देनाऽपि तस्यां स्वाकारसमर्पणमिति शाब्दबोधस्य शब्दविषयकत्वसिद्धिरिति ।

अत्र वदन्ति—"न सोऽस्ति प्रत्ययो लोके" इत्युक्तत्वात् किं बोधत्वाऽवच्छेदेन शब्दविषयकत्वं प्रतिज्ञायते, उत ग्राह्यत्वमिति पद्यद्वयाच्छाब्दत्वाऽवच्छेदेन तत्त्वम्। किं वा शाब्दत्वसामानाधिकरण्येन। नाद्यः। घटादिप्रत्यक्षाव्यवहितप्राक्स्थले घटादिपदोपस्थितेरनैयत्येन तादृशप्रत्यक्षस्य घटादिपदविषयकत्वाऽसम्भवात्। एवं घटाद्यनुमितावपि तद्भानं न सम्भवति व्यापकतयातदवच्छेदकतया वा व्याप्तिग्रहे तदभानात्। तदनन्तरं घटपदं साक्षात्करोमि घटपदमनुमिनोमीत्यनुव्यवसायाऽभावाच्च। न द्वितीयः। घटपदज्ञानजन्योपस्थितेस्तद्वाचकपदेऽभावेन तस्य शाब्दविषयत्वाऽसम्भवात्। पदज्ञानस्य सम्बन्धिज्ञानविधयाऽर्थस्मारकत्वेन हस्तिपकदर्शनजन्यहस्त्युपस्थितौ हस्तिपकस्येव तज्जन्याऽर्थोपस्थितावुद्बोधकतावच्छेदकपदस्य विषयत्वाऽसम्भवाच्च। घटो न घटशब्द इतिसार्वजनीनप्रतीत्या शब्दाऽर्थयोस्तादात्म्ये मानाऽभावेन नाऽर्थाकारवृत्तेः शब्दाऽऽकारतासम्भवोऽपि; घटशब्दबोधाऽनन्तरं घटपदं शाब्दयामीति प्रतीतेः सार्वजनीनत्वे क्षणविलम्बसहिष्णुता सम्भवेदपि। न च तस्यास्तथात्वमिति न किञ्चिदेतत्।

अपि च भिन्ने विषयेऽनुमितिसामग्र्या बलवत्ता, यत्र तादृशाऽनुमिति सामग्रीकाले केवलघटत्वविशिष्टविषयिका शाब्दधीर्जायतामितीच्छाबलाद् घटशाब्दधीस्तत्र घटांशे तद्भानं दुरुपपादमेव। घटशब्दशाब्देच्छाविरहविशिष्टभिन्नविषयकाऽनुमितिसामग्र्याः प्रतिबन्धिकायाः सत्त्वात्। नाऽपि तृतीयः। सिद्धसाधनात्। विष्णुमुच्चारयेत्यादौ विष्ण्वादिपदादौ लक्षणया शाब्दविषयतायाः परैरभ्युपगमात्। उक्तभाष्यादपि क्वचिच्छाब्दबोधे शब्दो विषय इत्यर्थस्यैव लाभात् सति तात्पर्ये क्वचिदन्यत्रापि विशेष्यांऽशे तद्भानाभ्युपगमे क्षतिविरहाच्च। अत एव नलादीनां विशिष्य तत्तद्रूपेणानुपस्थितत्वेऽपि, नलपदवाच्यः कश्चिदासीदिति सामान्यशक्तिग्रहात्तत्पदवाच्यत्वेन तेषां बोधः प्राचीनसम्मत उपपद्यते। अभेदे शब्दभाने तु, "परे त्वि"त्युक्तभाष्यसम्मतमतेनैव। अत एव तस्मादविकृतस्यैव बोधः। हरिवचनानि तु प्रणवब्रह्मणोरभेदोपासनश्रद्धाऽतिशयबोधकानि भवन्तीति न तैर्व्यावहारिकाऽर्थस्य सिद्धिस्तस्माच्छाब्दबोधमात्रस्य शब्दविषयकत्वं न विचारसहमधिकमग्रे व्यक्तीभविष्यतीति ॥ २६ ॥

अर्थ—शब्दस्तावच्छाब्दबोधे इत्यादि—शब्द का भी शाब्दबोध में भान होता है। इसमें भर्तृहरि का वचन प्रमाण देते हैं। "न सोऽस्ति" इत्यादि—

ऐसा कोई शाब्द बोध नहीं होता जिसमें शब्द का अनुगम=भान नहीं हो। सभी ज्ञान शब्द से तादात्म्यापन्न सा होकर भासमान होता है।

इसी प्रकार "विष्णुमुच्चारय"=भगवान् विष्णु का उच्चारण करो इत्यादि वाक्य में विष्णुरूप अर्थ का उच्चारण नहीं होने से तादृश शब्द का ही उच्चारण होता है। अतः वहां शाब्दबोध में तादृश विष्णुरूप आनुपूर्वी का बोध होता है। इससे स्पष्ट है कि शाब्दबोध में शब्द का भान होता है।

शङ्का—नामार्थ शब्द नहीं मानने पर भी शाब्दबोध में शब्द का भान लक्षणा से होगा। स्वशब्दवाच्य अर्थ तद् वाचकत्व सम्बन्ध से लक्षणा होगी।

समाधानः—निरुढ=प्रयोजन के बिना अनादिकाल से होनेवाली लक्षणा और शक्ति में कोई भेद नहीं है।

जवगडदश का उच्चारण करो यहाँ "जवगडदश" इसका कोई अर्थ गृहीत न होने से शक्य सम्बन्ध रूप लक्षणा का ज्ञान नहीं हो सकता। उसके कोई शक्य अर्थ ही नहीं है। अतः शक्य सम्बन्धरूप लक्षणा का ज्ञान असम्भव है। अज्ञात लक्षणा का कोई उपयोग नहीं है।

"गावमुच्चारय"=गाय का उच्चारण करो इस भाषा शब्द के अनुकरण में साधुत्व सर्वसम्मत है। परन्तु भाषा शब्द में शक्ति नैयायिक नहीं मानते ऐसी अवस्था में शक्य के अभाव से तत्सम्बन्धरूप लक्षणा नहीं हो सकती। इसी अभिप्राय से नाम के कहीं छह अर्थ हैं। इसका प्रतिपादन कारिका से करते हैं। "शब्दोऽपि" इत्यादि—

अनुकरण स्थल में अनुकार्य का अनुकरण के साथ भेदविवक्षा पक्ष यदि है तो वहां शब्द भी नामार्थ है। यदि दोनों का अभेद विवक्षा पक्ष मानते हैं तो श्रोत्रादि=कर्ण, आदि पद से लिपि से सिद्ध अर्थात् उपस्थित भी शब्द घटादि अर्थ के समान भासित होता है॥ २६॥

यदि अनुकार्य और अनुकरण की भेद विवक्षा है तो शब्द भी प्रातिपदिक का अर्थ है। यदि दोनों की अभेद विवक्षा है तो श्रोत्रादि के द्वारा उपस्थित होने से शब्द भी घटादि अर्थ के समान भासित होता है। कारिका में अपि शब्द हेतु अर्थ में है। उपस्थित होने के कारण भासता है यह तात्पर्य है। कारिकोक्त अर्थ का स्फुट निरूपण करते हैं "अयं भावः" इससे—

अनुकार्य और अनुकरण का भेद होने पर अनुकार्य की पद से वृत्ति द्वारा उपस्थिति न होने से (शाब्द बोध नहीं होगा अतः) पदजन्य उपस्थिति के लिये अनुकार्यनिरूपित शक्ति का अनुकरण शब्द में स्वीकार आवश्यक है। दोनों के अभेद पक्ष में निरूप्य-निरूपक भाव एक में नहीं होता अतः शक्ति न होने पर भी अनुकरण के भान का उपाय लिखते हैं। अनुकरण का कर्ण से ग्रहण होने पर उससे अभिन्न अनुकार्य का भी ग्रहण (प्रत्यक्ष) होगा ही। प्रत्यक्ष में विषय कारण है। पदप्रत्यक्ष पदजन्य है। अतः अनुकरण भी अनुकरण शब्दप्रत्यक्षरूप पदजन्य उपस्थिति से शाब्दबोध का विषय होगा। उससे अभिन्न उसी प्रकार अनुकार्य भी उपस्थित होकर शाब्द बोध में भासित होगा।

यद्यपि समवाय से घटादि द्वारा उपस्थित आकाश का शाब्द बोध में भान वारण के लिये पदार्थ की वृत्तिज्ञानाधीनपदजन्य उपस्थिति कारण है। अभेद विवक्षा पक्ष में श्रोत्र द्वारा उपस्थिति है। अतः शक्ति न होने से तथाविध उपस्थिति नहीं है। तथापि (वृत्ति) शक्ति का आश्रय होने से अनुपपत्ति नहीं है। निरूपकता अथवा आश्रयता सम्बन्ध से वृत्तिमान् ही शाब्दबोध का विषय होता है। इस प्रकार यह पक्ष निर्दुष्ट है। सम्बन्ध दो से निरूपित होने से पदार्थ के समान उसके बोध जनक के कारण स्वयं का भी ज्ञान हो सकता है। जिस प्रकार अर्थ में सम्बन्धवत्ता है उसी प्रकार वृत्तिमद् अर्थ का बोधक होने से स्वयं भी सम्बन्धवान् होने से शाब्दबोध का विषय है।

वाक्यपदीय में लिखा है। "ग्राह्यत्वम" इत्यादि—अग्नि में जिस प्रकार ग्राह्य और

ग्राहकत्व दोनों शक्तियाँ हैं उसी प्रकार सभी शब्दों में वे दोनों शक्तियाँ पृथक्-पृथक् रूप से स्थित हैं।

अपने को विषयभूत किये बिना शब्दों से अर्थ का प्रकाशन नहीं होता ऐसा भी लिखा है ॥ २६ ॥

समाप्तो नामार्थनिर्णयः।

हिन्दी भाष्य—शाब्दबोध में शब्द का भान भी देखते हैं। अतः पूर्वोक्त पाँच के सहित शब्द आनुपूर्वीभी प्रातिपदिक का अर्थ है। इस प्रकार नामार्थ छह प्रकार का होता है। "न सोऽस्ती"त्यादि कारिका द्वारा भी इसी अर्थ का साधन किया गया है।

विष्णु का उच्चारण करो ऐसा कहने पर तादृश आनुपूर्वीरूप शब्द का उच्चारण किया जाता है। क्योंकि अर्थ का उच्चारण कोई नहीं कर सकता। ऐसी अवस्था में यदि आनुपूर्वी नामार्थ नहीं होती तो आनुपूर्वी का उस शब्द से भान नहीं हो सकता। उसके भान होने की सम्भावना न होने पर तदर्थ बोध के लिये उसका उच्चारण भी विवक्षित नहीं होगा।

शङ्का—निरूढ लक्षणा के द्वारा आनुपूर्वी का बोध हो जाने से उस अर्थ में शक्ति स्वीकार करना व्यर्थ है।

समाधान—निरूढलक्षणा और शक्ति में भेद नहीं है। प्रयोजन के बिना ही अनादिकाल से शक्यार्थ से भिन्न अर्थ का बोध करानेवाली लक्षणा को निरूढ लक्षणा कहते हैं।

दूसरा कारण यह है कि—"जवगडदश्" इसके समान अनर्थक शब्दों का शक्यार्थ न होने के कारण "शक्यसम्बन्धरूपा लक्षणा न होने से आनुपूर्वी का बोध नहीं होगा। शक्तिबोध्य अर्थ ही शक्य कहा जाता है। "जवगडदश्" इत्यादि के एकैक अक्षरों का एकाक्षर कोश से कुछ अर्थ होने पर भी उस अर्थ के ज्ञान के विना शक्य सम्बन्ध अज्ञात ही रहेगा। अतः लक्षणा नहीं हो सकेगी।

कुछ लोग असाधु शब्दों में शक्ति नहीं मानते हैं। इनके मत में असाधु शब्द से साधु शब्द की स्मृति द्वारा शाब्दबोध होता है। ऐसी दशा में असाधुशब्द के अनुकरण करने पर उसके अर्थ न होने के कारण लक्षणा सम्भव नहीं है।

असाधु शब्द का अनुकरण साधु माना जाता है। "ऋलृक्" इस सूत्र के भाष्य से अनुकरणों की साधुता स्पष्ट प्रतीत होती है। इस प्रकार जाति, व्यक्ति, लिङ्ग, संख्या, कारक और आनुपूर्वी शब्द ये छह नामार्थ हैं। यह प्रकरणार्थ है।

अनुकरण और अनुकार्य इन दोनों में ध्वनिमयत्व वर्णमयत्वादि परस्पर विरुद्धधर्म के सम्बन्ध से भेद मानने पर अनुकरण से अनुकार्य के बोध के लिये अनुकरण में अनुकार्य निरूपिता शक्ति का अभ्युपगम आवश्यक है। अन्यथा अनुकरण से भिन्न अनुकार्य का बोध नहीं होगा। इस प्रकार अनुकरण स्थल में आनुपूर्वी को नामार्थ मानना ही होगा।

शङ्का—अनुकार्य और अनुकरण दोनों के अभेद मानने पर अनुकार्य निरूपिता शक्ति अनुकरण में नहीं हो सकती। क्योंकि निरूप्य निरूपकभाव भेदाधीन होने से अभेद पक्ष में अनुकार्य निरूपित शक्ति की सम्भावना अनुकरण में नहीं है। ऐसी अवस्था में इस पक्ष में अनुकार्य का शाब्दबोध में भान कैसे होगा।

समाधान—अनुकरणात्मक शब्द का श्रोत्र ( कर्ण ) के द्वारा प्रत्यक्ष होने से श्रोत्रेन्द्रिय के प्रत्यक्ष का विषय है। प्रत्यक्षज्ञान में विषय कारण है। विषय के रहने पर ही इन्द्रिय सन्निकर्ष के होने से प्रत्यक्षज्ञान होता है। अतः पद प्रत्यक्ष में विषयतया पद कारण होता है। इसी कारण से पदजन्य उपस्थिति होने से आनुपूर्वी का शाब्दबोध में भान होता है।

यद्यपि जिस किसी प्रकार से उपस्थित पदार्थ का शाब्दबोध में भान मानने पर घट पद के श्रवण से समवाय सम्बन्ध से सम्बन्धी आकाश का भी स्मरण होता है। क्योंकि "एक सम्बन्धि ज्ञानमपरसम्बन्धिनं स्मारयति"=एक सम्बन्धी का ज्ञान दूसरे सम्बन्धी का स्मारक होता है। हस्तिपक के देखने से उससे सम्बद्ध हस्ती की स्मृति हो जाती है। इस प्रकार भिन्न-भिन्न स्मृति कारणों से उपस्थित ( स्मृत ) पदार्थों के द्वारा प्राप्त शाब्दबोध के निवारणार्थ "तत्प्रकारक तद्विशेष्यकशाब्दबोध के प्रति शक्ति लक्षणा व्यञ्जनान्यतम ज्ञान से जायमान पदार्थोपस्थिति कारण हैं। पूर्वोक्तस्थलों में समवायादि सम्बन्ध से पदार्थोपस्थिति होने से उनका शाब्दबोध में भान नहीं हुआ। अनुकरण स्थल में भी अनुकार्य की उपस्थिति वृत्ति द्वारा नहीं है। क्योंकि निरूप्य निरूपक भाव भेद में होता है अभेद में नहीं। अनुकार्य और अनुकरण का अभेद माना गया है। अतः अनुकार्य निरूपित शक्ति अनुकरण में नहीं है। श्रोत्रेन्द्रिय से अनुकरण एवं तत्सादृश्य से अनुकार्य की उपस्थिति होने के कारण वृत्ति ज्ञान जन्य उपस्थिति नहीं होने से उनका शाब्दबोध में भान नहीं होगा।

तथापि लक्ष्यानुरोध से कहीं वृत्ति ज्ञान जन्योपस्थिति न होने पर भी शाब्दबोध में भान होता है। अर्थात् निरूपकता और आश्रयता अन्यतर सम्बन्ध से वृत्तिमान का शाब्दबोध में भान माना जाता है। यदर्थ निरूपित वृत्ति होगी वह अर्थ निरूपकता सम्बन्ध से वृत्तिमान् है। अनुकरण और उससे अभिन्न अनुकार्य आश्रयता से वृत्तिमान् होने के कारण शाब्दबोध में भासित होते हैं।

इसी प्रकार अन्यत्र भी पद प्रत्यक्ष रूप पद जन्योपस्थिति द्वारा घटादि पदों का भी शाब्दबोध इष्ट है।

"स्वं रूपम् १।१।६८" इस सूत्र का भाष्य भी इस में प्रमाण है। "नैतद् वक्तव्यं, किं कारणं, शब्द पूर्वकोह्यर्थे सम्प्रत्ययः। आतश्च सम्प्रत्ययः योऽपि ह्यसौनाम्नाऽऽहूयते नाम च तदा तेन नोपलब्धम्। तदा पृच्छति किं भवान् आहेति, शब्दपूर्वकश्चार्थस्य सम्प्रत्ययः, इह शास्त्रे शब्द सम्भवादर्थस्य निवृत्तिरिति"="स्वं रूपम्" यह सूत्र अनावश्यक है। क्यों शब्दपूर्वक ही अर्थ का ज्ञान होता हैं, इसलिये शब्दपूर्वक है। जो भी नाम से पुकारा जाता है, नाम के ज्ञान नहीं होने पर पूछता है कि आपने क्या कहा। इससे शब्दपूर्वक ही अर्थ का ज्ञान होता है। व्याकरण से बोधित कार्य शब्द में सम्भव होने से अर्थ की निवृत्ति होती है।

शास्त्र में "अग्नेर्ढक् ४।२।३३" इत्यादि सूत्रों से विहित ढक् आदि प्रत्यय अग्निरूप आदि अर्थों से नहीं हो सकते अतः अर्थवाचक शब्द से होते हैं। अर्थ विशेषण और शब्द ( अग्निआदि ) विशेष्य हो जाता है। लोक में शब्द में कार्य का बाध होने से अग्नि रूप अर्थ का बोध होता है।

शब्द स्वरूप और अर्थ दोनों की प्रतीति शब्द से होती है। प्रकारता और विशेष्यता से उनका भान कार्यान्वयन के अनुसार होता है। यह अभिप्राय है।

प्रदीप के प्रकाश में ग्राह्यत्व अर्थात् बोध्यत्व और ग्राहकत्व अर्थात् बोधकत्व ये दोनों शक्तियां हैं। प्रकाश की सहायता से जिस प्रकार घट का ज्ञान होता है। उसी प्रकार प्रकाश का भी ज्ञान उसी प्रकश की सहायता से होता है। उसके ज्ञान के लिए प्रकाशान्तर की अपेक्षा नहीं होती। अतः प्रकाश घटादि के ज्ञान का जनक एवं ज्ञान का विषय दोनों होता है। इसी प्रकार शब्द में ग्राह्यत्व और ग्राहकत्व दोनों प्रकार की शक्तियां मानी जाती हैं।

द्रव्य के चाक्षुष प्रत्यक्ष के प्रति आलोक संयोग कारण है। इसमें किसी का विवाद नहीं है। ऐसा नहीं मानने पर अन्धकार में स्थित घटादि का भी चाक्षुष प्रत्यक्ष होने लगेगा अतः घटालोक संयोग से घट प्रत्यक्ष के समान प्रदीपालोक का भी प्रत्यक्ष होता है। अन्यथा प्रकाश (आलोक) है या नहीं ऐसा संशय होने लगेगा। इस कारण से संशय निवर्तक उसका ज्ञान मानना आवश्यक है। इसी प्रकार शब्द भी अर्थ का बोधक और स्व-स्वरूप का भी बोधक है।

विषय के न रहने पर आलोक केवल आलोक का ही ज्ञापक होता है उसी प्रकार अर्थ के बोध में तात्पर्य न रहने पर शब्द केवल शब्द मात्र का बोधक होता है।

यद्यपि आलोक के प्रत्यक्ष के लिये आलोकान्तर की अपेक्षा न होने से यह सिद्ध होता है कि आलोक दूसरे के प्रत्यक्ष के प्रति कारण होने के साथ साथ अपने प्रत्यक्ष के प्रति भी कारण है। अतः स्वयं प्रत्यक्ष का विषय और प्रत्यक्ष का कारण दोनों है ऐसा प्रतीत होता है। तथापि ऐसा सम्भव नहीं है—"नहि सुशिक्षितोऽपि नटबटुः स्वस्कन्ध-मारोहति" = कितना भी सुशिक्षित (नटकी कला में) नट स्वयं स्वस्कन्धारोहण में असमर्थ है। क्योंकि एक में कर्तृत्व और कर्मत्व का विरोध है। एवं "निशितापि असिधारा नात्मानं छेत्तुमर्हति = कितनी भी तेज धारा वाली तलवार हो अपनी धारा को स्वयं नहीं काट सकती। उसी प्रकार ग्राह्यत्व और ग्राहकत्व (कर्मत्व कर्तृत्व) एक प्रकाश में विरुद्ध होने से नहीं रह सकता। आलोक प्रत्यक्ष में आलोकान्तर की अपेक्षा होने मात्र से कर्मत्व कर्तृत्व का एकत्र अवस्थान नहीं माना जा सकता। द्रव्य प्रत्यक्ष में आलोक संयोग की कारणता आलोक भिन्न द्रव्य के प्रत्यक्ष में मानी जाती है। आलोक द्रव्य प्रत्यक्ष के प्रति उसकी कारणता मान्य नहीं है। पदार्थों का स्वभाव भिन्न-भिन्न होता है। त्वगिन्द्रिय शरीर व्यापी होने पर भी धूम का त्वाच प्रत्यक्ष नेत्र के समीपवर्ती त्वगिन्द्रिय से ही होता है। आंख में धूम का अनुभव होता है। हाथ पांव में धुआं का कोई प्रभाव नहीं पड़ता जब कि त्वगिन्द्रिय सर्व शरीर व्यापी है। पार्थिव मात्र में लोह लेख्यत्व है। एक मात्र हीरा में लोह लेख्यत्व नहीं है। इससे यह स्पष्ट होता है कि पदार्थों का स्वभाव विलक्षण होता है एक रूप नहीं। प्रकृत में भी घटादि से विलक्षण स्वभाव आलोक का है। अतः इसके प्रत्यक्ष में आलोक संयोग कारण नहीं होता ऐसा ही मानना उचित है। ऐसी स्थिति में ग्राह्यत्व ग्राहकत्व एक में नहीं है ऐसा भी किसी का मत है ॥ २६ ॥

प्रसङ्गादनुकार्य्यानुकरणयोरभेदपक्षे साधकमाह—

अत एव गवित्याह भू सत्तायामितीदृशम् ॥
न प्रातिपदिकं नापि पदं साधु तु तत् स्मृतम् ॥ २७ ॥

"गवित्ययमाह" "भू सत्तायाम्" इत्येवमादयो यतोऽनुकरणशब्दा अनुकार्यान्न भिद्यन्ते, अतस्तेषामर्थवत्त्वाद्यभावाद्, "अर्थवदधातुः" (पा० सू० १।४।४२) इत्याद्यप्रवृत्तौ न प्रातिपदिकत्वं, नापि पदत्वम्। अथ च साधुत्वमित्युपपद्यते। अन्यथा "प्रत्ययः" (पा० सू० ३।१।१) "परश्च" "अपदं न प्रयुञ्जीत" इति निषेधादिलङ्घनादसाधुतापत्तिरित्यर्थः ॥ २७ ॥

इति श्रीवैयाकरणभूषणसारे नामाऽर्थनिर्णयः ॥ ४ ॥



*अन्यथेति* । भेदपक्षस्यैवाऽभ्युपगमे इत्यर्थ ॥ *प्रत्ययः परश्चेति* । नियमशास्त्राणां निषेधमुखेनाऽपि प्रवृत्तेः प्रत्ययपरैव प्रकृतिः प्रयोक्तव्या, न केवलेति नियममूलकस्य "अपदं न प्रयुञ्जीत" इति निषेधविधेः प्रत्यययोग्यस्य प्रत्ययं विना प्रयोगेऽतिक्रमणादसाधुतापत्तेरित्यर्थः। अस्मन्मते तु तस्य प्रत्यययोग्यत्वाऽभावान्निषेधविषयताया एवाऽभावात्तदतिक्रमणाप्रसक्तेः साधुत्वादेव च तत्रादेशादिरपि। अन्यथा भाषाशब्देष्विव न तत्प्रवृत्तिः स्यादिति भावः ॥ २७ ॥

इति श्रीभूषणसारदर्प्पणे नामाऽर्थ निरूपणम् ॥ ४ ॥



अर्थ—प्रसङ्गवश अनुकार्य और अनुकरण के अभेद विवक्षा पक्ष में साधक का उल्लेख करते हैं—"अत एव गवित्याह" इत्यादि कारिकासे।

अत एव=अनुकार्य और अनुकरण के अभेद होने से "गवित्याह" "भू सत्तायाम्" इस प्रकार का प्रयोग हुआ। प्रतिपादिक संज्ञा तथा पद संज्ञा नहीं हुई पर इनका साधुत्व मानते हैं

"गवित्ययमाह" "भू सत्तायाम्" इत्यादि अनुकरण शब्द अनुकार्य से भिन्न नहीं हैं। इसलिये अर्थवत्त्वाभाव होने के कारण "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इस सूत्र की अप्रवृत्ति होने से प्रातिपदिक संज्ञा तथा पदसंज्ञा नहीं हुई। परन्तु इन सभी के न होने पर भी साधुता की उपपत्ति मानी जाती है। अन्यथा प्रत्यय प्रकृति के अव्यवहित पर रहता ही है अपद का प्रयोग नहीं करना चाहिये इत्यादि निषेधों के उल्लङ्घन से इनकी असाधुता प्राप्त हो जायगी ॥ २७ ॥

इति नामार्थ निर्णयः ॥

हिन्दीभाष्य—अनुकरण और अनुकार्य के अभेद पक्ष में अनुकार्य निरूपित शक्ति अनुकरण में नहीं होने से वृत्तिमत्त्व रूप अर्थवत्त्व के अभाव के कारण प्रातिपदिक संज्ञा नहीं होती। प्रातिपदिक संज्ञा के न होने से विभक्ति नहीं हुई इसके विना पद संज्ञा "सुप् तिङन्तं पदम्" इस सूत्र से नहीं हुई। अतएव "गवित्ययमाह" इसमें "लोपः शाकल्यस्य" इस सूत्र से वकार का लोप पदान्त न होने से नहीं हुआ। पदत्वादि की सम्भावना न होने से अपदं न प्रयुञ्जीत इत्यादि की प्रसक्ति नहीं है। अतः उनके उल्लङ्घन की कथा ही वृथा है ॥ २७ ॥

॥ इति नामार्थ निर्णयः ॥



# अथ समासशक्तिनिर्णयः

समासान् विभजते—

सुपां सुपा तिङा नाम्ना धातुनाऽथ तिङां तिङा ॥
सुबन्तेनेति च ज्ञेयः समासः षड्विधो बुधैः ॥ २८ ॥

*सुपां सुपा* ॥ पदद्वयमपि सुबन्तं, राजपुरुष इत्यादिः ॥ सुपां तिङा पूर्व्वपदं सुबन्तमुत्तरपदं तिङन्तम् । पर्य्यभूषयत् । अनुव्यचलत् । "गतिमतोदात्तवता तिङाऽपि समासः" इति वार्तिकात् समासः ॥ सुपां नाम्ना ॥ कुम्भकार इत्यादिः । "उपपदमतिङ्" ( पा० सू० २।२।१० ) इति समासः । स च "गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः" इति परिभाषया भवति सुबुत्पत्तेः प्राक् । अत्रोत्तरपदे सुबुत्पत्तेः प्रागित्यर्थः । अन्यथा चर्म्मक्रीतीत्यादौ नलोपानापत्तेः ॥

*सुपां धातुना* उत्तरपदं धातुमात्रं, न सुप्तिङन्तम् । कटप्रूः । आयतस्तूः । "क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घश्च" इति वार्त्तिकात् ॥ *तिङां तिङा* ॥ पिबतखादता पचतभृज्जतेत्यादिः । "आख्यातमाख्यातेन क्रियासातत्ये" इति मयूरव्यंसकाद्यन्तर्गणसूत्रात् ॥ *तिङां सुबन्तेन* ॥ पूर्व्वपदं तिङन्तमुत्तरं सुबन्तम् । जहिस्तम्भः । "जहि कर्म्मणा बहुलमाभीक्ष्ण्ये कर्त्तारञ्चाभिदधाति" इति मयूरव्यंसकाद्यन्तर्गणसूत्रात् ।

अयं षड्विधोऽपि समासः, "सह सुपा" ( पा० सू० २।१।४ ) इत्यत्र योगविभागेन भाष्ये व्युत्पादितः स्पष्टः शब्दकौस्तुभादौ ॥ २८ ॥

क्लृप्तशक्त्यैव निर्वाहान्न नामसमुदायाऽऽत्मकसमासेऽतिरिक्ता शक्तिरिति मतं दूषयिष्यन् प्रसङ्गात्समासाऽर्थं निरूपयितुमादौ तद्विभागप्रदर्शनमित्याशयेनाऽऽह—*समासानिति* ॥ समासत्वं च शक्तिसम्बन्धेन समासपदवत्त्वम् । एकार्थीभावापन्नपदसमुदायविशेषो वा । एकार्थीभावे मानं च "किं पुनः समर्थं नाम ? पृथगर्थानामेकार्थीभावः समर्थवचनम् । क्व पुनः पृथगर्थानि, क्वैकाऽर्थानि । वाक्ये पृथगर्थानि-राज्ञः पुरुष इति, समासे पुनरेकार्थानि—राजपुरुष" इति समर्थसूत्रस्थं भाष्यम् । तन्मूलिका वक्ष्यमाणा युक्तयश्च ।

तत्रैकाऽर्थत्वमेकोपस्थितिविषयाऽर्थकत्वम् । न त्वेकार्थशक्तत्वम् । घटादिपदानामपि घटघटत्वतत्सम्बन्धरूपनानार्थशक्तत्वेनैकार्थतानापत्तेः । नानोपस्थितिविषयार्थकत्वं पृथगर्थकत्वम् । यथा वाक्ये—पृथक्पदानामाकाङ्क्षादिसहकारेण विशिष्टा-

र्थप्रत्ययः। नैवं वृत्तौ, किन्त्ववयवशक्त्या समुदायशक्तिसहकृतया जायमाना पदार्थोपस्थितिरेव विशेष्यविशेषणभावाऽऽपन्नविशिष्टाऽर्थमवगाहते। "संसृष्टार्थं समर्थम्" इति भाष्यात्। राजपुरुषादिपदं राजसम्बन्धवत्पुरुषादौ शक्तमित्याकारकशक्तिग्रहः। ततश्च प्राप्ताऽप्राप्तविवेकेन विशिष्टशक्तिः षष्ठ्याद्यर्थे पर्यवस्यति। अत एव न तत्र राजादौ सुन्दराऽऽदिपदार्थाऽन्वयः। एकदेशत्वात्। "देवदत्तस्य गुरुकुलम्" इत्यादौ तु गमकत्वात् स इति वक्ष्यते। 'जहत्स्वार्थवृत्तिः', 'पदानामानर्थक्यम्' इति तु न सम्यक्। महाबाहुरित्यादावात्वाद्यनापत्तेः। भूतपूर्वगत्याश्रयणं तु सत्यां गतावनुचितम्। तदुक्तम्—

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी। इति।

अवयवाऽर्थविरुद्धो यत्र समुदायार्थस्तत्रैव सा, यथा कृष्णसर्पादाविति तदर्थः। अयमेव पक्षः—

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत्।

इति वदतो मूलकृतः सम्मतः। तथा सति पङ्कजशब्दादौ परैर्योगरूढ्यभ्युपगमेन तद्दृष्टान्तोपन्याससार्थक्यात्। जहत्स्वार्था वृत्तिरिति पक्षस्य तत्सम्मतत्वे स्वमते तस्य पक्षतया तत्र तदनभ्युपगमेन तदुपन्यासाऽनुपपत्तेः स्पष्टत्वात्। अधिकमग्रे वक्ष्यत इति।

*गतिमतोदात्तवतेति*। उपलक्षणमिदम्, "सह सुपा" इति योगविभागस्याऽपि। 'अनुव्यचलत्' इत्यत्राऽनोर्व्यचलदित्यनेन वेश्चाऽचलदित्यनेन युगपत्समासः। अन्विति सुवन्तेन व्यचलदिति समुदायस्य समर्थत्वात्; सत्यां समाससंज्ञायां शाकलप्रतिषेधाद्यणादेशः समासाऽन्तोदात्तत्वं च भवति। तिङैकत्वस्योक्तत्वात् प्रकृत्यर्थव्यापारस्य संख्यान्वयाऽयोग्यत्वाद्वा न ततः सुबुत्पत्तिः। समयपरिपालकौत्सर्गिकैकवचनस्य तु तथा सुवन्तस्याऽभिधानादेवाऽप्रवृत्तिरिति भावः।

*अन्यथेति*। सुबुत्पत्तेः प्राक्समाससंज्ञाऽभ्युपगम इत्यर्थः। न लोपेत्यस्य—अपदत्वादित्यादि। यद्यपि "उपपदम्" (पा० सू० २।२।) इति सूत्रे भाष्येऽनयोर्योगयोर्निवृत्तं "सुप्सुपा" इत्युक्तं, तथाप्युपपदमिति महासंज्ञाबलादेव पूर्वपदस्य सुबुत्पत्त्यनन्तरं समास इति भावः। प्राक्सुबुत्पत्तेरित्येकदेशप्रयोजनप्रदर्शनमिषेण परिभाषायाः प्रयोजनमपि दर्शितम्। सुबुत्पत्तेः पश्चात् समासे हि स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमिकत्वस्यान्तरङ्गबहिरङ्गभावमूलकस्य "कुत्सिते" (पा० सू० ५।२।२४) इति सूत्रभाष्यसम्मतत्वेनाऽन्तरङ्गत्वात् सुबुत्पत्तेः पूर्वं टापि अनदन्तत्वात्, "क्रीतात् करणपूर्वात्" (पा० सू० ४।१।५०) इति ङीषोऽनुपपत्तेरिति दिक्।

*भाष्ये व्युत्पादित इति*। तत्र हि प्रत्येकं समाससंज्ञावारणरूपं सहशब्दप्रयोजनं समुदाये वाक्यपरिसमाप्तिन्यायेन परिहृत्य "एवं तर्हि सिद्धे; यत् सहग्र-

हणं करोति तस्यैतत् प्रयोजनं योगाङ्गं यथा विज्ञायेत, सति योगाङ्गे योगविभागः करिष्यते। सह सुप् समस्यते। केन, समर्थेनाऽनुव्यचलदनुप्राविशत्। ततः सुपा, च सह सुप् समस्यते। अधिकारश्च लक्षणं च, यस्य च समासस्याऽन्यल्लक्षणं नाऽस्ति तस्येदं लक्षणं भवति'' इत्युक्तम्। तत्राऽधिकारप्रयोजनम्—देवदत्तः पचतीत्यादौ समानाधिकरणेन समाससंज्ञावारणं बोध्यम् ॥ २८ ॥

अर्थ—समासों का विभाग करते हैं। "सुपां सुपेति"—सुबन्त का सुबन्त तिङन्त प्रातिपदिक और धातु के साथ तथा तिङन्त और सुबन्त का तिङन्त के साथ समास होने के कारण इनके छह भेद विद्वानों ने माना है। सुबन्त का सुबन्त के साथ अर्थात् दोनों ही समस्यमान पद सुबन्त होते हैं। जैसे राजपुरुषः इत्यादि। (यहाँ राज्ञः पुरुषः ये दोनों पद सुबन्त हैं) सुबन्त का तिङन्त के साथ। अर्थात् पूर्वपद सुबन्त और उत्तर पद तिङन्त होता है। उदाहरण के लिये "पर्यभूषयत्" अनुव्यचलत्"। यहाँ 'परि' का 'अभूषयत् "अनु" और "वि" का "अचलत्" इसके साथ एक समय में ही[1] "गतिमतोदात्तवता" इत्यादि वार्तिक से समास होता है। सुबन्त का नाम (प्रातिपदिक) के साथ समास का उदाहरण कुम्भकारः। यहाँ "उपपदमतिङ्" इस सूत्र से समास "गति[2] कारकोपपदानाम्" इस परिभाषा के कारण उत्तरपद से सुप् की उत्पत्ति के पहले हुआ है पूर्वपद से सुप् उत्पन्न होने से पहले नहीं। अन्यथा "चर्मक्रीती" इसमें चर्मपद से सुप् उत्पन्न होने के पहले समास मानने पर सुबन्त न होने से पदसंज्ञा नहीं होगी। पद न होने से न लोप नहीं होगा। सुबन्त का धातु के साथ अर्थात् उत्तर पद धातुमात्र है तिङन्त नहीं है "कटप्रूः" "आयतस्तूः" "कटं प्रवते" "आयतं स्तौति" इस अर्थ में "क्विव्वचि" इत्यादि वार्तिक द्वारा वह प्रयोग सिद्ध होता है। कटं इस सुबन्त का प्रु धातु से एवं आयतं इस सुबन्त का स्तु धातु से समास होता है। इसमें प्रमाण धातु और सुबन्त का द्वन्द्व घटकतया उक्त वार्तिक में निर्देश है। तिङन्त का तिङन्त के साथ समास का उदाहरण "पिवतखादता" पचतभृज्जता यह है। "पिवत खादतेति सततं यस्यां क्रियायाम्" एवं "पचतभृज्जत इति सततं यस्यां क्रियायामभिधीयते सा" क्रम से "पिव-

१. उदात्तवान् और गतिमान् तिङन्त का अव्यय के साथ समास होता है। कुगतिप्रादयः (२-२-१८) इस सूत्र पर यह वार्तिक है।

२. "गतिकारकोपपदानाम्" = गति और कारक और उपपद का कृत प्रत्ययान्त के साथ उत्तरपद से सुप् उत्पन्न होने के पहले ही समास होता है। सुप् विभक्ति के उत्पन्न होने के बाद समास होने से चर्मक्रीती यहाँ पर स्वार्थद्रव्यलिङ्ग-संख्या और कारक की अपेक्षा करने वाली विभक्ति को उत्पत्ति से पहले ही स्वार्थ, द्रव्य, लिङ्गापेक्ष अन्तरङ्ग टाप् के हो जाने के बाद विभक्ति एवं समास होगा। इस लिये ह्रस्वाकारान्त न होने के कारण ह्रस्वाकार निमित्त से होने वाला "क्रीतात् करणपूर्वात्" इस सूत्र से ङीप् नहीं होगा। अतः विभक्ति की उत्पत्ति से पहले और टाप् से पूर्व ही समास होता है। समासानन्तर टाप् को बाध कर ङीप् होता है। पूर्वपद से सुप् उत्पन्न होने के बाद समास होता है। इसीलिए चर्मन् शब्द सुबन्त होने से पद होता है। पद मानकर नलोप सिद्ध होता है।

तखादता'' "पचतभृज्जता"। इसका "आख्यातमाख्यातेन" इस मयूरव्यंसकादि के अन्तर्गणसूत्र से समास द्वारा साधुत्व है। तिङन्त का सुबन्त के साथ अर्थात् पूर्वपद तिङन्त और उत्तर पद सुबन्त का समास जैसे "जहिस्तम्बः"। ("स्तम्बं जहि इति यो मुहुर्मुहुरमिदधाति स" जहिस्तम्बः) "जहिकर्मणा" इत्यादि मयूरव्यंसकादि के अन्तर्गण सूत्र से समास का यहाँ निपातन है।

इस छह प्रकार के समास का "सह सुपा" इस सूत्र में सह के योग विभाग से भाष्य में व्युत्पादन किया है। इसका स्पष्टीकरण शब्द कौस्तुभ आदि ग्रन्थों में है।

हिन्दीभाष्यः—कारिका में निर्दिष्ट क्रम से समास के छह भेद होते हैं। "राजपुरुषः" इसमें षष्ठी तत्पुरुष समास है। राज्ञः षष्ठयन्त का "पुरुषः इस सुबन्त के साथ समास होता है।

एकार्थीभाव से युक्त पदो के समूह विशेष को समास कहते हैं। पद से सुबन्त और किङन्त का ग्रहण है। अन्यथा तद्धितान्त तथा कृदन्त स्थल में दोष होगा। वहाँ भी शक्तरूप पदों का समूह है। "कुम्भकारः" आयतस्तूः" इत्यादि स्थलों में कार एवं धातु से समास होने के कारण पदत्व नहीं होने पर भी पदत्व की योग्यता होने से दोष नहीं है। पृथक् पृथक् अर्थ बोधक रूप से देखे गये पदों की एकार्थ=(विशेष्यविशेषण-भाव से सहित) एक उपस्थिति जनक जो शक्ति उसका नाम एकार्थीभाव है। जिस प्रकार "राज्ञः पुरुषः" इसमें राज पद और पुरुष पद इन दोनों का अलग अलग अर्थ है। परन्तु राजपुरुषः यहाँ (समास होने पर) पृथक् पृथक् अर्थ के बोधक पद निष्ठ शक्ति ज्ञान सहकृत (समस्त स्थल में) परस्पर विशेष्यविशेषणभाव से अन्वित अर्थ समुदाय शक्ति से ही समस्तपद राजविशिष्ट पुरुष का बोधक है। अतः इसमें एकार्थीभावरूप शक्ति का स्वरूप समन्वित है। यह स्मरणीय है कि वैयाकरणों ने समास में एकार्थी भावरूपशक्ति को माना है। अन्य मत में समुदायशक्ति नहीं मानी जाती है। इस प्रकरण में विशेषरूप से समासशक्ति के पक्ष विपक्ष की युक्तियों का उल्लेख और अन्ततः समासशक्ति की स्थापना की गई है।

सुबन्त का तिङन्त के साथ समास का उदाहरण "पर्यभूषयत्" "अनुव्यचलत्"।

वि इसका अचलत् इसके साथ "सह" इस प्रकार योगविभाग करने से समास होता है और अनु का "व्यचलत्" इसके साथ "गतिमतोदात्तवता" इत्यादि वार्तिक से समास है। गतिमान् तिङन्त व्यचलत् है। समास का फल समासस्वर के साथ २ "इकोऽस-वर्णे०" इस सूत्र से प्राप्त ह्रस्व समुच्चित प्रकृतिभाव का "न समासे" इस वार्तिक से निषेध है। अन्यथा यण् नहीं होगा। सुबन्त का धातु के साथ उदाहरण "आयतस्तूः" आदि माना गया है।

शङ्काः—क्विबन्त स्थल में धातु प्रातिपदिक होने से नाम भी है। ऐसी दशा में सुबन्त का नाम के साथ जो समास का भेद बताया गया है उसी में इसका अन्तर्भाव हो जाने से पृथक् भेद का प्रदर्शन असङ्गत है।

समाधानः—"आयतस्तूः" इत्यादि स्थलों में आयत यह स्तवन रूप क्रिया में विशेषण है। स्तवनकर्ता में विशेषण नहीं है। नाम स्तु धातु नहीं हैं किन्तु क्विप् प्रत्ययान्त है। क्विबन्त में अन्वयी न होने से यह धात्वर्थमात्रान्वयी है। अतः इस भेद की गणना पृथक् रूप से की गई है।

"सह सुपा" इस एक सूत्र को दो भागों में विभक्त किया गया है। "सह" यह एक और "सुपा" यह दूसरा सूत्र है। एक सूत्र रहने से .सह शब्द का तात्पर्य होता है कि समुदाय को समास संज्ञा होती है। अर्थात् सुबन्त के साथ सुबन्त को जो समास विधान किया गया है वह प्रत्येक पद को नहीं होता अपितु समुदाय को होता है। परन्तु सहग्रहण के बिना भी "हलोऽनन्तराः संयोगः" इत्यादि स्थल में जैसे समुदाय संज्ञा की प्रतीति "गर्गाः शतं दण्ड्यन्ताम्" इस[1] न्याय से हो जाती है उसी प्रकार यहाँ भी समुदाय संज्ञा सिद्ध हो जाने से "सह" इसका ग्रहण योगविभाग के द्वारा अन्यत्र समास के विधान के लिये है। इस प्रकार सह का अर्थ समर्थ के साथ सुबन्त का समास होता है। इस प्रकार योगविभाग से "गतिमतोदात्तवता" इत्यादि वार्तिकार्थ गतार्थ हो जाता है।

स्वयं भाष्यादिसिद्धं तद्भेदं व्युत्पाद्य प्राचीनवैयाकरणोक्तविभागस्याव्याप्त्यादिभिस्तल्लक्षणस्य प्रायिकत्वं च दर्शयति—

समासस्तु चतुर्द्धेति प्रायोवादस्तथापरः।
योऽयं पूर्वपदार्थादिप्राधान्यविषयः स च ॥ २९ ॥
भौतपूर्व्यात् सोऽपि रेखागवयादिवदास्थितः।

चतुर्धा अव्ययीभावतत्पुरुषद्वन्द्वबहुव्रीहिभेदात्। अयं प्रायोवादः। भूतपूर्व्वः। दन्भूः। काराभूः। आयतस्तुः। वागर्थाविव। इत्याद्यसंङ्ग्रहात्।

तथा पूर्व्वपदार्थप्रधानोऽव्ययीभावः। उत्तरपदार्थप्रधानस्तत्पुरुषः। उभयपदार्थप्रधानो द्वन्द्वः। अन्यपदार्थप्रधानो बहुव्रीहिः इत्यादि लक्षणमपि प्रायिकम्। उन्मत्तगङ्गम्। सूपप्रति। अर्द्धपिप्पली। द्वित्राः। शशकुशपलाशमित्यादौ परस्परव्यभिचारात्। तथाहि—उन्मत्तगङ्गमित्यव्ययीभावे पूर्व्वपदार्थप्राधान्याभावादव्याप्तिः। अन्यपदार्थप्राधान्याद् बहुव्रीहिलक्षणातिव्याप्तिश्च। "अन्यपदार्थे च संज्ञायाम्" (पा० सू० २।१।२१) इति समासात्। सूपप्रतीत्यव्ययीभावे उत्तरपदार्थप्राधान्यात्तत्पुरुषलक्षणातिव्याप्तिरव्ययीभावाव्याप्तिश्च। "सुप् प्रतिना मात्रार्थे" (पा० सू० २।१।९) इति समासात्। अर्द्धपिप्पलीति तत्पुरुषे पूर्वपदार्थप्राधान्यसत्त्वाद् अव्ययीभावातिव्याप्तिस्तत्पुरुषाव्याप्तिश्च। "अर्द्धं नपुंसकम्" (पा० सू० २।२।२) इति समासात्।

एवं पूर्वकाय इत्यादौ द्रष्टव्यम्। द्वित्रा इतिबहुव्रीहावुभयपदार्थप्राधान्याद् द्वन्द्वातिव्याप्तिर्बहुव्रीह्यव्याप्तिश्च शशकुशपलाशमित्यादिद्वन्द्वे समाहारान्यपदार्थप्राधान्यात् बहुव्रीह्यतिव्याप्तिर्द्वन्द्वाव्याप्तिश्च स्यादिति भावः।

---

१. प्रत्येक गर्ग को शत रुपये से दण्डित नहीं किया जाता किन्तु गर्गसमुदाय को उक्तदण्ड दिया जाता है। उसी प्रकार संयोगसंज्ञा भी समुदाय को होगी प्रत्येक को नहीं। यह न्याय का अभिप्राय है।

जनकत्वरूपतल्लक्षणासत्त्वरूपेत्यर्थः ।। *अन्यपदार्थप्राधान्यादिति* ।। समासाघटकसप्तम्यर्थाऽधिकरणविशेष्यकबोधजनकत्वादलक्ष्ये लक्षणसत्त्वरूपेत्यर्थः ।। *बहुव्रीहीति* ।। तल्लक्षणेत्यर्थः । एवमग्रेऽपि ।

ननु तर्हि कान्यव्ययीभावादिलक्षणानीत्यत आह—*सिद्धान्ते त्विति* ।। लक्ष्यताऽवच्छेदकं तु शक्तिसम्बन्धेनाऽव्ययीभावादिपदवत्त्वम् । भूतपूर्वाऽऽदीनां लक्ष्यताऽवच्छेदकाऽनाक्रान्तत्वात् तदसंग्रहो न दोषायेति भावः ।। जहत्स्वार्थवृत्तिपक्षमवलम्ब्य मूलमवतारयति—*असम्भवश्चैषाभिति* ।। अस्य जहत्स्वार्थवृत्तिपक्ष इत्यादिः ।। एषां—लक्षणानाम् । असम्भवो—लक्ष्यमात्राऽवर्त्तनमित्यर्थः । तत्पक्षे पूर्वोत्तरपदयोस्तत्त्वेन कुत्राऽपि वृत्तेरभावेन तदर्थघटितानां तेषामुपकुम्भादावसम्भवादिति भावः ।

मूले ।। *भौतेति* ।। शब्दनित्यतावादिमते यथाश्रुतभौतपूर्व्यस्याऽव्ययीभावादावसम्भवादाह— सोऽपीति* ।। व्यवहारोऽपीत्यादि ।। *रेखेति* ।। अन्यस्य कथमन्यधर्मबोधकत्वमत आशयं प्रकाशयति सारे—*रेखागवयेत्यादि* ।। *तद्वदेवेति* ।। रेखागवयादिवदेवेत्यर्थः । यथा गवयादावविद्यमानमपि रेखागवयादिनिष्ठरेखाकृतिपुच्छं गवयादिपुच्छे सादृश्यमूलकाऽभेदाऽध्यवसायाद् गवयादिबोधकम्, तथा समासेऽविद्यमानमपि विग्रहवाक्यनिष्ठपूर्वपदाऽर्थादिप्राधान्यं सादृश्याद् अव्ययीभावादिबोधकमित्यर्थः ।। २९ ।।

स्वयं भाष्यादिसिद्ध इत्यादि—

अर्थः—भाष्यादि से सिद्ध समास के छह प्रकार के भेदों का निरूपण करने के बाद प्राचीन वैयाकरणों के द्वारा प्रतिपादित भेदों का तथा अव्याप्ति अतिव्याप्ति दोष से उनमें लक्षणों का प्रायिकत्व ( अर्थात् लक्ष्य में बाहुल्येन वैसी उपलब्धि होने पर भी अन्यत्र भी वैसी उपलब्धि का होना ) दिखाते हैं—

समासस्तु—समास के चार प्रकार का कथन प्रायोवाद है । एवं अपरवाद=लक्षणवाद भी प्रायोवाद है । ( अपरवाद का स्पष्टीकरण करते हैं ) पूर्वपद के अर्थ की प्रधानता वाला अव्ययीभाव समास है । आदि से उत्तर पदार्थ की प्रधानता वाला तत्पुरुष आदि का संग्रह है । यह भी प्रायोवाद है । स च=वह व्यवहार समास से पूर्वकाल में जो पूर्व पदार्थ प्राधान्य था उस हेतु से अभी भी वैसा व्यवहार होता है । सोऽपि—वह भी व्यवहार रेखा में गवय के समान आश्रितः=अर्थात् स्वीकृत है ।। २९ ।।

चतुर्धा=अव्ययीभाव तत्पुरुष, द्वन्द्व तथा बहुव्रीहि के भेद से ( समास ) चार प्रकार का होता है ।[1] भूतपूर्वः, दन्भूः काराभूः आयतस्तूः तथा वागर्थाविव इत्यादि स्थलों

---

१. पूर्वं भूतो भूतपूर्वः "सुपा" इस सूत्र से समास है । अव्ययीभाव के अधिकार में इस सूत्र का पाठ नहीं है । दन् शब्द नान्त हिंसा अर्थ में अव्यय है । दन् हिंसां भवते प्राप्नोति इति दन्भूः दन् पूर्वक भूधातु से क्विप् । वृक्ष या सर्प जाति विशेष का नाम है ।

सिद्धान्ते त्वव्ययीभावाऽधिकारपठितत्वमित्यादि द्रष्टव्यम् । असम्भवश्चैवमित्याह–भूतपूर्वादित्यादि ॥ रेखागवयादिनिष्ठलाङ्गूलादेर्वास्तवपश्वलक्षणत्ववदेतेषामपि न समासलक्षणत्वम् । बोधकता तु तद्वदेव स्यादिति भावः ॥ २९ ॥

*भेदमिति* । षाड्विध्यरूपमित्यर्थः । *प्राचीनेत्यादि* ॥ यद्यपि "अव्ययं विभक्ति" (पा०सू० २।१।६) इति सूत्रे भाष्ये समुदायस्य संस्कार्यत्वेन प्राधान्यात्तस्यैव संमृद्धयादयो विशेषणानीति समुदायात्समृद्धयादीनां गम्यमानत्वादत्राऽप्यव्ययीभावापत्तिरित्यभिप्रायेण "इह कस्मान्न भवन्ति सुमद्राः सच्छत्र" इति प्रश्ने, "नैष दोषः; इह कश्चित् समासः पूर्वपदार्थप्रधान" इत्यादिसमासलक्षणान्युक्त्वा नाऽत्र पूर्वपदाऽर्थप्राधान्यं गम्यत इति समाहितम् । तथापि नैते समासार्था निर्दिश्यन्ते इत्यादिना पक्षान्तरोपन्यासेनोक्तलक्षणेष्वनिर्भरसूचनाददोष इति भावः ।

*लक्षणस्येति* ॥ तत्त्वं साधारणधर्मवत्त्वम् । धर्मे साधारण्यं च तदितराऽवृत्तित्वे सति सकलतद्वृत्तित्वम् । यथा सास्नाशृङ्गवत्त्वं गोर्लक्षणम् । तत्र शृङ्गवत्त्वं गगनकृष्णरूपादीनां लक्षणत्ववारणाय सत्यन्तवृत्तित्वसाकल्यानां निवेशः । तदुक्तम्—"लक्षणे तान्येव पदानि देयानि यैरव्याप्त्यतिव्याप्त्यसम्भवदोषा वार्य्यन्त" इति । तत्र लक्ष्ये लक्षणाऽसत्त्वमव्याप्तिः । अलक्ष्ये तत्सत्त्वमतिव्याप्तिः । लक्ष्यमात्राऽवर्त्तनमसम्भवः । उदाहरणानि वक्ष्यन्ते । असाधारणधर्मवत्ताज्ञानात्तद्धर्माश्रय इतरभेदाऽनुमितिव्यवहारश्च फलम् । यस्य तु धर्मस्य केवलाऽन्वयित्वं तद्धर्मज्ञानस्य तु व्यवहारमात्रं तत् । तदुक्तम्—

व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम् । इति ॥

*प्रायोवाद इति* ॥ प्रायशस्तेषामुपलभ्यमानत्वेऽपि अन्येषामपि केषाञ्चिदुपलब्धिरित्यर्थस्तदेव विशदयति—*भूतपूर्व इत्यादि* । एषां वक्ष्यमाणयत्किञ्चिल्लक्षणाक्रान्तत्वेऽपि तत्तदधिकारीयसूत्राऽनुशिष्टत्वादसंग्रहो बोध्यः, समासाऽधिकारीयसूत्रानुष्ठितत्वाद्विभागे तदसंग्रहे इष्टापत्तेरयोगात् ॥

पूर्वपदाऽर्थेत्यादि* ॥ प्राधान्यं च समासघटकपदार्थप्रकारतानिरूपितमुख्यविशेष्यत्वम् । तथाच—पूर्वपदार्थविशेष्यकबोधजनकत्वमव्ययीभावत्वमित्यर्थः । एवमग्रेऽपि । उपकुम्भमित्यत्र कुम्भनिरूपितसामीप्यस्य विशेष्यतया बोधाद् राजपुरुष इत्यादौ राजसम्बन्धिपुरुषोत्तरपदार्थस्य पीताऽम्बर इत्यत्र पीताऽभिन्नाऽम्बरसम्बन्धिनोऽन्यपदार्थस्य, धवखदिरावित्यत्र साहित्यापन्नधवखदिरयोः पूर्वोत्तरपदाऽर्थयोर्विशेष्यतया भानाद् यथायथं लक्षणसमन्वयः ॥ *व्यभिचारादिति* ॥ यद्यपि व्यभिचारोऽतिव्याप्तिरेव, तथापि प्रकृते दोषत्वेन व्यभिचारपदेनोभयं लक्ष्यते । तद्वक्ष्यति–*अव्याप्तिरिति* । *तथाहीत्यादि* ॥ *पूर्वपदार्थेति* । उन्मत्तादिपदाऽर्थेत्यर्थः । एवमग्रेऽपि ॥ *अव्ययीभावलक्षणेति* ॥ पूर्वपदाऽर्थविशेष्यकबोध-

का उक्त भेदों में संग्रह नहीं होने के कारण यह समास का विभाग भी प्रायोवाद अर्थात् बाहुल्य दृष्टि से किया गया है।

पूर्वपद के अर्थ की प्रधानता होने से अव्ययीभाव, उत्तरपदार्थ की प्रधानता रहने से तत्पुरुष, उभयपदार्थ=पूर्वपद और उत्तरपद के अर्थ जिसमें प्रधान रहते हैं उसको द्वन्द्व और अन्यपदार्थ की प्रधानता जहाँ हो वह बहुव्रीहि समास है। इस प्रकार इन भेदों के लक्षण भी प्रायिक हैं। "उन्मत्तगङ्गम्" (अव्ययीभाव यहाँ अन्यपदार्थ प्रधान) "सूप प्रति" (यहाँ उत्तरपदार्थ का प्राधान्य) "अर्धपिप्पली" इस तत्पुरुष में पूर्वपदार्थ की प्रधानता "द्वित्राः" यहाँ बहुव्रीहि में दोनों पदों के अर्थ की प्रधानता है। "शशकुश-पलाशम्" यहाँ द्वन्द्व में समाहार प्रधान है। इस प्रकार व्यभिचार होने से लक्षणों की असंगति है।

इसी का विवरण देते हैं "तथाहि" इससे—उन्मत्तगङ्गम् उन्मत्ता गङ्गा यस्मिन्देशे इस विग्रह में "अन्यपदार्थे च संज्ञायाम्" (२।१।२१) इस सूत्र से अव्ययीभाव समास होता है। यहाँ पूर्वपदार्थ की प्रधानता नहीं होने से अव्ययीभाव का लक्षण समन्वित नहीं हुआ। अतः लक्ष्य में लक्षण की अनागमन रूप अव्याप्ति हुई। अन्यपदार्थ की प्रधानता होने से बहुव्रीहि लक्षण की अलक्ष्य में लक्षण के गमन से अतिव्याप्ति हुई।

सूप प्रति=सूपस्य लेशः इस विग्रह में "सुप्प्रतिना मात्रार्थे" (२।१।९) इस सूत्र से अव्ययीभाव समास होता है। यहाँ सूप का लेश इस प्रकार उत्तर पदार्थ की प्रधानता होने से तत्पुरुष समास का लक्षण समन्वित होने के कारण और अव्ययीभाव के लक्षण समन्वित नहीं होने से तत्पुरुष लक्षण की अतिव्याप्ति तथा अव्ययीभाव लक्षण की अव्याप्ति है।

अर्धपिप्पली="पिप्पल्या अर्धम्" इस विग्रह में "अर्धं नपुंसकम्" (२।२।२) इस सूत्र से तत्पुरुष समास होता है। पिप्पली का आधा इस प्रकार अर्थ होने से पूर्व पदार्थ का प्राधान्य है। इसलिए अव्ययीभाव के लक्षण समन्वित होने के कारण अति-व्याप्ति तत्पुरुष के लक्षण समन्वित न होने से अव्याप्ति दोष है। इसी प्रकार "कायस्य पूर्वं पूर्वकायः" यहाँ भी तत्पुरुष लक्षण की अव्याप्ति और अव्ययीभाव के लक्षण की अतिव्याप्ति समझनी चाहिये।

द्वित्राः यहाँ पर द्वौ वा त्रयो वा" इस विग्रह में बहुव्रीहि समास होता है। दो या तीन इस अर्थ में दोनों की प्रधानता होने से द्वन्द्वलक्षण की अतिव्याप्ति और बहुव्रीहि लक्षण की अव्याप्ति है।

"शशकुशपलाशम्"="शशश्च कुशश्च पलाशश्च" इस प्रकार समाहार में द्वन्द्व समास होता है। यहाँ समाहार रूप अन्य पदार्थ की प्रधानता होने से बहुव्रीहि लक्षण की अतिव्याप्ति द्वन्द्व लक्षण की अव्याप्ति होगी। सिद्धान्त पक्ष में अव्ययीभाव के अधिकार में पठित समास अव्ययीभाव कहा जाता है। इसी प्रकार अन्य का लक्षण भी समझना चाहिये।

पूर्वोक्त लक्षणों का होना सम्भव भी नहीं है। इस आशय से लिखते हैं भौत-पूर्व्यात् इति—

चित्र में बने हुये गवय की पूंछ आदि वास्तविक पशु के जिस प्रकार लक्षण नहीं

हो सकते इसी प्रकार पूर्वोक्त लक्षण[1] भी समास के नहीं हो सकते हैं। पूर्वपदार्थ प्राधान्य आदि उन उन समासों का बोधक परिचायक हो सकता है ॥ २९ ॥

हिन्दीभाष्यः—प्राचीन वैयाकरणों के सिद्धान्तानुसार समास के अव्ययीभाव तत्पुरुष द्वन्द्व तथा बहुब्रीहि इस प्रकार चार भेद हैं। पूर्वपद के अर्थ की प्रधानता वाला समास अव्ययीभाव है। जैसे "उपकृष्णम्"—कृष्ण के समीप इसमें उप पूर्वपद है उसका अर्थ समीप है वही प्रधान (विशेष्य) है। अतः उसमें अव्ययीभाव का लक्षण समन्वित होता है। उत्तर पदार्थ प्रधानता वाला तत्पुरुष समास है। जैसे "राजपुरुषः"= राजा का पुरुष इसमें पुरुष उत्तरपद है इसके अर्थ की प्रधानता है। अतः यह तत्पुरुष है। पूर्व उत्तर दोनों पदों के अर्थों की प्रधानता न होकर अन्य पदार्थ की प्रधानता होने पर बहुब्रीहि होती है जैसे पीताम्बरः। पूर्व मध्यम उत्तर सभी पदों के अर्थों की प्रधानतावाला द्वन्द्व है। जैसे "घटपटौ" घट और पट यहाँ दोनों पदों के अर्थों की प्रधानता है। अतः इसमें द्वन्द्व का लक्षण समन्वित होता है।

विभाजन और इनके लक्षण दोनों असंगत हैं। "भूतपूर्वः काराभूः आयतस्तूः" (क्विब्वचि इससे निपातित हैं) वागर्थाविव ("इवेन सह समासो विभक्त्यलोपश्च" इससे समास हुआ है) इत्यादि का उक्त विभाग से संग्रह नहीं होता है। इनमें समास विधायक वचन अव्ययीभावादि अधिकार सूत्रों के अनन्तर्गत होने से उनका उन भेदों में संग्रह नहीं होगा।

लक्षण[2] इतर से व्यावृत्ति और व्यवहार के लिये किया जाता है। जैसे गन्धवत्त्व पृथिवीतर जलादि से पृथिवी की व्यावृत्ति करता है। पृथिवी व्यवहार किसमें होता हैं जिसमें गन्ध हो इस प्रकार व्यावृत्ति और व्यवहार का कारण लक्षण होता हैं। लक्षण में अव्याप्ति अतिव्याप्ति और असम्भव दोष नहीं रहना चाहिए। लक्ष्य में लक्षण का न रहना अव्याप्ति है। लक्ष्य से भिन्न में लक्षण की वृत्तिता अतिव्याप्ति है। लक्ष्यमात्र में लक्षण का असत्त्व असम्भव है। क्रम से उदाहरण-लाल रङ्ग होना गोलक्षण काली गऊ में नहीं है इसलिये सब लक्ष्य में नहीं रहने से अव्याप्ति है। शृङ्गित्व (सींग वाली गऊ है। यह लक्षण लक्ष्य गो से अतिरिक्त महिष (भैंस) में भी है अतः अतिव्याप्ति है। एक शफवाली गऊ कहलाती है। इसमें असम्भव दोष है। गाय को दो शफ[3] होता है एक नहीं। शफ खुर को कहते हैं। इसी प्रकार अव्ययीभावादि लक्षणों में भी अव्याप्ति अतिव्याप्ति दोष है। यद्यपि व्यभिचार अतिव्याप्ति को कहते हैं तथापि यहाँ मूल में व्यभिचार पद दोष का उपलक्षक होने से अव्याप्ति अतिव्याप्ति दोनों का संग्राहक है।

पूर्व पदार्थ प्रधानता "उन्मत्तगङ्गम्" इसमें नहीं है यहाँ अन्य पदार्थ की प्रधानता

१. यद्यपि पूर्वपदार्थ प्राधान्य आदि तत् तत् विग्रह वाक्यों में है समास में नहीं है तथापि उनका समास में आरोप कर वस्तुतः अविद्यमान होकर भी परिचायक हो सकते हैं। जिस प्रकार रेखा में पूंछ आदि वास्तविक पशु में नहीं रहता फिर भी उसके द्वारा पशु का परिचय प्राप्त होता है।

२. व्यावृत्तिर्व्यवहारो वा लक्षणस्य प्रयोजनम्।

३. शफ=खुर।

है फिर भी यह अव्ययीभाव समास है। अव्ययीभाव रूप लक्ष्य में लक्षण के अनागमन से अव्याप्ति बहुव्रीहि के लक्षण जाने से अलक्ष्य में लक्षण समन्वित होने के कारण उसकी अतिव्याप्ति हुई।

उत्तरपदार्थ की प्रधानता "राजपुरुषः" के समान "अर्धपिप्पली" "पूर्वकायः" इत्यादि स्थलों में नहीं है। पिप्पली का आधा काय का पूर्वभाग इस प्रकार अर्थ होने से अर्ध और पूर्व जो कि पूर्व पद में है। उनके अर्थों की प्रधानता है। अतः लक्ष्यरूप तत्पुरुष में इसके लक्षण समन्वित न होने से अव्याप्ति और अव्ययीभाव के अलक्ष्यभूत इस उदाहरण में इसके लक्षण के जाने से उस लक्षण की अतिव्याप्ति हुई। इत्यादि स्वयम् अनुसन्धान करना चाहिये।

स्वसिद्धान्त में अव्ययीभाव तत्पुरुष द्वन्द्व एवं बहुव्रीहि के अधिकार में पठित समास को क्रम से अव्ययीभाव तत्पुरुष द्वन्द्व तथा बहुव्रीहि कहते हैं। इस प्रकार मानने से कोई दोष नहीं है। अलक्ष्यों का इनके अधिकार में पाठ नहीं है।

शङ्का—पूर्वपदार्थ प्रधान अव्ययीभाव है इत्यादि लक्षण भी असम्भव दोष से ग्रस्त है। जहत्स्वार्था वृत्ति में पूर्वोत्तर पदों का कोई अर्थ नहीं हैं। समुदाय का अर्थ है। इसलिये उत्तरपदार्थ या पूर्वपदार्थ अथवा पूर्व और उत्तर पदों का अर्थ ही नहीं है। ऐसी अवस्था में उसके प्राधान्य की चर्चा ही वृथा है। अतः पूर्वपदार्थप्राधान्यादिरूप लक्षणों का सम्भव ही नहीं है।

समाधानः—समास से पहले जो पूर्वपदार्थ की विशेष्यतारूप प्रधानता थी उसी के आधार पर पूर्वपदार्थप्राधान्यादि व्यवहार मानने से पूर्वोक्त लक्षण सम्भव है।
विग्रहवाक्यगत पूर्वपदार्थादिप्राधान्य किस प्रकार अन्य (समास) का बोधक होगा इस आशङ्का से लिखते हैं, "रेखागवयादिवत्"—जिस प्रकार चित्र में बने हुए गवय की पूंछ कान आदि वास्तविक गवय के नहीं होते हुये भी उसकी पूछ कान आदि के सदृश होने से दोनों में सादृश्यमूलक अभेदाध्यवसाय होता है। जैसे यह वही रुपया है जो आपसे हमने मथुरा में लिया था। मथुरा में लिया गया रुपया वहीं खर्च हो जाने से वही रुपया ऐसा प्रयोग सादृश्य से होता है। दोनों एक समान ही साधन है। यहाँ भी सादृश्य से रेखाचित्रनिष्ठ गवय की पूंछ आदि भी वास्तविक गवय का परिचायक होता है उसी प्रकार समास में अविद्यमान भी विग्रह वाक्यनिष्ठपूर्वपदार्थादिप्राधान्य, सादृश्य से अव्ययीभावादि समास के बोधक है यह भाव है ॥ २९ ॥

ननु पूर्वपदार्थप्राधान्यादि समासे सुवचम्। तथाहि "समर्थः पदविधिः" इति सूत्रे भाष्यकारैरनेकधोक्तेष्वपि पक्षेषु जहत्स्वार्थाऽजहत्स्वार्थपक्षयोरेवैकार्थीभावव्यपेक्षारूपयोः पर्य्यवसानं लभ्यते। तत्राऽजहत्स्वार्थपक्षे उक्तव्यवस्थानाऽसम्भविनीत्याशङ्कां मनसिकृत्य आह—

जहत्स्वार्थाजहत्स्वार्थे द्वे वृत्ती ते पुनस्त्रिधा ॥ ३० ॥
भेदः संसर्ग उभयं वेति वाच्यव्यवस्थितेः।

जहति पदानि स्वार्थं यस्यां सा जहत्स्वार्था। पदे वर्णवद् वृत्तौ पदानामानर्थक्यमित्यर्थः। अयम्भावः—समासशक्त्यैव राजविशिष्टपुरुषभान-

सम्भवे न राजपुरुषपदयोरपि पुनस्तद्बोधकत्वं कल्प्यम्। वृषभयावकादिपदेषु वृषादिपदानामिव।

अन्यथा राजपदेन विग्रहवाक्य इव, राज्ञः स्वातन्त्र्येणोपस्थितिसत्त्वाद्, "ऋद्धस्य राज्ञः पुरुष" इत्यत्रेव "ऋद्धस्य राजपुरुष" इत्यस्याप्यापत्तेरिति।

*अजहदिति*। न जहति पदानि स्वार्थं यस्यां सा अजहत्स्वार्था।

अयमभिप्रायः—राजपुरुषादिसमासादौ नातिरिक्ता शक्तिः। कल्पकाभावात्। क्लृप्तराजपदादेवार्थोपस्थितिसम्भवे तत्कल्पनस्य गौरवपराहतत्वाच्च। क्लृप्तशक्तित्यागोऽप्यप्रामाणिकः कल्प्येत। तथाचाकाङ्क्षादिवशात् क्लृप्तशक्त्यैव विशिष्टार्थबोधः। अयमेव व्यपेक्षापक्षो मतान्तरत्वेन भाष्यकारैरुक्तः।

नचात्र मते समासे ऋद्धस्येति विशेषणान्वयापत्तिः। "सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो न" इति वार्त्तिकात्। तथाचैतन्मतवादिनां पूर्वोत्तरपदार्थसत्त्वात् पूर्वपदार्थप्रधान इत्यादिव्यवस्था सूपपादेति भावः।

प्रसङ्गाद् वृत्तिभेदमपि निरूपयति—*ते पुनरिति*॥ द्वे अपि वृत्ती त्रिविधे वाच्यत्रैविध्यात्। वाच्यमेवाह—*भेद इत्यादि*॥ भेदः—अन्योन्याभावः। तथाच—राजपुरुष इत्यादावराजकीयभिन्न इति बोधः। अस्यावाच्यत्वे च "राजपुरुषः सुन्दर" इतिवद्, "राजपुरुषो देवदत्तस्य चेत्यपि स्यात्। वाच्यत्वे तद्विरोधान्नैवं प्रयोग इति भावः।

राजसम्बन्धवानित्येव शाब्दं भानम्, भेदस्तूत्तरकालमुपतिष्ठत इत्याशयेनाह-*संसर्ग इति*॥ विनिगमनाविरहम्, अस्वामिकेऽपि राजपुरुष इत्यादिप्रयोगापत्तिञ्च मनसि कृत्वोभयं वाच्यमित्याह-*उभयं वेति*। तथाचाऽराजकीयभिन्नो राजसम्बन्धवांश्चायमिति बोधः॥ ३०॥

अजहत्स्वार्थवृत्तिपक्षे पूर्वपदाऽर्थप्राधान्यव्यवहारो न पुनः दुरुपपाद इत्याशयेन मूलमवतारयति-*नन्विति*॥ *अनेकधोक्तेष्विति*॥ "अथ तेषां ब्रुवतां किं जहत्स्वार्था वृत्तिराहोस्विदजहत्स्वार्था" इत्यादिनेत्यादिः। *एकार्थीभावव्यपेक्षेति*॥ एकार्थीभावस्तूक्तः। व्यपेक्षा तु [1]समस्तपदानां परस्परसाकाङ्क्षत्वम्। *पर्य्यवसानं लभ्यत इति*॥ समर्थसूत्रभाष्यपर्यालोचनया तु एकार्थीभावः सामर्थ्यमिति पक्ष एव, वृत्तिद्वयस्वीकारो बोधभेदेन, किन्तु, "अथ ये वृत्तिं वर्त्तयन्ति किं ते आहुः" इत्यादिभाष्याद् वाक्यादेवेयं वृत्तिर्निष्पन्नेतिमतमवलम्ब्याऽयं विचार इति

---

१. स्वार्थपर्यवसायिनां पदानामाकाङ्क्षादिवशात् परस्परसम्बन्धो व्यपेक्षा। समस्तपदानामिति दर्पणस्य समग्रपदानामित्यर्थोऽवसेयः।

लभ्यते ॥ समासशक्त्यैवेत्येवकारेणाऽवयवशक्तिव्यवच्छेदः । दृष्टान्तमाह—*वृषादिपदानामिवेति* ॥

आनुपूर्व्यन्तरघटकत्वाभावविशिष्टाऽनुपूर्व्या एव शक्ततावच्छेदकत्वेन वृषभादिपदान्तर्गतवृषादिसमवेतानुपूर्व्याः शक्तताऽनवच्छेदकत्ववत् समासाऽन्तर्गतराजानुपूर्व्याः शक्ततावच्छेदकत्वाऽसम्भवादित्यर्थः । अन्यथा रामादिपदादग्न्यादीनामवयवार्थानामपि पदार्थोपस्थितिशाब्दबोधयोरापत्तिरवान्तरसुब्लुग्पस्यापत्तिर्धनं वनमित्यादौ जश्त्वाऽऽपत्तिश्च । वाक्ये तु पदान्यर्थवन्त्येव । राजसम्बन्धी पुरुष इत्याद्यर्थे राज्ञः पुरुषः, पुरुषो राज्ञ इत्यादिविशिष्टानुपूर्वीद्वयस्य शक्यतावच्छेदकत्वकल्पनापेक्षया पदशक्तिकल्पनाया एव लघीयस्त्वादिति भावः ।

न चैतत्कल्पे विशिष्टरूपोपादानविहिताऽऽत्वाऽनापत्त्या, महाबाहुः, सुपन्था इत्यादौ दोषः अनर्थकत्वाद् । एवमर्थवत्त्वनिबन्धनप्रातिपदिकत्वाभावेन नलोपाद्यनापत्तिश्चेति वाच्यम् । वृत्तिप्राग्भाविनमर्थवत्त्वमारोप्य तत्तत्तात्पर्यस्य सूपपादत्वात् । इदं च—"प्रत्ययोत्तरपदयोश्च" ( पा० सू० ७।२।१७ ) इति सूत्रे भाष्ये स्पष्टम् ।

नचैवं 'वाप्यश्व' इत्यादौ न दोषो जहत्स्वार्थायां वृत्तावानर्थक्यात् "ईदूतौ च सप्तम्यर्थे" ( पा० सू० १।१।१९ ) इति सूत्रस्थभाष्यविरोधो दुष्परिहरः । आरोपितार्थवत्त्वस्य समासाऽन्तर्गतपदेषु स्वीकारादिति वाच्यम् । अर्थग्रहणसामर्थ्येनारोपितार्थस्य तत्राग्रहणादित्याशयात् । एकस्यैव पदस्य वृत्तितत्प्राक्कालयोरर्थवत्त्वानर्थवत्त्वे च प्रयोगाऽनुरोध एव शरणम् । योगरूढिस्थले तु योगान्तर्भावेण शक्त्यभ्युपगमान्न तदुच्छेदोऽपि ।

नचाऽत्र पक्षे राजादिपदैः सर्वथा स्वार्थत्यागे तद्भानं न स्यात् कस्माच्चैकपदार्थोऽपरपदार्थविशेषणमिति व्यवहार इति वाच्यम् । विशिष्टेनैव राजादिविशिष्टपुरुषाद्युपस्थापनेनाऽद्यदोषाभावात् । अथवाऽन्वयाद् विशेषणं भवतीति भाष्येण द्वितीयस्यापि समाधानात् । निष्कीर्णास्वपि सुमनःस्वामोदान्वयमात्रेण यथा चम्पकपुटव्यवहारस्तथा सदृशार्थाऽन्वयमात्रेण राजादिपदार्थः पुरुषे विशेषणमिति व्यवहार इति तदर्द इति जहत्स्वार्थवृत्तिपक्षोपपत्तिः । परस्त्वेवं हि दृश्यते लोके 'पुरुषोऽयं परकर्मणि प्रवर्त्तमानः स्वं कर्म जहाति, तद्यथा तक्षा राजकर्मणि प्रवर्त्तमानः स्वं कर्म जहाति । एवमुक्तम्—यद्राजा पुरुषाऽर्थे वर्त्तमानःस्वमर्थं जह्यादुपगुश्चाऽपत्यार्थे वर्त्तमानः स्वमर्थं जह्यादिति भाष्यादेतत्कल्पेऽपि पूर्वपदाऽर्थ एव जहत्स्वार्थत्वं लभ्यते इति ॥

*अन्यथेति* । वृत्तौ व्यपेक्षारूपसामर्थ्याभ्युपगमे इत्यर्थः । इत्यस्याऽपीत्यपिना राजपुरुषो भार्यायाश्चेत्येकत्र द्वयमिति विषयताशालिबोधजनकस्य समुच्चयः । *आपत्तेरिति* । अस्मन्मते तु पदार्थैकदेशत्वाद्भेदेऽपि शक्त्यभ्युपगमेन राजकीयभिन्नत्वेनाऽवगते विशेषणाऽन्तराऽयोगाच्च न सेति भावः । अजहत्स्वार्थवृत्तिपक्षस्यभाष्याऽनु-

सारेणाऽन्यथैवोपपादनाद् व्यपेक्षासामार्थ्यमेक इत्येकीयमताश्रितामनुसृत्याह—*अयमभिप्राय इति* । *नातिरिक्तेति* । क्लृप्तप्रत्येकवृत्त्यतिरिक्तेत्यर्थः । कल्पकस्याऽन्यथाऽनुपपत्तिरूपप्रमाणस्याभावादित्यर्थः ।

ननु विशिष्टाऽर्थानुपपत्तिरेव तत्कल्पिका भविष्यतीत्यत आह—*क्लृप्त इति* । *तत्कल्पनस्य* । विशिष्टशक्तिकल्पनस्येत्यर्थः । ननु स्यादेवं यद्येतत्पक्षे प्रत्येकपदशक्तिकल्पना, सैव नेति क्व गौरवाऽवसरोऽत आह—*क्लृप्तशक्तीति* । वृत्तिप्राक्काले क्लृप्ता या प्रत्येकपदशक्तिस्तत्परित्याग इत्यर्थः । कालभेदेनाऽप्येकस्यैव शब्दस्याऽर्थवत्त्वाऽनर्थकत्वयोर्विरुद्धत्वात् । नलोपादिव्यवस्थाऽनुपपत्त्या च वृत्तिदशायां तत्स्वीकारस्यैवोचितत्वादिति भावः ।

ननु प्रत्येकशक्त्या तत्तत्पदार्थोपस्थितावपि विशिष्टे शक्त्यनङ्गीकारेण तदनुपस्थित्या कथं तस्य शाब्दविषयतेत्यत आह—*तथा चेति* । *आकाङ्क्षेति* । आदिपदाद्योग्यताऽऽदिपरिग्रहः । राजपदाव्यवहितपुरुषपदत्वादिरूपाकाङ्क्षादिकारणसमवधानादित्यर्थः । तथाच प्रत्येकपदार्थोऽपस्थितिसहकृताऽऽकाङ्क्षादिभिरेव विशिष्टबोधसम्भवे न तत्पूर्वविशिष्टोपस्थित्यपेक्षा यस्यै सा कल्प्येति भावः । *अयमेवेति* । अयमभिप्राय इत्यादिनोक्त एवेत्यर्थः । भाष्यकारैरित्यस्य परस्परव्यपेक्षां सामर्थ्यमेक इत्यादिनेति शेषः । उक्तापत्तिमुद्धरति—*न चात्रेति* । *अन्यथापत्तिरिति* । यथाश्रुताऽभिप्रायेण सम्बन्धिलक्षणायामापत्तेरभावस्य वक्ष्यमाणत्वात् ।।

*प्रसङ्गादिति* । स्मृतिकालाऽवच्छिन्नोपेक्षानर्हताऽवच्छेदकधर्मवत्त्वादित्यर्थः । *वृत्तिभेदमिति* । वृत्तेः समासादिवृत्तेर्भेदं भेदसंसर्गादिरूपाऽर्थकृतमित्यर्थः । तदुक्तं भाष्ये—"सामर्थ्यं नाम भेदः संसर्गो वा । अपर आह—"भेदसंसर्गौ वा सामर्थ्यम्" इति । यदि वृत्तौ भेदसंसर्गौ न स्याताम्, तदा सामर्थ्यमेव न स्यात्तदात्मकत्वात्सामर्थ्यस्येत्यतस्तदर्थकत्वं तस्येति तद्भावः । *भेद इति* । संसर्गाविनाभावित्वादनुमीयमानतादात्म्यसम्बन्धाऽवच्छिन्नप्रतियोगिताकाभाव इत्यर्थः । तदेवाह—*अन्योन्याभाव इति* ।। *संसर्ग इति* । भेदाऽविनाभावित्वादनुमीयमानभेदो—भेदमूलकः संसर्ग इत्यर्थः ।

वस्तुतस्तु "भेदसंसर्गौ वा सामर्थ्यम्" इति भाष्यस्य राजादिपदसमभिव्याहृतपुरुषादिपदेन राजादिविशिष्टपुरुषादिरूपविशिष्टाऽर्थस्यैव बोध इत्यभिप्रायः । न तु भेदे पृथक्शक्तिबोधकं तत् । तादृशबोधाननुभवात् । रामकृष्णावित्यादिद्वन्द्वे भेदस्य वाच्यताया दुरुपपादत्वाच्चेति ।। ३० ।।

ननु पूर्वपदार्थप्राधान्यादि समासे सुवचम् इत्यादि—

अर्थ—समास में पूर्वपदार्थ की प्रधानता आदि (पूर्वोक्त लक्षण) का कथन असम्भव नहीं है। क्यों कि—"समर्थः पदविधिः" इस सूत्र में भाष्यकार के द्वारा प्रतिपादित अनेक पक्षों में [1]जहत्स्वार्थ और अजहत् स्वार्थ पक्षों का ही नामान्तर से एकार्थी-

१. जहति स्वानि (पदानि) यं स जहत्स्वः तादृशोऽर्थोयस्यां सा जहत्स्वार्था ।

भाव और व्यपेक्षारूप में परिणति होती है। इसमें अजहत्स्वार्थ पक्ष में पूर्वोक्त लक्षण असम्भव नहीं है। इस आशङ्का को मन में रखकर कारिका का अवतरण किया गया है।

जहत्स्वार्था और अजहत्स्वार्था ये दो वृत्तियां हैं। ये दोनों वृत्तियां पुनः तीन प्रकार की हैं। भेद, संसर्ग और उभय—अर्थात् भेद तथा संसर्ग। इस प्रकार वाच्यार्थ के भेद से उक्त दोनों वृत्तियों का तीन-तीन भेद होते हैं। पद अपने अर्थ का परित्याग करता है जिस वृत्ति में वह जहत्स्वार्था है जिस प्रकार पद में वर्ण अनर्थक है उसी प्रकार वृत्ति में पद अनर्थक है। समासशक्ति के द्वारा राजविशिष्ट पुरुष का बोध हो जाने से राज और पुरुष इन पृथक् पृथक् पदों में पुनः राज और पुरुष के बोधक शक्ति की कल्पना युक्त नहीं है। वृषभ और यावक पदों में वृष और याव पद जिस प्रकार बोधक नहीं हैं उसी प्रकार यहाँ भी बोधक नहीं है। यदि ऐसा न माने तो "राजपुरुषः" इसके विग्रह-वाक्य "राज्ञः पुरुषः" इसमें जिस प्रकार राज पद से राजा अर्थ की मुख्य उपस्थिति होने से ऋद्ध पदार्थ का अन्वय होता है। उसी प्रकार समास स्थल में भी राजपदार्थ की राजपद से मुख्यतया उपस्थिति होने से उसमें ऋद्ध पदार्थ के अन्वय से ऋद्धस्य राज-पुरुषः ऐसा प्रयोग हो जायेगा।

अजहदिति—जहाँ पद अपने-अपने अर्थों का परित्याग नहीं करते उसको अजहत्स्वार्था कहते हैं। इसका अभिप्राय यह है कि "राजपुरुषः" आदि समासादिस्थलों में अतिरिक्त शक्ति नहीं है। क्योंकि इसमें कोई प्रमाण नहीं है। पूर्वनिश्चित राजादि अवयवभूत पदों की शक्ति से अर्थ की उपस्थिति हो जाने के कारण समासशक्ति की कल्पना गौरव दोष से दूषित भी हैं। अवयव की शक्ति के परित्याग की अप्रामाणिक कल्पना भी करनी पड़ेगी। इस प्रकार आकाङ्क्षा आदि के कारण अवयव की पूर्वनिश्चित शक्ति से ही विशिष्ट अर्थ का बोध होता है। उसी को व्यपेक्षा पक्ष के रूप में भाष्यकार ने कहा है। इस मत में ऋद्ध का विशेषण रूप से राजपदार्थ में अन्वय की आपत्ति नहीं हो सकती। विशेषण की आकाङ्क्षा रहने पर वृत्ति नहीं होती। अथवा समासादि वृत्ति होने के बाद एकदेश का विशेषण में अन्वय नहीं होता। इस आशय का "सविशेषणानां वृत्तिर्न" वृत्तस्य वा विशेषणयोगो न" यह वार्तिक है। इस प्रकार इस मत के मानने वालों के यहाँ पूर्व और उत्तरपदों के अर्थ होने के कारण पूर्व पदार्थ प्रधान अव्ययीभाव है इत्यादि लक्षण व्यवस्था समीचीन है।

प्रसङ्ग से वृत्ति के भेद का निरूपण करते हैं। जहत्स्वार्था अजहत्स्वार्था नाम की दोनों वृत्तियों के वाच्यार्थ के भेद से तीन तीन भेद होते हैं। वाच्य का भेद इस प्रकार है—भेद रूप वाच्य अर्थात् अन्योन्याभाव। राजपुरुषः" इत्यादि स्थल में अराजकीय से भिन्न पुरुष अर्थात् राजभिन्न का असम्बन्धी पुरुष इस प्रकार का बोध होता है। ऐसा बोध न मानने पर "राजपुरुषः सुन्दरः" इसके समान "देवदत्तस्य राजपुरुषः" देवदत्त का राजपुरुष ऐसा भी बोध होने लगेगा। भेद के वाच्य मानने पर अराजकीय से भिन्न पुरुष इस बोध से अराजकीय (देवदत्त सम्बन्धी) पुरुष का विरोध होने से वैसा प्रयोग नहीं होता है।

"राजसम्बन्धवान् पुरुष" इस प्रकार का शाब्दबोध होता है। भेद का भान उत्तर काल में (अनुमेय) होता है। इस अभिप्राय से लिखते हैं "संसर्ग" इति। राजविशिष्ट पुरुष इस प्रकार के बोध में संसर्ग वाच्य है।

भेद, संसर्ग से अनुमेय है या भेद वाच्य है संसर्ग अनुमेय है। इसमें एकतर पक्ष की निर्णायक युक्ति नहीं है। दूसरा कारण जिस पुरुष का कोई स्वामी नहीं है, उसमें भी "राजपुरुषः" इस प्रयोग की आपत्ति होने लगेगी। क्योंकि राजभिन्न स्वामी का भेद स्वामी से रहित वाले पुरुष में माना है। इन दोषों को मन में रखकर कहा गया है कि "उभयम्"। अर्थात् भेद और संसर्ग दोनों वाच्य है। इस प्रकार अराजकीय से भिन्न और राजसम्बन्धवान् पुरुष ऐसा बोध "राजपुरुषः" इससे माना जाता है ॥ ३० ॥

हिन्दी भाष्यः—पूर्वपदार्थ की प्रधानता जिस समास में हो उसको अव्ययीभाव एवं जिसमें उत्तरपदार्थ की प्रधानता हो उसको तत्पुरुष इत्यादि समास विशेष के लक्षणों का अजहत्स्वार्थारूप व्यपेक्षा पक्ष में समन्वय असम्भव नहीं है। क्योंकि पूर्वपद तथा उत्तरपद अनर्थक नहीं है। अतः प्राचीनोक्त अव्ययीभावादि समासों का लक्षण युक्ति युक्त है।

शङ्काः—"समर्थः पदविधिः" इस सूत्र के भाष्य में अनेक पक्षों का प्रतिपादन किया गया है। उसमें एकार्थीभाव को जहति=यह हा धातु से शतृ प्रत्यय करने पर जस् विभक्ति का रूप है। स्वानि इसमें आत्मीयवाची स्व शब्द है। अर्थ का आत्मीय पद है। अतः जहति स्वानि (पदानि) यमर्थं सावृत्तिः जहत्स्वार्था। समुदाय (राज पुरुषः) यही विशिष्ट समुदाय के अर्थ का बोधक होने से अवयवभूत राजादि पद का अर्थ नहीं है। क्योंकि अवयवभूत पदों से उस अर्थ की प्रतीति करना व्यर्थ है। इसी को एकार्थीभाव कहते हैं। एकार्थीभाव में अवयवों का अर्थ नहीं होता है। वृषभ और वृष दोनों ही बैल के वाचक है। किन्तु वृषभ के अन्तर्गत जो वृष शब्द है उसका बैल अर्थ नहीं मानते। क्योंकि वृषभ से बैल का बोध हो जाने से पुनः उसके बोध के लिये वृष शब्द को वाचक मानना वहाँ आवश्यक नहीं है।

इसी प्रकार राजपुरुष इस समुदाय से विशिष्ट अर्थ का बोध हो जाने के कारण राजादि पदों से अर्थ बोध कराना व्यर्थ है। अत एव उनका कोई अर्थ नहीं है।

इसीलिये "ऋद्धस्य राजपुरुषः" यह प्रयोग राजपदार्थ में ऋद्ध के अन्वय तात्पर्य से नहीं होता। समृद्ध राजा का पुरुष इस अर्थ में ऋद्ध का राजा में अन्वय विवक्षित है। एकार्थीभाव में राजपद का अर्थ ही नहीं है। अतः उसमें अन्वयविवक्षा न होने से वैसा प्रयोग नहीं होता। व्यपेक्षा पक्ष मानने पर पूर्वपद उत्तरपद दोनों का अर्थ होता है। अतः पूर्वपद राज के अर्थ में ऋद्ध के अन्वय की विवक्षा होने पर वैसा प्रयोग दुर्निवार होगा। इस पक्ष में पूर्वपदार्थप्रधान अव्ययीभाव लक्षण भी नहीं हो सकता। क्योंकि पूर्वपद तथा उत्तर पदों का अर्थ ही नहीं होता।

उत्तरः— स्वार्थ पर्यवसायी पदों का आकाङ्क्षा वश से जो परस्पर सम्बन्ध होता है उसको व्यपेक्षा कहते हैं। इसी का नामान्तर अजहत्स्वार्था है। इस पक्ष में पूर्व तथा उत्तर पद में जो शक्ति पूर्व में निश्चित है उसी शक्ति से राजविशिष्ट पुरुष का बोध हो जायगा। अतः समुदाय शक्ति स्वीकार में प्रमाण नहीं है। एवं शक्त्यन्तर कल्पना गौरव दोष से भी दूषित है।

यदि कहें कि पूर्वपद से पूर्वपदार्थ उत्तरपद से उत्तरपदार्थ की उपस्थिति होने पर भी परस्पर सम्बन्ध का बोध नहीं हो सकता। अतः विशिष्ट में शक्ति माननी चाहिये तो यह ठीक नहीं है।

आकाङ्क्षा योग्यता आदि के वश से स्वत्व सम्बन्ध से राजविशिष्ट पुरुष ऐसा बोध हो जायगा। संसर्ग रूप से भासमान की शक्ति द्वारा उपस्थिति आवश्यक नहीं होती। स्वत्व सम्बन्ध से राजविशिष्ट पुरुष इस प्रकार के शाब्दबोध में राजपद के अव्यवहित उत्तर पुरुषपद का होना आकाङ्क्षा है उसका ज्ञान उक्त बोध में कारण है।

शङ्का:—पूर्वपद से अर्थ की उपस्थिति मानने पर राज्ञः पुरुषः इस वाक्य में जिस प्रकार राजपदार्थ में ऋद्ध पदार्थ का अन्वय होता है उसी प्रकार समास स्थल में भी राजपदार्थ में ऋद्ध के अन्वय तात्पर्य से ऋद्धस्य राजपुरुषः इसकी साधुता हो जायगी मुख्यतया अर्थोपस्थिति दोनों स्थानों में समान है।

समाधानः—"सविशेषणानां वृत्तिर्न" "वृत्तस्य वा विशेषणयोगो न" इस वार्तिक से पूर्वोक्त दोष का वारण हो जायगा। विशेषणान्तर में साकाङ्क्ष पद का समास नहीं होता एवं समास घटक पूर्व पद के अर्थ में विशेषण का सम्बन्ध नहीं होता। इसी वचन से उक्त विशेषणान्तर के परिहार हो जाने से समुदाय में शक्ति मानना व्यर्थ है। इस प्रकार प्राचीनों का लक्षण असङ्गत नहीं है।

वाच्य के भेद से दोनों वृत्तियों के तीन तीन भेद होते हैं। पहला अर्थ है—भेद अर्थात् अन्योन्याभाव। तादात्म्य सम्बन्ध से किसी का किसी में अभाव को ही अन्यो-न्याभाव कहते हैं। जैसे घट पट नहीं है। प्रकृत में भेद अर्थ के मानने से राज से भिन्न का असम्बन्धी इस प्रकार बोध होने से सुन्दर राजपुरुष (सुन्दरो राजपुरुषः) इसके समान देवदत्त के राजपुरुष (देवदत्तस्य राजपुरुषः) ऐसा प्रयोग नहीं होता। भेद के वाच्य होने से राजभिन्न से असम्बन्धी इस प्रकार के बोध के साथ विरोध होने के कारण पूर्वोक्त बोध नहीं होता।

यद्यपि मूल में अराजकीयभिन्न पुरुष ऐसा बोध "राजपुरुषः" इससे लिखा है। तथापि उसका तात्पर्य राजभिन्नासम्बन्धी में समझना चाहिये। अराजकीयभिन्न का अर्थ राजकीय=राजसम्बन्धी अराजकीय=राजसम्बन्धी से भिन्न अराजकीयभिन्न= उससे भिन्न यह होता है। राजसम्बन्धिभिन्न इत्याकारक ज्ञान के प्रति पूर्वोक्त ज्ञान विरोधी होने पर भी देवदत्तसम्बन्धी राजपुरुष (देवदत्तस्य राजपुरुषः) इस ज्ञान का प्रतिबन्धक नहीं होगा। नञ् के बिना यत्प्रकारक ज्ञान होता है नञ् के रहने पर तत्प्रकारक अभाव का भान माना जाता है। राजसम्बन्धिभिन्नभेदप्रकारकज्ञान राजसम्बन्धिभिन्नः इत्याकारक ज्ञान का ही प्रतिबन्धक होगा देवदत्तसम्बन्धी राजपुरुष इस ज्ञान का नहीं अतः मूलोक्त बोध "राजभिन्नासम्बन्धी का उपलक्षण है।

संसर्ग=सम्बन्ध दो भिन्न भिन्न पदार्थों का ही होता है। सम्बन्ध होने से ही यह सिद्ध है कि दोनों का परस्पर भेद है। उपायान्तर से लभ्य अर्थ को शब्द से वाच्य नहीं माना जाता। अतः संसर्ग ही वाच्य है, भेद अनुमान से ही प्रतीत हो जायगा इस तात्पर्य से लिखते हैं—संसर्गः इति। राजभिन्नसम्बन्धिभिन्न पुरुष में राजपुरुष की शक्ति नहीं है किन्तु राजसम्बन्धवान् पुरुषः ऐसा ही बोध इष्ट होने से तावन्मात्र में ही शक्ति है भेद में नहीं यह भाव है।

सम्बन्ध वाच्य हैं भेद अर्थतः प्रतीत होता है। अथवा भेद वाच्य है सम्बन्ध ही अर्थात् सिद्ध है। इसमें एकतर नियामक युक्ति नहीं होने से भेद और सम्बन्ध में किसकी

वाच्यता मानी जाय इसका निर्णय नहीं हो सकता। इसी को विनिगमना विरह कहते हैं अर्थात् एकतर साधक प्रमाणाभाव।

इस पक्ष में दूसरा दोष है जिस पुरुष का कोई स्वामी नहीं है वह भी राजभिन्न का सम्बन्धी नहीं होने से राजपुरुष इस शब्द से वाच्य हो जायगा। इसलिए भेद और संसर्ग ये दोनों वाच्य हैं इस अभिप्राय से "उभयं चेति"। अराजकीय भिन्न और राज-सम्बन्धवान् इस प्रकार का बोध राजपुरुषः इससे होता है ॥ ३० ॥

व्यपेक्षावादस्यैवं युक्तिभाष्यविरुद्धत्वात् तन्मूलकः पूर्वपदाऽर्थप्रधान इत्याद्युत्सर्गोऽप्ययुक्तः। किन्तु रेखागवयन्यायेनोत्सर्गोऽपि परस्परस्यैव बोधक इत्याशयेन समाधत्ते—

समासे खलु भिन्नैव शक्तिः पङ्कजशब्दवत् ॥ ३१ ॥
बहूनां वृत्तिधर्म्माणां वचनैरेव साधने
स्यान्महद् गौरवं तस्मादेकार्थीभाव आश्रितः ॥ ३२ ॥

समास इति वृत्तिमात्रोपलक्षणम्। "समर्थः पदविधिः" (पा० सू० २।१।१) इत्यत्र पदमुद्दिश्य यो विधीयते समासादिः स समर्थः। विग्रह-वाक्यार्थाऽभिधाने शक्तः सन् साधुरिति सूत्रार्थस्य भाष्याल्लाभात्। पदो-द्देश्यकविधित्वञ्च कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपासु पञ्चस्वपि वृत्तिष्वस्त्येव। विशिष्टशक्त्यस्वीकर्तॄणां व्यपेक्षावादिनां मते दूषणं शक्तिसाधकमेवेत्याशयेनाह—*पङ्कजशब्दवदिति*॥ पङ्कजनिकर्त्तुरपि योगा-देवोपस्थितौ तत्राऽपि समुदायशक्तिर्न सिद्ध्येत्।

न च पद्मत्वरूपेणोपस्थितये सा कल्प्यत इति वाच्यम्। चित्रग्वादि-पदेऽपि स्वामित्वेनोपस्थितये तत्कल्पनावश्यकत्वात्। लक्षणयैव तथोप-स्थितिरिति चेत्, पङ्कजपदेऽपि सा सुवचा। एवं रथकारपदेऽपि।

तथाच "वर्षासु रथकारोऽग्निमादधीत" इत्यत्रापि विना लक्षणां क्लृप्तयोगेन ब्राह्मणादिविषयतयैवोपपत्तौ तत्कल्पनां कृत्वा जातिविशेष-स्याधिकारित्वं प्रकल्प्यापूर्व्वविद्याकल्पनमयुक्तं स्यादितिभावः।

साधकान्तरमाह—*बहूनामिति*। वृत्तेर्धर्मा विशेषणलिङ्गसंख्याद्य-योगादयस्तेषां वचनैरेव साधने गौरवमित्यर्थः। अयम्भावः—विशिष्टशक्त्य-स्वीकारे 'राज्ञः पुरुष' इत्यत्रेव 'राजपुरुष' इत्यत्राऽपि स्याद् विशेषणाद्य-न्वयः राजपदेन स्वतन्त्रोपस्थितिसत्त्वात्। विभाषावचनञ्च समासनियम-वारणाय कार्य्यमिति।

ननु "सविशेषणानाम्" इतिवचनान्न विशेषणाद्यन्वयः, विभाषावचनञ्च कृतमेवेत्याशङ्कां समाधत्ते—*वचनैरेवेति*। न्याय्यसिद्धमेव सूत्रम्।

व्यपेक्षाविवक्षायां वाक्यस्य, एकार्थीभावे, समासस्येति स्वभावत एव प्रयोगनियमसम्भवात् । सविशेषणेत्यपि विशिष्टशक्तौ राज्ञः पदार्थैकदेशत्वान्न्वयासम्भवान्न्यायसिद्धमिति भावः ।

अत एव व्यपेक्षापक्षमुद्भाव्य, "अथैतस्मिन् व्यपेक्षायां सामर्थ्यं योऽसावेकार्थीभावकृतो विशेषः स वक्तव्यः" इति भाष्यकारेण दूषणमप्युक्तम् ॥ ३२ ॥

*व्यपेक्षावादस्येति* । अव्यवहितोक्तविधया वर्णितस्येति शेषः । उक्ताऽजहत्स्वार्थपक्षस्य तु निर्दुष्टत्वमेवेति भावः *एवं युक्तीति* । उक्तवक्ष्यमाणेत्यर्थः । *भाष्येति* । "नानाकारकान्निघातायुष्मदस्मदादेशप्रतिषेधः" इत्यादिभाष्यदूषितत्वादित्यर्थः । *वृत्तिमात्रेति* । मात्रपदं कृत्स्नार्थकम् । अजहत्स्वार्थलक्षणाया वृत्तिपञ्चकोपस्थापकमित्यर्थः । *वाक्याभिधान इति* । तदर्थाभिधान इत्यर्थः । *भाष्यादित्यस्य* । समर्थानां पदवचनमित्यादिः ।

मूले, *पङ्कजशब्दवदिति* ॥ सप्तम्यन्ताद्वतिः । उपमेये सप्तमीदर्शनात् । पङ्कजशब्दे यथाऽवयवशक्त्यतिरिक्तशक्तिस्तद्वत्समासेऽपीत्यर्थः । न च पङ्कजपदे रूढिस्वीकारे मानाभावः । समुदायात् पद्मत्वविशिष्टप्रतीतेरेव मानत्वात् । पदान्नियतोपस्थिते रूढ्येकसाध्यत्वात् पङ्कजपदाद् योगेन कुमुदस्यापि बोधप्रसङ्गाच्च । रूढिस्वीकारेऽप्युद्भित्पदेन वृक्षादेरिव योगेन पङ्कजपदेन कुमुदमपि बोध्यत इति तु न; यत्र योगरूढिभ्यामेकार्थबोधस्तत्र केवलयौगिकार्थबोधे रूढेः प्रतिबन्धकत्वकल्पनात् ।

अथवा रूढ्या नियमतः स्मृतपद्ममेव कर्तृव्यक्तिशक्तडप्रत्ययेन पङ्कजनिकर्तृतया बोध्यते; "बाधकं विना व्यक्तिवचनानां सन्निहितव्यक्तिविशेषपरत्वम्" इति नियमाद् व्यक्तिवचनानां यत्किञ्चिद्व्यक्तितात्पर्य्यकाणां सन्निहितो यो व्यक्तिविशेषस्तत्परत्वमिति तदर्थः । "घटेन जलमाहर" इत्यत्र ,सन्निहितसच्छिद्रव्यक्तिबोधवारणाय—*तत्र बाधकं विनेति* ।

तथाच पद्मे तात्पर्यसत्त्वेन तदेव योगेनाऽपि प्रतीयते, न कुमुदम् । प्रथमकल्पस्तु रूढिज्ञानस्य ग्राह्याभावानवगाहित्वाज्जनकज्ञानाऽविघटकत्वाच्च प्रतिबन्धकत्वाऽसम्भवान्न क्षोदक्षमः । सिद्धेरनायत्या मणिमन्त्रादिन्यायेन प्रतिबन्धकत्वाभ्युपगमेऽप्यन्यत्र तत् कल्पने मानाभावात् । इत्थञ्च पद्मानुभवसामग्रीसत्त्वात् तस्यैव बोधो, न कुमुदस्य, सत्यां हि सामग्र्यां फलाऽनुत्पादे प्रतिबन्धकत्वापेक्षणादिति तार्किकाः । तद्दृष्टान्तेन वृत्तिसामान्ये समुदाये शक्तिरावश्यकीति कथने पूर्वोक्ताऽर्थ एव पर्य्यवस्यतीति ।

नन्वजहत्स्वार्थवृत्तिकल्पे विशिष्टशक्तेः सम्बन्धांशे विरामस्योक्तत्वाद्वाक्येऽपि सम्बन्धांशे एव तैः स्वीकरात् को वृत्तिवाक्ययोर्वैयाकरणनये विशेष इति चेदत्राहुः । तत्र हि फलबलात् पदार्थोपस्थितिकाले नियमतः सम्बन्धांश उद्बोधकासमवधानक

रूपेनेन पृथगुपस्थितयोः पदार्थयोः संसर्गबोधः। वृत्तौ तु पदाऽर्थोपस्थितिसमकालमेव नियमतः संसर्गांशे उद्बोधकसमवधानाद् विशिष्टाऽर्थोपस्थितिरिति वैलक्षण्योपपत्तेः। अत एव प्राप्तोदकादौ विशेष्यविशेषणभाववैपरीत्ये तु न बोधः। तत्राप्रयुज्यमानद्वितीयाऽर्थः सम्बन्धश्चोभयं समुदायशक्तिसाध्यमनन्यलभ्यत्वात्। क्लृप्तशक्यत्यैव राजादिपदाद्राजादेरुपस्थितिसम्भवेन तत्र समुदायशक्तिकल्पने गौरवाच्च। नामाऽर्थयोरभेदान्वय इत्यादिव्युत्पत्तयश्च पृथगुपस्थितनामार्थविषया इति ॥

जहत्स्वार्थवृत्तिपक्षे पङ्कजशब्दस्य पूर्वोक्तरीत्या दृष्टान्तसम्भवेनाऽन्यथा मूलमवतारयति—*विशिष्टशक्त्यस्वीकर्त्तृणामिति* ॥ *साधकमिति*। विशिष्टशक्तिसाधकमेवेत्यर्थः। व्यपेक्षावादिनये 'राजपुरुष' इत्यादौ प्रत्येकपदवृत्त्या पदार्थोपस्थितावाकाङ्क्षादिवशात् विशिष्टार्थबोधवत् पङ्कजपदादपि तथैव विशिष्टार्थोपस्थित्या रूढेरुच्छेदापत्तिः; न च सा तवेष्टेत्याह—*पङ्कजनिकर्त्तुरपीति* ॥ तेन रूपेण पद्मस्यापीत्यर्थः ॥ *योगादेवेति* ॥ अवयवशक्तेरेवेत्यर्थः *तत्राऽपि* पङ्कजादिपदेऽपि। तत्र स्वीकारे तु किमपराद्धं समासे विशिष्टशक्त्येति भावः।

*सा*—समुदायशक्तिः। *तत्कल्पनस्य*—रूढिकल्पनस्य चेत्यर्थः। *तथोपस्थितिरिति* ॥ स्वामित्वादिना स्वाम्याद्युपस्थितिरित्यर्थः ॥ *सुवचेति* ॥ पद्मत्वादिनोपस्थितिरपि लक्षणयेति वक्तुं शक्यमित्यर्थः। अधिकरणविरोधमपि तत्राह—*एवमिति* ॥ *लक्षणामिति* ॥ निरूढलक्षणामित्यर्थः। तस्याः शक्तिसमकक्षत्वादिति भावः। *योगेनेति* ॥ प्रत्येकपदवृत्त्युपस्थाप्यरथकर्त्तृत्वेनेत्यर्थः ॥ *उपपत्ताविति* ॥ शास्त्रसङ्कोचमन्तरेणाऽप्यनुष्ठाननिर्वाह इत्यर्थः ॥ *तत्कल्पनामित्यादि* ॥ रूढिकल्पनामित्यर्थः तां कल्पयित्वेति यावत्। *जातिविशेषस्येति* ॥

रथकारस्तु माहिष्यात् करिण्यां यस्य सम्भवः।

इति स्मृतिसङ्केतितजातिविशिष्टस्येत्यर्थः ॥ *अयुक्तमिति*। विनैव शास्त्रसङ्कोचं विधेश्चारितार्थ्यादिति भावः ॥

ननु प्रतिबन्देरनुत्तरत्वं। किञ्च पङ्कजपदे लक्षणाऽपि न सुवचा। तथाहि—सा किं पङ्कजपदे, उत तदवयव—डप्रत्यये। न तावदाद्यः। समुदाये शक्त्यभावेन तद्घटितलक्षणाया अप्यसम्भवात्। किञ्च जहत्स्वार्थायास्तस्यास्तत्राऽसम्भव एव। अवयवाऽर्थविरोधिन्या रूढेरभावात्।

जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी।

इत्यभियुक्तोक्तेर्यथा—मण्डपं भोजयेत्यत्र मण्डपपदस्य गृहविशेषे रूढिर्योगविरोधिनी। रूढ्यर्थग्रहे मण्डपानकर्त्तृत्वरूपयोगार्थस्य बाधात्तत्र 'रूढेर्योगापहारिता' इति प्रवादादन्वयबाधस्य मण्डपानकर्त्तृबोधाऽसम्भवान्मण्डपपदस्य मण्डपानकर्त्तरि

लक्षणा। तथाच तत्र रूढ्यर्थग्रहसम्बन्धितावच्छेदकतया गृहीतचैत्रत्वादिनैव तद्‌बोधो न मण्डपानकर्तृत्वेन। न च तथा प्रकृते। पद्मत्वे लक्षणायामवयवार्थस्याभावेनाजहत्स्वार्थाया ऽप्यसम्भवाच्च। जहत्स्वार्था त्ववयवाऽर्थप्रतीत्यनुपपत्त्या न वक्तुं शक्या।

नान्त्यः। प्रकृत्यर्थस्यानन्वयापत्तेः। तदर्थे प्रत्ययस्यासाधुतापत्तेश्चेति लक्षणानवसरादनायत्या तत्र विशिष्टशक्त्यभ्युपगमः॥ "राजपुरुष" इत्यादौ तु प्रत्येकपदवृत्त्याऽपि विशिष्टाऽर्थबोधनिर्वाहे समुदायशक्तिकल्पनं तत्राऽनुचितमेव। नाऽपि रथकाराऽधिकरणविरोधः। यौगिकाऽर्थरथकरणनिमित्ते वर्षविधानस्य सङ्करस्य विशिष्टाधानाऽपेक्षया लघुत्वेऽपि, "ऋभूणां त्वा देवानाम्" इति मन्त्रवर्णादृभुसौधन्वनपर्यायप्रतिलोमजातिरथकारस्यैव तदधिकारावगत्या लाघवाऽनादरेण रूढाऽर्थे तत्र विशिष्टाधानकल्पनात्।

नचापूर्वविद्याध्ययनकल्पनागौरवम्। फलमुखत्वात्। प्रकृते राजपुरुषादिसमुदाये शक्तिग्राहकं न तादृशं कोशादि, येन तद्‌बलादवयवार्थः परित्यज्येतेत्याशयेन मूलमवतारयति—*साधकान्तरमिति*॥ *लिङ्गेति*॥ कुक्कुटाण्डमित्यादौ कुक्कुटपदार्थे स्त्रीत्वस्याप्रतीतेरिति भावः॥ *सङ्ख्येति*॥ "राज्ञो राज्ञां वा पुरुषः, इति वाक्ये उपसर्जनानि संख्याविशेषयुक्तस्वार्थमभिदधति समासे त्वन्तर्भूतस्वार्थं प्रधानाऽर्थमभिदधति" इति भाष्यात्तत्र सङ्ख्याविशेषस्याऽप्रतीतेरिति भावः॥ सङ्ख्यादीत्यादिपदाद् "इमे तर्ह्येकार्थीभावकृता विशेषाः, सङ्ख्याविशेषो व्यक्ताभिधानमुपसर्ज्जनविशेषणं चाऽयोगे" इति भाष्योक्तस्य, राज्ञो गवाश्वपुरुषा देवदत्तयज्ञदत्तविष्णुमित्राणां गौरित्यादौ चाऽयोगस्य च सङ्ग्रहः। *वचनैरिति*। "सविशेषणानां वृत्तिर्न" इत्यादिभिरित्यर्थः। उक्तार्थमेव प्रकटयति—*अयम्भाव इति*। *न्यायसिद्धमेव सूत्रमिति*। इह व्यपेक्षायां समासो न भवत्येकार्थीभावे वाक्यं न भवति। विभिन्नविषयत्वेन बाध्यबाधकभावाऽसम्भवादिति न्यायसिद्धविभाषावचनं नाऽपूर्वमित्यर्थः। तदुक्तं भाष्ये—"न संज्ञाया भावाऽभावाविष्येते" इति। एकार्थानां विकल्पनान्नाऽर्थो विकल्पेनेति तद्भावः।

*अन्वयासम्भवादिति*। वृत्तौ ह्युपसर्जनयेन प्रधानार्थाऽभिधायिना भाव्यम्। स्वस्य विशेषणाकाऽऽङ्क्षायां च प्राधान्यमिति कथमेकदा प्राधान्यमेकार्थीभावश्च स्यात्, युगपद्‌गुणप्रधानभावविरोधादिति न्यायसिद्धमेवेत्यर्थः। *अत एवेति*। व्यपेक्षावादस्याऽऽपातरमणीयत्वादेवेत्यर्थः। *दूषणमप्युक्तमिति*। अस्य नानाकारकत्वाञ्निघातयुष्मदस्मदादेशप्रतिषेधः। अयं दण्डो हराऽनेनेत्यादिनेति शेषः॥ ३२॥

**अर्थ—**इस प्रकार व्यपेक्षा पक्ष पूर्वोक्त एवं वक्ष्यमाण युक्तियों से तथा भाष्य से विरुद्ध होने के कारण व्यपेक्षा (मूलक) का आश्रयण करने वाले पूर्वपदार्थ प्रधान आदि तत्तत्समासों के लक्षण सामान्य भी असङ्गत हैं। रेखा (चिह्न) में निर्दिष्ट पाणि

पाद वास्तविक रूप से गवय आदि का लक्षण नहीं है किन्तु उसका बोधक हैं, इसी प्रकार समासादि वृत्ति के बोधक=वाचक "राज्ञः पुरुषः" इसमें राज पद का अर्थ जो इष्ट है उसी के आधार पर समास में पूर्वपदार्थ प्राधान्यादि व्यवहार है। वस्तुतः पूर्वपदार्थ ही नहीं है उसके प्राधान्य की चर्चा कहां। इस अभिप्राय से समाधान करते हैं—"समासे खलु" इत्यादि।

जिस प्रकार "पङ्कज" इस समुदाय में शक्ति है उसी प्रकार अवयवशक्ति से अतिरिक्त समुदाय (समस्तपद समूह) में शक्ति है। एकार्थीभाव में स्वतः सिद्ध समासादि के धर्मों का वचनों के द्वारा साधन करने पर महान् गौरव होगा। अतः एकार्थीभाव पक्ष का अवलम्बन किया गया है।

कारिका का समास पद वृत्तिमात्र[1] का उपलक्षण है। "समर्थः पदविधिः" (२-१-१) इस सूत्र में पद को उद्देश्य करके जो विहित समासादि हैं वह समर्थ अर्थात् विग्रह वाक्यार्थ के कथन में शक्त और साधु है इस प्रकार सूत्रार्थ का भाष्य से लाभ होने से (उपलक्षण प्रमाणित होता है।) कृत्, तद्धित, समास, एकशेष और सनाद्यन्त धातु-रूप इन पाचों वृत्तियों में पदोद्देश्यक विधित्व है। विशिष्ट (समास) में शक्ति स्वीकार नहीं करने वाले व्यपेक्षा वादियों के मत में दोष का अस्तित्व समासशक्ति का साधक ही है=इस आशय से "पङ्कजशब्दवत्" ऐसा कारिका में उल्लेख है। पङ्क से उत्पन्न होने वाला यह अर्थ अवयवभूत शब्दों से ही प्रतीत हो जाने से समुदाय में शक्ति की सिद्धि नहीं होगी।

शङ्काः—(पङ्क से उत्पन्न होने वाला इस अर्थ की प्रतीति अवयवशक्ति से होने पर भी) पद्मत्व रूप से पद्म की उपस्थिति के लिये समुदायशक्ति की कल्पना आवश्यक है। (पद्मत्वप्रकारक उपस्थिति के प्रति पद्मत्वावच्छिन्न निरूपित शक्ति ज्ञान आवश्यक है)

समाधानः—चित्रगु आदि पदों में भी स्वामित्व रूप से स्वामी की उपस्थिति होने के लिये समुदाय शक्ति की कल्पना आवश्यक है।

शङ्काः—चित्रगु शब्द की स्वामी में लक्षणा मानने से भी स्वामित्व रूप से स्वामी की उपस्थिति हो सकती है पुनः वहाँ शक्ति कल्पना व्यर्थ है।

समाधानः—पङ्कज पद में भी लक्षणा द्वारा ही पद्मत्वरूप से पद्म की उपस्थिति हो जायगी पुनः पङ्कज में शक्ति क्यों मानते हैं।

इसी प्रकार 'रथकार' इस पद में भी समुदाय शक्ति सिद्ध नहीं होगी। समुदाय शक्ति न मानने पर "वर्षासु रथकारोऽग्निम् आदधीत" (रथकार वर्षाकाल में अग्नि का आधान करे) यहाँ पर लक्षणा के विना ही रथं करोतीति रथकारः रथ का करने वाला इस प्रकार योगार्थ से ही ब्राह्मणादि की प्रतीति रथकार पद से हो जाने के कारण आधान संस्कार भी उपपन्न हो जाता है पुनः समुदाय (रथकार) पद में जाति विशेष (बढ़ई) की शक्तिकल्पना कर जाति विशेष अर्थात् जाति विशेष विशिष्ट (बढ़ई) को वेदाध्ययन के अधिकार की कल्पना द्वारा अपूर्व विद्याकल्पना अयुक्त हो जायगी।

हिन्दीभाष्य—इस प्रकरण में मुख्यरूप से समास में अवयवशक्ति से अतिरिक्त समुदाय शक्ति की सिद्धि की गई है। शक्ति के साधक और बाधक की विवेचना बड़े

---

१. कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयः।

कौशल से ग्रन्थकार ने उपस्थित की है। समास में शक्ति की सिद्धि, कृत् तद्धित एकशेष और सनाद्यन्त धातुरूप में शक्ति स्वीकार का उपलक्षण है। उनमें भी भिन्न शक्ति वैयाकरण मानते हैं।

व्यपेक्षा और एकार्थीभाव के भेद से सामर्थ्य दो प्रकार का है। पृथक् पृथक् अर्थ वाले पदों का आकाङ्क्षा आदि कारणों से जो परस्पर सम्बन्ध है उसको व्यपेक्षा कहते है। जिस प्रकार "राज्ञः पुरुषः" (राजा का पुरुष) इसमें राज पद से पृथक् राजा अर्थ की पुरुष पद से पुरुष अर्थ की पृथक् उपस्थिति होती है। इन दोनों का स्वत्वसम्बन्ध से अन्वय होता है। अथवा राज्ञः में षष्ठी का अर्थ स्वत्व है उसमें राजपदार्थं का निरूपितत्व सम्बन्ध से आकाङ्क्षावश से अन्वय होता है। अतः वाक्य में व्यपेक्षा रूप सामर्थ्य माना जाता है।

विग्रह में पृथक् पृथक् अर्थं बोधक रूप से देखे गये पदों का विशेष्य विशेषण भावापन्न विशिष्टार्थविषयक एक शक्ति से बोध का जनकत्व ही एकार्थीभावरूप सामर्थ्यं है। यह सामर्थ्य समासादि वृत्तियों में ही रहता है। राज और पुरुष पद विग्रह वाक्य में अलग अलग अर्थ के उपस्थापक देखे गये यहाँ समास रूप वृत्ति में समुदाय की एक शक्ति द्वारा राजसम्बन्धी पुरुष इस अर्थ की उपस्थिति के जनक होते हैं। अतः यहाँ एकार्थीभाव सामर्थ्य है। इसी को समुदाय शक्ति और एकार्थीभाव रूपा शक्ति कहते हैं।

एकार्थीभावरूप सामर्थ्य ही "समर्थः पदविधिः" इस सूत्र में समर्थ पद से लिया जाता है।[1] पदसम्बन्धी जो विधि=समास आदि वह विग्रह वाक्यार्थाभिधान में समर्थ है अर्थात् एकार्थीभावरूपशक्तिमान् एवं साधु है, यह उक्त सूत्र का अर्थ है।

पदविधि का[2] स्वरूप—पदसंज्ञा का प्रयोजक जो प्रत्यय (जिस प्रत्यय के कारण पदसंज्ञा होती है वही प्रत्यय उसका प्रयोजक है) जिस प्रकार राजपुरुषः इसमें पदसंज्ञा प्रयोजक प्रत्यय सुप्रत्यय इसकी उत्पत्ति का प्रयोजक (कारणीभूत) संज्ञा प्रातिपदिक संज्ञा इसका विधायक शास्त्र "कृत्तद्धितसमासाश्च" इसकी (प्रातिपदिकसंज्ञानिष्ठ विधेयतानिरूपित) उद्देश्यतावच्छेदकता कृत्तद्धित समासान्यतमत्व में तदवच्छिन्न समास का सम्पादक शास्त्र समासादि सूत्र है। अतः इसको पदविधि कहते हैं।

इसी प्रकार "पाचकः" "औपगवः" इसमें पदसंज्ञाप्रयोजकप्रत्यय सु है उसकी उत्पत्ति का प्रयोजक संज्ञा प्रातिपदिकसंज्ञा एतत् विधायक शास्त्र "कृत्तद्धित" इत्यादि। इसके उद्देश्यतावच्छेदक का सम्पादक "ण्वुलतृचौ" "तस्यापत्यम्" इत्यादि अतः ये पदविधि सूत्र है। एक पद में अनेकार्थबोधकत्व रूप अर्थवत्त्व सम्पादन द्वारा एकशेष भी पदविधि है।

---

१. किं समर्थं नाम ? पृथगर्थानामेकार्थीभावः समर्थवचनम् पृथगर्थानामेकार्थी भावः समर्थवचनमित्युच्यते। क्व पुनः पृथगर्थानि क्वैकार्थानि। वाक्ये पृथगर्थानि राज्ञः पुरुष इति समासे पुनरेकार्थानि राजपुरुषः इति। "एकार्थत्वम्' इस भाष्य का एकार्थोपस्थितिजनकत्वम् ऐसा दर्पणकार ने अर्थ माना है।

२. पदसंज्ञाप्रयोजक प्रत्ययोत्पत्तिप्रयोजक संज्ञाविधायकशास्त्रीयोद्देश्यतावच्छेदकरूपावच्छिन्नसम्पादकविधित्वं पदविधित्वम् शेखरस्थनित्यानन्दटिप्पणी अव्ययीभाव।

 

अग्रिम युक्तियों से व्यपेक्षा पक्ष निरस्त होने के कारण एकार्थीभाव की प्रबलजड स्थापित हो जाती है। अतः पूर्वपदार्थ की प्रधानता आदि अव्ययीभाव समास आदि के लक्षण उपपन्न नहीं होता है। क्योंकि समुदायार्थ मानने से पूर्वपद का स्वीयार्थ के परित्यक्त होने से उसकी प्रधानता की चर्चा गगनकुसुम के समान है। इसलिए उक्त लक्षणों की असङ्गति है।

पङ्कज शब्द से अवयव शक्ति द्वारा ही पङ्क से उत्पन्न होने वाला इस अर्थ की प्रतीति हो सकती है फिर समुदाय में शक्ति मानना व्यर्थ है।

यदि कहें कि पङ्कज शब्द से पद्मत्वरूप से पद्म के बोध के लिये समुदाय की शक्ति आवश्यक है (परमत में समास में शक्ति नहीं रहने पर भी पङ्कजादि समुदाय में शक्ति मानते हैं) तो ठीक नहीं है इसी प्रकार स्वामित्व रूप से स्वामी की उपस्थिति के लिये चित्रगु आदि पदों में भी समुदाय शक्ति आवश्यक है।

इसी प्रकार रथकार पद में भी समुदाय शक्ति मीमांसकों ने मानी है। इसका भाव इस प्रकार है—रथकार शब्द से शूद्रजातिविशेष का ग्रहण है अथवा रथ बनाने वाले जिस किसी का बोध विवक्षित है। इस शङ्का में पूर्वपक्ष होता है कि रथकार पद से शूद्र जाति विशेष के ग्रहण करने पर अग्न्याधान संस्कार उपपन्न नहीं होगा। क्योंकि स्त्री और शूद्र को वेदाध्ययन का अधिकार नहीं है। अतः रथ बनाने वाले ब्राह्मण आदि का ग्रहण रथकार पद से करना चाहिये। आपत् काल में ब्रह्मणादि को भी विहित कर्म से भिन्न कर्म के अनुष्ठान का विधान है।

इसके अनन्तर निर्णय किया कि "रूढिर्योगाद् बलीयसी" = रूढि योग से बलवान् है इस नियम से रथकार पद शूद्र जातिविशेष का ही बोधक है। योग से उपस्थित अर्थ का यहाँ ग्रहण नहीं होगा। उतने वेदांश के अध्ययन का अधिकार उक्त शूद्र को भी है जितने वेदांश की अग्न्याधान करने में आवश्यकता है। यदि समुदाय शक्ति नहीं होती तो जातिविशेष की वेदाध्ययन के अधिकारी रूप से कल्पना अनर्थक हो जायगी।

इसी प्रकार समास में शक्ति नहीं मानने पर "राज्ञः पुरुषः" इसमें जिस प्रकार राजपदार्थ में ऋद्ध के अन्वय तात्पर्य से ऋद्ध राजा का पुरुष ("ऋद्धस्य राज्ञः पुरुषः") यह प्रयोग होता है उसी प्रकार "ऋद्धस्य राजपुरुषः" ऐसा भी प्रयोग ऋद्ध पदार्थ का राजपुरुष घटक राजपदार्थ में अन्वय तात्पर्य से होना चाहिये। विग्रह तथा समास दोनों में आपके मत से प्राधान्य से राजपदार्थ की उपस्थिति है। समास में शक्ति माननेवाले के मत में राजपुरुष समुदाय शक्ति से उपस्थित अर्थ में राजपदार्थ एक देश होने से अप्रधानतया उपस्थित है। अतः ऋद्ध का अन्वय उसमें नहीं हो सकता। पदार्थ = पदजन्यप्रतीतिमुख्य विशेष्यता का आश्रय उसका दूसरे पदार्थ में अन्वय होता है। यहाँ समासशक्तिवादी के मत में राजपदार्थ मुख्यविशेष्यतया उपस्थित नहीं है।

अतः उसमें ऋद्ध का अन्वय नहीं होगा। समुदाय शक्ति न मानने पर अन्वय के वारण के लिये "सविशेषणानां वृत्तिर्न" वृत्तस्य वा विशेषणयोगो न" = विशेषण में साकाङ्क्ष पदों का समास आदि वृत्तियां और समासादि घटक पदार्थ में दूसरे पदार्थ का अन्वय नहीं होता ऐसा वचन करना होगा। समासशक्तिवादी के मत में "पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन" इससे उक्त वचनार्थ का संग्रह हो जाता है। अतः वचनान्तर आवश्यक

नहीं है। घट में विशेषणीभूत घटत्व में नित्यत्व के अन्वय तात्पर्य से "घटो नित्यः" इस प्रयोग के वारणार्थ उक्त वचन सर्वमत सिद्ध है।

"विभाषा" इस सूत्र का अधिकार भी करना पड़ेगा। इसके न रहने पर समास विकल्प नहीं होगा। समासशक्ति वादी के यहां एकर्थीभाव विवक्षा में समास व्यपेक्षा विवक्षा में वाक्य स्वतः सिद्ध होने के कारण अधिकार सूत्र अनावश्यक है। समास शक्ति के अस्वीकार करनेवालों के मत में विभाषाधिकार करना होगा। इसी अभिप्राय से भाष्यकार ने लिखा कि व्यपेक्षारूप सामर्थ्य मानने पर एकार्थीभाव में माने गये विशेष नियमों का वचन द्वारा बोध कराना पड़ेगा ॥ ३२ ॥

तथा धवखदिरौ निष्कौशाम्बिर्गोरथो घृतघटो गुडधानाः केशचूडः सुवर्णालङ्कारो द्विदशाः सप्तपर्ण इत्यादावितरेतरयोगातिक्रान्तयुक्तपूर्ण-मिश्र-सङ्घात-विकार-सुच्प्रत्ययलोपो-वीप्साद्यर्थौ वाचनिको वाच्य इत्यतिगौरवं स्यादिति दूषणान्तरमाह—

चकारादिनिषेधोऽथ बहुव्युत्पत्तिभञ्जनम्।
कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः ॥ ३३ ॥

आदिना घनश्यामः, हंसगमन इत्यादाविवादीनां पूर्वोक्तानाञ्च संग्रहः। दूषणान्तरमाह—*बहुव्युत्पत्तिभञ्जनमिति*। अयमाशयः—चित्रगुरित्यत्र स्वाम्यादिप्रतीतिरनुभवसिद्धा।

न च तत्र लक्षणा। प्राप्तोदको ग्राम इत्यादौ तदसम्भवात्। प्राप्तिकर्त्र-भिन्नमुदकमित्यादिबोधोत्तरं तत्सम्बन्धिग्रामलक्षणायामप्युदककर्तृकप्राप्ति-कर्म्म ग्राम इत्यर्थालाभात्।

प्राप्तेति क्तप्रत्ययस्यैव कर्त्रर्थकस्य कर्मणि लक्षणेति चेत्तर्हि समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरुदकाभिन्नप्राप्तिकर्म्मेति स्यात्। अन्यथा समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिभङ्गापत्तेः। प्राप्तेर्धात्वर्थतया कर्तृतासम्बन्धेन भेदेनोदकस्य तत्रान्वयासम्भवाच्च। अन्यथा 'देवदत्तः पच्यते' इत्यत्र कर्त्तृतासंबन्धेन देवदत्तस्यान्वयसंभवेनानन्वयानापत्तेः।

अथोदकाभिन्नकर्तृका प्राप्तिरिति बोधोत्तरं तत्संबन्धिग्रामो लक्ष्यत इति चेद् ? न। प्राप्तेर्धात्वर्थतया क्तार्थकर्तारं प्रति विशेष्यताया असम्भवात् "प्रकृतिप्रत्ययार्थयोः प्रत्ययार्थस्यैव प्राधान्यम्" इति व्युत्पत्तेः। प्राप्तपदे प्राप्तेर्विशेष्यत्वे तस्या एव नामार्थत्वेनोदकेन सममभेदान्वयापत्तेश्च।

एवम्, ऊढरथः, उपहृतपशुः, उद्धृतौदना, बहुपाचिकेत्यादावपि द्रष्टव्यम्। अत्र हि रथकर्म्मकवहनकर्ता, पशुकर्म्मकोपहरणोद्देश्यः, ओदनकर्म्मकोद्धरणावधिः, बहुपाककर्त्रधिकरणमिति बोधाभ्युपगमात्।

अतिरिक्तशक्तिपक्षे च घटत्वविशिष्टे घटपदस्येवोदककर्तृकप्राप्तिकर्म्मत्व-विशिष्टे प्राप्तोदक इत्यादिसमुदायशक्त्यैव निर्व्वाह इति भावः ॥ ३३ ॥

कैयटोक्तं दोषसङ्घातमाह—*तथेत्यादि*। *इति दूषणान्तरमिति*। इत्या-कारकं दूषणान्तरमित्यर्थः। *पूर्वोक्तानामिति*। निष्कौशाम्बिरित्यादौ क्रान्ताद्यर्थ-वाचकानां लोपवचनमित्यादिकानामित्यर्थः। एतद्दूषणोद्धारस्य वक्ष्यमाणत्वादाह—*दूषणान्तरमिति*। व्युत्पत्तिभङ्गमाविष्कर्त्तुमाह-*अयमाशय इति*। *लक्ष-णेति*। वाक्ये इति शेषः।

चित्रगुरित्यादौ वाक्यस्य गोस्वामिलक्षकत्वेऽभीप्सितबोधलाभसम्भवादाह—*प्राप्तोदको ग्राम इति*। लक्षणायामपीति*। इदञ्च मीमांसकमतेन। स्वबो-ध्यसम्बन्धस्यैव तैर्लक्षणात्वाऽभ्युपगमात्। बोधोत्तरमित्यस्याऽनुपपत्तिप्रतिसन्धाने सतीति शेषः। लक्षणायामपीत्यपिना तत्र लक्षणाया असम्भवं सूचयति—*अर्थोला-भादिति*। प्राप्तिकर्त्रभिन्नोदकसम्बन्धिनो लाभेऽप्यनुभूयमानोक्तार्थालाभादित्यर्थः। *तर्हि समानाधिकरणेति*। सामानाधिकरण्यं चाऽत्र समानविभक्तिकत्वम्। अन्यथा कर्मलाक्षणिकक्तान्तार्थोदकपदार्थयोरभेदान्वयाऽनभ्युपगम इत्यर्थः। *भङ्गा-पत्तेरिति*। तादृशव्युत्पत्तेरत्रैव व्यभिचारादिति भावः।

ननु तद्व्युत्पत्तौ सामानाधिकरणस्यैकाऽर्थाऽभिधायित्वस्यैव निवेशेन नेदं तद्विष-योऽत आह—*प्राप्तेरिति*। *अन्वयासम्भवादिति*। नामाऽर्थधात्वर्थयोः साक्षाद्-भेदेनाऽन्वयस्याऽव्युत्पन्नत्वादिति भावः। *अन्यथा देवदत्त इति*। अन्यथा = उक्तव्युत्पत्त्यनभ्युपगम इत्यर्थः। *ग्रामो लक्ष्यत इति*। वाक्येनेति शेषः। उक्तबोध-स्य सम्भवदुक्तिकत्वे कथञ्चिल्लक्षणाऽपि कल्प्येत, तदेव नाऽस्तीत्याह—*प्राप्तेर्धात्वर्थ-तयेति*। 'प्रकृतिप्रत्यययोः' इति न्यायस्य संख्यादौ व्यभिचरितत्वं सम्भाव्याह—*प्राप्तपदे इति*। *नामार्थत्वेनेति*। नामजन्यप्रतीतिविशेष्यस्यैव नामार्थत्वा-दिति भावः।

*अभेदान्वयापत्तेश्चेति*। समानविभक्तिकनामाऽर्थयोरिति व्युत्पत्तेरिति भावः *द्रष्टव्यमिति*। भवन्मते वहनकर्माऽभिन्नो रथ इति बोधोत्तरं सम्बन्धिनि लक्षणा-यामपि रथकर्मकवहनकर्त्ताऽनड्वानितीप्सिताऽर्थस्याऽलाभ एव। कर्मार्थकक्तप्रत्ययस्य कर्त्तरि लक्षणायां तु धात्वर्थवहने रथस्य कर्मतया भेदसम्बन्धेनाऽन्वयो दुर्लभ एवोक्त व्युत्पत्तिविरोधादिति पूर्वोक्तदिशाऽवसेयमित्यर्थः।

*अत्र हीति*। बोधाऽभ्युपगमादित्यनेनाऽन्वयि। अत्र 'ऊढरथः' इत्यादि समासे विशिष्टशक्त्यभ्युपगमे तु न कस्या अपि व्युत्पत्तेर्विरोध इत्याह—*अतिरिक्तेति*॥३३॥

अर्थ—इसी प्रकार "धवखदिरौ" इसमें इतरेतरयोग, "निष्कौशाम्बि" इसमें अति-क्रान्ता, "गोरथः" इसमें युक्त, "घृतघटः" इसमें पूर्ण "गुडधाना" इसमें मिश्र "केशचूड" इसमें सङ्घात, "सुवर्णालङ्कार" इसमें विकार "द्विदशाः" इसमें सुच्प्रत्यय का लोप तथा

"सप्तपर्णः" इसमें वीप्सा अर्थ को वचन से बोधित करना होगा इससे अत्यधिक गौरव होगा। इसी दूषणान्तर को अग्रिम कारिका से कहते हैं।

"चकारादिनिषेधोऽथ—" इत्यादि—

चकार आदि के प्राप्त प्रयोग का निषेध = लोप करना होगा तथा अनेक व्युत्पत्तियों का भङ्ग आपके मत में करना होगा। समासशक्तिवादी के मत में न्याय से सिद्ध होने के कारण अपूर्व वचन अथवा व्युत्पत्ति का भङ्ग नहीं प्राप्त होगा॥ ३३॥

आदिपद से "घनश्यामः" "हंसगमनः" इत्यादि स्थलों में इवादिकों का और पूर्वोक्त क्रान्त आदि का संग्रह है।

इसके अतिरिक्त दूषण देते हैं—"बहुव्युत्पत्तिभञ्जनमिति" आशय यह है—चित्रगु इस शब्द से स्वामी आदि की प्रतीति अनुभव सिद्ध है। यहाँ लक्षणा की सम्भावना नहीं है। क्योंकि "प्राप्तोदकः" इसमें प्राप्ति के कर्ता से अभिन्न उदक है इस बोध के जनक उक्तपद की तत्सम्बन्धी ग्राम में लक्षणा होने पर भी उदक कर्ता है जिसका ऐसी जो प्राप्ति उसका कर्म ग्राम इस अर्थ का लाभ नहीं होगा।

शङ्काः—"प्राप्त" इस पद में क्त प्रत्यय का कर्ता अर्थ है। उसी को कर्म में लक्षणा मानने से उक्त बोध सम्भव है।

समाधान—समानाधिकरण (समानविभक्तिक) पदार्थों का परस्पर अभेद से अन्वय होने के कारण उदक से अभिन्न प्राप्ति कर्म ऐसा बोध प्राप्त होगा। यदि ऐसा नहीं मानियेगा तो समानविभक्तिक नामार्थ का अभेदान्वय नियम के भङ्ग की आपत्ति हो जायगी।

धात्वर्थ प्राप्ति में कर्तृता सम्बन्ध से उदक का अन्वय नहीं होगा। क्योंकि प्राप्ति में भेद रूप कर्तृता सम्बन्ध से अन्वय नहीं हो सकता। नामार्थ और धात्वर्थ का साक्षात् भेद सम्बन्ध से अन्वय नहीं माना जाता है।) अन्यथा (देवदत्तेन इसके स्थान पर) देवदत्तः पच्यते इस प्रयोग में भी कर्तृता सम्बन्ध से देवदत्त का पाक-क्रिया में अन्वय की सम्भावना होने से अनन्वय सम्भावना नहीं होगी।

शङ्काः—उदक से अभिन्न कर्ता की प्राप्ति इस प्रकार के बोध होने के बाद तत्सम्बन्धी ग्राम में लक्षणा है।

समाधान—प्राप्ति धात्वर्थ होने से क्तप्रत्यय के अर्थ कर्ता की अपेक्षा प्रधान नहीं हो सकती। प्रकृति के अर्थो और प्रत्यय के अर्थों में प्रत्यय का अर्थ ही प्रधान होता है ऐसा नियम है। यदि प्राप्त इसमें प्राप्ति को विशेष्य मानें तो नामार्थ का[1] नामार्थ के साथ अभेदान्वय नियम के कारण उदक का नामार्थ[1] प्राप्ति के साथ अभेद से अन्वय होने के कारण आपत्ति पूर्ववत् बनी हुई है।

इसी प्रकार "ऊढरथः" उपहृत पशुः "उद्धृतौदना" बहुपाचिका" इत्यादि स्थलों में भी लक्षणा से निर्वाह नहीं होगा ऐसा समझना चाहिये। उक्त उदाहरणों में क्रमशः रथकर्मकवहनकर्ता, पशुकर्मकोपहरणोद्देश्य ओदनकर्मकोद्धरणावधिः" बहुपाककर्त्रधि-

१. नामार्थ = नामजन्यप्रतीतिविशेष्य है धात्वर्थ प्राप्ति, नामजन्य प्रतीति का विशेष्य होने से नामार्थ है।

करणम्" ऐसा बोध माना गया है। समास में अतिरिक्त शक्ति मानने वालों के मत में जिस प्रकार घटत्वविशिष्ट घट में घट पद की शक्ति है उसी प्रकार उदक कर्तृकप्राप्ति-कर्मत्वविशिष्ट इसमें प्राप्तोदक इत्यादि समुदाय की शक्ति होने से ही निर्वाह हो जाता है ॥ ३३ ॥

हिन्दीभाष्य—"धवखदिरौ" यहाँ धवश्चखदिरश्च इस विग्रह में "चार्थे द्वन्द्वः" इस सूत्र से द्वन्द्व समास होता है। समस्त पद में च का श्रवण न होने से उसके अर्थ बोध के लिये "अनेकं सुवन्तं चार्थे" इस प्रकार का वचन करना होगा।

कौशाम्ब्या निष्क्रान्तः इस विग्रह में" निरादयः क्रान्ताद्यर्थे पञ्चम्या" इससे समास होने पर "निष्कौशाम्बिः" इसकी निष्पत्ति होती है। यहाँ समस्त प्रयोग में क्रान्त अर्थ का वाचक पद न होने से उसके बोध के लिए "अत्यादयः क्रान्ताद्यर्थे सन्ति" इस प्रकार का वचन आवश्यक होगा।

"गोरथः"—गवा युक्तो गोयुक्तो रथः इस विग्रह में मध्यमपदलोपी समास के बाद गोरथः इसमें युक्त अर्थ के बोध के लिये वचन करना होगा घृतपूर्णो घटः "घृतघटः इसमें पूर्ण अर्थ बोध के लिये प्रयत्न आवश्यक होगा।

गुडेन मिश्राः इसमें "भक्ष्येण मिश्रीकरणम्" इससे समास होने पर समस्त गुडधाना इससे मिश्र की प्रतीति के लिये वचन करना होगा।

केशानां संघातभूता चूडा यस्य इस विग्रह में "सङ्घातविकारषष्ठ्याश्चोत्तरपदलोपश्च" इस बचन से समास एवं संघात के लोप होने पर"केशचूडः" इससे सङ्घात अर्थ की प्रतीति के लिये वचन करना होगा।

"सुवर्णविकारोऽलङ्कारो यस्य" यहाँ पूर्ववचन से बहुव्रीहि समास एवं विकार के लोप होने पर सुवर्णालङ्कार इसमें विकार बोधक पद न होने से उसके बोध के लिये उपाय करना होगा।

द्विरावृत्ता दश इस अर्थ में "संख्ययाऽव्ययासन्नादूराधिकसंख्याः संख्येये", इस सूत्र से समास होने पर "द्विदशाः" बीस अर्थ में प्रयुक्त होता है। इसमें सुच् प्रत्यय के न रहने पर भी सुच् के अर्थ आवृत्त के बोध के लिये वचन करना होगा।

एवं सप्तपर्णः—सप्त सप्त पर्णानि यस्य इस अर्थ में बहुव्रीहि समास में वीप्सा अर्थ के बोध के लिये वचन करना होगा।

समास में अतिरिक्त शक्तिवादियों के मत में जिन-जिन अर्थों के बोधक पद समस्त में नहीं है उन सब अर्थों का बोध समास शक्ति से हो जाने के कारण उनके बोध के लिये किसी प्रकार का अतिरिक्त वचनरूप यत्न नहीं करना होगा।

उन सभी अर्थों को अन्तर्भूत कर समास शक्ति मानी गई है। जिनका बोध समस्त पद से इष्ट है यह सार है।

आदि पद से इसी प्रकार "घन इव श्यामः" इस अर्थ में "उपमानानि सामान्य-वचनैः" इस सूत्र से समास होने पर घनश्याम इस समस्त पद से इवार्थ प्रतीति के लिये इव शब्द का प्रयोग प्राप्त होगा उसके लोप के लिए सूत्र करना होगा।

एवं "हंसगमनमिव गमनं यस्य" इस अर्थ में हंसगमन शब्द से गमनसदृश की प्रतीति कराने के लिये प्राप्त गमन और इव शब्द का लोप करना होगा।

समासशक्तिवादियों के यहाँ इवार्थ एवं गमनपदार्थ का अन्तर्भाव करके समासशक्ति मानी गई है। अतः इसकी प्रतीति शक्ति द्वारा हो जाती है।

"चित्रा गावो यस्य" = अनेक रङ्गवाली गऊ का स्वामी चित्रगु शब्द से कहा जाता है। यहाँ बहुव्रीहि समास है। यस्य से स्वामी का बोध होता है। चित्र का अनेक रङ्ग युक्त अर्थ होता है। गु से गऊ का बोध होता है। समास शक्ति नहीं मानने पर स्वामी का बोध नहीं होगा। अतः शक्तिस्वीकार आवश्यक है।

शङ्काः—चित्रगु पद की चित्र गऊ के स्वामी में लक्षणा मान लेने से स्वामी की प्रतीति हो जायगी। इसके लिये समास शक्ति स्वीकार व्यर्थ है।

समाधान—"चित्रगु" इसमें ऐसा होने पर भी प्राप्तोदक इसमें लक्षणा नहीं हो सकती। "प्राप्तम् उदकं यम्" इस विग्रह में बहुव्रीहि समास होने पर प्राप्तोदकः इसकी सिद्धि होती है। विग्रह वाक्य से यत्कर्तृक प्राप्तिकर्तृ उदकम् अर्थात् प्राप्तम् का प्राप्तिकर्ता यह अर्थ है। प्रपूर्वक आप् धातु से कर्त्ता में "गत्यर्थाकर्मक" सूत्र से क्त प्रत्यय है। अतः प्राप्तिकर्ता यह अर्थ होता है। यम् = जिसका प्राप्त = प्राप्तिकर्ता उदकजल है यह अर्थ प्राप्तम् उदकं यम् इसका होता है। समस्त प्राप्तोदक की सम्बन्धी में लक्षणा होने पर भी उदककर्तृक जो प्राप्ति उसका कर्म (ग्राम) इस अर्थ की प्रतीति नहीं होगी।

शङ्का—प्राप्त में जो कर्ता का वाचक क्त प्रत्यय हैं उसकी कर्म में लक्षणा तथा प्राप्ति में उदक का कर्तृता सम्बन्ध से अन्वय करने से उदककर्तृक प्राप्तिकर्म ऐसा बोध हो जाने से समासशक्ति की आवश्यकता नहीं है।

समाधान—समानविभक्तिवाले नाम के अर्थो का परस्पर अभेदान्वय माना जाता है। यहाँ भी नामार्थ प्राप्ति कर्म के साथ उदक का अभेदान्वय होगा। ऐसा न मानने पर उक्त नियम का भङ्ग हो जायगा। इसी प्रकार कर्तृतारूप भेद सम्बन्ध से धात्वर्थ प्राप्ति में अन्वय असम्भव है। नामार्थ का धात्वर्थ के साथ साक्षात् भेद सम्बन्ध से अन्वय अव्युत्पन्न है। ऐसा न मानने पर "देवदत्तः पच्यते" यहाँ पर भी धात्वर्थ में देवदत्त का कर्तृता सम्बन्ध से अन्वय हो जाने से उक्त प्रयोग भी होने लगेगा।

शङ्काः—क्त प्रत्यार्थ कर्त्ता में उदक का अभेद से अन्वय होगा कर्त्ता का वृत्तित्व सम्बन्ध से प्राप्ति में अन्वय होने पर उदकाभिन्नकर्तृवृत्तिप्राप्ति का कर्म में लक्षणा मानने से उदकर्तृकप्राप्तिकर्म का बोध हो जाने से शक्ति स्वीकार व्यर्थ है।

समाधान—प्रकृत्यर्थ की अपेक्षा प्रत्ययार्थ का प्राधान्य होता है। इसलिये क्त प्रत्ययार्थ कर्ता प्रकृत्यर्थ (धात्वर्थ) प्राप्ति में विशेषण नहीं होगा। "प्रकृतिप्रत्ययौ सहार्थं ब्रूतस्तयोः प्रत्ययार्थस्य प्राधान्यम्" ऐसी व्युत्पत्ति है।

दूसरा कारण यह है कि प्राप्तपद से यदि प्राप्ति की विशेष्यतया उपस्थिति मानते है तो प्राप्ति ही नामार्थ होगी, क्योंकि नाम से जन्य जो प्रतीति उसमें मुख्य विशेष्यता के आश्रय को ही नामार्थ माना गया है। इस प्रकार प्राप्ति के साथ उदक का अभेदान्वय होगा। नामार्थ का नामार्थ के साथ अभेदातिरिक्त सम्बन्ध से अन्वय नहीं माना जाता।

१. नामार्थनामार्थयोः साक्षात् भेदान्वयस्याव्युत्पन्नत्वात्। नामार्थ अर्थात् नाम जन्यप्रतीतिमुख्यविशेष्यताश्रय।

एवं "ऊढो रथो येन स "ऊढरथः" यहाँ रथकर्मकवहन कर्ता ऐसा बोध होता है। विग्रह में यत्कर्तृकवहन कर्म रथः ऐसा बोध होता है।

"उपहृतः पशुः यस्मै स "उपहृतपशुः" यहाँ पशुकर्मकोपहरणोद्देश्यः ऐसा बोध होता है।

"उद्धृतः ओदनो यस्याः सा "उद्धृतौदना" (स्थाली) इससे ओदनकर्मकोद्धरणावधिः ऐसा बोध होता है। विग्रह से यदवधिकोद्धरणकर्म ओदनः यह बोध होता है।

"बहवः पाचकाः यस्यां सा बहुपाचिका" (नगरी) इससे "बहुपाककर्त्रधिकरणम् ऐसा बोध होता है। विग्रह से यदधिकरणक बहुभिन्नाः पचनकर्तारः ऐसा बोध होता है।

समास में शक्ति मानने पर तत्तत् विशिष्ट अर्थ में शक्ति मानने से विशिष्ट अर्थ का बोध हो जाता है। अतः किसी प्रकार की अनुपपत्ति नहीं होती है ॥ ३३ ॥

साधकान्तरमाह—

अषष्ठ्यर्थबहुव्रीहौ व्युत्पत्त्यन्तरकल्पना ।
क्लृप्तत्यागश्चास्ति तव तत् किं शक्तिं न कल्पयेः ॥ ३४ ॥

अयम्भावः—चित्रगुरित्यादिषु चित्रगोः स्वाम्यादिप्रतीतिर्न विना शक्तिमुपपद्यते। न च तत्र लक्षणा। सा हि न चित्रपदे। चित्रस्वामी गौरिति बोधापत्तेः। नाऽपि गोपदे। गोस्वामी चित्र इत्यन्वयबोधापत्तेः। चित्रादिमात्रस्य लक्ष्यैकदेशत्वेन तत्र गवादेरन्वयाऽयोगात्।

नच चित्राभिन्ना गौरिति शक्त्युपस्थाप्ययोरन्वयबोधोत्तरं तादृशगोस्वामी गोपदेन लक्ष्यत इति वाच्यम्। गोपदस्य चित्रपदस्य वा विनिगमनाविरहेण लक्षकत्वासम्भवात्।

नच गोपदे साक्षात् सम्बन्ध एव विनिगमक इति वाच्यम्। एवमपि प्राप्तोदकः कृतविश्व इत्याद्यषष्ठ्यर्थबहुव्रीहौ विनिगमकाऽप्राप्तेः। यौगिकानां कर्त्रर्थकतया साक्षात्सम्बन्धाऽविशेषात्।

नच पदद्वये लक्षणेति नैयायिकोक्तं युक्तम्। बोधावृत्तिप्रसङ्गात्। नच परस्परं तात्पर्यग्राहकत्वादेकस्यैवैकदा लक्षणा, न द्वयोरिति, न बोधावृत्तिरिति वाच्यम्। एवमपि विनिगमनाविरहतादवस्थ्येन लक्षणाया असम्भवात्।

नच चरमपदे एव सा प्रत्ययार्थान्वयानुरोधात्, प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तेरिति वाच्यम्। एवं हि बहुव्रीह्यसम्भवापत्तेः। "अनेकमन्यपदार्थे" (पा० सू० २।२।४) इत्यनेनानेकसुबन्तानामन्यपदार्थप्रतिपादकत्वेन तद्विधानात्।

किञ्चैवं सति घटाऽऽदिपदेष्वपि चरमवर्ण एव वाचकताकल्पना स्यात्। पूर्वपूर्ववर्णानां तात्पर्यग्राहकत्वेनोपयोगसम्भवात्, एवं सति चरमवर्ण-

**मात्रश्रवणेऽर्थबोधापत्तिरिति चेद् ? अत्राप्युदकपदमात्रश्रवणादर्थप्रत्ययापत्तिस्तुल्येत्यन्यत्र विस्तरः।**

**एवञ्च, अषष्ठ्यर्थबहुव्रीहौ, व्युत्पत्त्यन्तरकल्पना = उक्तयुक्तेः अगत्या शक्त्यन्तरकल्पनेत्यर्थः ॥ क्लृप्तत्याग इत्यस्य क्लृप्तशक्त्योपपत्तिरिति व्युत्पत्तित्यागश्च तवास्ति ॥ तत् किं, सर्वत्र समासे शक्तिं न कल्पयेरिति वाक्यार्थः ॥**

षष्ठ्यर्थबहुव्रीहिपर्युदासे बीजं प्रदर्शयति—*अयम्भाव इति*। *विनाशक्तिमिति*। समुदायशक्तिमित्यर्थः। *न च तत्रेति*। तादृशसमुदायघटक पूर्वोत्तरपदयोरित्यर्थः। *चित्रस्वामीत्यादि*। समानाधिकरणनामार्थयोरिति व्युत्पत्तेरितिभावः। ननु गोपदस्य गोस्वामिनि लक्षणा। गवि चित्रस्याऽभेदान्वये चित्राऽभिन्नगोस्वामीति बोधो नाऽनुपपन्नोऽत आह *चित्रादिमात्रस्येति*। आदिना गवादिपरिग्रहः। प्राथम्यात् पूर्वपदे लक्षणेत्याशयेन चित्रपदोपादानम्।

*लक्ष्यैकदेशत्वेनेति*। लक्ष्यगोस्वामिरूपपदार्थैकदेशत्वेनेत्यर्थः। *अन्वयायोगादिति*। एकपदार्थप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति विशेष्यतासम्बन्धेनापरपदजन्योपस्थितेर्हेतुतेत्यर्थपर्यवसितायाः, "पदार्थः पदार्थेनाऽन्वेति" इत्यादिव्युत्पत्तेर्विरोधादुक्तान्वयाऽभावादिति भावः। कस्यचिन्मतमाशङ्क्य निराचष्टे—*नचेति* ॥ *साक्षादिति* ॥ गोद्वारक इत्यर्थः। तथाच षष्ठ्यर्थबहुव्रीहौ न व्युत्पत्त्यन्तरकल्पनमिति भावः ॥ *पदद्वय इति* ॥ विनिगमकाऽभावादिति भावः ॥ *नैयायिकेति* ॥ अस्य प्राचीनेत्यादि। एकदेशान्वयपक्षे हि तैरित्थमुक्तम् ॥ *बोधावृत्तीति* ॥ बोध्यमानस्य स्वामिनो द्वेधा भानापत्तेरित्यर्थः ॥

*विनिगमनाविरहेति*। चित्रपदं तात्पर्यग्राहकमुत गोपदमित्येकतरपक्षपातियुक्तिविरहतादवस्थ्येनेत्यर्थः ॥ *असम्भवादिति* ॥ एकतरपदे लक्षणाया असम्भवादित्यर्थः। पदद्वये लक्षणायान्तूक्तदोष इति भावः। प्रत्ययार्थाऽनुपपत्तिरेव उत्तरपदे लक्षणायां विनिगमिका भविष्यतीत्याशङ्क्य निराचष्टे—*न चेति* ॥ *एवं हीति* उत्तरपदस्यैवाऽन्यपदार्थलक्षकत्वे इत्यर्थः ॥ बहुव्रीह्यसम्भवे हेतुमाह—*अनेकमिति* ॥ तद्विधानादित्यर्थः।

अयम्भावः—वृत्तेर्विशिष्टार्थकत्वं न शास्त्रैकगम्यम्। "अचतुर" इत्यादावर्थाऽनादेशनात्। किन्तु लौकिकव्यवहारगम्यम्। "स्वभावत एव तेषां शब्दानामेष्वर्थेष्वभिनिविष्टानां निमित्तत्वेनान्वाख्यानं क्रियत" इति समर्थसूत्रभाष्यात्। "अनेकमन्यपदार्थे" (पा० सू० २।२।२४) "चार्थे द्वन्द्व" (पा० सू० २।२।२९) इत्यादीनामनेकम्प्रथमान्तमन्यार्थप्रतिपादकं बहुव्रीहिसंज्ञकं भवति, चाऽर्थे वर्त्तते यः प्रथमाऽन्तसमुदायः स द्वन्द्वसंज्ञको भवतीति क्रमेण लोकसिद्धाऽर्थाऽनुवादेन बहुव्रीह्यादिसंज्ञाविधा-

यकत्वमात्रम् । अर्थस्याऽपि विधाने वाक्यभेदापत्तेः । स्वसमानाऽर्थकवाक्याऽनिवृत्तये विभाषाऽधिकारोऽपि विधेयः स्यात् । एवञ्च सुबन्तसमुदायस्याऽन्यार्थाप्रतिपादकत्वे, कथं बहुव्रीहिः स्यादिति ।

नन्वेकपदस्याऽन्यार्थप्रतिपादकत्वे तात्पर्य्यग्राहकतयापरपदस्याप्युपयोगित्वेन समुदायस्य विशिष्टार्थप्रतिपादकत्वमविकल्प्यमत आह—*किञ्चैवमिति* ।। समासस्य चरमपदस्यैव लक्षकत्वे सतीत्यर्थः । इष्टापत्तावाह—*एवं सतीति* ।। चरमवर्णस्य वाचकत्वे सतीत्यर्थः ।। *अत्रापि* । प्राप्तोदकादावपीत्यर्थः ।। *आपत्तिरिति* ।। आपाद्यव्यतिरेकनिर्णयकालिकाऽऽपाद्यव्याप्यापादकवत्ताज्ञानसत्त्वादिति भावः ।

ननूदकपदमात्रश्रवणान्न लक्ष्याऽर्थबोधः, तदानीं लक्षणाकल्पिकायास्तात्पर्यग्राहकपूर्वपदोपस्थितेरभावादत आह—*अन्यत्रेति* ।। भूषणे इत्यर्थः । *विस्तर इति* । उत्तरपदलक्ष्याऽर्थे प्रकृत्यर्थत्वाऽभावेन तत्र प्रत्ययाऽर्थानन्वयाऽऽपत्तिरित्यादि तत्रोक्तम् ।। *व्युत्पत्तीति* ।। व्युत्पत्तित्यागः प्रकृते प्रतिज्ञाहानिरेव ।। व्यपेक्षावादिन इति समर्थसूत्रे "परस्पराऽन्वययोग्यस्वरूपसामर्थ्यमेव व्यपेक्षा' इति वादिन इत्यर्थः ।। *न समासे शक्तिरिति* । समासे राजपुरुषादिसमुदाये विशिष्टशक्तिर्नेत्यर्थः । समाससंज्ञाप्रयोजकत्वं क्लृप्तप्रत्येकपदवृत्त्यतिरिक्ते नास्तीति यावत् । संसृष्टार्थमिति भाष्यकारोक्तेः संसर्गस्य पृथुगुपस्थितिनिबन्धनत्वात् परस्परव्यपेक्षैव सामर्थ्यम् । "इसुसोः सामर्थ्ये" ( पा०सू० ७।३।४४ ) इत्यत्र समर्थपदस्य तादृशाऽर्थकत्वस्य सर्वैरेवाऽङ्गीकारात्, पराङ्गवद्भावानुरोधाच्च, अन्यथा समासादावेकार्थीभावः, पराङ्गवद्भावादौ व्यपेक्षेति वाक्यभेदापत्तेः । तत्र व्यपेक्षाऽनादरे तु, "ऋतेन मित्रावरुणावृतावृधावृतस्पृशौ" इत्यादावृतेनेत्यादेः पराङ्गवद्भावे सति, "आमन्त्रितस्य च" ( पा० सू० १।१।१८ ) इत्याद्युदात्तताऽऽपत्तिः ।

न च "तन्निमित्तग्रहणं कर्त्तव्यम्" इति वार्त्तिकेनामन्त्रितार्थस्य यन्निमित्तं तद्वाचकमेव पराङ्गवदित्यर्थकेन नियमितत्वात् पराङ्गवद्भावाऽप्रसक्तिरिति वाच्यम् । समर्थपरिभाषामाश्रित्य तत्प्रत्याख्यानस्यैव न्याय्यत्वात् । "ऋतेन मित्रावरुणौ" इत्येतयोः समभिव्याहृतक्रियान्वयित्वेन परस्परमसामर्थ्यात् "मित्रा वरुणावृतस्पृशौ" एतयोस्तु पाष्ठिकाऽन्वयबोधसत्त्वादस्त्येव सामर्थ्यम् । स्पष्टं चेदं वेदभाष्ये । अत एवाऽनन्तरपाठोऽपि चरितार्थः । 'पुत्रो राज्ञः पुरुषो देवदत्तस्य' इत्यादौ निरुक्तव्यपेक्षारूपसामर्थ्याभावादेव समासाऽप्रसक्तेः ।

समर्थसूत्राऽर्थस्तु—पदसम्बन्धी समासादिविधिः साक्षात्परम्परया वा स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वरूपव्यपेक्षाऽऽपरनामकसामर्थ्यवत्पदाऽऽश्रितो बोध्य इति बहुव्रीहौ चित्राऽऽदिविषयतायाः साक्षात्प्रयोजकत्वाऽऽभावात्परम्परयेति ।

किञ्च वृत्तित्वाऽवच्छेदेनैकार्थीभाववादिमते स्वाऽवयवार्थाऽतिरिक्ताऽर्थाभिधायकत्वरूपवृत्तिलक्षणस्य कर्मधारयेऽव्याप्तिः । तत्राऽवयवार्थातिरिक्ताऽर्थवत्त्वाऽभा-

वात्। वृत्तिसामानाधिकरण्येन तु रथन्तराऽऽदिशुद्धरूढे पङ्कजादियोगरूढे च कोशाऽऽदिसिद्धायाः समुदायशक्तेरस्माभिरप्यभ्युपगमेन सिद्धसाधनात्। शुद्धयौगिकचित्रग्वादिसमुदाये शक्त्यभ्युपगमस्तु कोशाऽऽद्यनुक्तत्वात्समासघटकप्रत्येकपदवृत्त्यैवोपपत्तेश्च हेय इति तदभिसन्धिः।

अर्थ—युक्त्यन्तर कहते हैं—षष्ठ्यर्थ से भिन्न अर्थ में होनेवाले बहुब्रीहि समास में व्युत्पत्त्यन्तर = भिन्न शक्ति की कल्पना करनी होगी। इस प्रकार पूर्व निश्चित अवयवशक्ति से ही सर्वत्र निर्वाह होगा, इस नियम का इन स्थलों में त्याग करना पड़ता है। ऐसी दशा में सर्वत्र समास में अतिरिक्त शक्ति की कल्पना क्यों नहीं करते।

कारिका का यह अभिप्राय है—"चित्रगुः" इत्यादि स्थलों में चित्र गो के स्वामी का बोध शक्ति स्वीकार के विना नहीं हो सकता। यदि कहें कि लक्षणा के द्वारा स्वामी की प्रतीति हो जायगी तो वह लक्षणा चित्रपद में नहीं हो सकती। वैसा करने पर "चित्रस्वामी गौः" ऐसा बोध प्राप्त होगा। गोपद की स्वामी में लक्षणा होने पर गोस्वामी चित्र ऐसा प्रतीत होने लगेगा। चित्र की स्वामी में लक्षणा होने पर चित्र पदार्थ एकदेश होगा। गोपद की स्वामी में लक्षणा होने पर गोपदार्थ एकदेश होगा। अतः चित्र और गो का परस्पर अन्वय नहीं हो सकेगा। (पदार्थ का पदार्थ के साथ अन्वय होता है)।

यदि ऐसा कहें कि "चित्राभिन्न गौः" इस बोध के बाद गोपद की चित्राभिन्न गोस्वामी इस में लक्षणा है तो चित्र की लक्षणा है गोपद तात्पर्य-ग्राहक है या गोपद की लक्षणा है चित्रपद तात्पर्यग्राहक है, इसमें एकतर पक्ष का निर्णायक कोई युक्ति नहीं होने से लक्षणा का सम्भव नहीं है।

शङ्का—गोपद की लक्षणा में साक्षात् सम्बन्ध ही एकतर पक्ष के निश्चय में प्रमाण है।

समाधान—यहां लक्षणा से निर्वाह होने पर भी "प्राप्तमुदकं यं स प्राप्तोदकः" एवं "कृतं विश्वं येन स कृतविश्वः" इत्यादि षष्ठी से भिन्न अर्थ में होनेवाले बहुब्रीहि समास में लक्षणा के एकतर पक्ष का निश्चायक प्रमाण नहीं है। क्योंकि यौगिक प्राप्त और कृत पद क्रमशः कर्ता और कर्मार्थक होने से दोनों पद समानार्थक हैं। इसलिये साक्षात् सम्बन्ध (लक्षणा नियामक) समान हैं।

दोनों पदों की लक्षणा मानने से उसी का अर्थ दो बार बोध होने लगेगा।

शङ्का—एक समय में एक ही पद की लक्षणा होगी दूसरा पद तात्पर्य ग्राहक होगा। दोनों पदों की लक्षणा (एक समय में नहीं मानने से बोध की आवृत्ति नहीं होगी)

समाधानः—दोनों पदों में किसकी लक्षणा और किसकी तात्पर्य ग्राहकता है इस प्रकार एकतर निश्चायक प्रमाण का अभाव पूर्ववत् बना हुआ है।

शङ्का—प्रत्ययार्थों का सन्निहित पदार्थ के साथ अन्वय बोध होता है, इस व्युत्पत्ति के अनुसार अन्तिम पद की लक्षणा होने पर ही प्रत्ययार्थ के साथ अन्वय उपपन्न हो सकेगा।

समाधानः—उत्तर पद की लक्षणा मानने पर अन्य पदार्थ का बोधक अनेक सुबन्त नहीं होने से अन्य पदार्थ के बोधक अनेक सुबन्तों का समास विधान करनेवाले

"अनेकमन्यपदार्थे" इस सूत्र से बहुब्रीहि समास नहीं होगा। इसलिये सभी पदों को अन्य पदार्थ का बोधक होना आवश्यक है।

एवं सति = बहुब्रीहि के अन्तिम पद में लक्षणा मानने पर यहाँ के समान घटादि पदों में भी अन्तिम वर्ण को ही वाचक मानकर पूर्व पूर्व वर्णों को तात्पर्य ग्राहक मान लेने से भी पूर्व वर्णों की सार्थकता हो जायगी पुनः समुदाय में वाचकता वहाँ क्यों मानते है।

यदि कहें कि इस प्रकार मानने पर अन्तिम वर्ण मात्र के श्रवण से अर्थ बोध होने लगेगा तो यहाँ भी उदक शब्द मात्र के श्रवण से "प्राप्तोदक" इस अर्थ का बोध होने लगेगा। इत्यादि बृहद्वैयाकरणभूषण में विस्तृत विचार किया गया है।

अषष्ठ्यर्थ बहुब्रीहि में अगत्या व्युत्पत्त्यन्तर कल्पना = अन्यशक्ति की कल्पना पूर्वोक्त युक्ति से करनी होगी। "क्लृप्तत्यागः" इसका अभिप्राय यह है कि सब स्थानों में अवयवशक्ति से उपपत्ति हो जायगी इस नियम का त्याग आपको पूर्व उदाहृत स्थल में करना पड़ेगा। अतः सर्वत्र समास में अतिरिक्त शक्ति की कल्पना क्यों नहीं कर लेते।

हिन्दी भाष्य—"चित्रगु" आदि स्थल में षष्ठी के अर्थ में होने वाले बहुब्रीहि समास में लक्षणा से निर्वाह होने पर भी अन्य अर्थ में होनेवावे बहुब्रीहि समास स्थल में अतिरिक्त शक्ति का स्वीकार करना आवश्यक है। इसलिये कहीं शक्ति नहीं मानना और कहीं समुदाय में शक्ति मानना इसकी अपेक्षा सर्वत्र समास में शक्ति का स्वीकार करना ही श्रेयस्कर है। अवयव शक्ति से सर्वत्र उपपत्ति हो जायगी इस नियम का भी जहाँ अतिरिक्त शक्ति आप मानते हैं वहाँ त्याग करना होगा। यह कारिका का भावार्थ है।[1]

विस्तृत विवरण इस प्रकार है—चित्रगु शब्द से अनेक रङ्गवाली गऊ का स्वामी ऐसा अर्थ होता है। समास में शक्ति मानने से स्वामी की प्रतीति हो सकती है। अन्यथा चित्र और गु ये दोनों पद स्वामी के बोधक नहीं होने से उसका बोध कैसे होगा यह वैयाकरणों का कथन है।

इसके विपरीत यह तर्क दिया जाता है कि समास शक्ति के विना भी चित्रगु के गो शब्द की स्वामी में लक्षणा होगी। इससे स्वामी का बोध हो जाने से समुदाय शक्ति मानना व्यर्थ है। यदि यह कहें कि चित्रगु पद में दो पद है चित्र और गो। इसमें किसकी लक्षणा है। चित्र की स्वामी में लक्षणा होने पर चित्रस्वामी गौ अथवा गो पद की स्वामी में लक्षणा होने पर गोस्वामी चित्र इस प्रकार के बोध होने से इष्ट बोध सिद्ध नहीं होगा। लक्षणा होने के बाद गवादि पदार्थ एकदेश हो जाते हैं। इसलिये चित्र और गऊ का परस्पर अन्वय नहीं होने के कारण चित्र का गोस्वामी के साथ अन्वय लक्षणा के बाद प्राप्त होता है जो इष्ट नहीं है।

शङ्का—बोध की सामग्री पदार्थोपस्थिति आदि होने से "चित्राभिन्ना गौः" इस बोध के बाद गोपद की स्वामी में लक्षणा होगी। चित्रपद उस अर्थ के लिये तात्पर्यग्राहक के रूप में सार्थक है। गोपद की ही लक्षणा है इसमें प्रमाण साक्षात् सम्बन्ध है। गोपद

१. कारिका में तत् पद तस्मात् इस अर्थ में अव्यय है। "कल्पयेः" इसमें "विधिनिमन्त्रणादि" सूत्र से सम्प्रश्न अर्थ में लिङ् लकार हुआ है।

की लक्षणा होने पर स्वत्वनिरूपित स्वामित्वरूप साक्षात् शक्यसम्बन्ध है, चित्र पद की लक्षणा मानने पर चित्रगुण होने से स्वसमवायिनिष्ठस्वत्वनिरूपितस्वामित्वरूप-शक्यसम्बन्ध, गो घटित होने से परम्परा सम्बन्ध होगा। अतः साक्षात् सम्बन्ध ही गोपद की लक्षणा में नियामक होगा। इस प्रकार चित्राभिन्नगोस्वामी का बोध हो जाने से समास में शक्ति स्वीकार व्यर्थ है। अतः षष्ठ्यर्थं बहुब्रीहि चित्रगुः आदि स्थल में दोष न होने से अषष्ठ्यर्थं बहुब्रीहि में दोष दिखाया गया।

"प्राप्तोदकः" इसकी सिद्धि "प्राप्तम् उदकं यम्" इस विग्रह में द्वितीयार्थ में बहुब्रीहि समास होने से होती है। इसी प्रकार "कृतं विश्वं येन" इस विग्रह में उक्त समास होने से "कृत विश्वः" इसकी सिद्धि होती हैं। इन दोनों स्थलों में प्राप्त और कृत पद योगार्थं से क्रमशः कर्ता और कर्म के वाचक होते हैं। साक्षात् सम्बन्ध प्राप्त और उदक एवं कृत और विश्व दोनों में समान है। चित्रगु के समान गुणवाचक कोई नहीं है जिससे द्रव्य के द्वारा अन्वय होगा। प्राप्त (प्राप्तिकर्ता) और उदक दोनों पद भिन्न-भिन्न रूप से एक ही व्यक्ति का बोध कराते हैं।

यद्यपि चित्रगु में भी चित्रपद गुण और गुणी दोनों का बोधक है। "गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति" यह अमरकोश है। स्वमत में भी मतुप् का लुक् हो जाने से "यः शिष्यते स लुप्यमानार्थाभिधायी" इसके अनुसार गुणवाचक ही गुणी का भी वाचक हैं। अतः यहाँ भी दोनों पदों के अर्थों का साक्षात् सम्बन्ध ही है। इसलिये किसकी लक्षणा और किसकी तात्पर्यग्राहकता इसमें एकतर का निश्चय नहीं होने से लक्षणा का सम्भव यहाँ भी नहीं है। तथापि अन्य (चित्र को गुणवाचक ही माननेवालों के) मत से दूषणान्तर दिया गया है स्वमत से नहीं

प्राप्त की लक्षणा उदक की तात्पर्यग्राहकता अथवा उदक की लक्षणा प्राप्त की तात्पर्यग्राहकता इसमें एक में निश्चायक प्रमाण नहीं होने से एक समय एक की लक्षणा नहीं हो सकेगी।

दोनों पदों की लक्षणा होने में उसी अर्थ का दोबार बोध प्राप्त होगा जो कि बोधावृत्ति होने से अनिष्ट है। विनिगमक न होने से कब किसकी लक्षणा होगी यह अनिश्चित है।

शङ्का—प्रत्यय के अर्थ का सन्निहित (समीपस्थ) पदार्थ के साथ अन्वय बोध होता है ऐसा नियम है। इसके अनुसार चरम पद की ही लक्षणा मानने पर सन्निहित पदार्थ के साथ विभक्त्यर्थ का अन्वयनियम की उपपत्ति हो सकेगी। पूर्वपद की लक्षणा मानने में उत्तरपद से व्यवहित पूर्वपद के अर्थ में प्रत्यथार्थ का अन्वय असन्निहित अर्थ होने से नहीं होगा। अतः उत्तरपद की लक्षणा में यही विनिगमक है।

समाधान—अन्यपदार्थं में वर्तमान पदों की बहुब्रीहि होती है। उत्तरपद की लक्षणा मानने पर पूर्वपद अन्य पदार्थ में वर्तमान न होने से पदद्वय की बहुब्रीहि नहीं होगी। अतः लक्षणा पक्ष असङ्गत है। समुदाय में शक्ति मानने पर समुदाय अन्य पदार्थ में वर्तमान होने से समास अनायास सिद्ध हो जाता हैं।

-यदि उत्तरपद की उदककर्तृकप्राप्तिकर्म इस में लक्षणा मानकर पूर्वपद तात्पर्यग्राहकत्वेन उसमें उपयोगी होने से वह (पूर्वपद) भी अन्यपदार्थ में वर्तमान है। इसलिये समास की अनुपपत्ति नहीं है ऐसा कहें तो दूसरा दोष देते हैं।

जिस प्रकार चरम पद की लक्षणा मानते हैं उसी प्रकार अन्तिम अक्षर को वाचक मान लें और पूर्व पूर्व वर्ण को तात्पर्यग्राहक मानने से अर्थ बोध हो सकता है पुनः पद की वाचकता सिद्ध नहीं होगी। अन्तिम वर्ण मात्र श्रवण से अर्थ बोध की आपत्ति के समान उदक पदमात्र श्रवण से तादृश अर्थ बोध की आपत्ति होगी।

इस प्रकार यह निष्कर्ष सिद्ध होता है कि कहीं पङ्कजादि पद में समुदाय शक्ति मानना और कहीं लक्षणा स्वीकार करने की अपेक्षा सर्वत्र समासादि में अतिरिक्त शक्ति माननी चाहिये।

यत्तु व्यपेक्षावादिनो नैयायिकमीमांसकादयः। न समासे शक्तिः, राजपुरुष इत्यादौ राजपदादेः सम्बन्धिलक्षणयैव राजसम्बन्ध्यभिन्नः पुरुष इति बोधोपपत्तेः।

अत एव राज्ञः पदार्थैकदेशतया, न तत्र शोभनस्येत्यादिविशेषणान्वयः। न वा घनश्यामो निष्कौशाम्बिर्गोरथ इत्यादाविवादिप्रयोगापत्तिः। उक्तार्थकतयैव क्रान्तादिपदप्रयोगासम्भवात्। न वा "विभाषा" ( पा० सू० २।१।११ ) इतिसूत्रावश्यकत्वम्। लक्षणया राजसम्बन्ध्यभिन्नः पुरुष इति बुबोधयिषायां समासस्य राजसम्बन्धवानिति बुबोधयिषायां विग्रहस्ये-त्यादिप्रयोगनियमसम्भवात्। नाऽपि पङ्कजपदप्रतिवन्दी शक्तिसाधिका। तत्रावयवशक्तिमजानतोऽपि बोधात्।

न च शक्त्यग्रहे लक्षणया तेभ्यो विशिष्टार्थप्रत्ययः सम्भवति। अथ एव राजादिपदशक्त्यग्रहे 'राजपुरुषः' 'चित्रगुः' इत्यादौ न बोधः। नच चित्रगुरित्यादौ लक्षणासम्भवेऽप्यषष्ठ्यर्थबहुव्रीहौ लक्षणाया असम्भवे बहुव्युत्पत्तिभञ्जनापत्तेरिति वाच्यम्। 'प्राप्तोदकः' इत्यादावुदकपदे एव लक्षणास्वीकारात्। पूर्वपदस्य यौगिकत्वेन तल्लक्षणाया धातुप्रत्ययतदर्थ ज्ञानसाध्यतया विलम्बितत्वात्। प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधक-त्वव्युत्पत्त्यनुरोधाच्च।

घटादिपदे चातिरिक्ता शक्तिः कल्प्यमाना विशिष्टे कल्प्यते। विशिष्ट-स्यैव सङ्केतितत्वात् बोधकत्वस्यापि प्रत्येकं वर्णेष्वसत्त्वात्। प्रकृते चात्यन्तसन्निधानेन प्रत्ययार्थान्वयसौलभ्यायोत्तरपदे एव सा कल्प्यत इति विशेषः। स्वीकृतश्च घटादिपदेष्वपि चरमवर्णस्यैव वाचकत्वं मीमां-सकम्मन्यैरित्याहुः।

शक्तिकल्पकाऽनुपपत्त्यभावं तत्त्वप्रयोजकतया दर्शयति—*राजपुरुष इत्या-दाविति*।

न च सम्बन्ध एव लक्ष्योऽस्त्वेवं च व्याससमासयोः समानाकारबोधजनकत्वप्रवा-दोऽप्युपपत्स्यते। राजाऽऽदिसम्बन्धरूपलक्ष्यार्थस्योत्तरपदार्थे आश्रयतयाऽन्वयेनैवो-पपत्तौ सम्बन्धिनि लक्षणाऽभ्युपगमे प्रयोजनाऽभावश्चेति वाच्यम्। 'राजा पुरुषः'

इत्यादावपि राजादिपदार्थस्य स्वस्वामिभावसम्बन्धेन पुरुषादावन्वयवारणाय निपाताऽतिरिक्तनामार्थनिष्ठाभेदाऽतिरिक्तसम्बन्धाऽवच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति विशेष्यतासम्बन्धेन प्रत्ययनिपाताऽन्यतरजन्योपस्थितेर्हेतुत्वस्यावश्यकतया प्रकृते राजसम्बन्धरूपनामार्थस्य प्रत्ययनिपाताऽन्यतराऽनुपस्थितेः पुरुषादावन्वयाऽसम्भवात्। निपातातिरिक्तत्वविशेषणात् 'चन्द्र इव मुखम्' इत्यादाविवपदार्थसादृश्यस्य नामार्थस्य प्रत्ययजन्योपस्थित्यविषये मुखे निपाताऽतिरिक्तनामार्थचन्द्रस्य तथोपस्थित्यविषये सादृश्येऽन्वयेऽपि न क्षतिः। अभेदातिरिक्तसम्बन्धाऽवच्छिन्नत्वस्य प्रकारतायां निवेशाच्च 'राजा पुरुष' इत्यादावभेदाऽन्वयेऽपि न सा।

न च समस्यमानाऽतिरक्तत्वेनाऽपि नाम्नो विशेषणीयत्वान्न प्रकृतेऽनुपपत्तिरिति वाच्यम्। गौरवात्, क्वचिदगत्या सङ्कोचेपि सर्वत्र सङ्कोचस्यान्याय्यत्वाच्च। प्रकृते सम्बन्धिलक्षणाभ्युपगमरूपगतिसत्त्वात्। निपातानां द्योतकत्वनये घटादिपदानां घटादिप्रतियोगिकलाक्षिणकतयैवोपपत्तौ निपातातिरिक्तत्वस्याप्रवेशाच्चेति भावः।

*अत एवेति*। पूर्वपदस्य सम्बन्धिलाक्षणिकत्वादेवेत्यर्थः। *नविशेषणान्वय इति*। "पदार्थः पदार्थेनाऽन्वेति" इति व्युत्पत्तेरिति भावः। ननु 'गभीरायां नद्यां घोष' इत्यादौ नदीपदलक्ष्यनदीतीरार्थैकदेशनद्यादौ गभीराद्यन्वयवदत्राप्येकदेशाऽन्वयो दुर्वार इति चेद्? न। दृष्टान्तासिद्धेः। तत्राऽप्येतन्मते नदीपदस्य गभीरनदीतीरलक्षकताया, गम्भीरतात्पर्यस्य ग्राहकतायाश्च वक्ष्यमाणतया अदोषात्, तादृशव्युत्पत्तेः ससम्बधिव्यतिरिक्तविषयतया चैत्रस्य नप्तेत्यादाविवैकदेशाऽन्वयेऽपि क्षतिविरहादिति।

*उक्तार्थतयेति*। तत्र निरादीनां द्योतकतया कौशाम्ब्यादिपदस्यैव कौशाम्ब्यवधिकनिष्क्रमणकर्त्र्यर्थे लक्षणाऽभ्युपगमेनैवेप्सिताऽर्थबोधोपपत्तौ 'क्रान्तादिशब्दानामुपादानाऽसम्भवादित्यर्थः। *आवश्यकत्वमिति*। तेन पारायणादावदृष्टार्थकतया स्पष्टप्रतिपत्त्यर्थकतया वा तदुपयोगेऽपि न क्षतिरिति भावः। *प्रतिबन्दीति*। पङ्कजादिपदे पद्मत्वादिविशिष्टशक्त्यभ्युपगमरूपेत्यर्थः। अवयवशक्तिमजानतोऽपीत्यपिना दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यं सूच्यते। *शक्त्यग्रहे*। अवयवशक्तिग्रहाऽभावे। *तेभ्यः*। पङ्कजादिपदघटकाऽवयवेभ्य इत्यर्थः। *विशिष्टाऽर्थप्रत्यय इति*। पद्मत्वाऽऽदिरूपेण पद्माऽऽदिबोध इत्यर्थः। लक्षणायाः शक्तिघटितत्वादिति भावः। *अत एवेति*। तत्पदीयलक्षणाग्रहे तत्पदशक्तिज्ञानस्य हेतुत्वादेवेत्यर्थः। उत्तरपदलक्षणायां विनिगमकमाह—यौगिकत्वेनेति*। विलम्बितत्वादित्यनेन शीघ्रोपस्थितिकत्वमुत्तरपदलक्षणायां विनिगमकमिति सूचितम्।

ननु व्युत्पत्तिपक्षे यौगिकत्वमुदकाऽऽदिपदानामपि सममत आह—*प्रत्ययानामिति*। यथाश्रुतप्रकृत्यर्थत्वस्योदकादौ बाधात् प्रकृत्यर्थपदमन्यथा व्याचष्टे—*सन्निहितेति*। दण्डिनमानय, इत्यादौ व्यवहितपदार्थदण्डादौ कर्मत्वाद्यन्वयवारणाय *सन्निहितेति*। तथाच 'अणुरपि विशेषोऽध्यवसायकर" इति न्यायेनोत्तरपद एव लक्षणेति न बोधाऽऽवृत्तिरूपदूषणमपीति भावः। पूर्वोक्तदूषणान्तरमुद्धरति—*घटादि-

पदे चेति* । कल्प्यमानेत्युक्त्या अक्लृप्तत्वं सूचयति—*विशिष्टस्यैवेति* । व्यवहारादिना तत्रैव तन्निर्द्धारणादिति भावः ।। अशक्तत्वादित्यस्य, येन तत्रापि विनिगमकगवेषणा स्यादिति शेषः । *उत्तरपद इति* । प्राप्तोदकादिघटकोदकादिपदे इत्यर्थः ।। सा लक्षणा । *विशेष इति* । घटादिपदात् समासस्य लक्षणाया वैषम्यमित्यर्थः ।।

अत्रेदं बोध्यम्—उक्तयुक्त्योपकुम्भमित्यादावुत्तरपदस्यैव समीपाद्यर्थे लक्षणा, पूर्वपदं तात्पर्य्यग्राहकम् । तत्पुरुषेऽपि क्वचिदर्द्धपिप्पलीत्याद्येकदेशिनि चरमपदस्यैव सा । पिप्पल्यर्धाद्यर्थे इतरद् द्योतकम् । नीलोत्पलमित्यादिकर्मधारये तु न क्वापि सा, प्रत्येकपदशक्त्युपस्थितयोरभेदाऽन्वयसौलभ्यात् । बहुव्रीहौ तूत्तरपद एव सेति सार एव व्यक्तम् । पाणिपादमिति द्वन्द्वेऽप्युत्तरपदस्य पाणिपादसमाहारे लक्षणा, पदान्तरं द्योतकम्; तत्रैव परम्परया वादनकर्मत्वान्वयः । एवमितरेतरयोगद्वन्द्वे साहित्यापन्नप्रत्येकपदार्थयोरुत्तरपदस्यैव सा । अत एव द्विवचनाद्यर्थद्वित्वाद्यर्थत्वाद्यन्वयस्तत्र । समाहारद्वन्द्वे साहित्यं विशेस्यमत्र तु विशेषणमिति भेदः ।

यद्वा समाहारद्वन्द्वेऽपि साहित्याऽप्रतीतेर्न तत्र लक्षणा; किन्तु प्रत्येकपदशक्त्युपस्थाप्ययोरेव साक्षाद् वादनकर्मत्वाऽन्वयः । "द्वन्द्वश्च प्राणि" (पा० सू० २।४।२) इति प्रकरणातिदिष्टैकत्वसमासस्य समाहारपदव्यपदेश्यत्वम् । इतरत्र तु तद्व्यवहार औपचारिकः नान इतरेतरयोगे तत्प्रसङ्गः । एवमितरेतरयोगे द्वन्द्वेऽपि न लक्षणा । एकस्मृत्यारूढपदद्वयात् प्रत्येकशक्त्युपस्थिताऽर्थयोर्द्वित्वाऽन्वयसम्भवात् । एकक्रियाऽन्वयित्वरूपस्य एकबुद्ध्यवच्छिन्नत्वरूपस्य वा साहित्यस्य पश्चादेवाऽवगमेन पूर्वं तत्र लक्षणाग्रहाऽसम्भवाच्च । "चाऽर्थे द्वन्द्व" इत्यस्य चाऽर्थाऽन्वययोग्य इत्यर्थान्न तद्विरोधोऽपि ।

युक्तं चैतत् । द्वन्द्वत्वाऽवच्छिन्नस्य प्रधानीभूताऽर्थद्वयप्रतिपादकत्वे एव, "द्वन्द्वः सामासिकस्य च" (गीता) इत्यनेन समाससमूहमध्ये द्वन्द्वस्य विभूतितया परिगणनस्य भगवत्कृतस्य सङ्गतेः । विशिष्टशक्त्या लक्षणया वा तस्य प्रधानीभूतसमाहारप्रतिपादकत्वे तु समासान्तराद् द्वन्द्वस्याऽविशेषात्तदसङ्गतिः स्पष्टैव ।

यत्तु–भारतभावदीपे–सममेकत्राऽऽसनं समासो, विदुषां गुरुशिष्याणां वा मन्त्रार्थं कथार्थं वैकत्राऽवस्थानम् । तत्र विदितमर्थजातं सामासिकम् । चातुरर्थिकष्ठक् । तस्य "ठस्येकः" (पा० सू० ७।३।५०) इतीकादेशः । "यस्येति च" (पा० सू० ६।४।१४८) इत्यलोपः । तस्य मध्ये द्वन्द्वो रहस्योऽहम् । "द्वन्द्वं रहस्य" (पा०सू० ८।१।१५) इति सूत्रे द्वन्द्वशब्दस्य रहस्यवाचित्वं शाब्दिकप्रसिद्धमिति व्याख्यातम् ।

तत्तु विदिताऽर्थस्य चातुरर्थ्यादर्शनाद्रथन्तराऽधिकरणन्यायेन संकेतितसमासशब्दात् पारिभाषिकसमासरूपाऽर्थस्यैवोपस्थितेरुचितत्वेन प्राप्तस्य सामूहिकठकः समासशब्दात्तदनभिधानात् । द्वन्द्वं रहस्य" (पा० सू० ८।१।१५) इत्यनेन रहस्ये

व्युत्पादितद्वन्द्वस्य नित्यनपुंसकत्वेन पुंल्लिङ्गस्य तद्वाचित्वाऽसम्भवात्। समासवाचिनश्च तस्य पुंल्लिङ्गतायाः "चाऽर्थे द्वन्द्वः" (पा० सू० २।२।२९) इत्यादौ दृष्टत्वात् पारिभाषिकत्वाच्च तेन समासस्यैव ग्रहणस्यौचित्याच्च चिन्त्यम्।

न च साहित्याभानेऽन्यतरस्य क्रियाऽन्वयविवक्षायां, पश्य धवं, खदिरं छिन्धीति-वाक्यवत् पश्य धवखदिरौ छिन्धीति प्रयोगापत्तिरिति वाच्यम्। प्रत्ययार्थद्वित्वाऽवच्छिन्नधर्मिकस्यैव पदार्थाऽन्तरान्वयबोधस्याऽन्यत्र दर्शनेनाऽत्रापि तदवच्छेदेनाऽन्वयस्यैवोचितत्वात्।

न च द्वित्वाऽन्वययोग्यताऽवच्छेदकसाहित्यभानमन्तरेण द्वित्वाऽन्वय एव दुर्लभ इति वाच्यम्। योग्यताऽवच्छेदकोपस्थितेरनपेक्षणात् उपस्थितेर्योग्य एव तदन्वयात्। अत एव 'घटेन जलमानय' इत्यत्र च्छिद्रेतरस्यैव योग्यताबलेनाऽन्वयः। न तु छिद्रेतरत्वप्रकारकः शाब्दबोधः। तत्र प्रकृत्यर्थतावच्छेदकस्यैव द्वित्वान्वययोग्यतावच्छेदकत्वेऽपि क्षतिविरहाच्च। विवेचितं चेदमधिकमन्यत्र।

न च "क्षौमवसनावग्निमादधीयाताम्" इत्यत्र समुच्चयलाभो न स्यादिति वाच्यम्। "यत् कर्त्तव्यं तदनया सह" इतिवचनान्तरात्तत्सिद्धेः। यद्यपि द्वन्द्वे परस्परान्वयित्वरूपव्यपेक्षा दुर्घटा; तथापि "चाऽर्थे द्वन्द्वः" (पा० सू० २।२।२९) इति विधिसामर्थ्यादेव तत्र समासः, तदर्थस्तूक्तः। समुच्चयान्वाचययोस्त्वनभिधानादेव न द्वन्द्व इति स्पष्टं भाष्ये। यस्त्वेकस्यां क्रियायामेकरूपेणाऽन्वयित्वमेव तत्र सामर्थ्यमिति; तन्न, क्वचिदेतस्य पूर्वोक्तस्य सामर्थ्यस्याश्रयणे समर्थसूत्रे वाक्यभेदापत्तेरिति। पूर्वोक्तापत्तिमिष्टत्वेनाऽपि परिहरति—*स्वीकृतमिति*।

*चरमवर्णस्यैवेति*॥ पूर्वपूर्ववर्णाऽनुभवजन्योद्बुद्धसंस्कारसहिताऽन्तिमवर्णस्येत्यर्थः। नाऽतः केवलचरमवर्णादर्थबोधापत्तिः, अधिकमग्रे वक्ष्यते॥

अर्थ—व्यपेक्षावादी[1] (समास में अतिरिक्त शक्ति नहीं मानने वाले) नैयायिक मीमांसक आदि समास में शक्ति स्वीकार नहीं करते हैं। "राजपुरुषः" इत्यादि स्थलों में राजपद की सम्बन्धी में लक्षणा होने से ही राजसम्बन्धी से अभिन्न पुरुष यह बोध उपपन्न हो जाता है। इसलिये राजपदार्थ के एकदेश होने से उसमें शोभन आदि विशेषण का अन्वय भी नहीं होता है। इसी प्रकार "घनश्यामः" इसमें इव शब्द का प्रयोग "निष्कौशाम्बिः" इसमें क्रान्त और "गोरथः" इसमे युक्त पद के प्रयोग की आपत्ति नहीं होगी। इवादि अर्थ की प्रतीति लक्षणा से हो जाने के कारण इव क्रान्तादि शब्दों का प्रयोग करना उक्त ही अर्थ के बोधक हो जाने से असम्भव है।

इस प्रकार "विभाषा" यह अधिकार सूत्र भी आवश्यक नहीं है। लक्षणा से "राजसम्बन्ध्यभिन्नपुरुष" इस बोध की इच्छा से समास और राजसम्बन्धवान् पुरुष इस बोध की इच्छा से विग्रह वाक्य इस प्रकार इनके प्रयोगों का नियमन किया जा सकता है।

---

१. परस्परान्वययोग्यत्वरूप सामर्थ्य ही व्यपेक्षा है ऐसा समर्थ सूत्र में सामर्थ्य है।

दोषान्तर प्रसञ्जक वचन प्रतिवन्दी[1] कहा जाता है। प्रतिबन्दी वृत्ति में अतिरिक्त शक्ति का साधक नहीं हो सकता। क्योंकि अवयव की शक्ति को नहीं जानने वाले को भी पङ्कज पद से बोध होता है। एवं शक्ति ज्ञान के विना लक्षणा द्वारा भी अर्थ बोध होना सम्भव नहीं है।

इसीलिये राज आदि पदों के अर्थज्ञान के विना "राजपुरुषः" "चित्रगुः" इत्यादि स्थलों में समुदाय से अर्थ बोध नहीं होता है।

शङ्का—चित्रगु आदि स्थलों में लक्षणा द्वारा अर्थबोध होने पर भी प्राप्तोदक इत्यादि अषष्ठ्यर्थ बहुव्रीहि में लक्षणा न होने से अनेक व्युत्पत्तियों का भङ्ग प्राप्त होगा।

समाधान—"प्राप्तोदकः" इस पद में उत्तरपद की ही लक्षणा है। पूर्वपद तात्पर्य ग्राहक है। प्राप्तपद धातु और प्रत्यय से निष्पन्न होने से यौगिक है। अतः धातु और प्रत्यय के अर्थ ज्ञान के द्वारा "प्राप्त" समुदायार्थ का बोध होने से उदक की अपेक्षा "प्राप्त" इसका अर्थ बोध विलम्ब से उपस्थित होता है।

दूसरा समाधान यह है कि प्रत्ययार्थ का सन्निहित पदार्थ के साथ ही अन्वय होने का नियम है। इसके अनुरोध से भी उदक की ही लक्षणा है।

घट आदि पदों में (धातु तत्प्रत्यय से) अतिरिक्त कल्पित शक्ति की समुदाय में ही कल्पना की जाती है। विशिष्ट में ही सङ्केत माना गया है। अर्थात् कोशादि के द्वारा विशिष्ट का ही सङ्केत बोधन हुआ है। बोधकता भी प्रत्येक वर्णों में नहीं है। प्रकृत में अत्यन्त सन्निधान से प्रत्ययार्थ के अन्वय सुलभता के लिए उत्तरपद में ही लक्षणा की कल्पना की जाती है। यही घटादि की अपेक्षा प्राप्तोदक की लक्षणा में विशेष[2] है। अपने को मीमांसक माननेवालों ने घटादि पदों में भी अन्तिम अक्षर की ही वाचकता स्वीकृत की है।

हिन्दी भाष्य—समास में अतिरिक्त शक्ति नहीं स्वीकार करनेवाले नैयायिक मीमांसक आदि आचार्यों का भाव यह है—"राजपुरुषः" यहाँ राजपद की राजसम्बन्धी में लक्षणा होगी। समास होने के बाद षष्ठी विभक्ति के लुक् होने पर षष्ठी के अर्थ का जो समास शक्ति के द्वारा बोध होता है उसका इस मत में शक्ति से बोध न होकर मुख्यार्थ बाध होने के कारण लक्षणा द्वारा होगा। क्योंकि राजा और पुरुष दोनों एकात्मरूप से विवक्षित नहीं है। किन्तु राजा का पुरुष ऐसा अर्थ विवक्षित है। षष्ठी के न रहने पर उक्तार्थ किस प्रकार प्रतीत हो सकेगा। अतः लक्षणा से सम्बन्धी की प्रतीति होने से राजसम्बन्धी पुरुष यह बोध, शक्ति स्वीकार के विना भी उपपन्न हो जायगा।

पदार्थ (पदजन्य प्रतीति का मुख्य विशेष्यताश्रय) का पूर्वोक्त स्वरूप पदार्थ में ही अन्वय होता है। इसी आशय का "पदार्थः पदार्थेन अन्वेति न तु पदार्थैकदेशेन"

---

१. पङ्कज में शक्ति स्वीकार करना समास में अनिष्ट शक्ति का साधक होने से प्रतिबन्दी है।

२. घटादि पदों के अन्तिम वर्णों का प्रत्ययसान्निध्य रहने पर भी उनसे बोधकत्व का अनुभव नहीं होता अतः समुदाय की ही वाचकता मानी गई है। प्राप्तोदकादि स्थल में अवयव से भी बोधकता का अनुभव होने से उसकी लक्षणा मानते हैं। यही दोनों में अन्तर है।

यह न्याय है। लक्षणा होने पर सम्बन्धी विशेष्य होने से उसमें राजपद का अर्थ विशेषण होने के कारण पदार्थैकदेश हो गया। अतः उसमें सुन्दर आदि विशेषण का अन्वय नहीं होगा। इसी प्रकार "घनश्यामः" इसमें इव के न रहने पर भी इवार्थ सादृश्य में "निष्कौशाम्बिः" इसमें क्रान्त अर्थ में लक्षणा हो जाने से इवादि प्रयोग की आवश्यकता नहीं है। लक्षणा के बाद इवादि प्रयोग करने पर उक्तार्थ ही का कथन होने से पुनरुक्तता हो जायगी। इसी प्रकार अन्यत्र भी समास में लक्षणा द्वारा अप्रतीत अर्थों का बोध कराकर अनुपपत्ति का परिहार करना चाहिये।

"विभाषा" इस सूत्र का समास प्रकरण में अधिकार किया गया है। इससे सभी समास विकल्प से होते हैं। राज्ञः पुरुषः चित्रा गावो यस्य इत्यादि असमस्त प्रयोग और "राजपुरुषः" "चित्रगुः" इत्यादि समस्त प्रयोग दोनों प्रकार के होते हैं। समास में एकार्थीभावस्वरूप शक्ति माननेवालों के यहाँ एकार्थीभाव की विवक्षा में समास व्यपेक्षा की विवक्षा में विग्रहवाक्य हो जाने से विभाषा का अधिकार नहीं मानना पड़ता है। यह कहना ठीक नहीं है। षष्ठी के अर्थ सम्बन्ध में [1]राजपदार्थ का निरूपितत्व सम्बन्ध से अन्वय होने से राजनिरूपितस्वत्ववान् पुरुषः इस प्रकार के बोध विवक्षा में "राज्ञः पुरुषः" राजसम्बन्धी पुरुषः इस विवक्षा में "राजपुरुषः" ऐसा प्रयोगद्वय के नियम मान लेने से हमारे मत में भी "विभाषा" सूत्र की आववश्यकता नहीं है।

यद्यपि "नीलम् उत्पलम्" और "नीलोत्पलम्" इत्यादि कर्मधारय स्थलों में समान बोध होने से अर्थभेद के द्वारा समस्त असमस्त द्विविध प्रयोग की उपपत्ति नहीं हो सकती। अतः "विभाषा" इस सूत्र का अधिकार इस मत में आवश्यक है, तथापि नीलपदोत्तर विभक्ति का अभेद अर्थ है अभेद का आश्रयता सम्बन्ध से उत्तर पदार्थ उत्पल आदि में अन्वय विवक्षा में नीलमुत्पलम् एवं नील पद की अभेद में लक्षणा द्वारा तादृश अर्थ के बोध की विवक्षा में समस्त का प्रयोग उपपन्न हो जाने से इस मत में भी "विभाषा" सूत्र की आवश्यकता नहीं है।

शङ्का—पङ्कज शब्द में जिस प्रकार समुदाय में शक्ति मानते हैं उसी प्रकार समासादि स्थल में भी शक्ति क्यों नहीं मानते।

समाधान—पङ्कज इसमें पङ्क और ज के अर्थ ज्ञान के विना भी समुदाय से पद्मत्व रूप से पद्म के बोध के लिये शक्ति आवश्यक होने पर भी समासस्थल में अवयवार्थ ज्ञान के विना समुदाय से अर्थबोध नहीं होता। अतः दोनों स्थलो में अन्तर होने से पङ्कज के समान राजपुरुष आदि में शक्ति की आवश्यकता नहीं है। शक्यार्थ बोध होने के बाद ही उसका बाध-ज्ञान हो सकता है और तभी लक्षणा हो सकेगी। पङ्कज पद में अवयवार्थ ज्ञान नहीं है फिर भी समुदाय से बोध होता है। अतः लक्षणा न होने से उसमें शक्ति मानते हैं।

शङ्का—"चित्रगुः" इत्यादि स्थल में स्वत्वनिरूपित स्वामित्वरूप साक्षात् सम्बन्ध की अपेक्षा चित्र पदार्थ गुण होने से स्वसमवायिनिष्ठस्वत्वनिरूपितस्वामित्वरूप आश्रयघटित परम्परासम्बन्ध को लक्षणा के स्वरूप कहने में गौरव है। अतः [1]गोपद की ही स्वामी में

---

१. पदार्थान्तरनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धित्वावच्छिन्नं प्रति मुख्यविशेष्यतासबम्बन्धेन उपस्थितिः कारणम् एतन्मूलकोऽसौ न्यायः।

लक्षणा होने पर भी षष्ठ्यर्थ से भिन्न अर्थ में "प्राप्तोदक" इत्यादि बहुव्रीहि में पूर्व पद की लक्षणा अथवा उत्तर पद की लक्षणा है इसमें एकतर पक्ष का निश्चायक प्रमाण नहीं होने से किसकी लक्षणा और किसकी तात्पर्यग्राहकता है यह अनिश्चित है।

ऐसी दशा में "प्राप्तोदकः[1]" इसमें कर्ता अर्थ में विहित प्राप्तघटक क्त प्रत्यय की कर्म में लक्षणा होने से उदककर्तृकप्राप्तिकर्म इस प्रकार का बोध हो जायगा यदि ऐसा कहें तो समानाधिकरण (समान विभक्तिक) नामार्थ का अभेद सम्बन्ध से अन्वय होता है इस व्युत्पत्ति का भङ्ग हो जायगा। उदक का कर्तृता सम्बन्ध से प्राप्ति में अन्वय न होकर अभेद से प्राप्तार्थ में अन्वय होना चाहिये। धात्वर्थ में नामार्थ का साक्षात् भेद सम्बन्ध से अन्वय नहीं होता इस नियम का भी कर्तृता सम्बन्ध से प्राप्ति में अन्वय करने पर भङ्ग हो जाता है। अनेक नियमों के भङ्ग की आपत्ति को बहुव्युत्पति-भञ्जन शब्द से कहा गया है।

समाधान—प्राप्तपद प्र उपसर्गपूर्वक आप् धातु के उत्तर क्त प्रत्यय होने से सिद्ध हुआ है। अतः यह यौगिक होने से प्रकृति प्रत्ययों के अर्थों के अनुसन्धान से इनके अर्थों की उपस्थिति विलम्ब से होती है। उदक पद से अर्थोपस्थिति में प्रकृति प्रत्ययार्थ के अनुसन्धान के विना ही जल अर्थ की उपस्थिति होती है। इसलिये विलम्बोपस्थितिवाले प्राप्त पद की लक्षणा न होकर शीघ्र अर्थोपस्थापक उदक पद की ही लक्षणा[2] होने से अर्थबोध हो जायगा। अतः कोई दोष नहीं है।

दूसरा उत्तर यह है कि प्रत्ययार्थ का सन्निहित (समीपस्थ) प्रकृति के अर्थ के साथ अन्वय होता है। ऐसा न मानने पर "राजपुरुषमानय" इससे राजा का आनयन भी हो सकेगा। ऐसा होता नहीं है। अतः पूर्वोक्त नियम मानना आवश्यक है। प्रकृत में उदक की लक्षणा होने पर सन्निहित प्रकृत्यर्थ में विभक्त्यर्थ का अन्वय व्युत्पत्ति के अनुसार उचित होगा। प्राप्त की लक्षणा मानने पर उदक पद से व्यवधान के कारण सन्निहित पदार्थ में अन्वय नहीं होने से उक्त व्युत्पत्ति (नियम) का भङ्ग प्राप्त होगा जो कि अनिष्ट है।

घटादि पद की शक्ति का ग्रहण कोशादि से अवयव में नहीं होता और बोध भी प्रत्येक अक्षर से नहीं होता। अतः समुदाय में ही शक्ति वहाँ मानी जाती है। समास में ऐसा नहीं है। यही दोनों में विशेष है।

**अत्रोच्यते—समासे शक्त्यस्वीकारे तस्य प्रातिपदिकसंज्ञादिकं न स्यात्। अर्थवत्त्वाभावाद्, "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" (पा० सू० १।२।४५) इत्यस्याप्रवृत्तेः। न च "कृत्तद्धितसमासाश्च" (पा० सू० १।२।४६) इत्यत्र समासग्रहणात् सा। तस्य नियमार्थताया भाष्यसिद्धाया वैयाकरणभूषणे स्पष्टं प्रतिपादितत्वात्। समासवाक्ये शक्त्यभावेन शक्यसम्बन्धरूपलक्षणाया अप्यसम्भवेन लाक्षणिकार्थवत्त्वस्याप्यसम्भवात्।**

---

१. प्राप्तमुदकं यं ग्रामं स प्राप्तोदको ग्रामः। यहाँ द्वितीया के अर्थ में बहुव्रीहि है।

२. शीघ्रोपस्थापकत्व रूप विनिगमक के द्वारा उदक पद की ही लक्षणा मानी गई।

**अथ "तिप्तस्झी"त्यारभ्य "ङ्योस्सुप्" इति तिप्प्रत्याहारो भाष्यसिद्धस्तमादाय "अतिप्प्रातिपदिकम्" इत्येव सूत्र्यताम्, कृतमर्थवदादिसूत्रद्वयेन। समासग्रहणञ्च नियमार्थमस्तु। तथाच अतिप्—तिबन्तभिन्नं प्रातिपदिकमित्यर्थात् समासस्यापि सा स्यादितिचेत्? तथापि प्रत्येकं वर्णेषु संज्ञावारणायाऽर्थवत्त्वाऽऽवश्यकत्वेन समासाव्याप्तितादवस्थ्यमेव। तथाच प्रातिपदिकसंज्ञारूपं कार्य्यमेवार्थवत्त्वमनुमापयति धूम इव वह्निम्।**

व्यपेक्षायां सामर्थ्ये समास एकोऽसङ्गृहीतो भवति" इति भाष्याशयं प्रकाशयन्नैयायिकमतं दूषयति—*अत्रोच्यत इति*। संज्ञादीत्यादिना पदत्वादिपरिग्रहः॥ *भाष्यसिद्धाया इति*। "समासग्रहणमर्थवत्समुदायानां नियमार्थम्" इति भाष्यसिद्धाया इत्यर्थः।

*स्पष्टमिति*। वाक्यस्याऽप्यर्थवत्त्वेन प्रातिपदिकत्वप्रसक्तौ तद्व्यावृत्तये वचनारम्भमाशङ्क्य नियमार्थेन समासग्रहणेन समाहितम्। समासे शक्त्यनभ्युपगमे तु तस्य वृत्त्यार्थबोधकत्वरूपाऽर्थवत्त्वाऽभावेनाऽप्राप्तसंज्ञाविषये तस्याऽऽवश्यकतया नियमार्थत्वव्याघातः स्पष्ट एव। तस्मादेतद्भाष्यमपि समासे विशिष्टशक्तौ मानमिति तत्रोक्तत्वादित्यर्थः॥

न चाऽर्थवत्पदसामर्थ्येनाऽर्थवाचकपदघटितेऽपि प्रातिपदिकसंज्ञासिद्धिः। अन्यथा धात्वादिपर्युदासेनैवाऽर्थवत्त्वे लब्धे तदुपादानवैयर्थ्यं स्पष्टमेव। 'दशदाडिमानि' इत्याद्यनर्थकसमुदायस्य तु नियमेन वारणीयत्वादिति वाच्यम्। अर्थवद्ग्रहणस्योत्तरार्थतायाः सिद्धान्तसिद्धत्वेन तत्सामर्थ्याऽभावाद्, "अर्थवद्ग्रहणं संज्ञिव्यपदेशार्थम्" इति भाष्येणार्थवत्त्वेन सादृश्यबोधनार्थं तदुपयोगदर्शनाच्चेति विशिष्टशक्त्यभ्युपगममन्तरेण समासे प्रातिपदिकसंज्ञादौर्भिक्ष्यमेवेतिभावः।

ननु चित्रगुरित्यादौ विशिष्टे शक्त्यस्वीकारेऽपि नाऽर्थवत्त्वनिबन्धनप्रातिपदिकसंज्ञाऽनुपपत्तिः। तथाहि—न शक्यसम्बन्धो लक्षणाः, 'गभीरायां नद्यां घोषः' इत्यादावसम्भवात्। तत्र तावन्न गभीरपदं तीरलक्षकं नद्यामित्यस्याऽनन्वयापत्तेः, न हि तीरं नदी, अत एव नदीपदमपि न तथा। गभीरपदाऽर्थस्यानन्वयापत्तेः। न च पदद्वये प्रत्येकं सा। विशिष्टनदीतीराऽभानप्रसङ्गात्। न च नदीपदेनैव गभीरनदीतीरं लक्ष्यते, गभीरादिपदं तात्पर्य्यग्राहकमिति वाच्यम्। गभीरपस्य तात्पर्यग्राहकत्वमुत नदीपदस्येति विनिगमनाविरहात्।

नच नदीपदस्य द्रव्यवाचकतया साक्षात्सम्बन्ध एव लक्षणायां विनिगमक इति वाच्यम्। गभीरपदस्याऽपि नित्यं गुणिवाचकतया तदर्थस्याऽपि साक्षात्सम्बन्धाऽविशेषात्। तस्मात् पदद्वयलक्षणायां गौरवात् समुदाय एव साऽङ्गीकार्य्या। अत एवाऽर्थवादवाक्यानां प्राशस्त्ये लक्षणेति सङ्गच्छते। किन्तु स्वबोध्यरूपैव सा। अस्ति च गभीरायां नद्यामित्यत्र वाक्यज्ञाप्या गभीराभिन्ननदी तत्सम्बन्धस्तीर इति। एवञ्च चित्रगुरित्यादिसमुदायस्य लक्षणया चित्राऽभिन्नगोस्वामिरूपार्थबोधकत्व-

रूपाऽर्थवत्त्वात् प्रातिपदिकसंज्ञा नाऽनुपपन्नेत्यत आह—*समासवाक्य इति*। वाक्य इत्युक्त्या क्वचित्तत्सम्भवेऽपि सर्वत्र राजपुरुषादिसमासे तदसम्भवं सूचयति।

अयमाशयः—स्वज्ञाप्यसम्बन्धस्य न लक्षणात्वम्, अपभ्रंशेऽपि तत्प्रसङ्गात्। किञ्च स्वज्ञाप्य इत्यस्य स्वनिष्ठज्ञापकतानिरूपकज्ञाप्यतावदर्थसम्बन्ध इत्यर्थो वाच्यः। तत्र ज्ञापकत्वं वृत्त्या बोधकत्वमुत ज्ञानजनकज्ञानविषयत्वमात्रम्। नाद्यः। वाक्ये लक्षणाऽभावप्रसङ्गात्। तदर्थस्य गभीराभिन्नस्य वृत्त्यबोध्यत्वात्। नान्त्यः। प्रत्येकं वर्णानामर्थवत्त्वापत्त्या विभक्त्यापत्तेरिति स्वशक्यसम्बन्धो लक्षणेत्येवाङ्गीकरणीयम्। तथा च समासे तदसम्भवेन प्रातिपदिकसंज्ञाऽनुपपत्तिस्तदवस्थेति तदर्थं विशिष्टशक्तिस्वीकार आवश्यक इति।

*भाष्यसिद्ध इति*। "तिवेकादेशे प्रतिषेधोऽन्तवत्त्वात्" इत्यादेस्तत्राऽभिधानादिति भावः। *सूत्र्यतामिति*। "अतिप्समासश्च प्रातिपदिकम्" इत्येव सूत्र्यतामित्यर्थः तथा च तिङ्सुबन्तभिन्नं यत्तत्प्रातिपदिकमित्यर्थेन समासस्य प्रातिपदिकत्वालाभादतिरिच्यमानं समासग्रहणं नियमार्थमस्त्वित्यर्थः। *प्रत्येकं वर्णेष्विति*। वर्णानामानर्थक्यपक्षे प्रातिपदिकसंज्ञायां प्रकाशनीयाऽर्थाभावादविशेषेण प्रतिवर्णं विभक्तिसम्भवादव्ययादिवेति भावः। *अर्थवत्त्वेनेति* अर्थवद्ग्रहणस्याऽवश्यकत्वेनेत्यर्थः।

न चाऽर्थवत्समुदायघटकवर्णानामर्थवत्त्वपक्षस्याऽपि भाष्ये दर्शनात्तद्ग्रहणेऽपि विभक्तिर्दुर्वारेति वाच्यम्॥ तत्पक्षेऽपि "सङ्घातस्यैकार्थ्यात् सुबभावो वर्णात्" इति भाष्यात्तन्त्रेणैकैव विभक्तिः समुदायाऽवयवार्थगतमेकत्वं बोधयेत्। एकमेव तदेकत्वं तच्चैकेन सुपा प्रत्यायितमिति बोधनीयाऽभावाद् विभक्तेः प्रत्येकवर्णादनुत्पत्तेरिति भावः।

ननु समासवाक्यस्याऽर्थवत्वाऽभावेऽपि न प्रातिपदिकसंज्ञाऽनुपपत्तिः। "कृत्तद्धित" (पा० सू० १।४।४६) इति सूत्रेणैव तत्सम्भवात्। सम्भवति विधित्वे नियमकल्पनाया अन्याय्यत्वात्। समासग्रहणमेव च समास एकार्थीभावाभावे वा मानम्। वाक्यस्य तु न पूर्वसूत्रेण तत्प्रसक्तिरर्थवत्त्वाऽभावात्। संसर्गस्याऽशक्यत्वेऽप्याकाङ्क्षादिवशादेव तद्भानस्य सूपपादत्वात्। एवं प्रकृतिप्रत्ययसमुदायस्याऽप्यनर्थकत्वेनाऽप्राप्तसंज्ञाविधानार्थं कृत्तद्धितग्रहणमिति समस्तस्यैव सूत्रस्य विधायकत्वम्। आद्यसूत्रस्य तु अव्युत्पन्नसाधुशब्दस्वरूपमेव, न तु बहुपटुरित्यादिसमुदायोऽप्युत्तरपदलाक्षणिकतादृशसमुदायस्याऽर्थवत्त्वाऽभावात्। कृदन्तानां केषाञ्चिदर्थवत्त्वेऽपि धातुत्वात्; एवं तद्धितानामपि इः इयानित्यादीनां प्रत्ययत्वेन तादृशसमुदायस्य त्वनर्थकत्वेन पूर्वसूत्राऽविषयत्वेन तत्र तत्र प्रातिपदिकत्वविधानार्थं सूत्रकारेण द्वितीयं सूत्रं प्रणीतम्। अत एवाऽत्रार्थवदिति नाऽनुवर्त्ततेऽसम्भवात्प्रयोजनाभावाच्च। तत्र कृच्छब्देन प्रत्ययपरिभाषया तदन्तग्रहणं संज्ञाविधावित्यस्य प्रायिकत्वात्। डतरादि-

त्केवलकृतामप्रयोगेण तदुपादानवैयर्थ्याच्च । यद्यप्युक्तयुक्त्या तद्धितपदस्यापि तद्धितान्तपरतैव लभ्यते; तथापि बहुपट्वादिसङ्ग्रहाय तत्स्वाव्यवहितोत्तरत्व-सम्बन्धेन तद्धितविशिष्टप्रकृतिघटितसमुदायतद्धितान्तान्यतरपरतया व्याख्येयम् ।

प्रकृतित्वं च प्रत्ययविधानावधित्वम् । इः इत्यानित्यादौ तु प्रत्ययस्यैव तदन्तत्वान्न दोषः । पचतक्यादिसमुदायान्तर्गततद्धितप्रकृतेर्निरुक्तद्धितवैशिष्ट्याभावान्न तत्राऽतिप्रसङ्गः । कृद्ग्रहणपरिभाषाया अनन्तरग्रहणज्ञापिताया असार्वत्रिकत्वाच्च, न मूलकेनोपदंशमित्यादावतिप्रसक्तिः । एवं समासग्रहणेनाप्यप्राप्तप्रातिपदिकसंज्ञाविधानाद्राजपुरुष इत्यादिसमुदायात् स्वाद्युत्पत्तिः सुलभेति तत्र विशिष्टशक्त्यभ्युपगमो निष्प्रमाणकः । वाक्यस्य सा नेत्युक्तमेव । तत्र कोशादिना शक्त्यपरिच्छेदात् ।

यत्र तु कोशादिकं परिच्छेदकं तत्र समासे पङ्कजादौ तां न निवारयामः । एवञ्च वाक्यस्याऽर्थवत्त्वाऽभावेन प्रातिपदिकसंज्ञाऽप्रसक्तेस्तदप्रवृत्तिरूपफलाऽभावेन समासग्रहणस्य नियामार्थत्ववर्णनमसाम्प्रतम् । भाष्ये तस्य नियमपरतया वर्णनं तु संसर्गस्य शक्यत्वमित्येकदेशिमतमनुसृत्यैवेत्यरुचेराह—*किञ्चैवमिति* ।

अर्थ—पूर्वोक्त दोषों का समाधान करते हैं। समास में शक्ति के अस्वीकार करने पर समास को प्रातिपदिक संज्ञा नहीं होगी। इसी प्रकार सुप् का लुक् नहीं होगा। अर्थवान् न होने से "अर्थवदधातुरप्रत्ययः प्रातिपदिकम्" इस सूत्र की प्रवृत्ति नहीं होगी।

शङ्का—',कृत्तद्धितसमासाश्च" इस सूत्र में समासग्रहण होने से प्रातिपदिक संज्ञा हो जायगी।

समाधानः—"कृत्तद्धित" इस सूत्र में समासग्रहण नियमार्थक है जो कि भाष्य सम्मत है। इसका स्पष्ट निरूपण वैयाकरणभूषण में किया गया है।

समास में शक्ति नहीं मानने से शक्यसम्बन्धरूप लक्षणा का भी सम्भव नहीं है। अतः लाक्षणिक अर्थवत्ता भी असम्भव है।

शङ्काः—"तिप्तस् झि" यहाँ से लेकर "ङ्योः सुप्" यहाँ तक तिप् प्रत्याहार मानकर "अतिप् प्रातिपदिकम्" ऐसा ही सूत्र "अर्थवदधातुः" तथा "कृत्तद्धित" इतने अंश के स्थान में किया जाय। (समास को प्रातिपदिक अतिप् सूत्र से हो जाने से) समास को प्रातिपदिक का विधान व्यर्थ होने से नियमार्थक हो जायगा। सुबन्त तिङन्त भिन्न को प्रातिपदिक संज्ञा का विधान होने से समास को भी प्रातिपदिक संज्ञा की प्राप्ति "अतिप्" इस सूत्र से है।

समाधान :—घटादि पद में प्रत्येक वर्ण (सुबन्त और तिङन्त भिन्न होने से) को प्रातिपदिक संज्ञा प्राप्त होगी। इसके वारण के लिये अर्थवत्त्व का सन्निवेश करने पर समास अर्थवान् न होने से प्रातिपदिक संज्ञा की अप्राप्ति के कारण अव्याप्ति उसी प्रकार बनी हुई है। इस प्रकार प्रातिपदिक संज्ञा रूप कार्य ही अर्थवत्त्व (शक्तिमत्त्वरूप) का अनुमान कराता है। जैसे धूम वह्नि का अनुमापक होता है।

हिन्दीभाष्य—समास में शक्ति स्वीकार करने से ही वृत्तिमत्त्वरूप अर्थवत्त्व समास में रहने के कारण "अर्थवत्" सूत्र से प्रातिपदिक संज्ञा की सिद्धि हो जाने से पुनः उस स्थल में प्रातिपदिक संज्ञा विधान के लिये "कृत्तद्धितसमासाश्च" इस सूत्र में समास ग्रहण

व्यर्थ होकर अर्थवत् समुदाय को प्रातिपदिक संज्ञा यदि हो तो समास को ही हो अन्य को नहीं ऐसा नियम करता है। इस नियम में "देवदत्त दण्डेन गामम्याज" इस प्रकार के वाक्यों के अर्थवान् होने से "अर्थवत्" सूत्र के द्वारा प्रातिपदिक संज्ञा प्राप्त होती है। उसकी व्यावृत्ति, वाक्यमात्र अर्थवानों का अर्थवान् समुदाय होने से पूर्वोक्त समास कृत नियम से हो जाती है।

यद्यपि समास और वाक्य को प्रातिपदिक संज्ञा सदा प्राप्त रहने से प्रातिपदिक संज्ञा की प्राप्ति पाक्षिक नहीं है। अतः इसमें "तत्र चान्यत्र च प्राप्तौ" एवं रूप परिसंख्या[1] होनी चाहिये। नियम विधि का व्यवहार असङ्गत है। तथापि अन्य की निवृत्तिरूप नियम के सादृश्य से व्याकरण में परिसंख्या का नियमपद से व्यवहार परम्परा प्राप्त होने के कारण असङ्गत नहीं है।

शङ्काः—"असूर्यंपश्या=" सूर्यं न पश्यन्ति" यहाँ सूर्य का कर्मतया दृशिक्रिया में अन्वय होने से नञ् के साथ अन्वय नहीं होने से समास असमर्थ समास माना जाता है। अतः एकार्थीभावरूप शक्ति नहीं होने से प्रातिपदिक संज्ञा अर्थवत्सूत्र से प्राप्त नहीं है। इसके लिये समासग्रहण आवश्यक होने से व्यर्थ नहीं है। इस प्रकार नियमार्थक नहीं हो सकता। इसी प्रकार शशश्रृङ्गम्=खरहे की सींग खरहे को सीङ्ग न होने के कारण यह पद अनर्थक है। अतः अर्थवत्सूत्र से प्रातिपदिक संज्ञा अप्राप्त है। उसके विधान के लिये समास ग्रहण चरितार्थ होने से व्यर्थ नहीं है।

समाधानः—सूर्यकर्मकदर्शनाभाव इस अर्थ में "असूर्यंपश्य" इस पद की शक्ति कल्पना होने से अर्थवत्त्व सुलभ है। असमर्थ समास स्थल में भी नञ् और सूर्य दोनों

---

१. विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति।
तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते॥

अत्यन्त अप्राप्त अर्थ का बोधक वाक्य, विधि है। एक पक्ष में प्राप्त अर्थ (विषय) को सार्वकालिक नियमन करनेवाला नियमविधि है। दो अर्थों (विषयों) की प्राप्ति एक समय में हो उनमें एक की व्यावृत्ति करनेवाला वाक्य परिसंख्या विधि है। उदाहरण क्रमशः—"स्वर्गकामो यजेत"—स्वर्ग की इच्छा करनेवाला याग करे। इस वाक्य के न रहने पर याग की प्राप्ति किसी प्रकार से नहीं थी। अतः अपूर्व बोधक होने से विधि है। "व्रीहीन् अवहन्ति"—धान को कूटना चाहिये यहाँ धान का कूटना चावल के लिये बताया गया है। चावल की, कूटने और नख से छीलने से भी प्राप्ति हो सकती है। अतः यह वाक्य नियामक है कि कूटकर ही निष्पन्न चावल का याग में उपयोग पुण्यजनक है नखविदलन के द्वारा निष्पन्न चावल नहीं। यहाँ कभी अवघात और कभी नख से छीलना प्राप्त होने से अवघात की प्राप्ति पाक्षिक है। अतः अवघात से ही तण्डुल निष्पन्न करना रूप नियम होने से यह नियम विधि है। "पञ्च पञ्चनखाः भक्ष्याः"=पांच पञ्चनख का भक्षण करना चाहिये। पञ्चनख का भक्षण क्षुधा निवृत्ति के लिये रागतः प्राप्त है। इसी प्रकार अन्यों का भक्षण भी तदर्थ प्राप्त है। उनमें पञ्चनख भिन्न का भक्षण के व्यावर्तन के कारण इसको परिसंख्या कहते हैं।

पदों का क्रिया में सम्बन्ध होने से क्रिया के द्वारा एकार्थीभाव होता है। "असूर्य-ललाटयोर्दृशितपोः" इस सूत्र से असूर्य उपपद रहने पर दृश धातुसे खश् प्रत्यय का विधान तब तक उपपन्न नहीं हो सकता जब तक असूर्य को प्रातिपदिक संज्ञा द्वारा विभक्ति की उत्पत्ति और तदनन्तर पद संज्ञा न हो जाय। समीपोच्चरित पद को उपपद कहते हैं। अतः इससे वहाँ प्रातिपदिक संज्ञा की कल्पना होती है। "शशश्रृङ्गम्" यहाँ शश और श्रृङ्ग का क्रमशः खरहा और सींग अर्थ प्रसिद्ध ही है। शश के साथ श्रृङ्ग का सम्बन्ध आरोपित मानकर शक्ति कल्पना होने से प्रातिपदिक संज्ञा सिद्ध है। अथवा शशश्रृङ्ग लोक में अप्रसिद्ध होने पर भी बौद्धार्थ मानकर उसको प्रातिपदिक संज्ञा सिद्ध है। अतः समासग्रहण नियमार्थक है।

कारणान्तर भी है—'अर्थवदधातुः' इस सूत्र से अर्थवत् पद की अनुवृत्ति "कृत्तद्धितसमासाश्च" इस सूत्र में होती है। इसलिये अर्थवान् के साथ अन्वय होने के लिए कृत् तथा तद्धित में तदन्तविधि मानी जाती है। कृदन्त और तद्धितान्त जो अर्थवान्। इसी प्रयार समास के साथ भी अर्थवान् का सम्बन्ध होगा। "धनिनौ चैत्रमैत्रौ" यह प्रयोग एक के धनी होने पर नहीं होता किन्तु दोनों के धनवान् होने पर ही वैसा समस्त प्रयोग किया जाता है। उसी प्रकार अर्थवत्त्व का अन्वय द्वन्द्व समास घटक समास के साथ नहीं हो यह सम्भव नहीं है। अर्थवत्त्व का सम्बन्ध समास के साथ भी होने से समास में शक्ति मानना आवश्यक है। शक्ति के विना वृत्तिमत्त्वरूप अर्थवत्त्व समास में दुर्लभ है। यह भाव है।

शङ्का—चित्रगुः प्राप्तोदकः इत्यादि सर्वत्र समास स्थल में अतिरिक्त शक्ति के स्वीकार न करने पर भी प्रातिपदिक संज्ञा की अनुपपत्ति नहीं है। वृत्तिमत्त्व रूप अर्थवत्त्व में वृत्ति शब्द शक्ति लक्षणा के अन्यतर का बोधक है। लक्षणा का स्वरूप शक्यसम्बन्ध अर्थात् शक्य अर्थ के सम्बन्धरूप नहीं है किन्तु स्वबोध्यसम्बन्धरूप है। ऐसा न मानने पर "गभीरायां नद्यां घोषः" यहाँ यदि नदी पद की नदी तीर में लक्षणा होगी तो गभीर पदार्थ का तीर में अन्वय होने से नदी में गभीरता का बोध नहीं होगा। यदि गभीर पद की लक्षणा होगी तो गभीर तीर का बोध होने से नदी का अन्वय गभीर के साथ नहीं होगा। एक पद की लक्षणा और अन्य पद तात्पर्य ग्राहक मानने पर एकतर साधक प्रमाण नहीं होने से नदी पद की गभीराभिन्न नदी तीर में या गभीर पद की तादृश में लक्षणा गभीरपद तात्पर्य ग्राहक या नदी पद तात्पर्यग्राहक इसमें विनिगमक प्रमाण नहीं होने से लक्षणा नहीं होगी। नदी और गभीर पद दोनों पद द्रव्यवाचक हैं। गभीर पद से भी गुणी का बोध होता है। अतः पदद्वय की पृथक् पृथक् लक्षणा सम्भव नहीं है। किन्तु गभीरायां नद्याम् इस समुदाय की गभीराभिन्न नदी तीर में लक्षणा मानते हैं। समुदाय का शक्य अर्थ (शक्ति न होने से) नहीं है। अतः समुदाय से बोध्य का सम्बन्ध ही लक्षणा मानते हैं। यहाँ समुदाय का बोध्य जो अर्थ गभीरा भिन्न नदी इसका सामीप्य रूप सम्बन्ध तीर के साथ होने से लक्षणा की उपपत्ति हो जायगी। इसी प्रकार बहुव्रीहि आदि समास स्थल में भी चित्राभिन्न गोस्वामी उदक कर्तृक प्राप्ति कर्म इत्यादि अर्थ में समुदाय की लक्षणा होने से लाक्षणिक अर्थवत्त्व के द्वारा प्रातिपदिक संज्ञा हो जायगी,

समाधान—स्वबोध्यसम्बन्ध लक्षणा नहीं है। अन्यथा अपभ्रंश (अशुद्ध शब्द) शब्दों का भी बोध्य अर्थ होने से उनकी भी लक्षणा हो जायगी।

दूसरा दोष है—स्ववोध्य से वृत्ति द्वारा बोधक से बोध्य (ज्ञाप्य) अथवा किसी प्रकार से बोधक द्वारा ज्ञान का विषय यदि पहला पक्ष मान लें तो समुदाय की लक्षणा नहीं हो सकती समुदाय में शक्ति नहीं है। द्वितीय पक्ष में घटादि पद के प्रति वर्ण भी बोधक है। प्रतिवर्ण की सहायता से ही समुदाय से अर्थ का बोध होता हैं। इस प्रकार प्रतिवर्ण अर्थवान् होने से प्रातिपदिक संज्ञा होने के कारण विभक्ति की उत्पत्ति हो जायगी। अतः शक्य सम्बन्धरूपा ही लक्षणा है। शक्ति नहीं मानने पर समुदाय की लक्षणा नहीं हो सकती यह तात्पर्य है। विशेष शङ्का समाधान अन्यत्र देखिये।

सूत्र के भेद से समास की शक्ति का खण्डन "अथ" इत्यादि से प्रस्तुत करते हैं। "तिप्तस् झि" इस सूत्र के ति शब्द से सुप् का विधान करनेवाले "स्वौजसमौट्"–"ड्योः सुप्" इस सूत्र के अन्तिम पकार से तिप् प्रत्याहार बना है। इस प्रत्याहार में जिनका पाठ नहीं है उनको अतिप् पद से कहा गया है और उन्हीं को प्रातिपदिक संज्ञा का विधान है। इस प्रकार "अर्थवदधातुः" कृत्तद्धित" इन सूत्रों की आवश्यकता नहीं है। समास स्थल में भी प्रातिपदिक संज्ञा "अतिप् प्रातिपदिकम्" इससे ही हो जाने के कारण समासग्रहण नियमार्थक भी हो जायगा। अर्थवत्त्व प्रातिपदिक संज्ञा का नियामक न होने से उसकी समास में चर्चा अनावश्यक है।

समाधान—सुबन्त तिङन्त भिन्न को प्रातिपदिक संज्ञा होती है—इस अर्थवाले "अतिप् प्रातिपदिकम्" इस सूत्र से धनवन आदि में प्रत्येक अक्षर को प्रातिपदिक संज्ञा हो जायगी। प्रातिपदिक संज्ञा होने से धनवन में प्रत्येक वर्ण से विभक्ति की उत्पत्ति होने से पदान्त मानकर "नलोपः" इस सूत्र से नकार लोप तथा सूत्रान्तर से जश्त्व आदि की आपत्ति होगी उसके वारण के लिये अर्थवान् का निवेश करना सूत्र में आवश्यक होगा। इस प्रकार समास में शक्ति न मानने पर अर्थवत्त्वाभाव से अप्राप्त प्रातिपदिक संज्ञा की प्राप्ति के लिये समासग्रहण आवश्यक होने के कारण विध्यर्थक होगा नियमार्थक नहीं हो सकता। समास में अव्याप्ति से तात्पर्य है। समासरूपलक्ष्य में प्रातिपदिक संज्ञा अर्थवत्त्वाभाव से अप्राप्त होगी। लक्ष्य में लक्षण की प्राप्ति न होना ही अव्याप्ति है।

धूम की व्याप्ति वह्नि के साथ है। धूम जहाँ जहाँ रहता है वहाँ अग्नि भी रहती है। अतः धूम द्वारा वह्नि का अनुमान होता है। उसी प्रकार समास में प्रातिपदिक संज्ञा तत्प्रयुक्त विभक्ति के देखने से यह निश्चय होता है कि उसका कारण अर्थवत्त्व समास में अवश्य है। अर्थवत्त्व शक्तिमत्त्व एक ही है। प्राचीनमत में वृत्तिमत्त्वरूप अर्थवत्त्व माना गया है।

किञ्चैवं चित्रगुमानयेत्यादौ कर्मत्वाद्यनन्वयापत्तिः, प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधजनकत्वव्युत्पत्तेः। विशिष्टोत्तरमेव प्रत्ययोत्पत्तेर्विशिष्टस्यैव प्रकृतित्वात्।

यत्तु सन्निहितपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरेव कल्प्यत इति; तन्न। 'उपकुम्भम्', 'अर्द्धपिप्पली'त्यादौ पूर्वपदार्थे विभक्त्यर्थान्वयेन व्यभिचारात्।

नच तत्रापि सन्निधानमेव। आनुशासनिकसन्निधेर्विवक्षितत्वात्।

तथाच यत्पदोत्तरं याऽनुशिष्टा सा तदर्थगतं स्वार्थं बोधयति। समासे समस्यमानपदोत्तरमेवानुशासनमिति वाच्यम्। अर्थवत्सूत्रेण विशिष्टस्यैव प्रातिपदिकत्वेन विशिष्टोत्तरमेव विभक्त्यऽनुशासनात्।

अथ प्रकृतित्वाश्रये विभक्त्यर्थान्वय इत्येव कल्प्यत इति चेत्तर्हि, 'पङ्कजमानय', 'दण्डिनं पश्य', शूलिनं पूजय' इत्यादौ पङ्कदण्डशूले-ष्वानयनदर्शनपूजनादेरन्वयप्रसङ्गात्। 'अघटमानय' इत्यत्र घटेऽप्यानयना-न्वयापत्तेश्च।

नच दण्डादीनां विशेषणतया न तत्रानयनाद्यन्वयः। 'पाकान्नीलः' 'धर्मात् सुखी' इत्यादौ पाकधर्मादिजन्यताया रूपसुखादावनन्वयप्रसङ्गात्। यच्च प्रकृत्यर्थत्वं तज्जन्यज्ञानविषयत्वमात्रम्, तच्चात्राविरुद्धमिति, तन्न। घटं पश्येत्यत्र घटपदात् समवायेनोपस्थिताकाशवारणाय वृत्त्या प्रकृत्यर्थत्व-स्यावश्यकत्वात्।

अथ प्रत्ययप्राग्वर्त्तिपदजन्योपस्थितिविशेष्यत्वं प्रकृत्यर्थत्वमिति चेत्? न। 'गामानयति कृष्णो दण्डेन' इत्यत्र कृष्णे तृतीयार्थान्वयप्रसङ्गात्। अथ समस्यमानपदार्थगतस्वार्थबोधकत्वं समासोत्तरविभक्तेः कल्प्यत इति चेत्? न। अक्लृप्तकल्पनां क्लृप्तव्युत्पत्तित्यागञ्चापेक्ष्य समुदाय-शक्तिकल्पनस्यैव युक्तत्वादिति दिक्।

एवं समासे विशिष्टशक्त्यस्वीकारे कर्मत्वाद्यनन्वयापत्तिरित्यस्य गवादिपदार्थे इति शेषः। तत्र हेतुमाह—*प्रत्ययानामिति*। तथांच प्रकृतित्वं प्रत्ययविधाना-ऽवधित्वम्; न तु प्रत्ययाव्यवहितपूर्वत्वम्। बहुपटुरित्यादौ पट्वादिशब्देऽव्याप्तेः।

न च "तावेव सुप्तिङो यौ ततः परौ, सैव च प्रकृतिराद्या" इति भाष्यात् प्रत्ययाऽव्यवहितपूर्वस्यैव प्रकृतित्वलाभ इति वाच्यम्। तदर्थानवबोधात्। यौ ततो विधानावधेरसति विशेषानुशासने परौ तावेव सुप्तिङावित्युपलक्षणं, प्रत्यायान्तर-स्यापि। यतो विहितौ सैव प्रकृतिरिति तदर्थात्। आद्यत्यभ्यासाऽभिप्रायेण। तथाच समासोत्तरपदस्य विधानावधित्वरूपप्रकृतित्वाऽभावेन तदर्थे न कर्मत्वाऽऽद्यन्वयः सम्भवत्युक्तव्युत्पत्तिविरोधादिति भावः।

प्रत्ययानामिति व्युत्पत्तिर्हि "दण्डिनमानये"त्यादौ दण्डादौ कर्म्मत्वाऽन्वयवार-णाय स्वीक्रियते। तदर्थं एव 'प्रकृत्यर्थनिष्ठविषयतानिरूपितविषयतासम्बन्धेन शाब्द-बुद्धिं प्रति विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितित्वेन हेतुता इति तत्र प्रकृतेः सन्निहि-तत्वेनैव निवेशस्तावतैवोक्तस्थले व्यभिचारवारणा।न्न तु प्रकृतित्वेन, गौरवादिति मतं दूषयितुमुपन्यस्यति—*यत्त्विति*।

*सन्निहितेति*। सन्निहितत्वं चाव्यवहितपूर्वत्वेनाऽनुसन्धीयमानत्वम्। तस्य च चित्रग्वादिपदे गवादौ सत्त्वात्तत्रानुपपत्तिरिति भावः। व्युत्पत्तिरेवेत्येवकारेण

पूर्वोक्तप्रकृतित्वघटितव्युत्पत्तिव्यवच्छेदः, उपकुम्भादौ व्यभिचारोद्भावनं तु प्राचीनमते। नव्यनये तत्रोत्तरपदे लक्षणाऽभ्युपगमेन तदप्रसक्तेः ॥ *तत्राऽपि* । उपकुम्भादिसमासेऽपीत्यर्थः ।

*आनुशासनिकेति* । सन्निहितत्वं नाऽव्यवहितपूर्वत्वम् । तत्त्वेनाऽनुसन्धीयमानत्वं वा । धवखदिरावित्यादौ धवादिपदार्थे विभक्त्यर्थानन्वयप्रसङ्गात् । किन्तु सन्निहितत्वेनाऽनुशासनबोधितत्वम् । तच्च धवादिपदार्थानामिवोपादिपदार्थानामस्तीत्याशयवानाह—*तथाचेति* । *समस्यमानपदोत्तरमिति* । समासस्याऽनेकपदसमुदायात्मकतया समुदायस्य प्रत्येकाऽनतिरिक्ततया समासरूपप्रातिपदिकात् विहितविभक्तेस्तत्तत्पदसन्निहितत्वादिति भावः ।

सम्भवेदेवं यदि समासग्रहणनिबन्धना प्रातिपदिकसंज्ञा, किन्तु तस्य नियामकतया पूर्वसूत्रेणैव सा वाच्या । तथाचोक्तप्रकाराऽसम्भव इत्याशयेनाह—*अर्थवत्सूत्रेणेति* । तथाच—शास्त्रबोधितसन्निहितत्वमपि विशिष्टस्यैव, न केवलपूर्वपदस्येत्युक्तस्थले व्यभिचारो दुरुद्धर इति भावः । प्रकृतित्वस्य पर्य्याप्त्याख्यविलक्षणसम्बन्धेन समुदायमात्रविश्रान्तत्वेऽपि केवलाश्रयतया तद्वत्त्वस्य प्रकृत्येकदेशेऽपि सम्भवादुक्तव्युत्पत्तिशरीरे आश्रयतैव निवेशनीयेत्याशयेन शङ्कते—*अथेति* ॥ *प्रकृतित्वाश्रये* । प्रकृतित्वाश्रयार्थे । असन्निहितप्रकृत्यर्थे दूषणमुद्भाव्य सन्निहितेऽपि तदाह—*अघटमिति* । पूर्वपदार्थप्राधान्यमत्रेत्याशयेन दूषणोद्भावनम् । तत्त्वं चाऽग्रे वक्ष्यते ।

*विशेषणतयेति* ॥ एकत्र विशेषणतावरुद्धस्यापरत्र तदन्वये नैराकाङ्क्ष्यादिति भावः । यत्र क्वाऽपि विशेषणे नापरान्वय इति यथाश्रुतं दूषयति—*पाकान्नील इत्यादि* ॥ नीलत्वसुखयोः स्वाश्रये विशेषणातयान्वितयोः पाकादित्याद्यन्तर्गतपञ्चम्यर्थहेतुत्वस्यानन्वयापत्तेरित्यर्थः ॥ *तज्जन्यज्ञानविषयत्वमिति* ॥ तत्पदार्थः प्रकृतिः । मात्रपदेन वृत्तिप्रतिपाद्यत्वस्य व्यवच्छेदः । अत्र चित्रग्वादिसमासाऽन्तर्गतगवादिपदार्थे इत्यर्थः ॥ *अविरुद्धमिति* । अबाधितमित्यर्थः । 'घटं पश्य' इत्यत्र दृशिर्ज्ञानसामान्याऽर्थः ॥ *आकाशवारणायेति* । समवायेनोपस्थिताकाशे दृश्यर्थकर्मत्वाद्यन्वयवारणायेत्यर्थः ॥ *वृत्त्या प्रकृत्यर्थत्वस्येति* । वृत्तिजन्योपस्थितिविषयत्वस्येत्यर्थः ।

वादिवाक्ये यावन्तोऽर्थाः सम्भवन्ति' इति न्यायेनोक्तव्युत्पत्तिं दूषयितुमर्थान्तरपरतया व्याचष्टे—*अथेति* ॥ पूर्वं तु प्रत्ययसन्निहितपदार्थत्वं प्रकृतित्वमत्र तु तत्प्राग्वर्त्तिपदार्थत्वमिति भेदः ॥ *प्रसङ्गादिति* ॥ प्रत्ययप्राग्वर्त्तिपदजन्योपस्थितिविषयतायाः कृष्णे सत्त्वादिति भावः ॥ प्रत्ययानामिति व्युत्पत्तेरेकार्थीभाववादिमते सत्त्वेऽपि नाऽस्मन्मते सा सार्वत्रिकी । समास एवाऽसम्भवात् । किन्तु प्रकृते व्युत्पत्यन्तरमेव कल्प्यते इत्यभिप्रेत्याह—*अथेति* । *अक्लृप्तकल्पनामिति* ।

समस्यमानपदार्थविषयतानिरूपितविषयतासम्बन्धेन शाब्दं प्रति विशेष्यतासम्बन्धेन प्रत्ययजन्योपस्थितेः कारणत्वाऽन्तरकल्पनामित्यर्थः ।

ननु प्रत्ययानां सन्निहितपदार्थगतस्वार्थबोधकत्वरूपा व्याससमाससाधारण्येनैव व्युत्पत्तिः, सन्निहितत्वं च प्रकृतिघटकत्वे सति प्राग्वर्त्तित्वमिति नोक्तदूषणमत आह—*दिगिति* ।। तथा कल्पने चोक्तव्युत्पत्त्यपेक्षया पदत्वस्य प्रकृतित्वघटितस्य व्युत्पत्तौ निवेशे गौरवमित्यादिदिगर्थः ।।

अर्थ—समास में अतिरिक्त शक्ति स्वीकार नहीं करने पर "चित्रगुमानय" यहाँ गवादिपदार्थस्वामी में विभक्त्यर्थ कर्मत्व का अन्वय नहीं होगा। प्रत्ययों का स्वप्रकृति के अर्थों में अन्वित स्वार्थ के बोधक होने का नियम है। "चित्रगु" इस समुदाय से विभक्ति की उत्पत्ति होने से समुदाय ही प्रकृति है।

जो किसी ने प्रत्यय, सन्निहित पदार्थ में अन्वित होकर स्वार्थ का प्रतिपादन करता है यह कहा वह ठीक नहीं है।

"उपकुम्भम् "अर्धपिप्पली" इत्यादि स्थलों में पूर्वपद उप इसके अर्थ समीप एवं अर्ध इस अर्थ में ही प्रत्ययार्थ के अन्वय होने से नियम का व्यभिचार है।

शङ्काः—उपकुम्भ आदि स्थलों में भी सन्निधान ही है। अनुशासन=सूत्र से बोधित सन्निधान विवक्षित है। इस प्रकार जिस पद के आगे जिस विभक्ति का सूत्र से अनुशासन किया गया है वह विभक्ति उस (प्रकृति) के अर्थ के साथ स्वार्थ का बोधन करती है। समास में समस्यमान पद के उत्तर विभक्ति का अनुशासन हुआ है।

समाधानः—यह कहना युक्तियुक्त नहीं है। अर्थवत्सूत्र से समुदाय को प्रातिपदिक संज्ञा हुई है। अतः समुदाय के उत्तर ही विभक्ति का अनुशासन है।

शङ्का—प्रकृतित्व के आश्रय में विभक्त्यर्थ का अन्वय होता है ऐसी कल्पना करते हैं।

समाधानः—ऐसा मानने पर "पङ्कजमानय=कमल को लाओ "दण्डिनं पश्य"=दण्डी को देखो तथा "शूलिनं पूजय=भगवान् शंकर की पूजा करो इत्यादि स्थलों में पङ्क दण्ड एवं शूल के साथ आनयन दर्शन तथा पूजन का क्रमशः अन्वय होने [illegible]गा। इसी प्रकार "अघटमानयघटभिन्न को लाओ यहाँ पर घट में भी आनयन के [illegible]वय की आपत्ति हो जायगी। यदि कहें कि दण्ड आदि विशेषण होने से आनयनादि का इसमें अन्वय नहीं होगा तो "पाकान्नीलः" पाक से नील "धर्मात् सुखी" धर्म से सुखी यहाँ पर पाक और धर्म की जन्यता का नीलरूप नील और सुख में अन्वय नहीं होगा।

शङ्का—प्रकृत्यर्थ का तात्पर्य यह है कि प्रकृति से उत्पन्न जो ज्ञान उसका विषय। ऐसा प्रकृत्यर्थ (चित्रगु आदि के गवादि पदार्थ में) है।

समाधान—यह ठीक नहीं है। "घटं पश्य" यहाँ घट पद से समवाय सम्बन्ध से सम्बन्धी आकाश की उपस्थिति होती है। उसका शाब्द बोध में भान वारण के लिये वृत्ति द्वारा प्रकृति से उपस्थित अर्थ की विवक्षा आवश्यक है। यदि ऐसा कहें कि प्रत्यय से पूर्व में रहनेवाले पद से उत्पन्न जो उपस्थिति उसका विशेष्य प्रकृत्यर्थ है तो "गामानयति कृष्णो दण्डेन=भगवान् कृष्ण दण्ड से गऊ को ले आ रहे हैं यहाँ दण्ड की तृतीया से पूर्ववर्ती कृष्ण पद भी है इसके साथ तृतीयार्थ का अन्वय प्राप्त हो जायगा।

शङ्का—समासोत्तर आनेवाली विभक्तियाँ समस्यमान पदों के अर्थ के साथ अन्वित होकर बोधक होती हैं। इस प्रकार के नियम की कल्पना करते हैं।

समाधान—अपूर्व व्युत्पत्ति की कल्पना और पूर्व निश्चित व्युत्पत्ति के त्याग की कल्पना करने की अपेक्षा समास समुदाय में शक्तिकल्पना ही युक्तियुक्त है।

हिन्दी भाष्य—दण्डिनमानय = दण्डी को ले आओ यहाँ अम् विभक्ति के अर्थ कर्मत्व का दण्डी ( दण्डयुक्त ) में अन्वय इष्ट है दण्डी में विशेषणभूत दण्ड में नहीं। अत एव उक्त वाक्य से दण्डमात्र का आनयन नहीं होता। इसीलिये "प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्व" यह व्युत्पत्ति मानी गई है। अर्थात् प्रत्ययार्थ का स्वप्रकृति के अर्थ के साथ अन्वय होने का नियम है। इस नियम के अनुसार "चित्रगुमानय" यहाँ अम् विभक्तिरूप प्रत्यय के विधान की अवधि को प्रकृति मानने से लक्षणा द्वारा गवार्थ स्वामी में अम् के अर्थ का अन्वय नहीं होगा। प्रकृति चित्रगु है गुमात्र नहीं है। अतः तदर्थ में अन्वय बाधित है। इस कारण से समास में शक्ति आवश्यक है।

शङ्का—प्रत्ययार्थ का प्रकृत्यर्थ में अन्वय नहीं मानकर सन्निहित पद के अर्थ के साथ अन्वय होता है ऐसा मानते हैं। सन्निहित पदार्थ प्रत्यय के अव्यवहित रूप से अनुसंधान किये जाने वाले पद का अर्थ है। इस प्रकार चित्रगु में विभक्ति से अव्यवहित पूर्व गु है। उसके ही सन्निहित होने से गोपदार्थ स्वामी में अम् विभक्ति के अर्थ का अन्वय हो जायगा। समास में शक्ति की कल्पना व्यर्थ है।[1]

समाधान—"उपकुम्भम्" अर्द्ध पिप्पली" यहाँ पर उप के अर्थ समीप और अर्द्ध के साथ विभक्त्यर्थ का अन्वय नहीं होगा। आपकी रीति से सन्निहित पदार्थ में अन्वय होने के कारण प्रत्यय से अव्यवहित पूर्वस्वरूप सन्निहितत्व कुम्भ पद में है उपादि पूर्व पद में नहीं है। अतः यह नियम दुष्ट होने से प्रत्ययों का स्वप्रकृत्यर्थ में अन्वय होता है यही नियम स्वीकार्य है। इस प्रकार पूर्वोक्त दोष वज्र लिप्त है।

शङ्का—सन्निहितत्व अव्यवहित पूर्वस्वरूप से अनुसम्बन्धीयमानत्व नहीं कहा जाता अन्यथा धवखदिरौ यहाँ द्वन्द में धवपदार्थ में विभक्त्यर्थान्वय नहीं होगा खदिर से व्यवधान होने के कारण धव विभक्ति से अव्यवहित पूर्व पदार्थ नहीं है। अतः सन्निहितस्वरूप से सूत्र द्वारा बोधितत्व को सन्निहितत्व कहते हैं। ऐसी दशा में धव के समान उपादि भी सन्निहित होने से अन्वयानुपपत्ति नहीं है। जिस पद के उत्तर जिस विभक्ति का अनुशासन हैं वह विभक्ति उस पद के अर्थ के साथ स्वार्थ का बोधन करती है।

समाधानः—"अर्थवत्" सूत्र से धव खदिर समुदाय एवं उपकुम्भ इस समुदाय को प्रातिपदिक संज्ञा का विधान होने के कारण समुदायोत्तर विभक्ति का विधान हैं। इसलिये समुदाय ही सूत्र द्वारा सन्निहित होगा। इस प्रकार समुदायार्थ के विना प्रकृत्यर्थ न होने से अन्वय की अनुपपत्ति पूर्ववत् बनी हुई है। अतः इस दोष के परिहार के लिये समास में शक्ति आवश्यक हैं।

शङ्का—पर्याप्त सम्बन्ध से प्रकृतित्व का आश्रय समुदाय होने पर भी केवल आश्रयता सम्बन्ध से प्रकृतित्व पूर्व और उत्तर दोनों ( प्रत्येक पदो ) में है। यहाँ आश्रयत्व से प्रकृतित्व प्रकृत्येकदेश गवादि उत्तरपद के अर्थ में विभक्त्यर्थ का अन्वय हो जायगा।

---

१. "न तत्रानयनाद्यन्वयः" इससे आनयनकर्मत्वाद्यन्वयः ऐसा विवक्षित है।

समाधानः—प्रकृत्येकदेशार्थ के साथ भी प्रकृतित्वाश्रयार्थ होने के कारण विभक्त्यर्थान्वय होने से "पङ्कजमानय" दण्डिनं पश्य" इत्यादि स्थलों में विशेषणांश पङ्क दण्ड आदि पदार्थों में भी आनयन दर्शनादि का अन्वय प्राप्त हो जायगा जो कि इष्ट नहीं है। दण्डविशिष्ट पुरुष का आनयन क्रिया में अन्वय होने से विशेषणीभूत दण्डादि में भी अन्वय की आशङ्का कदाचित् हो सकती है। "अतः अघटमानय" इसमें दोष देते हैं। नञर्थ में विशेषण घट का भी आनयन क्रिया में अन्वय प्रसङ्ग हो जायगा।

शङ्का—प्रकृतिजन्य प्रतीति विशेष्य में विभक्त्यर्थ का अन्वय होता है इस नियम से पङ्कज दण्डी शूली आदि स्थलों में पङ्क दण्ड शूल आदि अन्यत्र विशेषण होने से प्रकृतिजन्य मुख्य विशेष्य नहीं है। अतः उनके साथ विशेषणान्तर का सम्बन्ध नहीं हो सकता। इसलिये प्रकृत्येकदेशार्थ में विभक्त्यर्थान्वय मानने से उक्त दोष की आपत्ति यहाँ नहीं होगी।

समाधान—पूर्वोक्त नियम के रहने पर "पाकान्नीलः" "धर्मात्सुखी" इत्यादि स्थलों में नीलवान् का एकदेशार्थ नील गुण तथा सुखी का एकदेशार्थ सुख में क्रमशः पाकजन्यता और धर्मजन्यता का अन्वय नहीं होगा। पाकजन्य नीलगुण और धर्म से जन्य सुख है ऐसी प्रतीति होती है। अतः उक्त नियम सार्वत्रिक नहीं है।

शङ्काः—"एकत्र विशेषणतया अन्वितस्याऽपरत्र विशेषणतया अन्वयोऽव्युत्पन्नः" = एकत्र विशेषणतया अन्वित होने पर दूसरे में विशेषणतया अन्वय अनुचित है। विशेष्यतया अन्वय अनुचित नहीं है। इसलिये पाकान्नीलः, धर्मात्सुखी इसमें विशेषण-रूप से उपस्थित नीलत्वगुण और सुख इसमें पाक और धर्म पद के उत्तर पञ्चमी विभक्ति के अर्थ जन्यत्व का आश्रयतया विशेष्य नीलत्वगुण और सुख के होने में उक्त व्युत्पत्ति का विरोध नहीं है। पङ्क दण्ड आदि ( पङ्कज दण्डी आदि के अर्थ में ) विशेषण-तया उपस्थित होने से पुनः विभक्त्यर्थ कर्मत्व में विशेषण होकर इनका अन्वय उक्त व्युत्पत्ति विरोध से नहीं होगा।

समाधान—"शूली पूज्यः" इत्यादि स्थल में पूज्यार्थ का शूली इसमें अन्वय होकर प्रकृत्येकदेशार्थ शूल में अन्वय हो जायगा। अतः प्रकृत्येकदेशार्थ में अन्वय नहीं मानना चाहिये। ऐसी अवस्था में चित्रगुमानय इत्यादि स्थलों में गवार्थ में आनयन-कर्मत्वाद्यन्वय नहीं होगा। अतः स्वामी में गोपद की लक्षणा युक्त नहीं है।

शङ्का—प्रकृत्यर्थ से प्रकृति से जन्य जो ज्ञान उसका विषय ऐसा विवक्षित है। "उपकुम्भम्" अर्द्धपिप्पली" चित्रगुः" इत्यादि सर्वत्र पूर्वपद या उत्तरपद की लक्षणा और तदितर पद की तात्पर्य ग्राहकता होने से अर्थबोध में दोनों पदों का साहाय्य है। इसलिये प्रकृति प्रयोज्य ज्ञान की विषयता उनमें अनुपपन्न नहीं है।

समाधान—प्रकृतिनिष्ठ वृत्ति ज्ञान का विषय प्रकृत्यर्थ है। जिस किसी रूप से प्रकृति जन्य ज्ञान विषय की विवक्षा होने पर "घटं[1] पश्य" = घट को जानो" यहाँ समवाय सम्बन्ध से उपस्थित आकाश भी प्रकृत्यर्थ होने से दर्शनकर्मतया अन्वित हो जायगा। आकाश शब्दमात्र का समवायीकरण माना गया है। इसीलिये आकाश ( अवकाश )

१. "घटं पश्य" इसमें दृश् धातु ज्ञान सामान्य अर्थ में प्रयुक्त है चाक्षुष ज्ञान में नहीं।

नहीं रहने पर शब्द की उत्पत्ति नहीं होती। वृत्ति के प्रवेश करने पर आकाश की उपस्थिति घट पद से शक्ति या लक्षणा या व्यञ्जना रूप वृत्ति ज्ञान से नहीं है। अतः विभक्त्यर्थान्वय नहीं हुआ। इस प्रकार प्रकृत्यर्थ का उक्त अर्थ नहीं है।

शङ्का—प्रत्यय से पूर्ववर्ती पद के द्वारा उपस्थिति का (ज्ञान) का विशेष्य प्रकृत्यर्थ है।।

समाधान—"कृष्णो दण्डेन" यहाँ पर दण्डेन इसमें तृतीयार्थ का तत् प्रागूवर्ती कृष्ण में अन्वयापत्ति हो जायगी।

शङ्का—अव्यवधानांश का निवेश कर अव्यवहित पूर्ववर्ती पद के ग्रहण करने से कृष्ण तृतीया विभक्ति से अव्यवहित पूर्वपद नहीं है किन्तु दण्ड ही है। अतः तृतीयार्थ की अन्वयापत्ति कृष्ण में नहीं होगी।

समाधान—"उपकुम्भम्" अर्धपिप्पली" आदि में उपाद्यर्थ में विभक्त्यर्थ का अन्वय प्राप्त नहीं होगा। उपादि भी विभक्ति से अव्यवहित पूर्व नहीं है।

शङ्का—समस्यमान पदार्थ के साथ समासोत्तर विभक्त्यर्थ के अन्वय का नियम मानने से पूर्वोक्त दोषों का उद्धार हो जायगा।

समाधान—अव्यवहितपूर्व समस्यमान पदार्थगत स्वार्थबोधकत्व व्युत्पत्ति का स्वीकार तथा बहुचर्चित "प्रत्ययानां स्वप्रकृत्यर्थान्वित स्वार्थबोधकत्वम्" इस व्युत्पत्ति का त्याग करने की अपेक्षा समास शक्ति का स्वीकार ही उचित है।

समास शक्ति स्वीकार में अन्ययुक्तियां जो "दिक्" इस शब्द के द्वारा ग्रन्थकार ने व्यक्त किया है वे ये हैं—"राजपुरुषः" इसमें राजपद की सम्बन्धी में लक्षणा होने से राजपदार्थैकदेश राजरूप अर्थ में शोभनादि अर्थ का अन्वय वारित होने पर भी दास्याः पुत्रः (दासी का पुत्र) इस षष्ठी समास में "षष्ठ्याः आक्रोशे" इस सूत्र से षष्ठी के अलुक् होने से विभक्ति का लुक् नहीं होता है। यहाँ पष्ठ्यन्त दास्याः की लक्षणा सम्बन्धी में नहीं हो सकती। दास्याः इस षष्ठ्यन्त में शक्ति नहीं होने से शक्यसम्बन्ध-रूप लक्षणा का सम्भव नहीं है। षष्ठी से सम्बन्ध की प्रतीति होने से लक्षणा की आवश्यकता भी नहीं है। ऐसी दशा में दासी इसमें सुन्दरी आदि का अन्वय वारित नहीं होगा। समास में शक्ति माननेवालो के मत में पदार्थैकदेश होने से दासी में अन्वय सम्भावना ही नहीं है। यदि सम्बन्धार्थक षष्ठी का सम्बन्धी में लक्षणा मानें तो दासी का षष्ठ्यर्थ सम्बन्ध में पदार्थैकदेश होने के कारण अन्वय दुर्घट है। इत्यादि काशिका में विस्तृत निरूपण है।

अपिच समासे विशिष्टशक्त्यस्वीकारे 'राजपुरुषः' 'चित्रगुः' 'नीलोत्पलम्' इत्यादौ सर्वत्रानन्वयप्रसङ्गः। राजपदादेः सम्बन्धिनि लक्षणायामपि 'तण्डुलः पचति' इत्यादौ कर्मत्वादिसंसर्गेण तण्डुलादेः पाकादावन्वयवारणाय प्रातिपदिकार्थप्रकारकबोधं प्रति विभक्तिजन्योपस्थितेर्हेतुताया आवश्यकत्वात्; पुरुषादेस्तथात्वाभावात्।

'तण्डुलः शुभ्रः' इत्यादौ च प्रातिपदिकार्थकप्रथमार्थे तण्डुलादेस्तस्य च शुक्ले अभेदेनैवान्वयः। 'शुभ्रेण तण्डुलेन' इत्यादौ च विशेषणविभक्तिरभेदार्थिका, पार्ष्ठिको वाऽन्वय इति नातिप्रसङ्गः। तथाच-समासे परस्परमन्वयासम्भवादावश्यकैव समुदायस्य तादृशे विशिष्टार्थशक्तिः।

किञ्च 'राजपुरुषः' इत्यादौ सम्बन्धिनि, सम्बन्धे वा लक्षणा। नाद्यः। 'राज्ञः पुरुषः' इति विवरणविरोधात्। समाससमानार्थकवाक्यस्यैव विग्रहत्वात्। अन्यथा तस्माच्छक्तिनिर्णयो न स्यात्। नान्त्यः। राजसम्बन्धरूपः पुरुष इति बोधप्रसङ्गात्। विरुद्धविभक्तिरहितप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तेरित्यादि प्रपञ्चितं वैयाकरणभूषणे।

ननु 'प्रत्ययानाम्' इति व्युत्पत्तेः प्रकृतिप्रत्ययघटिततया तत्र प्रकृतित्वप्रत्ययत्वयोरनुगतयोर्दुर्वचत्वेन तत्तद्व्यक्तिभेदेन कार्य्यकारणभावो वाच्यः। तथाच समासस्थले समस्यमानपदार्थस्य प्रत्ययार्थान्वयाऽभ्युपगमे बाधकाऽभावोऽत आह—*अपिचेति*॥ *अनन्वयप्रसङ्ग इति*। 'नामार्थयोः' इति व्युत्पत्तेरिति भावः।

अनन्वयमेवाह—*राजपदादेरिति*॥ लक्षणायामपीत्यपिना सम्बन्धलक्षणायां नितरामन्वयाऽभावः सूच्यते। नचोक्तव्युत्पत्तेस्तण्डुलः शुभ्र इत्यादौ व्यभिचारोऽत आह—*तण्डुलः शुभ्र इति*॥ *अभेदेनैवान्वय इति*॥ तथा च तण्डुलान्वयिनि प्रातिपदिकार्थे विभक्तिजन्योपस्थितेः सत्त्वान्न तत्र व्यभिचार इति भावः। शुभ्रेण तण्डुलेनेत्यादौ व्यभिचारमाशङ्क्य निराचष्टे—*अभेदार्थिकेति*॥ अथवा कट इव तत्समानाऽधिकरणभीष्माऽऽदिभ्यो द्वितीयादिविभक्तेरनभिहितसूत्रे भाष्यकृताऽभिधानात् सामानाऽधिकरण्यस्य समानाधिकरणयोर्विशेष्यविशेषणयोर्भावस्याभेदस्य—विशेषणपदोत्तरविभक्त्यर्थत्वलाभात्। तथापि शुभ्रेणेति तृतीयाजन्याभेदोपस्थितिसत्त्वान्न व्यभिचार इति भावः।

नन्वत्र अभेदो यदि भेदत्वाऽवच्छिन्नाऽभावस्तदाऽप्रसिद्धिः। भेदस्य केवलाऽन्वयित्वात्। यदि भेदप्रतियोगिकाऽभावस्तदा नीलो वह्निरिति वाक्यस्य प्रामाण्यापत्तिर्द्वित्वादिना नीलभेदाभावस्य वन्हौ सत्वाद् विशेषणविभक्त्यर्थैकदेशे भेदे प्रकृत्यर्थस्यानन्वयापत्तिश्च।

न च भेदेऽभावे च, द्वितीयादेः शक्तिः भेदे च प्रकृत्यर्थस्य प्रकृत्यर्थताऽवच्छेदकावच्छिन्नप्रतियोगिताकत्वेनाऽन्वयः। उक्तसम्बन्धेन प्रकृत्यर्थविशिष्टभेदस्य तु तत्त्वाऽवच्छिन्नप्रतियोगिताकत्वेनाऽभावेऽन्वयोपगमान्नोक्तापत्त्यादिरिति वाच्यम्। 'प्रमेयो घट' इत्यादौ प्रमेयत्वाऽवच्छिन्नभेदाऽप्रसिद्ध्योक्तप्रकाराऽसम्भवात्। नीलपटादिपरनीलपदघटितनीलो घट इति वाक्यस्य प्रामाण्याऽऽपत्तेश्च। नीलत्वादिना नीलभेदाभावस्य घटेऽबाधात्।

नच तद्व्यक्तित्वावच्छिन्नाऽभेद एव विभक्त्यर्थः। तथा सत्यपूर्वव्यक्तिनिष्ठतद्व्यक्तित्वस्य भानाऽसम्भवेन तदवच्छिन्नप्रतियोगिताकाऽभावे शक्तिग्रहाऽसम्भवेनाऽपूर्वव्यक्त्यभेदाऽन्वयाऽनुपपत्तेः, अभावबुद्धेर्विशिष्टवैशिष्ट्याऽवगाहित्वाऽनुपपत्त्या एकधर्माऽवच्छिन्नप्रतियोगिताकाभावे अपरधर्मावच्छिन्नप्रतियोगितायाः सम्बन्धतया भानाऽसम्भवाच्चेति चेद्? न। अभेदस्तादात्म्यं तच्च स्ववृत्त्यसाधारणो धर्मः। असाधा-

रण्यं च स्वप्रतियोगिवृत्तित्व—स्वसामानाधिकरण्योभयसम्बन्धेन भेदविशिष्टं यत्तदन्यत्वमित्येकमात्रवृत्तिधर्म एव प्रकृतेः सः। तस्मिन्नाधेयतया प्रकृत्यर्थाऽन्वयः। अपूर्वव्यक्तिनिष्ठतद्व्यक्तित्वस्य विशिष्य ज्ञातुमशक्यत्वेऽप्येकमात्रधर्मत्वेन सामान्यप्रत्यासत्त्या सुग्रहात् सर्वं सुस्थमिति। *पार्ष्ठिक इति* ॥ शाब्दबोधोत्तरकालिक इत्यर्थः ॥ *अन्वयेति* ॥ तद्बोध इत्यर्थः। अरुणाऽधिकरणरीत्या सर्वेषां विभक्त्यर्थानां प्रथमं क्रियायामेवाऽन्वयेन तत्र शुभ्रादिपदार्थान्वये विभक्तिजन्योपस्थितिसत्त्वात्तत्पक्षेऽपि नोक्तव्युत्पत्तेर्व्यभिचार इति भावः॥

ननु "नामाऽर्थयो" रिति व्युत्पत्ते राजा पुरुषस्तण्डुलः पचतीत्यादौ राज्ञः स्वस्वामिभावसम्बन्धेन पुरुषे, तण्डुलस्य कर्मतासम्बन्धेन धात्वर्थपाकेऽन्वयवारणायाऽऽवश्यकत्वेऽपि तत्र राजा पुरुषः स्तोकं पचतीत्यत्राऽभेदसम्बन्धेनाऽन्वयाद् व्यभिचारवारणायाऽभेदातिरिक्तसम्बन्धाऽवच्छिन्नत्वं नामाऽर्थनिष्ठप्रकारतायां निवेशनीयम्।

नच विशेषणविभक्तेरभेदाऽर्थकतया निर्वाहः। कट एव कर्मेति भाष्यव्याख्याऽवसरे भीष्मादीनां स्वयमकर्मकत्वेऽपि विशेष्यसम्बन्धिविभक्त्यैव भीष्मादिपदोत्तरं भवितव्यम्। तदेकयोगक्षेमकत्वात्। केवलानां च प्रातिपदिकानां "प्रत्ययः" "परश्च" इति नियमेन प्रयोगाऽनर्हत्वात्। यथेश्वरसुहृदः स्वयं निर्धना अपि तदीयधनेनैव तत्फलभाज, एवं गुणा अपीति "अनभिहित" सूत्रे वदता कैयटेन विशेषणविभक्तेः साधुत्वमात्राथंकत्वं स्पष्टमेवोक्तम्। विभक्त्यर्थप्रातिपदिकार्थविशेष्यकपुरुषादिप्रकारकबोधस्याऽननुभवाच्च। अत एव व्युत्पत्तौ भेदेनेति पठ्यते। तथाच तत्पक्षे लक्ष्यार्थराजसम्बन्धिनः पुरुषादावन्वयो नाऽनुपपन्नोऽत आह—*किञ्चेति*। *विवरणविरोधादिति* ॥

अत्र वदन्ति—विग्रहस्य विग्रियमाणसमानाऽर्थकत्वं न विग्रियमाणजन्यबोधे यद्यद्विशेष्यकत्वे सति यद्यत्प्रकारकत्वं तत्तद्विशेष्यकतत्तत्प्रकारबोधजनकत्वम्। प्राप्तमुदकं यमित्यादेः प्राप्तोदकादिसमासविग्रहत्वाऽनुपपत्तेः। पचति, व्याकरणमधीते इत्यादीनां पाचको वैयाकरण इत्यादिकृत्तद्धितान्तविग्रहत्वानापत्तेश्च। तत्र विग्रहविगृह्यमाणजबोधविषयपदार्थानां विशेषणविशेष्यभाववैपरीत्यात्। नाऽपि तज्जन्यबोधीययावद्विषयविषयकबोधजनकत्वम्। पुरुषस्य राजेत्यस्यापि राजपुरुषादिविग्रहत्वापत्तेः। किन्तु विग्रियमाणजबोधजनकत्वं तद् वाच्यम्। प्राप्तमुदकं यमित्यादेः प्राप्तोदकादिसमासजबोधविषयाः परस्परसम्बद्धतात्पर्य्यविषयीभूताश्च यावन्तः पदार्था उदकादयस्तावद्विषयकबोधजनकत्वम्। घटकीया कर्मतेत्येतावन्मात्रस्य घटकर्मकानयनकृतिरिति विग्रहत्ववारणाय यावदिति। राज्ञः पुरुषः सुन्दर इत्यधिकाऽवगाहिनो राजपुरुष इति विग्रहत्वमिष्टमेव।

वस्तुतस्तु शक्तिग्रहणाऽर्थं प्रयुज्यमाने तस्मिन्नतात्पर्यविषयाऽर्थकपदप्रयोगदौर्लभ्यमेव। पुरुषस्य राजेत्यादेस्तु विग्रहत्ववारणाय तात्पर्य्यविषयत्वं विशेषणम्। तत्र पुरुषप्रतियोगी न। घटः कर्मत्वमित्यादिसमुदायस्य, घटानयनेत्यादीनां न। कुम्भ

करोतीत्यादीनां कर्तृलाक्षणिकानामेव न्यायनयेकुम्भकारादिविग्रहत्वम् । प्रकृते च राजपुरुष इत्यादित्वस्य 'राज्ञः पुरुष' इति वाक्ये अक्षतत्वान्न तस्य विग्रहत्वानुपपत्तिरिति ॥

*अन्यथेति* । समानार्थकत्वाभावे इत्यर्थः । *तस्मात्*—विग्रहवाक्यात् । *न स्यादिति* । तत्समानार्थैकवाक्यस्यैव तच्छक्तिनिर्णायकत्वादिति भावः । सम्बन्धलक्षणाकल्पं दूषयति—*नान्त्य इति* । नीलोत्पलादिसमाससङ्ग्रहाय समानविभक्तिकेत्यपहायोक्तम्—*विरुद्धविभक्तिरहितेति* । विरुद्धविभक्तिकधातुप्रातिपदिकार्थयोः, स्तोकं पचतीत्यादावभेदाऽन्वयदर्शनादाह—*प्रातिपदिकार्थयोरिति* । तथाचाऽभेदसंसर्गावच्छिन्नप्रातिपदिकाऽर्थनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबुद्धिं प्रति विरुद्धविभक्तिरहितपदजन्योपस्थितेर्हेतुतया तस्या राजपुरुष इत्यादिसमासोत्तरपदार्थे पुरुषादौ सत्त्वादभेदाऽन्वयो दुर्वार इति भावः ।

ननु विरुद्धविभक्तिराहित्यं व्याससमाससाधारणम्, न विशेष्यवाचकपदस्य विशेषणवाचकपदाऽप्रकृतिकविभक्त्यप्रकृतित्वम् । नीलं घटमानय' इत्यादावभावात् । नाऽपि विशेषणवाचकपदस्य विशेष्यवाचकपदाप्रकृतिकविभक्त्यप्रकृतित्वम्, विशेष्यपदाप्रकृतिकत्वस्य तदनुत्तरत्वस्य तदुत्तरत्वेनाऽप्रतिसन्धीयमानत्वस्य वा "नीलो घट' इत्यादौ नीलपदोत्तरविभक्तौ घटादिपदोत्तरविभक्तिभिन्नायां सत्त्वेन तत्राभेदान्वयानुपपत्तेरिति चेद् ?

अत्र केचित्—विशेषणपदे विशेष्यवाचकपदप्रकृतिकविभक्त्यसजातीयविभक्त्यप्रकृतिकत्वमेव विरुद्धविभक्तिराहित्यम् । साजात्यं च सुत्वादिना प्रथमात्वादिना वा । 'नीलो घट' इत्यादौ विशेषणविभक्तेर्विशेष्यविभक्तिभिन्नत्वेऽपि तत्सजातीयभिन्नत्वाऽभावेनोक्तविरुद्धविभक्तिराहित्यस्य तत्राऽक्षतत्वादिति ।

वस्तुतस्तु विशेषणविभक्तेः साधुत्वमात्रार्थकत्वमिति मते विरुद्धत्वं स्वार्थभिन्नार्थकत्वम् । 'नीलो घट' इत्यादौ विशेषणविभक्तेर्निरर्थकतया तत्र विशेष्यविभक्तिविरुद्धार्थकविभक्तिर्द्वितीयादिरूपैव, तदप्रकृतित्वस्य विशेषणवाचकपदे सत्त्वान्न तदसङ्ग्रहः । एवं 'नीलघटमानय' इत्यादिसमस्तस्थले विशेषणविभक्तेरेवाभावेन तादृशविभक्त्यप्रकृतित्वं विशेषणवाचकपदस्याव्याहतम् । अत एव 'चैत्रस्य सुतस्य धनम्' इत्यादौ नाऽभेदान्वयाकाङ्क्षा । तत्र विशेषणविशेष्यविभक्त्योर्विभिन्नसम्बन्धार्थकत्वात् । नाऽपि स्तोकमत्तीत्याद्यसङ्ग्रहः । पूर्वकल्पे तु विशेषणवाचकविभक्तेस्तिङ्विजातीयत्वेनोक्ताकाङ्क्षायास्तत्राऽसत्त्वेन तदसङ्ग्रहः स्पष्ट एव ।

सारे—प्रातिपदिकार्थयोरिति प्रकृताभिप्रायेणैव । तथाच विरुद्धविभक्त्यप्रकृतिप्रातिपदिकार्थनिष्ठाभेदसंसर्गावच्छिन्नप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दबोधे धातुप्रातिपदिकान्यतरजन्योपस्थितिः कारणमित्यर्थः फलित इति ।

ननु पूर्वनिरुक्तविरुद्धविभक्तिराहित्यस्याभेदान्वयबोधाकाङ्क्षात्वे 'चैत्रस्य सुतस्य

धनम्' इत्यादौ तदापत्तिरत आह-*प्रपञ्चितमिति* ।। विभक्त्यर्थमन्तर्भाव्य नामार्थान्वय एवोक्तव्युत्पत्तिरिति तत्रोक्तम् । तस्यापि सार्थकविभक्त्यप्रकृतित्वमपि विशेषणवाचकपदे निवेशनीयमत्रेति तात्पर्य्यम् ।

अर्थ—अपि च इत्यादि । समास में अतिरिक्त शक्ति के न मानने पर राज-पुरुषः, चित्रगुः नीलोत्पलम् इत्यादि सभी स्थलों में राजादि पद की सम्बन्धी में लक्षणा होने पर भी अनन्वय का प्रसङ्ग बना हुआ है। "तण्डुलः पचति" इत्यादि अनिष्ट स्थान में कर्मता सम्बन्ध से पच् धातु के अर्थ में तण्डुल के अन्वयबोध व्यावृत्ति के लिये प्रातिपदिकार्थ प्रकारक शाब्दबोध में विभक्तिजन्योपस्थिति कारण है ऐसा नियम मानना आवश्यक है। पुरुषादि की उपस्थिति प्रत्ययजन्य न होने से राजादि पदार्थ का उसमें अन्वय नहीं होगा ।

"तण्डुलः शुभ्रः" इत्यादि स्थल में प्रातिपदिक के अर्थ का बोधक प्रथमासु के अर्थ के साथ तण्डुलका एवं प्रथमार्थ का शुभ्र के साथ अभेदान्वय होता है । "शुभ्रेण तण्डुलेन" यहां विशेषण विभक्ति का अभेद अर्थ है । अथवा शुभ्र का तण्डुल के साथ पार्ष्ठिक = बाद में होनेवाला ( मानस ) अभेदान्वय होने से व्युत्पत्ति का व्यभिचार नहीं है । इस प्रकार समास में परस्पर अन्वय असम्भव होने से समुदाय का विशिष्टार्थ में शक्ति स्वीकार आवश्यक है ।

दूसरा भी कारण है—"राजपुरुषः" इत्यादि स्थलों में ( राज पद की ) सम्बन्धी में या सम्बन्ध में लक्षणा हैं। पहला पक्ष ठीक नहीं है "राज्ञः पुरुषः" इस विवरण से विरोध होता है । समास के अर्थ के समान अर्थवाला विग्रह माना जाता है। यदि ऐसा न माने तो विग्रह से समासार्थ का निर्णय नहीं होगा । अन्तिम पक्ष भी ठीक नहीं है । राजसम्बन्धरूप पुरुष ऐसे बोध का प्रसङ्ग हो जायगा क्योंकि विरुद्ध विभक्ति से रहित प्रातिपदिक के अर्थों का परस्पर अभेद से अन्वय की व्युत्पत्ति है इत्यादि विस्तृत निरूपण बृहद्वैयाकरण भूषण में है ।

हिन्दी भाष्य—समासशक्ति स्वीकार के लिये अन्य कारण भी हैं। तण्डुलः पचति ऐसा प्रयोग नहीं होता क्योंकि पच् धातु सकर्मक होने से धात्वर्थ विक्लित्तिरूप फल का आश्रय तण्डुल है। अतः "कर्तुरीप्सिततमं कर्म" इस सूत्र से कर्म संज्ञा और कर्म में द्वितीया होने से "तण्डुलं पचति" इस प्रकार के प्रयोग की साधुता होती है। वैयाकरणों के यहां सूत्र वार्तिक तथा भाष्य के प्रमाण के लिये किसी अन्य प्रमाण की आवश्यकता नहीं होती । उनके वचन स्वतः प्रमाण हैं। नैयायिक सूत्रों में भी आधार का अन्वेषण करते हैं। उसके अनुसार फलाश्रय के द्वितीयान्त होने में कार्यकारणभाव नियामक है । प्रातिपदिकार्थनिष्ठ प्रकारतानिरूपित विशेष्यता सम्बन्ध से शाब्दबोध के प्रति विशेष्यता सम्बन्ध से विभक्ति जन्य उपस्थिति कारण है। अतः विना द्वितीया विभक्त्यर्थ के साथ अन्वय किये प्रातिपदिकार्थ का धात्वर्थ में साक्षात् अन्वय उक्त व्युत्पत्ति के विरोध से नहीं होगा। इसी कारण से तण्डुल पद के उत्तर द्वितीया विभक्ति का रहना आवश्यक है। ऐसी दशा में "राजपुरुषः" चित्रगुः", आदि स्थलों में सम्बन्धी स्वामी आदि में लक्षणा होने पर भी पुरुष एवं स्वामी आदि अर्थ की प्रत्ययजन्य उपस्थिति नहीं होने से उसमें राजपदार्थ एवं चित्र पदार्थ का अन्वय नहीं हो सकता। अतः समासशक्ति आवश्यक है ।

शङ्का—नामार्थ का नामार्थ के साथ अभेद से अन्वय होता है। जैसे "तण्डुलः शुभ्रः" यहां तण्डुल और शुभ्र का अभेदान्वय होता है। विभक्तिजन्योपस्थिति नहीं होने से उक्त व्युत्पत्ति का व्यभिचार है।

समाधानः—उक्त प्रयोग में तण्डुल पदोत्तर सुविभक्ति का विधान प्रतिपादितकार्थ में होने से सु का अर्थ तण्डुल है। उसके साथ प्रकृत्यर्थ तण्डुल का अभेद से अन्वय होने के कारण सु का अर्थ प्रत्यय से उपस्थित हुआ है। अतः विभक्तिजन्योपस्थिति का व्यभिचार नहीं है। सु के अर्थ का शुभ्र पदार्थ में अन्वय होने से नामार्थ प्रत्ययार्थ के अन्वय में उक्त व्युत्पत्ति नियामक ही नहीं है। अतः व्यभिचार कहाँ? यद्यपि मूल में सुविभक्त्यर्थान्वय के द्वारा तण्डुल का शुभ्र में अन्वय दिखाया गया है। तथापि गुणवाचक शुभ्र का विभक्त्यर्थान्वय के द्वारा तण्डुल के साथ अन्वय का औचित्य प्रतीत होता है।

शङ्का—"घटो घटः" यहां घट का घट के साथ अभेदान्वय वारण के लिये दोनों पदार्थों की वैरूप्य से उपस्थिति होने का नियम अपेक्षित है। "घटो घटः" इसमें दोनों समानरूप से उपस्थित हैं। इसी प्रकार "तण्डुलः" इसमें भी सु से तण्डुल और प्रकृति से भी तण्डुल की उपस्थिति होने से वैरूप्य से उपस्थिति नहीं हुई। अतः "घटो घटः" इसके समान यहाँ अभेदान्वय कैसे होगा?

समाधान—यहाँ प्रकृति से तण्डुल की उपस्थिति सत्त्वरूप[1] से और सुप्रत्यय से असत्त्वरूप[2] से होने के कारण वैरूप्य से उपस्थिति हो जाती है अतः अन्वय बोध में किसी प्रकार की आपत्ति नहीं है।

शङ्का—यहाँ व्युत्पत्ति का व्यभिचार वारित होने पर भी "शुभ्रेण तण्डुलेन" इत्यादि स्थल में प्रातिपदिकार्थ में तृतीयादि विभक्ति के न होने से साक्षात् शुभ्र का तण्डुलान्वय ही मानना होगा। ऐसी दशा में उक्त नियम का व्यभिचार दुर्निवार है।

समाधान—विशेषण विभक्ति का अभेद अर्थ माना जाता है। "शुभ्रम्" "शुभ्रेण" इत्यादि में द्वितीया तृतीयादि विभक्ति का कर्मकरणादि से अभेद अर्थ की प्रतीति है। इससे कर्मादिरूपता की ही सिद्धि होती है। शुभ्रादि का कर्मादि तत्तद् विभक्त्यर्थ के साथ अभेदान्वय होने से विभक्तिजन्योपस्थिति हो जाती है। अतः उस नियम का व्यभिचार यहाँ भी नहीं है।

शङ्का—विशेष्यवाचकपदोत्तर विभक्ति से ही कर्माद्यर्थ का बोध हो जाने से विशेषणवाचकपदोत्तर विभक्ति को साधुत्वार्थक ही मानने पर उक्त व्यभिचार का वारण नहीं होगा।

समाधान—"कर्मणि द्वितीया" इत्यादि सूत्र से कर्मादि अर्थ में ही द्वितीया आदि विभक्ति का अनुशासन होता है। इस प्रकार उक्त सूत्र के नियम के बल से विशेषण और और विशेष्य दोनों के उत्तर विभक्ति का अर्थ हैं। साधुत्वार्थक नहीं है। इस प्रकार विभक्त्यर्थ में अन्वित होकर क्रिया में अन्वय होने से व्यभिचार शङ्का नहीं है। इसके अनन्तर 'कः शुभ्रः कीदृशश्च तण्डुलः' इस आकाङ्क्षा से दोनों का शुभ्राभिन्नः तण्डुलः यह पार्ष्ठिक, शाब्दबोध के अनन्तर होनेवाला बोध होता है। पृष्ठं = पश्चात् कालः तत्र भवः पार्ष्ठिकः। यदि कहें कि कारकों का क्रिया में ही अन्वय नियम होने से विभक्त्यर्थ

---

१ लिङ्ग संख्यान्वयित्व सत्त्व है। २. लिङ्गसंख्यानन्वयित्वं रूप असत्त्व है।

में अन्वय के बाद क्रियान्वय अनुचित है तो साक्षात् क्रिया के जनक का साक्षात्, परम्परा से क्रियाजनक का परम्परा से अन्वय होता है यह नियम का तात्पर्य है।

कुछ दोष और भी है—

"राजपुरुषः" यहाँ राजपद की सम्बन्धी या सम्बन्ध में लक्षणा है। सम्बन्धी में लक्षणा मानने पर राजसम्बन्ध्यभिन्नः पुरुषः ऐसा बोध होगा। "राज्ञः पुरुषः" इससे स्वत्व सम्बन्ध से राजविशिष्ट पुरुष अथवा राजपदार्थ का निरूपितत्व सम्बन्ध से स्वत्व में स्वत्व का आश्रयतया पुरुष में अन्वय होने से राजनिरूपित स्वत्ववान् पुरुषः ऐसा बोध होता है। इस प्रकार समास और विग्रह में अर्थभेद होने के कारण विग्रियमाण की समानार्थकता विखण्डित हो जायगी। दोनों के समानार्थक होने से ही समास के अर्थ का निर्णय विग्रहवाक्य से हो सकता है।

समानार्थक का तात्पर्य यदि यह माना जाय कि समास जन्य बोध में जो विशेष्य और विशेषण हो वही विग्रहवाक्यजन्य बोध में भी प्रकार और विशेष्य हो तो "प्राप्तोदकः" इससे उदककर्तृक प्राप्ति कर्म प्राप्तमुदकं यम् इससे यत्कर्मक प्राप्तिकर्तृ उदक इस प्रकार दोनों में विशेषणविशेष्य भाव का विपर्यय स्पष्ट होने से समास का विग्रह वाक्य "प्राप्तमुदकं यम्" यह नहीं हो सकेगा।

इसी प्रकार "पाचकः" इसका विवरण "पचति" "वैयाकरणः" इसका विवरण "व्याकरणमधीते" यह नहीं होगा। क्योंकि तिङन्त में भावना विशेष्य और कर्ता विशेषण है। कृदन्त और तद्धितान्त "पाचकः" "वैयाकरणः" इसमें कर्ता की प्रधानता होने से समानविशेषण विशेष्यभाव दोनों में नहीं है। इसके परिहार के लिये समासजन्यबोध में भासमान जितने विषय हैं उन सब विषयों का भान विग्रह (विवरण) में होना चाहिये। विशेषणविशेष्य का व्यत्यास बाधक नहीं है। यह कहना भी ठीक नहीं है— "राजपुरुषः" इसका विवरण पुरुषस्य राजा यह भी होने लगेगा। जितना विषय "राज्ञः पुरुषः" इसमें है उतना ही विषय पुरुषस्य राजा इस में भी है। भेद इतना ही है राजा का पुरुष पुरुष का राजा इस प्रकार विशेषण विशेष्यभाव मात्र का व्यत्यास है।

अतः समानार्थकत्व विग्रियमाण (जिसका विवरण किया जाय) जन्य बोध की जनकता रूप है। पुरुषस्य राजा" इसमें "राजपुरुषः" (विग्रियमाण) इससे राजा का पुरुष ऐसा तात्पर्य होने से इसके विपरीत पुरुष का राजा यह अर्थ होने के कारण समानार्थकत्व नहीं है। "प्राप्तमुदकं यम्" इत्यादि विवरण में प्राप्तोदक इत्यादि विग्रियमाण जन्य बोध के विषय परस्पर सम्बद्ध तात्पर्य विषयीभूत जितने पदार्थ हैं उन सबके बोध का जनक विवरण है। अतः समानार्थकत्व की अनुपपत्ति नहीं हुई। इस प्रकार वैयाकरणों का यह दोष दुर्बल है।

द्वितीय पक्ष (सम्बन्ध में लक्षणा है) में राजपदार्थ (राजसम्बन्ध) का पुरुष के साथ अभेदान्वय होने लगेगा। क्योंकि विरुद्ध विभक्ति से रहित प्रातिपदिक के अर्थों का परस्पर अभेदान्वय होने का नियम है। इसका आशय इस प्रकार है—

अभेद सम्बन्धावच्छिन्न प्रातिपादिकार्थनिष्ठ प्रकारतानिरूपित विशेष्यता सम्बन्धेन शाब्द बोध के प्रति विरुद्ध विभक्ति से रहित पदजन्य अर्थ की उपस्थिति कारण है। "राजपुरुषः" यहाँ राजपद के अनन्तर किसी विभक्ति के न रहने से पुरुषपद विरुद्ध विभक्ति से रहित है। अतः अभेदान्वय की आपत्ति होगी।

विरुद्ध विभक्ति रहितत्व का स्वरूप समास और व्यास साधारण क्या है ? विशेष्य-वाचक पद को विशेषण का वाचक जो पद उससे अनुत्पन्न विभक्ति का प्रकृति न होना ही उक्त रूप है। ऐसा कहना ठीक नहीं है—"नीलघटमानय" यहाँ विशेषण नीलपद प्रकृति जिस विभक्ति की नहीं है ऐसी नीलपदाप्रकृतिक विभक्ति अम् भी होगी उसकी प्रकृति नीलघट होने से घट भी होगी अप्रकृति नहीं होने से अतिप्रसङ्ग होगा। इसके लिये विशेषणवाचक पद का, विशेष्यवाचक पद प्रकृति न हो ऐसी विभक्ति का अप्रकृति होना ही विरुद्ध विभक्तिराहित्य है यह भी ठीक नहीं, नीलो घटः यहाँ अभेदान्वय नहीं होगा—नीलपदोत्तर विभक्ति दोनों विभक्तियों की भिन्नता होने से विशेष्य वाचक घट पदा-प्रकृतिक विभक्ति नीलपदोत्तर सु विभक्ति उसकी प्रकृति ही नीलपद है। अतः अप्रकृतित्व नहीं होने से उक्तव्युत्पत्ति का व्यभिचार है विशेष्यवाचकपदाप्रकृतिकत्व = विशेष्यवाचक पद से अनुत्तरत्व या विशेष्यवाचक पद के उत्तर रूप से अनुसन्धान का अविप-यत्वरूप है।

इस दोष के निराकरणार्थ विशेषणवाचक पद में विशेष्यवाचकपद से उत्पन्न विभक्ति के असदृश विभक्ति का अप्रकृतित्व ही विरुद्ध विभक्ति राहित्य है। सादृश्य सुत्वादि या प्रथमात्वादि रूप से। "नीलो घटः" इत्यादि स्थल में विशेषण नीलपदोत्तर सु विभक्ति में घटपदोत्तर सुविभक्ति भिन्न होने पर भी सुत्वधर्म से सदृश है। अतः असदृश अन्य विभक्तियाँ हैं उनकी अप्रकृति विशेषण नीलपद है। इसलिये दोष नहीं है।

यद्यपि "राज्ञः पुरुषस्य धनम्" = राजा के पुरुष का धन यहाँ पुरुष पदोत्तर षष्ठी विभक्ति ङस् से भिन्न पञ्चमी विभक्ति उसकी अप्रकृति राजपद होने से विरुद्धविभक्ति-राहित्य के कारण यहाँ अभेदान्वय होना चाहिये। तथापि साजात्य सुत्वादि के समान अर्थ का सादृश्य भी विवक्षित है। यहाँ षष्ठीद्वय से स्वत्व अर्थ की प्रतीति होने पर भी राज और पुरुष का स्वत्व भिन्न-भिन्न होने से अर्थतः साजात्य नहीं है। अतः राजपदोत्तर षष्ठी पुरुषपदोत्तर षष्ठी से भिन्न होने से असदृश विभक्ति का अप्रकृतिकत्व विशेषण में नहीं होने के कारण अभेदान्वय उक्त स्थल में नहीं हुआ। विस्तृत विवेचन दर्पण में देखिये।

अत एव "वषट्कर्त्तुः प्रथमभक्षः" इत्यत्र न भक्षमुद्दिश्य प्राथम्यविधानं युक्तम्। एकप्रसरताभङ्गापत्तेरिति तृतीये। "त्र्यङ्गैः स्विष्टकृतं यजति" इत्यत्राङ्गानुवादेन त्रित्वविधानं न युक्तम्। एकप्रसरताभङ्गापत्तेरिति दशमे च निरूपितं सङ्गच्छते। सङ्गच्छते चारुणाधिकरणारम्भः।

अन्यथा "अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इत्यत्रारुण-पदवदितरयोरपि एकाब्दत्वादिगुणमात्रवाचकतया अमूर्त्तत्वात्, क्रीणातौ करणत्वासम्भवस्य तुल्यत्वादारुण्यस्यैव वाक्याद्भेदशङ्काया असम्भवा-दिति प्रपञ्चितं भूषणे। तस्मात् समासशक्तिपक्षो जैमिनीयैरवश्याभ्युपेय इत्यास्तां विस्तरः॥ ३४॥

मीमांसकैरपि विशिष्टशक्तिपक्षोऽभ्युपेय इत्याह—*अत एवेति*। समासे एकार्थीभावस्य सर्वसम्मतत्वादेवेत्यर्थः। *भक्षमुद्दिश्येति*। "ऋत्विजो हविःशेषान् भक्षयन्ति" इति विहितभक्षणमनूद्येत्यर्थः।

*एकप्रसरताभङ्गापत्तेरिति*। उद्देश्यविधेयभावेनाऽन्वये पृथगुपस्थितेर्नियामकत्वेन तदनुरोधेन तदभ्युपगमे विशिष्टाऽर्थोपस्थितिजनकत्वरूपैकप्रसरताभङ्गापत्तेरित्यर्थः। तैर्विशिष्टशक्त्यनभ्युपगमेऽपि विशिष्टलक्षणाया अभ्युपगमेनैकप्रसरतायास्तन्मतसिद्धत्वात्। न चोद्देश्यतयाऽन्वये यच्छब्दयोगप्राथम्यादीनां विधेयतयान्वये च तच्छब्दयोगादीनां तन्त्रतया तत्र तदभावात् कथं तदापादानमपि वाच्यम्। सति तात्पर्ये, 'प्रथमो भक्तः, 'पण्डितो ब्राह्मणः, इत्यादावुद्देश्यविधेयभावेन बुद्धेरानुभविकतया यच्छब्दयोगादीनां प्रायिकत्वात्। तादृशशाब्दबोधे असमस्तपदजन्योपस्थितेर्हेतुता तु न। 'दामोदरः पूज्यो, राजपुरुषः सुन्दर, इत्यादितस्तथा बोधानुपपत्तेस्तत्र च प्राथम्यविशिष्टं भक्षणान्तरमेव विधीयते शब्दवृत्या। ततश्च प्राप्ताप्राप्तविवेकेन प्राथम्यविधिः पर्यवस्यतीति सिद्धान्तादिति भावः।

*त्र्यङ्गैरिति*। तत्र हीज्याशेषभूतत्रित्वविशिष्टयत्किञ्चिदङ्गविधानम् किं वा त्रित्वविशिष्टाऽशेषाङ्गविधानमिति संशये प्रकृताविज्याशेषेण पुरोडाशेन स्विष्टकृते हुतत्वादत्राऽपि शेषभूतत्रित्वविशिष्टाऽङ्गैरेव स्विष्टकृद्वचनं युक्तमिति पूर्वपक्षे, शेषभूतानि कानिचिदङ्गान्यनूद्य त्रित्वविधाने एकप्रसरताभङ्गापत्तिस्तस्मात् कल्पसूत्रोक्तत्रित्वविशिष्टाङ्गान्तरविधानमिति निर्णीतं दशमाध्यायस्य तृतीये पादे इत्यर्थः। कल्पसूत्रोक्तानि हृदयाद्येकादशाङ्गानि तु—हृदयम् १, जिह्वा २, वक्षो ३, यकृत् ४, वृक्कौ ५। ६, सव्यं दोः ७, उभे पार्श्वे ८। ९, दक्षिणा श्रोणी १०, गुदम् ११, इति। तत्र त्रीणि—दक्षिणोंऽसः, सव्या श्रोणी, गुदं तृतीयमिति।

नन्वेकप्रसरत्वं न विशिष्टाऽर्थोपस्थितिजनकत्वं, किन्तु समासघटकपदयोरुद्देश्यविधेयभावेनाऽन्वयाऽबोधकत्वमिति व्युत्पत्तिस्तद्भङ्गापत्तेरिति तदर्थो, न तु विशिष्टार्थोपस्थितिजनकत्वभङ्गापत्तिरिति। तादृशव्युत्पत्तिशरीरं तु समासघटकपदाऽर्थनिष्ठविधेयतानिरूपितोद्देश्यतासम्बन्धेन शाब्दबुद्धिं प्रति समासघटकपदजन्योपस्थितिः प्रतिबन्धिकेति।

नच तादृशप्रतिबध्यप्रतिबन्धकभावकल्पने गौरवमिति वाच्यम्। सर्वत्र विशिष्टशक्तिकल्पनापेक्षया क्वचित् प्रतिबध्यप्रतिबन्धभावकल्पने एव लाघवत्।

वस्तुतस्तु यत्रोद्देश्यविधेयभावेनान्वयबोधस्तत्पदार्थोपस्थितिसमवहिततदानुपूर्वीविरहादेव तथान्वयासम्भवान्नोक्तप्रतिबध्यप्रतिबन्धककल्पनाऽपि। एकप्रसरता तु प्रथमपदार्थाऽन्वितभक्षविशेष्यकबोधाऽनुभव एवेति नोक्तयुक्त्या मीमांसकैर्विशिष्टशक्तिरभ्युपेयेत्यत आह—*सङ्गच्छते चेति*। वाक्याद् भेदेति*। नच तस्य वाक्यभेदेन प्रकरणे निवेशोऽपि सम्भवति। अमूर्त्तत्वेन क्रियाभिः कारकत्वेन द्रव्यैः सममपि सम्बन्धासम्भवात्। नच तृतीयया ज्योतिष्टोमकरणीभूतप्राकरणिकद्रव्याण्यनूद्य यत् कर्त्तव्यं तदारुण्यगुणकेनेति परिच्छेकत्वेन तदन्वयो नासम्भावित इति वाच्यम्। तथा सति शक्तिः कारकमिति सिद्धान्तभङ्गापत्तेरित्यपि बोध्यम्। उप-

संहरति—*तस्मादिति*। जैमिनीयैरिति वदता नैयायिकमतस्य सयुक्तिकत्वं ध्वन्यते ॥ ३४ ॥

अर्थ—इसीलिये "वषट्कर्तुः प्रथमभक्षः" यहाँ पर भक्षण को उद्देश्य कर प्राथम्य का विधान युक्त नहीं माना गया है। ऐसा मानने पर विशिष्टार्थोपस्थितिजनकत्व रूप "एक प्रसरता" का भङ्ग हो जायगा। यह मीमांसा दर्शन के तृतीयाध्याय में निर्णीत है।

इसी प्रकार "त्र्यङ्गैः स्विष्टकृतं यजति"=तीन अङ्गों से स्विष्टकृत् होम करना चाहिये। यहाँ अङ्गों का अनुवाद कर त्रित्व का विधान एक प्रसरता भङ्ग होने से युक्त नहीं है ऐसा दशमाध्याय में किया गया निर्णय सङ्गत होता है।

एवं अरुणाधिकरण का आरम्भ भी समासशक्ति के स्वीकार से सङ्गत होता है। समास में शक्ति नहीं मानने पर "अरुणया एकहायन्या पिङ्गाक्ष्या सोमं क्रीणाति" इत्यादि स्थल में आरुण्यवाचक पद के समान "एकहायनी तथा पिङ्गाक्षी" पद भी एक वर्ष सम्बन्ध आदि गुणके वाचक होने से अमूर्त होने के कारण "क्रीणाति" इस क्रिया में करणतया अन्वयासम्भव समान होने से आरुण्य की ही [1]वाक्य=भेदाशङ्का की आपत्ति क्यों दी गई इत्यादि भूषण में विस्तृत है। इन सब कारणों से मीमांसकों को भी समासशक्ति पक्ष को अवश्य स्वीकार करना चाहिये। विस्तृत निरूपण बन्द हो ॥ ३४ ॥

हिन्दी भाष्य—"वषट्कर्तुः प्रथमभक्षः" इसका विचार मीमांसादर्शन के तृतीयाध्याय में किया गया है।

देवता को उद्देश्य कर हवि के त्याग सम्बन्धी मन्त्रविशेष को वषट् कहते हैं। उसके करनेवाला वषट्कर्ता होता है। "ऋत्विजो हविश्शेषं भक्षयन्ति"=ऋत्विक् सामान्य के लिये विहित भक्षण वषट्कर्ता को भी प्राप्त ही है। अतः भक्षण का अनुवाद कर अप्राप्त प्राथम्य का विधान करता है। अन्य ऋत्विजों की अपेक्षा वषट्कर्ता के भक्षण में प्राथम्य का विधान है। इस प्रकार के पूर्वपक्ष होने पर प्रथमभक्षः इसमें यदि भक्षण का अनुवाद कर प्राथम्य का विधान होगा तो जो भक्षण वाक्यान्तर से प्राप्त है वह वषट्कर्ता के लिये प्रथम है इस प्रकार वाक्य को पृथक् कर अन्वय करना होगा। "प्रथमभक्षः" यह समस्त पद होने से उद्देश्य विधेय भाव से अन्वय नहीं हो सकेगा। "पण्डित ब्राह्मणः" इससे जो पण्डित है वह ब्राह्मण है यह अर्थबोध नहीं होता। इसमें कारण है साकाङ्क्ष असमर्थ होता है। पण्डितः यह यदर्थ में यः पण्डितः इस प्रकार साकाङ्क्ष होगा। असमर्थका समास नहीं होता। अतः उद्देश्यविधेय भाव से अन्वय समस्त का नहीं होता। प्रकृत में भक्षण को उद्देश्य कर प्राथम्य का विधान नहीं होने में कारण एक=प्रसरता अर्थात् विशिष्टार्थोपस्थिति की जनकता उसका भङ्ग हो जाना है। पृथक् पृथक् उपस्थित पदार्थों का ही उद्देश्य

---

१. "अरुणया पिङ्गाक्ष्या" यहाँ आरुण्य को वाक्य से पृथक् कर प्राकरणिक द्रव्यों में अन्वय है। अथवा "क्रीणाति" इस क्रिया के साथ अन्वित होकर एकहायनी आदि के साथ अन्वय हैं। इस प्रकार की वाक्यभेदशङ्का एकहायन आदि में भी हो सकती है पुनः आरुण्य के विषय में ही ऐसी शङ्का क्यों की गई। अतः एकहायन आदि पद बहुव्रीहि में अतिरिक्त शक्ति होने से द्रव्यवाचक है गुणवाचक नहीं है। इसलिये इसमें शङ्का नहीं की गई यह भाव है।

विधेय भाव से अन्वय होता है। यहाँ वैसा करने पर अलग-अलग उपस्थिति माननी होगी। यह समास में सम्भव नहीं है। अतः प्राथम्य विशिष्ट भक्षण का विधान है यह सिद्धान्त किया गया।

इसी प्रकार पथमाध्याय में—"त्र्यङ्गैः स्विष्टकृतं यजति" = तीन अङ्गों से स्विष्टकृत् होम करना चाहिये। यहाँ "पशौ हृदयस्याग्रे अवद्यति" इस श्रुति से अङ्गों के होम का विधान किया गया है। इस विधान से "प्रकृतिवद् विकृतिः कर्त्तव्या" = प्रकृतियाग के समान विकृति याग का भी अनुष्ठान कर्त्तव्य है। इस अतिदेशवाक्य के द्वारा एकादश अङ्गों का होम प्राप्त होने पर अङ्गों का अनुवाद कर तीन संख्या का विधान उक्त वचन से किया गया है। ऐसा पूर्वपक्ष करके सिद्धान्त किया गया कि—विशिष्ट अर्थविषयक जो उपस्थिति उसकी जनकता का भङ्ग हो जायगा। इससे समासशक्ति मीमांसकों के मत में भी सिद्ध होती है। अन्यथा विशिष्टार्थोपस्थिति नहीं होने से तज्जनकता के भङ्ग का अवसर ही कहाँ है।

इसी प्रकार "अरुणया पिङ्गाक्ष्या एकहायन्या सोमं क्रीणाति = अरुण एक वर्ष वाली और पीली आँख वाली गौ से सोमलता का क्रयण (खरीद) करना चाहिये। यहाँ आरुण्य (लाल) गुण होने से अमूर्त है। इसका केवल करणस्वरूप से क्रयणक्रिया में अन्वय नहीं होगा। अतः लक्षणा से प्राकरणिक सभी द्रव्यों के द्वारा आरुण्य का क्रियान्वयन प्राप्त होता है। ऐसा पूर्वपक्ष किया गया है। समासशक्ति न माननने पर "एकहायनी" इससे एक वर्ष सम्बन्ध "पिङ्गाक्षी" इससे पीली आँख सम्बन्ध मात्र की प्रतीति होने से आरुण्य के समान सम्बन्ध भी अमूर्त होने के कारण उसका क्रयण क्रिया में अन्वयासम्भव समान ही है। पुनः आरुण्य मात्र का अन्वयासम्भव प्रदर्शन असङ्गत हो जायगा। समासशक्ति स्वीकार करने पर समास होने से सम्बन्धी तक अर्थ होने के कारण इन दोनों के द्रव्यवाची होने से अन्वयासम्भव आरुण्य के समान नहीं है यह भाव है। इन सब दोषों के निराकरण के लिये समास में शक्ति स्वीकार आवश्यक है ॥ ३४ ॥

राजपुरुष इत्यादौ राजा चाऽसौ पुरुषश्चेत्येव विग्रहः। चित्रगुरित्यादौ च चित्राणां गवामयमित्येव समानार्थत्वानुरोधात्। यद्यपि प्रथमान्तानामेव बहुव्रीहिरिति "शेषो बहुव्रीहिः" (पा० सू० २।२।२३) इति सूत्राल्लभ्यते इति प्रथमान्तपक्षे वाक्यं, चित्रा गावो यस्येत्येवं सम्भवत्येव। "षष्ठी" (पा० सू० २।२।८) इति समासविधनाद् राज्ञः पुरुष इति च पक्षे वाक्यम्, तथापि तस्य न विग्रहत्वं भिन्नार्थत्वात्, किन्तूक्तरीत्यैवेति मीमांसकाः। तान् प्रसङ्गान्निरस्यति—

आख्यातं तद्धितकृतोर्यत्किञ्चिदुपदर्शकम्।
गुणप्रधानभावादौ तत्र दृष्टो विपर्ययः ॥ ३५ ॥

तद्धितकृतोर्यत्किञ्चिदर्थबोधकं विवरणमाख्यातं, तत्र विपर्य्ययो दृष्टः। तथाहि-'आक्षिकः' 'कुम्भकारः' इत्यत्राक्षकरणकव्यापाराश्रयः, कुम्भोत्पत्त्यनुकूलव्यापाराश्रय इति बोधः। 'अक्षैर्दीव्यति' 'कुम्भं करोति' इत्यत्राक्षकरणिका देवनानुकूला भावना, कुम्भोत्पत्त्यनुकूला भावनेति

व्यापार

बोधः। कृत्प्रत्यये कारकाणामाख्याते च भावनायाः प्राधान्यं वदतो मीमांसकस्याऽपि गुणप्रधानाभावांशव्यत्यासो न विवरणत्वबाधक इति नात्र पाक्षिकस्य 'चित्रा गावो यस्य' इत्यादेर्विग्रहत्वे बाधकमस्तीति भावः॥ ३५॥

*समानार्थत्वाऽनुरोधादिति* । समानार्थत्वं च व्याससमासयोः समानविशेष्य-प्रकारकबोधजनकत्वम् । तदनुरोधादित्यर्थः । उक्तविग्रहवाक्याऽन्तर्गतराजशब्दस्य सम्बन्धिनि लाक्षणिकत्वान्न विग्रहत्वक्षतिः । सम्बन्धार्थकषष्ठ्यन्तस्य तु सम्बन्ध-प्रकारकबोधजनकत्वान्न विग्रहत्वमेवं चित्रा गावो यस्येत्यादेरपीत्याशयं प्रकाशयति—*यद्यपीत्यादि, मीमांसका इत्यन्तेन* । *सूत्राल्लभ्यते इति* । तेन हि "शेषो बहुव्रीहिः" (पा० सू० २।२।२३) इत्यधिकारात् प्रथमात्रिकस्य "द्वितीयाश्रित" इत्यादिनाऽनुक्तस्य समासो विधीयते। यद्यपि "विशेषणं विशेष्येण" (पा० सू० २।१।५७) इत्यादिना तस्याऽपि समास उक्त एव, तथापि नाऽसौ प्रथमाशब्देनो-ल्लिखित इति तत्त्रिकस्य शेषत्वमविकलमिति भावः ।

*उक्तस्यैवेति* । चित्राणां गवामयमित्यादेरेवेत्यर्थः । एवकारेण प्रथमान्त-चित्रादिपदघटितस्य व्यवच्छेदः । उपदर्शकपदस्य विवरणम् । *अर्थबोधकमिति* । *आख्यातम्* । तिङन्तम् । तत्र तिङन्तघटिते विवरणे इत्यर्थः । व्यत्यासमेवाह—*तथाहीत्यादि* ।

ननु तत्राऽपि तिपः कर्तृलक्षकतयाऽक्षकरणकव्यापाराश्रय इति बोधान्न समानार्थ-कत्वभङ्गोऽत आह—*कृत्प्रत्यये इति* ॥ *कारकाणाम्*-कर्त्रादीनाम् ॥ प्राधा-न्यम्*—मुख्यविशेष्यत्वम् । कारकाणां प्राधान्यं "प्रकृतिप्रत्ययार्थयोः" इति न्यायेन, भावनायास्तु—"भावप्रधानमाख्यातम्" इति निरुक्तादिति भावः ॥ ३५ ॥

अर्थ—"राजपुरुषः" इसका "राजा च असौ पुरुषः" यही विग्रह एवं "चित्रगुः" इस का "चित्राणां गवामयम्" यही विग्रह है। क्योंकि विवरण और विव्रियमाण को समानार्थक होना चाहिये। यद्यपि "शेषो बहुव्रीहिः" इस सूत्र के अनुरोध से प्रथमान्त पदों की ही बहुव्रीहि होती है। इस रीति से प्रथमान्त वाक्य चित्रा गावो यस्य ऐसा पक्ष में होना चाहिये। "षष्ठी" इस सूत्र से समास का विधान होने के कारण "राज्ञः पुरुषः" ऐसा पक्ष में प्रयोग उचित है तथापि उनको विग्रह नहीं कह सकते क्योंकि दोनों भिन्नार्थक हैं। अतः पूर्वदर्शित ही विग्रह हो सकता है इस मीमांसक मत का प्रसङ्ग से खण्डन करते हैं—"आख्यातम्" इत्यादि से।

तद्धितान्त और कृदन्त स्थल में अर्थबोधक जो आख्यात = तिङन्त है। वहाँ प्रधान तथा अप्रधान भाव आदि में वैपरीत्य देखा गया है।

तद्धितान्त और कृदन्त का जो अर्थ बोधक अर्थात् विवरण आख्यातान्त होता है। उसमें विपर्यय वैपरीत्य है।—"आक्षिकः" "कुम्भकारः" यहाँ पर क्रमशः अक्षकरणक व्यापाराश्रय कुम्भोत्पत्त्यनुकूलव्यापाराश्रय इस प्रकार का बोध होता है।

"अचैर्दीव्यति" कुम्भं करोति" इस विग्रह में अक्षकरणिका देवतानुकूल भावना एवं कुम्भोत्पत्ति के अनुकूल भावना इस प्रकार का बोध होता है। कृत्प्रत्ययस्थल में कारक=कर्ता कर्म आदि का, तिङन्तस्थल में भावना की प्रधानता माननेवाले मीमांसकों के यहाँ भी विशेषणविशेष्यभाव का विपर्यय, विवरण का बाधक नहीं होता है। इसलिये यहाँ भी पक्ष में चित्रा गावो यस्य इत्यादि विग्रह होने में कोई आपत्ति नहीं है।

हिन्दी भाष्य—समास और व्यास (विग्रह) को समानार्थक[1] होना आवश्यक है। समानार्थक से तात्पर्य दोनों के बोध में भासमान पदार्थों का समानता के साथ विशेषण विशेष्यभाव भी समान होना चाहिये। इस कारण से "राजपुरुषः" इसका विग्रह (विवरण[2]) राजा चासौ पुरुषः" ऐसा होना चाहिये। यहाँ राजपद सम्बन्धी में लाक्षणिक होने से राजसम्बन्धी से अभिन्न पुरुष ऐसा बोध होता है। "राजपुरुषः" इसमें भी ऐसा ही बोध होने से दोनों में समानार्थकत्व की उपपत्ति हो सकती है। यदि "राज्ञः पुरुषः" इसको विग्रह मानेंगे तो षष्ठी का अर्थ स्वत्व सम्बन्ध है। इसमें निरूपितत्व सम्बन्ध से राजपदार्थ का और स्वत्व का आश्रयतया पुरुष में अन्वय होने से "राजनिरूपितस्वत्ववान् पुरुषः" ऐसा बोध होगा। ऐसी दशा में विग्रह वाक्य में सम्बन्ध प्रकारक आश्रयतासंसर्गक और समास में सम्बन्धिप्रकारक अभेद संसर्गक बोध होने से समानार्थकत्व नहीं होगा।

शङ्का—"राज्ञः पुरुषः" इसमें भी राजपद की सम्बन्धी में लक्षणा एवं षष्ठी का अभेद अर्थ होने से समास के समानार्थक होने के कारण विग्रह वाक्य होने में अनुपपत्ति नहीं है।

समाधान—षष्ठ्यर्थाभेद का प्रकारता से भी भान समास में अभेद का संसर्ग रूप से भान होने से समानार्थकत्व नहीं है। दूसरा कारण षष्ठी का अभेद अर्थ नहीं माना जाता। यदि षष्ठी को साधुता मात्र के लिये मान लें तो यह भी ठीक नहीं "षष्ठी शेषे" इस सूत्र से शेष सम्बन्ध में ही षष्ठी का विधान किया गया है।

इसी प्रकार "चित्रगुः" इससे चित्रा से अभिन्न गौ इस प्रकार का बोध और "चित्रा गावों यस्य" इससे जिसकी चित्रा से अभिन्न गाय ऐसा बोध होने से समास में स्वामी की विशेष्यता और व्यास में गो की विशेष्यता होने से समानार्थकत्व का भङ्ग हो जायगा। अतः चित्राणां गवामयम् ऐसा विग्रह करना उचित है। इसमें "अयम्" इससे उपस्थित स्वामी की प्रधानता होने से दोनों समानार्थक होते हैं।

यद्यपि "शेषो बहुव्रीहिः" इस सूत्र से प्रथमान्तों के बहुव्रीहि समास का विधान होने से प्रथमान्त का ही समास होगा षष्ठ्यन्त का नहीं तथापि समास विकल्प होने से पक्ष में चित्रा गावो यस्य ऐसा वाक्य होने में बाधा नहीं है केवल उसका विवरण (विग्रह) इसको नहीं माना जा सकता यह तात्पर्य है।

समास का अर्थ विग्रह से समझाया जाता है। यह तभी सम्भव है जब दोनों का

---

१. समानार्थत्वञ्च—व्याससमासयोः समानविशेष्यप्रकारकबोधजनकत्वमिति तात्पर्यम्।

२. विवरणं तत्समानार्थकवाक्यम् समर्थकमम् हि काशिका।

समान अर्थ हो । मीमांसकों के इस सिद्धान्त का खण्डन कारिका से करते हैं—आख्यात-मित्यादि ।

आख्यात शब्द से तिङन्त और यत्किञ्चित् पद से ईषद् अर्थ विवक्षित है । तिङन्त तद्धितान्त और कृदन्त के ईषद् अर्थ का बोधक विवरण है । "आक्षिकः" "कुम्भकारः" इत्यादि तद्धितान्त और कृदन्त स्थल में विशेषणविशेष्यभाव का विपर्यास देखा गया है । "आक्षिकः" इससे अक्षकरणक व्यापाराश्रय "कुम्भकारः" इससे कुम्भ की उत्पत्ति के अनुकूल व्यापार का आश्रय ऐसा बोध होता है । इसके विवरण से "अक्षैर्दीव्यति" अक्षकरणिका भावना तथा "कुम्भं करोति" कुम्भोत्पत्त्यनुकूला भावना इस प्रकार का बोध होता है । ऐसी दशा में विग्रियमाण आक्षिक और कुम्भकारः इसमें आश्रय की प्रधानता और विवरण "अक्षैर्दीव्यति" "कुम्भं करोति" इसमें भावना की प्रधानता होने से विशेषणविशेष्यभाव विपर्यस्त होने पर भी विवरण माना जाता है । तिङन्त स्थल में भावना की प्रधानता तद्धितान्त और कृदन्त स्थल में प्रत्ययार्थ आश्रय की प्रधानता आपके सिद्धान्त के अनुकूल ही है । अतः समानार्थकत्व में विशेषणविशेष्यभाव का भेद होना बाधक न होने के कारण "राज्ञः पुरुषः" "चित्रा गावो यस्य" इत्यादि को विग्रह कहना उचित ही है ॥ ३५ ॥

नन्वस्तूक्तरीत्या सर्वत्र समासे शक्तिः, अस्तु च तथा विग्रहस्तथापि षष्ठीतत्पुरुषकर्मधारययोः शक्तिमत्त्वाविशेषान्निषादस्थपत्यधिकरणसिद्धान्त-सिद्धिर्न स्यादित्यत आह— शूद्र भी है और अधिकारी भी

पर्यवस्यच्छाब्दबोधाऽविदूरप्राक्क्षणस्थिते ॥
शक्तिग्रहेऽन्तरङ्गत्वबहिरङ्गत्वचिन्तनम् ॥ ३६ ॥

पर्य्यवस्यँश्चासौ शब्दबोधश्च तस्मादविदूरश्चासौ प्राक्क्षणश्च, तदानी-न्तनलाघवमादायाऽधिकरणाऽविरोध इत्यर्थः अयम्भावः–निषादस्थपति-पदस्य समासशक्तिपक्षे, निषादरूपे निषादानाञ्च स्थपतौ निषादस्वामिके पुरुषान्तरे चेत्येवं सर्व्वत्र शक्तत्वान्नानार्थत्वम् । तथा च "नानार्थे तात्पर्य्यात् विशेषावगतिः" इति न्यायेन तत्कल्पनायां पदद्वयेन पूर्वोप-स्थितार्थे एवोपस्थित्यादिलाघवात् तत् कल्प्यत इति । परेषामपि सति तात्पर्य्ये, 'यष्टीः प्रवेशय'इतिवल्लक्षणाया दुर्वारत्वात् तात्पर्य्यमेव कल्प्य-कोटौ अवशिष्यत इति दिक् ॥ ३६ ॥

इति वैयाकरणभूषणसारे समासशक्तिनिरूपणम् ॥ ५ ॥

*शक्तिमत्त्वाविशेषादिति* ॥ शक्तिमत्त्वमेकार्थीभावः ॥ *सिद्धान्तसिद्धि-रिति* ॥ सिद्धान्तस्य मीमांसितार्थस्य सिद्धिरनुष्ठानोपयोगार्हत्वमित्यर्थः । तथाहि—"निषादस्थपतिं याजयेत्" इति श्रूयते । तत्र निषादस्थपतिशब्दः किं षष्ठीतत्पुरुषो

बहुव्रीहिर्वेति कर्मधारय इति संशये, कर्मधारयेऽपूर्वविद्याध्ययनकल्पनागौरवाद्, बहुव्रीहौ वाक्यलक्षणायां गौरवाल्लाघवात् षष्ठीतत्पुरुष एवेति पूर्वपक्षे तत्पुरुषस्यापि पूर्वपदलाक्षणिकतया कर्मधारयापेक्षया गौरवाल्लाघवात् कर्मधारय एव। अपूर्वविद्याध्ययनस्योत्तरकालकल्प्यत्वेन तादृशगौरवस्य फलमुखतया अदोषत्वादिति सिद्धान्तितम्, तद् विरुद्धचेत। भवन्मते तत्पुरुषष्वीकारेऽपि गौरवाऽनवकाशादिति भावः।

*तदानीन्तनेति*। यादृशवाक्यजन्यशाब्दबोधाव्यवहितप्राक्क्षणवृत्तिशक्तिग्रहनिष्ठान्तरङ्गबहिरङ्गभावचिन्तनप्रयुक्तलाघवमादायेत्यर्थः। तदेव विशदयति—*अयम्भाव इति*। *निषादरूपेति*। स्थपतावित्यनेनान्वितम्। *निषादानामिति*। निषादसम्बन्धिस्थपतावित्यर्थः। तत्र षष्ठयर्थसम्बन्धान्तर्भावेणैकार्थीभावाऽभ्युपगमात्। *निषादस्वामिक इति*। स्थपतिशब्दस्य स्वाम्यर्थकतया निषादाभिन्नस्वामिके पुंसीत्यर्थः। तत्रान्यपदार्थान्तर्भावेण समुदायशक्तिस्वीकारात्। 'नानाऽर्थ' इत्यस्य वृत्त्यानेकार्थोपस्थितौ जातायामिति शेषः। न्यायेनेत्यस्य क्व तात्पर्यमिति सन्देहे सति। *तत्कल्पनायाम्*। तात्पर्य्यकल्पनायाम्।

*पूर्वोपस्थितार्थ एवेति*। समासघटकप्रत्येकपदशक्त्युपस्थापिताऽर्थमात्रविषयककर्मधारयीयशक्तिग्रहस्यान्तरङ्गत्वेन प्रथमोपस्थिताऽर्थं एवोपस्थितिर्लाघवा।न्निषादस्थपतिशब्दस्य तात्पर्य्यमवसीयते, तेन विशेषाऽवगतिः। न तु बहिर्भूतपदार्थविषयकशक्तिग्रहोपस्थापिते, तदुपस्थितेर्विलम्बितत्वादित्याखण्डलाऽर्थः।

निरुक्तव्यपेक्षेव सामर्थ्यं मूलकृदभिप्रेतमित्यर्थे इदमपि प्रमाणम्। अन्यथा जहत्स्वार्थवृत्तिपक्षे पदानामानर्थक्यात् प्रत्येकपदवृत्त्याऽर्थोपस्थितेरसम्भवेन क्व तन्मूलकशक्तिग्रह इति तस्यान्तरङ्गत्वकथनमसङ्गतमेव स्यादिति बोध्यम्। *तत्*-तात्पर्य्यम्। *कल्प्यते*-अवधार्य्यते।

ननु "संयोगो विप्रयोगश्च" इत्यादिना हरिणा संयोगादीनां विशेषावगतिहेतुत्वं बोध्यते, तत् कथं तात्पर्य्यस्य विशेषावगतिहेतुत्वमिति चेद्? न। नानाशक्त्युपस्थिताऽनेकेषु संयोगादिनैकस्मिन्नवधारिते तात्पर्य्ये विशेषावगतिरिति शब्दाऽर्थस्याऽनवच्छेद इति भावाऽर्थस्य वक्ष्यमाणत्वात्। संयोगादीनां तात्पर्य्यग्राहकतायामेवोपयोगेन तात्पर्य्यस्य विशेषावगतिहेतुत्वं सर्वसम्मतमेवेति भावः।

ननु प्रत्येकपदवृत्तिपक्षेऽनायासेनैवाधिकरणसिद्धान्तोपपत्तौ विशिष्टशक्तिपक्षे तादृशसिद्धान्तसमर्थने क्लेशो दुष्परिहर एवेत्यत आह—*परेषामपीति*। *प्रवेशायेतिवदिति*। तात्पर्य्यस्यैव लक्षणानियामकतया तत्सत्त्वे वाक्यलक्षणया समासाऽन्तरबोधस्य दुर्वारतया तात्पर्य्याभावेनैव तदवगतेर्वारणीयत्वादित्यर्थः।

ननु "निषादस्थपतिं याजयेत्" इत्यत्र स्थपतिशब्दः स्वामिपर्य्यायः, श्रेष्ठपर्यायो वा उभयथाऽप्यसौ गुणवचनः। तस्य च जातिवचननिषादपदेन कर्मधारये तत्र

गुणवचनस्यैव पूर्वनिपातनियमेन स्थपतिनिषादमिति प्रसज्ज्येत, ननु निषादस्थपतिमिति स्यात्। किञ्च उभयथापि स्थपतिशब्दार्थस्य नित्यं सम्बन्धिसापेक्षत्वेन षष्ठीसमास एव न्याय्यो, न तु कर्मधारय इति कथमुक्तसिद्धान्तसङ्गतिः, प्रकृतेऽपीत्यत आह—*दिगिति*। तदर्थस्त्वत एवास्वरसात् "लिङ्गदर्शनाच्च" इति सूत्रं हेत्वन्तरोपसङ्ग्राहकं प्रणीतं महर्षिणा। तच्च शबरस्वामिना, "कूटं हि निषादानामेवोपकारकं, नार्य्याणामेवञ्च तन्निषादानामेव स्वम्" इति भाष्ये व्याख्यातम्। तथाच कूटदक्षिणालिङ्गात् कर्मधारयत्वे निर्णीते स्थपतिशब्दस्य राजदन्तादित्वात् परनिपातो बोध्यः। सम्बन्ध्याकाङ्क्षानिवृत्तिरप्यर्थतो निषादानां स्वत्वलाभादुपपद्यते। एवं लाघवादिविचारस्तु कथञ्चित् सम्भवमात्रेणेति सर्वमनवद्यम्॥ ३६॥

इति भूषणसारदर्प्पणे समासशक्तिनिरूपणम्॥ ५॥



अर्थ—शङ्का—सर्वत्र समास में पूर्वोक्तयुक्ति से शक्ति रहे। "राज्ञः पुरुषः" इत्यादि विग्रह वाक्य भी स्वीकार है। परन्तु षष्ठी तत्पुरुष तथा कर्मधारय समास इन दोनों में एकार्थीभावरूपशक्तिमत्ता अविशिष्ट होने से निषाद स्थपति अधिकरण के सिद्धान्त= मीमांसितार्थ की सिद्धि=(अनुष्ठानोपयोगित्व) नहीं होगी। स्थपति Building बनानेवा

समाधानः—उक्त दोषाशङ्का के निवारणार्थ कारिका का उल्लेख है। "पर्यवस्यत्" इत्यादि—

पर्यवस्यत् अर्थात् सम्पद्यमान जो शाब्दबोध उससे अविदूर प्राक्क्षण=समीपवर्ती जो पूर्वक्षण, तद्वृत्ति शक्ति ज्ञाननिष्ठ अन्तरङ्ग और बहिरङ्गभाव का चिन्तन उक्त अधिकरण का साधक है॥ ३६॥

पर्यवस्यन्=फलीभूत होता हुआ जो शाब्दबोध=समासजन्य बोध, उससे अविदूर अर्थात् समीपवर्ती अव्यवहित जो प्राक्क्षण तद्वृत्तिशक्ति ज्ञान तन्निष्ठ जो अन्तरङ्गबहिरङ्गभाव उसके चिन्तन प्रयुक्त लाघव के द्वारा अधिकरण सिद्धि होने से विरोध नहीं है।

भावार्थ यह है कि—समासशक्तिपक्ष में निषादस्थपतिपद, निषादरूप स्थपति या निषादों का स्थपति अथवा निषाद स्थपति वाला कोई इन सभी अर्थों में शक्त होने से नानार्थक=अनेकार्थक है। ऐसी अवस्था में निषाद स्थपति शब्द से अनेक अर्थों की उपस्थिति होने पर तात्पर्य से विशेष अर्थ का निर्णय होता है इस न्याय के द्वारा कल्प्यमान तात्पर्य किस अर्थ में है इसके निर्णय में पदद्वय (निषाद और स्थपति) मात्र से समासशक्ति से पूर्व में ही उपस्थित अर्थों में (अन्यापेक्षया कर्मधारय से उपस्थापित अर्थों में) उपस्थित्यादि का लाघव है। अतः निषादरूप स्थपति इस अर्थ में तात्पर्य निश्चय द्वारा उक्तार्थ का ही उक्त पद से बोध होता है।

मीमांसक मत में भी "यष्टीः प्रवेशय"=लाठी का प्रवेश कराओ यहाँ (अन्वयानुपपत्ति के विना भी) तात्पर्य की अनुपपत्ति से लक्षणा मानी गई है। उसी प्रकार समास में शक्ति नहीं माननेवाले लक्षणा से बोध करानेवालों के मत में भी लक्षणा के लिये तात्पर्य को ही कल्प्यमान कोटि में रखना होगा॥ ३६॥

हिन्दी भाष्यः—"निषादस्थपतिं याजयेत्" निषादस्थपति को याग करावें। यहाँ सन्देह होता है कि निषादस्थपति शब्द में (निषादश्चासौ स्थपतिः इस प्रकार) कर्मधारयसमास अथवा (निषादानां स्थपतिः इस प्रकार) षष्ठी समास अथवा (निषादः स्थपतिर्यस्य इस प्रकार) बहुब्रीहि हैं।

कर्मधारय समास मानने पर वेदाध्ययन का अधिकार निषाद जाति के लोगों को भी देना होगा। शूद्र को वेदाध्ययन का अधिकार नहीं है। निषाद शूद्र होने से उसको अपूर्व वेदाध्ययन का अधिकार देने में गौरव होगा। बहुब्रीहि में निषाद है स्वामी जिसका इस प्रकार के अर्थ होने से निषाद स्वामीवाले ब्राह्मणादि हो सकते हैं। अतः ब्राह्मणादि ही निषादस्थपति का अर्थ हैं इसलिये अपूर्व वेदाध्ययन के अधिकार की कल्पना नहीं करनी पड़ेगी। पर अन्यपदार्थ की प्रतीति के लिये लक्षणा माननी होगी अतः गौरव होगा इस कारण से षष्ठी तत्पुरुष मानना चाहिये। निषादों का स्वामी ब्राह्मणादि हो सकते हैं। उनको याग कराना विहित ही है। ऐसा पूर्वपक्ष होने पर मीमांसकों ने निर्णय किया—

यहाँ निषादरूप जो स्थपति (स्वामी) इस प्रकार कर्मधारय समास है। बहुब्रीहि के समान षष्ठी तत्पुरुष में भी सम्बन्धी में लक्षणा होने से गौरव है। कर्मधारय में समस्यमान पदार्थ से अतिरिक्त अर्थ न होने से लक्षणा का अवसर ही नहीं होता। अतः इसमें लाघव है। यद्यपि कर्मधारय में अपूर्व वेदाध्ययन कल्पनाजन्य गौरव है तथापि फलमुख अर्थात् आदि में लाघव जिसमें है वह फलमुख है। आरम्भ में लाघव होने से अनन्तर में अपूर्व विद्याध्ययन की कल्पना से जन्य गौरव, दोषावह नहीं होता। अतः कर्मधारय ही सिद्धान्ततः निर्णीत हुआ। समास में अतिरिक्त शक्ति माननेवालों के मत में कर्मधारय षष्ठी समास एवं बहुब्रीहि इन सभी समासों में शक्ति समान होने से कर्मधारय मानने में लक्षणा यहाँ नहीं होने के कारण लाघव है। इस प्रकार लाघवमूलक निर्णय असङ्गत हो जायगा यह शङ्का करनेवाले का भाव है।

समाधान का भाव यह है कि—

समासशक्तिवादी के यहाँ समास भेद से प्रतीत होनेवाले तीनों अर्थों में शक्ति होने से लाघव गौरव की चर्चा किसी समास में सम्भव नहीं हैं। लक्षणावादी के यहाँ कर्मधारय में लक्षणा नहीं होने से लाघव है यह आपका कथन युक्त है। किन्तु समास भेद से अनेक अर्थों की प्रतीति होने से निषादस्थपति शब्द अनेक अर्थवाला हो जाने के कारण कहाँ कौन अर्थ विवक्षित है इसका निर्णय तात्पर्य से किया जाता है। "नानार्थे तात्पर्यात् विशेषावगतिः" = नानार्थ शब्द से अनेक अर्थों की उपस्थिति होने पर तात्पर्य से ही अर्थविशेष का निश्चय होता है ऐसा न्याय है। यहाँ समास घटक प्रत्येक पद की जो शक्ति उससे उपस्थापित मात्र अर्थ को विषय बनानेवाली जो कर्मधारय समासशक्ति उसका ज्ञान अन्तरङ्ग है। क्योंकि कर्मधारय की शक्ति समासघटक निषाद और स्थपति इन दो पदों की शक्ति से उपस्थित अर्थों को ही विषय करती है। अन्य समासों की शक्ति पदद्वय से उपस्थापित अर्थों से अतिरिक्त अर्थ को भी विषय करने से बहिरङ्ग है। अर्थात् बहिर्भूत पदार्थ को विषय करने वाली शक्ति के ज्ञान से जन्य समुदायार्थ की उपस्थिति विलम्ब से होती है। अतः प्रथमोपस्थित अर्थमात्र को विषय करनेवाली समासशक्ति के विषय की उपस्थिति में ही लाघव होने से उसी में तात्पर्य की कल्पना

होती है। अतः तात्पर्यवश से निषादरूप स्थपति का ही बोध होता है। अतः वैयाकरणों के मत में भी निषादस्थपति अधिकरण का मीमांसित अर्थ अनुष्ठानोपयोगी होता है।

"संयोगो विप्रयोगश्च" इत्यादि को ही तात्पर्य निर्णय द्वारा अर्थ का निर्णायक माना गया है। इसमें लाघव का निर्देश नहीं है ऐसी शङ्का नहीं करनी चाहिये। स्वरादयः इसमें आदि पद से इसका भी सङ्ग्रह करना चाहिये।

शङ्का—प्रत्येक समस्त पदों में वृत्ति माननेवालों के मत में निषादस्थपत्यधिकरण अनायास उपपन्न हो जाता है। वैयाकरणों के मत में तादृश अधिकरण के सिद्धान्त समर्थन में तात्पर्यानुधावन का क्लेश दुर्निवार है।

समाधान—तात्पर्यानुपपत्ति से लक्षणा होती है। "काकेभ्यो दधि रक्ष्यताम्" यहाँ काक से दधिरक्षण सम्भव होने से अन्वयानुपपत्ति और मुख्यार्थ बाध नहीं है अतः काक की दध्युपघातक में लक्षणा नहीं होने से तात्पर्यानुपपत्ति को लक्षणा का बीज माना गया है। वक्ता का दधिरक्षण में तात्पर्य होने से उपघातक मात्र काकपद से विवक्षित है। एवं "यष्टीः प्रवेशय" यहाँ तात्पर्य की अनुपपत्ति से यष्टि पद का यष्टिधर में लक्षणा मानी गई है। इसलिये आपको भी निषादस्थपति इस पद की लक्षणा में तात्पर्यानुसन्धान करना ही होगा। अतः हमारे मत में विशेष क्लेश की आशङ्का निर्मूल है।

शङ्का—स्थपति शब्द स्वामिवाचक या श्रेष्ठ वाचक होने से गुणवाचक है। अतः कर्मधारय में स्थपति का पूर्वनिपात होना चाहिये।

समाधान—पूर्वनिपातप्रकरण अनित्य होने से दोष नहीं है। अथवा राजदन्तादि गण में पाठ मानकर स्थपति का परनिपात है ॥ ३६ ॥

॥ इति समासशक्तिनिरूपणम् ॥



## अथ शक्तिनिर्णयः

शक्तिप्रसङ्गात् तस्याः स्वरूपमाह—

इन्द्रियाणां स्वविषयेष्वनादिर्योग्यता यथा ।
अनादिरर्थैः शब्दानां सम्बन्धो योग्यता तथा ॥३७॥

इन्द्रियाणां चक्षुरादीनां स्वविषयेषु—चाक्षुषेषु घटादिषु यथाऽनादिर्योग्यता—तदीयचाक्षुषादिकारणता, तथा शब्दानामपि अर्थैः सह तद्बोधकारणतैव योग्यता, सैव शक्तिरित्यर्थः ।

ननु न बोधकारणत्वमनादिभूतं शक्तिः । आधुनिकदेवदत्तादिपदे तदभावात् । अन्यथा पित्रादिसङ्केताज्ञानेऽप्यन्वयबोधप्रसङ्गो, लाक्षणिकातिव्याप्तेश्चेति सङ्केतज्ञानमपि हेतुर्वाच्यम् । तथाचावश्यकत्वात् स एव शक्तिरस्तु । स एवाधुनिके पित्रादेर्गवादौ चेश्वरस्य चेति चेत्—

*प्रसङ्गादिति* । "समासे खलु भिन्नैव शक्तिः" इति ग्रन्थेन स्मृतायाः शक्तेरनुपेक्षणीयत्वादिति भावः । अगृहीतवृत्तिकात् पदात् पदार्थोपस्थितेः शाब्दबोधस्य चादर्शनात्तद्धर्मावच्छिन्नविषयकशाब्दबुद्धिं प्रति तद्धर्मावच्छिन्नार्थनिरूपितवृत्तिविषयकपदज्ञानं करणं, वृत्त्या पदजन्यपदार्थोपस्थितिर्व्यापारः । तां विना तदनुत्पत्तेः, न तु वृत्तिमत्त्वेन ज्ञातं पदम् । अतीतानागतशब्दानुसन्धानाच्छाब्दबोधाऽनुदयप्रसङ्गात् ।

वृत्तिश्च शक्तिलक्षणाभेदाद् द्विविधा । तत्रार्थे पदसङ्केतः शक्तिः । स चेदं पदमिमिमर्थं बोधयतु, इति पदविशेष्यकेच्छात्मकः । अस्मात् पदादयमर्थो बोध्य इत्याकारकपदार्थविशेष्यकेच्छारूपो वा, विनिगमकाभावात् । तथा चार्थबोधकं पदं वाचकमिति व्यवह्रियते । शास्त्रकारादिसङ्केतः परिभाषा । तया चार्थबोधकं पारिभाषिकमिति व्यवह्रियते—नदीवृद्ध्यादिपदम् । लक्षणा तु शक्यसम्बन्धः । तत्कल्पिका तु मुख्यार्थबाधोन्नीततात्पर्यानुपपत्तिः ।

तथा हि—'गङ्गायां घोष' इत्यत्र गङ्गापदस्य घोषाऽभाववत्प्रवाहार्थकत्वेन तीरतात्पर्य्यकत्वे उन्नीते तात्पर्यविषयतीरस्मृतिं विनानुपपद्यमानेन तीरशाब्दबोधेन तत्स्मृतिराक्षिप्यते । सा च गङ्गापदवृत्तिं विनानुपपद्यमाना तज्ज्ञानमाक्षिपति । तद्विषया गङ्गापदनिरूपिता वृत्तिर्न शक्तिस्तस्यास्तत्राभावादतस्तीरस्मारिका काचिदन्यैव वृत्तिः कल्प्यते । सा च गङ्गापदशक्यसामीप्यरूपैव, तेन रूपेण गृह्यमाणा तीरं स्मारयत्यनुभावयति च । शक्यादशक्योपस्थितिस्तु न लक्षणा । उपस्थितिहेतोस्तस्यास्तत्त्वासम्भवात् । नापि स्वबोध्यसम्बन्धः । समासशक्तिनिरूपणोक्तयुक्तेः ।

नन्वीश्वरेच्छायाः शक्तित्वासम्भवः, घटपदस्यापि पटे शक्तत्वप्रसङ्गाद्, घटपदात् पटो बोद्धव्य इतीच्छाया विषयतया पटेऽपि सत्त्वात्। यदि चेश्वरेच्छीयघटपदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वं शक्तिरिति न पटपदेऽतिप्रसङ्गः। तद्विषयत्वेऽपि तादृशविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वस्य तत्रानभ्युपगमादित्युच्यते, तदापि गङ्गापदात् तीरबोधस्यापि जायमानत्वेन सन्मात्रविषयकेश्वरेच्छीयगङ्गापदजन्यबोधविषयत्वप्रकारतानिरूपितविशेष्यत्वस्य तीरे सत्वाच्छक्त्यैव निर्वाहे कृतं लक्षणयेति चेद्? न।

गङ्गापदवाच्यत्वव्यवहारस्य तीरादावसत्वेन गङ्गापदजन्यबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यत्वसम्बन्धेन ईश्वरेच्छीयगङ्गादिपदानां प्रवाहादौ शक्तिस्तीरनिष्ठविशेष्यतायाश्च गङ्गादिपदजन्यबोधविषयत्वप्रकारतानिरूप्यत्वेऽपि न तस्मात् तादृशविषयतात्वेन तादृशप्रकारतानिरूपितत्वमपि तु शुद्धविषयतात्वेनैवेत्यभ्युपगमान्नतया लक्षणान्यथासिद्धिर्नाऽपि विषयत्वलक्षणसम्बधस्य पदे जन्यजनकभावे च सत्त्वेऽपि तत्रातिप्रसङ्गः।

तत्र लक्ष्योपस्थितिनियामकः सादृश्यात्मकः सम्बन्धो गौणी, तदतिरिक्तस्तु शुद्धलक्षणेति व्यवह्रियते। शुद्धाऽप्युपादानलक्षणभेदेन द्विविधा। तत्र मुख्यसंसृष्टान्यार्थोपस्थापकत्वमुपादानत्वम्। शक्याऽविषयकलक्ष्यार्थोपस्थितिजनकत्वं लक्षणात्वम्। 'यष्टीः प्रवेशय' 'गङ्गायां घोषः' इत्यादिके यथायथमुदाहरणे। तत्राऽप्याद्याऽजहत्स्वार्थाऽन्त्या च जहत्स्वार्थेत्युच्यते। तद्भेदान्तराणि त्वन्यतोऽवधार्य्याणीति नैयायिका आहुः।

मीमांसकास्तु—उक्तयुक्त्या लाक्षणिकपदस्य वाचकत्वपरिहारेऽपि नेश्वरेच्छायाः शक्तित्वम्। ईश्वरस्यैवाऽनभ्युपगमात्। नन्विच्छाया ईश्वरीयत्वमनुपादेयम्। एवं चाऽऽधुनिकसङ्केतज्ञानादपि शाब्दबोधोदयेन तादृशसङ्केतस्य वृत्तितानिर्वाहः। आधुनिकसङ्केतत्वेन तात्पर्य्यस्याऽपि वृत्तित्वप्रसङ्गस्तु न, पदार्थोपस्थितिनियामकसङ्केतस्यैव वृत्तित्वेन तस्यास्तत्वात्। तज्ज्ञानस्य साक्षादेव शाब्दधीजनकतया पदार्थोपस्थित्यात्मकव्यापाराऽनपेक्षणाद् वृत्त्युपस्थापितार्थं एव प्रकरणादिना तदवधारणात्।

आधुनिकसङ्केतितडित्थादिपदेषु त्वाधुनिकसङ्केतस्य प्रागवधारितस्य डित्थादिव्यक्तिशाब्दधीजनकपदार्थोपस्थितौ नियामकत्वेन तद्वृत्तित्वस्य सौलभ्यादिति चेदेवमपि सङ्केतस्य निष्प्रतियोगिकतया तदीयोक्तविषयत्वस्याऽप्यापातरमणीयतया सम्बन्धित्वाऽसम्भवेन पदार्थाऽनुपस्थापकत्वाद्वृत्तित्वानिर्वाहात्। तस्मात् पदपदार्थयोर्वाच्यवाचकभावनियामकः सम्बन्धः पदार्थान्तरमेव। नाप्यसौ समवेतः। अभावादावपि सत्वात्। किन्तु वैशिष्ट्याख्येन सम्बन्धान्तरेण वर्त्तत इत्याहुः।

वाच्यात्वं यथा न समवायि तथा वक्ष्यत इति वदता दीधितिकृतापि तन्मतमेवानुसृतम्।

तदेतन्नानामतानि निराकर्त्तुमादौ तत्स्वरूपप्रदर्शनमित्याशयेन मूलमवतारयति—*तस्याः स्वरूपमिति* । *तस्याः*—शक्तेः । निर्विषयाणां तेषां कथं घटादिर्विषयोऽत आह—*चाक्षुषेति* । तथाचौपचारिकविषयत्वं न विरुद्धमिति भावः । चाक्षुषपदं त्वाचादिप्रत्यक्षस्याऽप्युपलक्षणम् । इन्द्रियनिष्ठचाक्षुषादिकारणतायामनादित्वम् । इन्द्रियजन्यपूर्वपूर्वबोधध्वंसकालिकत्वं, न त्वजन्यत्वमव्यावर्त्तकत्वात् । शब्दनिष्ठबोधकारणतायां तु स्वजन्यबोधसमानाकारपूर्वपूर्वबोधध्वंसवत्वम् । *तद्बोधकारणता* । अर्थबोधकत्वम् ।

ज्ञायमानं पदं कारणमभिप्रेत्येदम् । अन्यथा विषयतायां तादृशहेतुताऽवच्छेदकतेत्यर्थो बोध्यः । सङ्केतज्ञानं विनोक्तशक्तिग्रहाऽसम्भवेनावश्यापेक्षणीयतया तस्यैव शक्तित्वमस्तु, "तद्धेतोरेव" इति न्यायात् इत्याशङ्कते—*नन्विति* । तस्याऽशक्तित्वे हेतुराधुनिकेत्यादि । *आधुनिके*—एतत्कालिसङ्केतविशिष्टे । *तदभावात्* । निरुक्तानादित्वविशेषणविशिष्टबोधकारणत्वाभावादित्यर्थः । विशेष्यसत्वेऽपि प्रकृते विशेषणाभावप्रयुक्तविशिष्टाभावसत्त्वेन तदप्रतियोगित्वरूपकारणत्वं न सम्भवतीत्यर्थः।

नन्वनादिभूतमितिप्रसिद्धिप्रदर्शनमात्रार्थकं, नतु तच्छक्तिशरीरे प्रविष्टम् । येन तद्रूपेण तस्य हेतुता सम्भाव्येत; किन्तु बोधकारणत्वत्वेनैव । प्रकृते तेन रूपेण तज्ज्ञाने बाधकाभाव इति चेद्, स्यादेवम् । यदि सङ्केतग्रहमन्तरेणैव तद्ग्रहो भवेन्न तु तत् सम्भवतीत्याह—*अन्यथेति* । सङ्केतनिरपेक्षस्यैव तस्य शाब्दबोधहेतुत्वे इत्यर्थः । *लाक्षणिकेति* । तत्राप्यनादिभूतबोधजनकत्वव्यवहारादिति भावः । *आवश्यकत्वादिति* । अवश्याऽपेक्षणीयज्ञानविषयत्वादित्यर्थः । *स एव* । सङ्केत एव एवकारेण बोधकत्वव्यवच्छेदः ।

अर्थ–समासशक्ति रूप विशेष शक्ति के निरूपणानन्तर शक्तिसामान्य की स्मृति होने के कारण प्रसङ्ग सङ्गति द्वारा स्मृत शक्ति सामान्य के स्वरूप का निरूपण करते हैं—

"इन्द्रियाणां स्वविषयेषु" इत्यादि । जिस प्रकार चक्षुरादि इन्द्रियों की स्वविषयेषु[1] = अर्थात् इन्द्रियजन्यज्ञान के विषयभूत जो घटादि उससे निरूपित योग्यता = कारणता अनादि है उसी प्रकार अर्थों के साथ शब्दों की सम्बन्धरूप योग्यता अर्थात् अर्थबोधकता अनादि है ।

इन्द्रियों के अर्थात् चक्षु आदि के विषय अर्थात् इन्द्रियजन्यज्ञानविषय जो घट आदि उसका जो ज्ञान इससे निरूपित योग्यता चक्षु आदि से जन्यज्ञान कारणता जिस प्रकार अनादि है । उसी प्रकार अर्थों के साथ शब्दों की अर्थबोधजनकतारूप योग्यता अनादि है और वही शक्ति है ।

शङ्का—अनादिभूत बोधजनकता शक्ति नहीं हो सकती क्योंकि आधुनिक देवदत्त आदि पदों में अनादिबोधकजनकत्व का अभाव है । अन्यथा = अर्थात् वहाँ भी शक्ति

---

१. घटादि अर्थ में इन्द्रियविषयत्व का व्यवहार इन्द्रियजन्यज्ञान का विषय घटादि अर्थ होता है । अतः कार्य ज्ञान के धर्म; अर्थ विषयकत्व का कारणीभूत इन्द्रियों में आरोप द्वारा इन्द्रियों का विषय घटादिकों को लिखा है ।

मानने पर पिता आदि के सङ्केत को न जानने पर भी शाब्दबोध का प्रसङ्ग हो जायगा। इसी प्रकार लाक्षणिक स्थल में (अनादि बोधजनकत्व व्यवहार के कारण) अतिव्याप्ति हो जायगी। अतः सङ्केत के ज्ञान को भी कारण कहना चाहिये। ऐसी अवस्था में सङ्केत मानना आवश्यक होने से वही शक्ति हो। वह सङ्केतरूप शक्ति आधुनिक पदों में पिता आदि की, गवादि स्थलों में ईश्वर की है।

हिन्दीभाष्य—पूर्ववर्ती विषय के विचार काल में जो स्मरण का विषय और उपेक्षा योग्य न हो वही यह प्रसङ्गसङ्गति[1] है। इस प्रकार समासशक्ति के विचारकाल में विशेष के द्वारा सामान्य का स्मरण होने से घटपटादिनिष्ठ सामान्य शक्ति का स्मरण और उसका विचार उपेक्षणीय भी नहीं होने के कारण इसका विचार करना सङ्गत है।

शक्ति के सम्बन्ध में दार्शनिकों के विभिन्न मत उपलब्ध होते हैं। इनका परिचय संक्षेप में दिया जा रहा है—

जिस किसी प्रकार से उपस्थित पदार्थ का शाब्दबोध में भान मानने पर घटादि शब्द का समवाय सम्बन्ध से सम्बन्धी आकाश है। एक सम्बन्धी का ज्ञान दूसरे सम्बन्धी का स्मारक होता है (एक सम्बन्धिज्ञानमपरसम्बन्धिनं स्मारयति) अतः इसकी भी घटादि शब्द से उपस्थिति और शाब्दबोध में भान हो जायगा। इसके वारण के लिए "तत्प्रकारक तद्विविशेष्यकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्प्रकारक तद्विशेष्यक वृत्तिज्ञानजन्या उपस्थितिः कारणम्" ऐसा कार्य कारणभाव मानना होगा। घटादि पद से वृत्तिज्ञान जन्य आकाश की उपस्थिति नहीं है किन्तु शब्द आकाश में होता है। अतः समवाय सम्बन्ध से सम्बन्धी होने के कारण उपस्थिति है। अतः वृत्तिज्ञान से अनुपस्थित होने के कारण शाब्दबोध में आकाशादि का भान नहीं हुआ। उपस्थिति का अर्थ है स्मरण। शाब्दबोध के प्रति पद का ज्ञान[2] करण, वृत्तिज्ञान से जन्य उपस्थिति द्वार अर्थात् व्यापार[3] है, शाब्दबोध इन सबों का फल और शक्ति का ज्ञान सहकारी कारण है। वृत्ति, शक्ति और लक्षणा के भेद से दो प्रकार की है। किसी-किसी के मत में व्यञ्जना भी उसका पृथक् एक भेद है। इस प्रकार शाब्दबोध में कारणतया प्रविष्ट शक्ति का स्वरूप इस प्रकार है—"इदं पदममुमर्थं बोधयतु"=यह पद इस अर्थ का बोधक हो। अथवा "अस्मात् पदात् अयममर्थो बोद्धव्यः"=इस पद से यह अर्थ बुद्ध हो ऐसी ईश्वर की इच्छा। प्रथम इच्छा में अर्थ विषयक बोधजनक पद, द्वितीय इच्छा में इस पद से जन्यबोधविषयताश्रय अर्थ की प्रधानता है। ईश्वरीय संकेत से अर्थबोधक पद वाचक तथा तथाविध पद से बोध्य अर्थ वाच्य कहा जाता है। शक्ति को ही संकेत भी कहते हैं। शास्त्रकारादिकों के संकेत से अर्थ बोधक पद को पारिभाषिक कहते हैं। जैसे नदी वृद्धि आदि पद महर्षि पाणिनि द्वारा तत्तदर्थ विशेष में संकेतित हैं।

---

१. सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा।
निर्वाहकैक्यकार्यैक्यं षोढा सङ्गतिरिष्यते॥
स्मृतिविषयत्वे सति उपेक्षानर्हत्वम् प्रसङ्गसङ्गतेः स्वरूपम्।

२. पदज्ञानं तु करणं द्वारं तत्र पदार्थधीः।
शाब्दबोधः फलं तत्र शक्तिधीः सहकारिणी॥ (न्याय मु० व्या०)

३. तज्जन्यत्वे सति तज्जन्यजनकत्वं व्यापारः।

शङ्का—ईश्वरेच्छा ईश्वर में होने से पदों में शक्तिमद् रूप शक्त का व्यवहार कैसे होगा।

समाधान—तत्पदजन्य जो बोध तन्निरूपित विषयतात्व से अवच्छिन्न जो प्रकारता तन्निरूपिता जो विषयीभूत अर्थ की विशेष्यता एतादृश सम्बन्ध से ईश्वरेच्छा अर्थ में है। जनकतावत्त्वेन शक्ति का विषय, वाचक और जन्यबोधविषयत्वेन शक्तिविषय वाच्य है।

शङ्का—घटपद से घट और पटपद से पट का बोध होना चाहिये। इस प्रकार समूहालम्बनरूप ईश्वरेच्छा की विषयता पट में भी होने से घटपद की वाच्यता पट में प्राप्त होती है। इसी प्रकार गङ्गापद से लक्षणा द्वारा तीर बोध होने से गङ्गापद से जन्य जो बोध तन्निरूपिता जो विषयता तत्प्रकारतानिरूपित विशेष्यता सम्बन्ध से ईश्वरेच्छारूप शक्ति तीर में भी होने के कारण शक्ति द्वारा तीरार्थ की प्रतीति हो जायगी, लक्षणा स्वीकार व्यर्थ है।

समाधान—"तीरं बोधविषयो भवतु बोधश्च गङ्गापदजन्यो भवतु" इस प्रकार पृथक्-पृथक् ईश्वरेच्छा लक्षणा स्थल में मानने से तीर में बोध की विषयता होने पर भी गङ्गापदजन्यबोधविषयतात्व से अवच्छिन्ना प्रकारता से निरूपित विशेष्यता सम्बन्ध से ईश्वरेच्छा को ही शक्ति मानने से तीर की विशेष्यता बोधविषयतात्वावच्छिन्न प्रकारता से निरूपित होने पर भी गङ्गापदजन्यबोधविविषयतात्वावच्छिन्न प्रकारता से निरूपित नहीं है अतः शक्ति से तीर का बोध नहीं प्राप्त है।

एवं "घटपदाद् घटो बोद्धव्यः" "पटपदात् पटोबोद्धव्यः" इस प्रकार ईश्वरेच्छा मानने से घटपदजन्यबोधविषयतात्व से अवच्छिन्न जो प्रकारता तन्निरूपिता विशेष्यता पट एवं घटपदजन्यबोधविषयतात्व से अवच्छिन्न प्रकारता तन्निरूपितविशेष्यता घट में ही है। तत् तत् पदजन्यविषयतायें भिन्न-भिन्न हैं। अतः पटजन्यबोधविषयतात्वावच्छिन्ना प्रकारता तन्निरूपितविशेष्यता सम्बन्ध से ईश्वरेच्छा शक्ति पट में ही है घट में नहीं है।

शङ्का—"जात्याकृतिव्यक्तयः पदार्थः" इस न्यायसूत्र के अनुसार जाति व्यक्ति और सम्बन्ध में पदों की शक्ति मानी गई है। जैसे पट पद की पटत्व पट और उनके समवाय सम्बन्ध में शक्ति है। इच्छीय विशेष्यता पट में है। पटत्व और समवाय में नहीं होने के कारण इनमें शक्ति की सिद्धि नहीं होगी।

समाधान—आश्रयत्व सम्बन्धावच्छिन्नपटपदजन्यबोधविषयत्वनिष्ठ प्रकारतानिरूपिता ईश्वरेच्छीया विशेष्यता पट में है। अवच्छेदकत्वसम्बन्धावच्छिन्नपटपदजन्य बोधविषयत्वनिष्ठप्रकारतानिरूपिता ईश्वरेच्छीया विशेष्यता पटत्व में है। इसी प्रकार अवच्छेदकतावच्छेदकत्वसम्बन्धावच्छिन्नपटपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपिता ईश्वरेच्छीयविशेष्यता पट और पटत्व के समवाय में है।

"पटपदजन्यबोधविषयः पटोभवतु", "पटत्वं पटपदजन्यबोधविषयतावच्छेदकं भवतु" तथा "समवायः पटपदजन्यबोधविषयतावच्छेदकतावच्छेदको भवतु" इस प्रकार का आकार होगा।

शङ्का—आधुनिक = पित्रादि से सङ्केतित देवदत्तादिनाम में ईश्वरेच्छारूप सङ्केत के न होने से शक्ति नहीं होगी।

समाधान—"एकादशेऽहनि पिता नाम कुर्यात्" इस श्रुति से पिता के द्वारा सामान्यतः नामकरण की ईश्वरेच्छा प्रतीत होने से वहां भी ईश्वरेच्छारूप शक्ति है। महर्षि पाणिन्यादि से सङ्केतित गुण वृद्ध्यादि पद पारिभाषिक हैं। उनमें शक्ति नहीं है। इत्यादि विचार नैयायिक रीति से किया गया।

मीमांसकों का मत इस प्रकार है—

उक्तयुक्ति से लाक्षणिक पदों में वाचकत्व के परिहार करने पर भी ईश्वर की अस्तिता मीमांसक मत में असिद्ध होने से ईश्वरेच्छा शक्ति नहीं हो सकती।

शङ्का—जिस किसी की इच्छा मात्र को शक्ति मान लेने से उक्त दोप की व्यावृत्ति हो जायगी। दूसरा लाभ यह है कि आधुनिक संकेत ज्ञान से भी शब्दबोध देखने से उसका भी शक्ति से संग्रह हो जाता है। तात्पर्य, शक्ति नहीं है क्योंकि उसका ज्ञान साक्षात् शाब्दबोध का कारण होने से उसको पदार्थोपस्थितिरूप व्यापार की अपेक्षा नहीं होती। वृत्ति द्वारा उपस्थित अर्थों में ही प्रकरणादि से तात्पर्य का निश्चय होता है।

समाधान—किसकी इच्छा का ग्रहण है इसका निरूपण नहीं हो सकने से अपभ्रंश में भी शक्ति सिद्ध हो जायगी जो इष्ट नहीं है। दूसरी युक्ति यह है कि शक्ति पदपदार्थ का सम्बन्ध रूप है। सम्बन्ध का प्रतियोगी ( विशेषण ) होना आवश्यक है। संकेत रूप शक्ति में किसी प्रतियोगी का अनुभव नहीं होता, अतः इच्छा सामान्य शक्ति नहीं हो सकती इसलिये पदार्थान्तर शक्ति है। मूषक से आघ्रात बीज से अङ्कुर उत्पन्न नहीं होता अनाघ्रात बीज से उत्पन्न होता है। अतः अनाघ्रात बीज में अङ्कुरोत्पादन शक्ति है अन्य में नहीं। इसी प्रकार पदों में अर्थबोधजननशक्ति एक पृथक् पदार्थ है जिसके द्वारा वाच्यवाचक भाव का नियमन होता है।

इस प्रकार शक्तिस्वरूप में मतवैचित्र्य होने के कारण स्वमत से उसके स्वरूप का निर्णय कारिका द्वारा करते हैं—

जिस प्रकार चक्षु आदि इन्द्रियों में घट आदि विषयों के ज्ञान जनन की अनादि = पुरुष प्रयत्न की अपेक्षा किये विना ही योग्यता-कारणता है। उसी प्रकार शब्दों का अर्थ के साथ सम्बन्ध अनादि योग्यता = बोधजनकता है। अर्थात् भूषणसारकार के मत में पदपदार्थ के सम्बन्धरूप अनादिबोधकत्व ही शक्ति है।

शङ्का—अनादिभूतबोधकारणता को शक्ति स्वीकार करने पर इस समय व्यवहृत नामों में अनादिबोधकत्व नहीं है। क्योंकि उन नामों का सङ्केत किसी आधुनिक पुरुष के द्वारा किया गया है। अतः अनादि विशेषण के अभाव से विशिष्ट का [1]अभाव है। तथाविध शक्ति के अभाव के कारण उन पदों से शाब्द बोध नहीं होगा। अन्यथा = अर्थात् देवदत्त आदि पदों में भी अनादिमूल शक्ति स्वीकार किया जाय तो देवदत्त आदि पदों से पितृसङ्केत ज्ञान के न रहने पर भी शक्ति ज्ञानमात्र से बोध होने लगेगा। अतः सङ्केतज्ञान को भी शब्दबोध में हेतु मानना होगा। यदि अनादि शब्द से प्रसिद्ध अर्थ को विवक्षित कर आधुनिक देवदत्तादि पदों में प्रसिद्ध शक्ति नहीं होने से बोध नहीं होगा। अतः ऐसे स्थलों में पितृसङ्केतज्ञान के विना बोध नहीं होता ऐसा कहें तो

१. विशेषणविशिष्ट विशेष्य का अभाव विशिष्टाभाव है। विशेषण अनादि के न रहने से बोधकत्वशक्तिरूप विशेष्य का भी अभाव है, यह भाव है।

लाक्षणिक स्थल में अतिव्याप्ति दोष है। वहां भी अर्थबोधकत्व प्रसिद्ध होने से प्रसिद्ध अर्थबोधकत्वरूपशक्ति से बोध का निर्वाह हो जाने के कारण लक्षणा का ही उच्छेद हो जायगा। इसलिये सङ्केतज्ञान को भी शक्ति के साथ शाब्दबोध का हेतु मानना होगा। ऐसी दशा में सङ्केत मात्र को शक्ति मानना चाहिये। आपके मत में भी सङ्केत ज्ञान शाब्दबोध में कारण माना ही जाता है। तब उसी को शक्ति मानकर उसके ज्ञान को शाब्दबोध हेतु मानना उचित है।

सङ्केत ही शक्ति है। उसके दो भेद हैं—ईश्वरीयसङ्केत और आधुनिक सङ्केत। ईश्वरीय सङ्केत घटादि में है आधुनिक सङ्केत देवदत्तादि में है। विस्तृत निरूपण पूर्व में किया जा चुका है। "अर्थबोधकं पदं शक्तम्" ऐसा व्यवहार बोधकता को शक्ति मानने पर नहीं होगा क्योंकि उद्देश्यतावच्छेदक और विधेयतावच्छेदक के भेद होने पर ही समानविभक्तिक नामार्थ का अभेदान्वय होता है। इसीलिये दण्डवान् दण्डवान् इसका परस्परान्वय बोध नहीं होता। प्रकृत में भी उद्देश्यतावच्छेदक अर्थवाचकत्व और शक्तत्व अर्थात् अर्थवाचकत्व क्योंकि अर्थवाचकत्व शक्ति है। उसका आश्रय शक्त कहा जाता है। शक्त में विशेषण शक्ति है जो कि अर्थवाचकत्वरूप है अतः उद्देश्यतावच्छेदक विधेयतावच्छेदक समान होने से दण्डवान् में भी दण्ड ही उद्देश्यतत्वच्छेदक और द्वितीय दण्डवान् में भी विधेयतावच्छेदक दण्ड ही है, अभेदान्वय नहीं हुआ। उद्देश्य में विशेषण उद्देश्यतावच्छेदक विधेय में विशेषण विधेयतावच्छेदक होता है। यह शङ्का न्याय मत से है—

**अत्रोच्यते—सङ्केतो न स्वरूपेण हेतुः। अगृहीतशक्तिकादर्थबोधप्रसङ्गात्। नाऽपि सामान्यतो ज्ञातः। प्रमेयत्वादिना तज्ज्ञानेऽपि बोधप्रसङ्गात्, नापि सङ्केतत्वेन तज्ज्ञानं हेतुः। गवादिपदेष्वपीश्वरादेः सङ्केतत्वेन तज्ज्ञानशून्यानां लौकिकमीमांसकादीनां तत्तदर्थबोधजनकत्वग्रहवतामेव बोधोदयेन व्यभिचारात्।**

**नचार्थधीजनकतावच्छेदकत्वेन तज्ज्ञानं तथा। ततोऽपिलाघवेनार्थधीजनकतात्वेनैव हेतुतायामस्मत्पक्षसिद्धेः। न चाधुनिक देवदत्तादौ सङ्केतज्ञानादेव बोधेनास्य व्यभिचारः। तत्रापि "इदम्पदमेनमर्थं बोधयतु" इतीच्छाग्रहे पदे तदर्थबोधकत्वस्याऽवगाहनेन व्यभिचाराभावात्।**

**न च स्वातन्त्र्येणार्थबोधकताज्ञानं कारणं वाच्यम्। अन्यथा 'नेदं तद्धीजनकम्' इतिज्ञानवतोऽस्माच्छब्दादयमर्थो बुद्धोऽनेनेतिजानतस्तद्ग्रहापत्तेरिति वाच्यम्।**

**नेदं तद्धीजनकमितिग्रहवतो बाधेन पदे परग्रहं जानतोऽपि तद्ग्रहासम्भवात्। अन्यथा भ्रान्तिज्ञस्यापि भ्रान्तत्वापत्तेरिति।**

सङ्केतस्य स्वरूपतः सामान्यतो विशेषरूपेण वा हेतुत्वमभिमतमिति विकल्प्य दूषयति—*उच्यत इति*। *स्वरूपेणेति*। स्वस्य यद्रूपमिति व्युत्पत्त्या स्वाऽसाधारणधर्मेणोक्तसङ्केतत्वेनेत्यर्थः। दण्डत्वेन घटे दण्ड इव ज्ञानाऽविषय एव सङ्केतत्वेन हेतुरिति यावत्। *अगृहीतशक्तिकादिति*। अज्ञातसङ्केतादित्यर्थः।

*अर्थबोधप्रसङ्गादिति* । सङ्केतस्य तत्र विद्यमानत्वादिति भावः । *सामान्यत इति* । जनकाजनकसाधारणरूपेणेत्यर्थः । *सङ्केतत्वेनेति* ईश्वरीयसङ्केतत्वादिना विशेषधर्मेणेत्यर्थः । *तज्ज्ञानशून्यानामिति* । सङ्केते ईश्वरीयत्वमविदुषामित्यर्थः । *लौकिकमीमांसकानामिति* । वैदिकानां तेषां कथञ्चिदीश्वरबोधसम्भवादुक्तम्—*लौकिकेति* । अथवा लौकिकानां व्यावहारिकपदार्थमात्रविषयकज्ञानवतां पामराणामिति यावत् । मीमांसकानां चेत्यर्थः । *बोधोदयेनेति* । सङ्केतत्वेन तज्ज्ञानमात्राद् गवाद्यर्थबोधोदयेनेत्यर्थः ।

यद्यपि सङ्केतत्वेन सङ्केतज्ञानकारणतावादिमते नेश्वरीयत्वादेर्निवेशः, तथापि गवादावीश्वरस्येति तद्ग्रन्थालोचनयेश्वरीयत्वादेर्निवेशस्तदभिमत इत्यभिप्रेत्य दूषितमिति ध्येयम् । *तत्तदर्थधीजनकग्रहवतामेव*—इत्येवकारेण निरुक्तसङ्केतज्ञानवत्त्वव्यवच्छेदः । स च तज्ज्ञानशून्यानामित्यस्यैवानुवादः । एवशून्यपाठस्तु सुगमः । इदञ्च शक्तिग्रहरूपकारणप्रदर्शकम् । *तज्ज्ञानम्*—सङ्केतज्ञानम् । *तथा* । हेतुः ।

*ततोऽपीति* । अर्थधीजनकतानिरूपितविषयतासम्बन्धावच्छिन्नावच्छेदकत्वस्यावच्छेदकत्वापेक्षयाऽर्थधीजनकतात्वेन हेतुताया औचित्येन वैयाकरणेष्टसिद्धिरित्यर्थः । सङ्केतज्ञानस्येदं पदमर्थधीजनकताऽवच्छेदकताव दित्याकारकस्याऽर्थधीजनकताऽवच्छेदकत्वाऽवच्छिन्नप्रकारताकज्ञानत्वेन हेतुत्वे गौरवात्—इदं पदमर्थधीजनकमिति ज्ञानस्यैवार्थधीजनकतात्वावच्छिन्नप्रकारताकज्ञानत्वेन हेतुत्वमुचितं लाघवादिति भावः ।

वस्तुतस्तु—तन्मते सङ्केतत्वेनैव हेतुतेति नोक्तविकल्पाऽवसर इति बोध्यम् । सङ्केतज्ञानादेवेत्येवेनाऽर्थधीजनकत्वग्रहव्युदासः । *अस्य*—बोधकत्वग्रहस्य । *व्यभिचारो*—व्यतिरेकः ।। *तत्राऽपि* । संकेतमात्रादर्थबोधस्थलेऽपीत्यर्थः ।। *इच्छाग्रह इति* ।। इदम्पदविशेष्यकतदर्थबोधकत्वप्रकारकेच्छाग्रहे इत्यर्थः ।। *अवगाहनेनेति* ।। विषयीकरणेनेत्यर्थः । ज्ञानेच्छादिविषयकज्ञानस्य तद्विषयकत्वनियमादिति भावः । *स्वातन्त्र्येणेति* । इतराविशेषणत्वेनेत्यर्थः । प्रकृते चेच्छांऽशे विषयितया विशेषणीभूतबोधकत्वस्यैव तज्ज्ञानेन विषयीकरणादिति भावः ।

*अन्यथेति* । पारतन्त्र्येणाऽपि बोधकताज्ञानस्य शाब्दधीहेतुत्व इत्यर्थः । इष्टापत्तिनिरासायाह—नेदं तद्धीजनकमितीति* । *अस्माच्छब्दादिति* । एतच्छब्दजन्यैतदाशयकबोधविषयोऽयमर्थ इत्याकारकवर्त्तमानग्रहवत इत्यर्थः । पदविशेष्यकार्थधीजनकत्वबोधग्रहे विद्यमाने तदंशेऽर्थधीजनकत्वावगाहिन इदं पदमेतदर्थधीजनकत्वेन बुद्धमनेनेतिग्रहस्यासम्भवात्तदपहायास्मादित्याकारकबोधग्रह उक्तः । एतस्मिंस्तु न तस्य प्रतिबन्धकता, ग्राह्याभावानवगाहित्वादिति भावः ।

*तद्ग्रहापत्तेरिति* । घटादिशाब्दबोधापत्तेरित्यर्थः । उक्तज्ञानस्य विषयविषयकत्वेऽपि न तेन पदांशेऽर्थबोधकत्वं विषयीक्रियते येन तस्य प्रतिबन्धकत्वं स्यात् । किन्तु

बोधांशे तत्पदजन्यत्वमर्थांशे तादृशबोधविषयत्वमेव तथा। तेन तुल्यवित्तिवेद्यतया पदांशेऽर्थबोधकत्वमप्यवगाह्यत इति तु दुर्वचम्। तुल्यवित्तिवेद्यत्वे मानाभावात्। तत्प्रतिबन्धकस्य ग्राह्याभावावगाहिनो नेदं तद्बीजनकमिति ज्ञानस्य जागरूकत्वाच्च।

न च पदनिष्ठार्थधीजनकत्ववदर्थनिष्ठपदजन्यबोधविषयत्वमपि शक्तिर्विनिगमनाविरहादुभयविधज्ञानाच्छाब्दबोधस्य सर्वानुभवसिद्धत्वाच्च कार्य्यतावच्छेदककोटावव्यवहितोत्तरत्वनिवेशाच्च, न परस्परजन्यशाब्दबोधे व्यभिचारः। एवञ्च द्वितीयशक्तिग्रहरूपात् तस्माच्छाब्दबोधापत्तिः सुकरेति वाच्यम्। तथा सति नेदमर्थधीजनकमिति ग्राह्याभावानवगाहिनोऽप्रतिबन्धकग्रहस्योपन्यासवैयर्थ्यात्। ग्राह्याभावानवगाहित्वेऽप्युभयविधशक्ति प्रत्यन्वयव्यतिरेकाभ्यां प्रतिबन्धकत्वोपगमेन तदुपन्यासस्य सार्थक्यसम्पादने तूक्तज्ञानस्याऽसम्भव एवेत्याशयेन दूषयति —*नेदं तद्बोजनकमिति*। *बाधेन*। अप्रामाण्यज्ञानानास्कन्दितनिरुक्तनिर्णयात्मकप्रतिबन्धकसद्भावेनेत्यर्थः। *तद्ग्रहासम्भवात्*। अर्थविशेष्यकपदजन्यबोधविषयत्वग्रहासम्भवादित्यर्थः। *अन्यथेति*। बाधग्रहेऽपि जायमानस्य रजतं बुद्धमनेनेति ग्रहस्य, इदं विशेष्यकरजतप्रकारकग्रहत्वे। भ्रान्तिज्ञस्येत्यनेन दोषाऽभाववत्वमपि सूच्यते। *भ्रान्तत्वापत्तेरिति*। तदभाववति तदवगाहिज्ञानवत एव तत्त्वादिति भावः।

अत्रेदं चिन्त्यम्—यत्रेदं पदमेतदर्थं बोधयत्विति सङ्केतमात्राच्छाब्दबोधस्तत्र बोधकताशक्तिज्ञानस्य हेतुतावादिमते व्यभिचारो दुरुद्धर एव। नच तत्र सङ्केतज्ञानमेव बोधकताज्ञानमित्युक्तमेवेति वाच्यम्। सविषयकज्ञानस्य तद्विषयविषयकत्वेऽपि तद्विशेष्यांऽशे तत्प्रकारो न तेन विषयीक्रियते। 'घटमहं जानामि' इत्यनुव्यवसायेन ज्ञानांऽशे घटत्वप्रकारकत्वघटविशेष्यकत्वयोरेव विषयीकरणात्। अन्यथाऽभ्रान्तस्य भ्रान्तत्वापत्तिरनिवार्य्यैव स्यात्।

अत एव शाब्दचिन्तामणौ तात्पर्यविषयसंसर्गज्ञानपूर्वकत्वस्य पदपक्षकाऽनुमानेन सिद्धावपि नेतरपदार्थेऽभिमतापरपदार्थसंसर्गसिद्धिस्तादृशसंसर्गज्ञानपूर्वकत्वानुमानेन तत्पदार्थतात्पर्यविषयसंसर्गस्याविषयीकरणादित्यस्वरसात् पदार्थपक्षकानुमानभवतारितं पक्षधरमिश्रैरिति।

अर्थ—पूर्वोक्त में दोष कहते हैं—सङ्केत स्वरूप से ( स्थिति मात्र से ) शाब्दबोध का हेतु नहीं है। क्योंकि सङ्केतात्मक शक्ति के ज्ञान के विना भी शाब्दबोध की आपत्ति हो जायगी।

सामान्य रूप से ( जिस किसी रूप से ) सङ्केत का ज्ञान भी कारण नहीं हो सकता। प्रमेयत्वरूपसामान्य धर्म से सङ्केत के ज्ञान होने पर भी शाब्दबोध का प्रसङ्ग हो जायगा।

ईश्वरीयसङ्केतत्वरूपविशेष धर्म से भी सङ्केतज्ञान शाब्दबोध का कारण नहीं हो सकता। गवादि पदों में भी ईश्वरेच्छीयविषयत्वरूप ( सङ्केतत्व ) विशेषधर्म से ( सङ्केतकर्ता ईश्वर के न मानने से ईश्वरकृत सङ्केत का अभाव है इसलिये ) तज्ज्ञानशून्य अर्थात् सङ्केत ज्ञान से रहित व्यवहार मात्र जाननेवाले ( लौकिक ) और मीमांसक, आदि पद

से बौद्ध प्रभृतिकों को गवादिपद गवादि अर्थ के बोध का जनक है इस प्रकार के ज्ञानवालों को शाब्दबोध होने के कारण ( ईश्वरीय सङ्केत ) के न रहने पर भी कार्य (शाब्दबोध) की उत्पत्ति होने से व्यभिचार है।

शङ्का—सङ्केतज्ञान भी अर्थबोध का जनक है। इस प्रकार अर्थबोधजनकता सङ्केत में सङ्केतज्ञान में है उसकी अवच्छेदकता विषयतासम्बन्धावच्छिन्ना विशेषणीभूत सङ्केत स्थल में है। अतः अर्थबोधजनकतावच्छेदकत्वरूप से सङ्केत का ज्ञान शाब्दबोध का हेतु है। ( सङ्केतत्व रूप से नहीं )

समाधान—अवच्छेदकत्व की अपेक्षा अवच्छेदकत्वरहित अर्थबोधजनकतात्वरूप से कारणता स्वीकार में लाघव है। अतः मेरा ( वैयाकरण ) पक्ष सिद्ध हो जाता है।

शङ्का—आधुनिक देवदत्तादिस्थल में सङ्केत के ज्ञानमात्र से ( अर्थबोधजनकत्व ज्ञान के विना ही ) शाब्दबोध होता है। अतः कारणाभाव रहने पर कार्य की उत्पत्ति हो जाने से व्यतिरेक व्यभिचार है।

समाधान—सङ्केतमात्र से अर्थबोधस्थल में भी यह पद इस अर्थ का बोधक हो ऐसी जो पिता की इच्छा तद्रूप संकेत ज्ञान होने पर ( अर्थात् इदम्पदविशेष्यक एतदर्थ बोधजनकत्व प्रकारक इच्छा के ज्ञान होने पर इच्छा के विषय का भान इच्छाविषयक ज्ञान में भी माना जाता है ) अतः पदविशेष्यक अर्थबोधजनकत्व प्रकारक ज्ञान यहाँ भी होने से व्यभिचार शङ्का नहीं है[1]।

शङ्का—दूसरे में अप्रधान न होता हुआ जो अर्थबोधजनकत्व है उसका ज्ञान कारण है। यहाँ इच्छा में विषयितासम्बन्ध से विशेषण ( अप्रधान ) होने से शाब्दबोध में वह कारण नहीं हो सकता। अन्यथा = परतन्त्र होकर भी अर्थबोधजनकता को बोध का कारण मानने पर "नेदं तद्धीजनकम्" = यह तद्विषयकबोध का कारण नहीं है ऐसे ज्ञानवाले को "इस पद से किसी ने भ्रान्त यह अर्थ जाना," इस प्रकार भ्रान्त ज्ञान को विषय करनेवाला ज्ञान उसको हुआ, उसका ज्ञान भी घट में अन्यार्थविषयक बोध-जनकत्व के विषय करने से घट पद से पट का बोध हो जायगा।

समाधान—यह घट पद पटार्थविषयक बोध का जनक नहीं है इस प्रकार बाधज्ञान वाले को घट पद पटत्वावच्छिन्न अर्थविषयकबोध का जनक है ऐसा विरुद्ध ज्ञान नहीं होगा। घट पद पटार्थ का बोधक है, ऐसा भ्रान्त पुरुष के ज्ञान को जानते हुये भी पटार्थ विषयक बोध उसको नहीं होगा। घट में पटत्वावच्छिन्नार्थ विषयक बोधजनकत्वा-भावावगाहि ज्ञान के रहते भी पटार्थविषयकबोधजनकत्वावगाहि ज्ञान के स्वीकार करने पर भ्रान्ति जाननेवाला = भ्रान्तिज्ञ[2] भी भ्रान्त हो जायगा।

हिन्दीभाष्य—अत्रोच्यते—पूर्वोक्त शङ्का का समाधान कहते हैं—संकेत स्वरूप से कारण है? अथवा ज्ञात संकेत कारण है? ज्ञात दो प्रकार से हो सकता है सामान्यरूप और विशेषरूप से।

स्वरूप से कारण होने का तात्पर्य है स्व के रूप से अर्थात् जैसे वह्नि की दाह के प्रति कारणता स्वरूप से मानी गई है। वह्नि का ज्ञान हो अथवा न हो रहने पर वह्नि

---

१. पद में अर्थविषयकबोधजनकत्व का अवगाहन अर्थात् विषयीकरण (मूल)।

२. रजतत्वाभाववान् शुक्ति खण्ड है इसको अमुक व्यक्ति रजतत्वरूप से जानता है इस प्रकार ज्ञानवाला व्यक्ति भ्रान्तिज्ञ है।

से दाह उत्पन्न होगा ही। ज्ञान के अविषय वह्नि में वह्निस्वरूप से दाह के प्रति कारणत्व है। इसी प्रकार संकेत, ज्ञान का अविषय होकर संकेतत्वेन शाब्दबोध के प्रति कारण है। यह प्रथम विकल्प का अभिप्राय है।

समाधान का तात्पर्य यह है कि वह्नि जिस प्रकार ज्ञात न होकर भी सत्तामात्र से दाह का कारण होता है उसी प्रकार संकेत अज्ञात भी सत्तामात्र से शाब्दबोध के प्रति कारण मानने पर जिसको संकेत का ज्ञान नहीं है उसको भी स्वरूप से संकेत रहने के कारण शाब्दबोध हो जायगा। यह पद इस अर्थ का बोधक हो इस प्रकार की ईश्वरीय इच्छा (संकेत) का ज्ञान न हो तब तक अर्थबोध नहीं होता यह अनुभवसिद्ध है। अतः स्वरूपेण कारण नहीं है किन्तु संकेतत्वसामान्य रूप से ज्ञातसंकेत शाब्दबोध में कारण मानते हैं। ऐसा कहें तो संकेत में संकेतत्व के समान प्रमेयत्व धर्म भी है। प्रमेयत्वधर्म सभी पदार्थों में है। ऐसा कोई पदार्थ नहीं है जहाँ यह न हो। प्रमेयत्व-सामान्यधर्म से संकेत का ज्ञान होने पर भी घटादि पद से घटादि विशेष अर्थ का बोध नहीं होता, अतः सामान्य रूप से ज्ञात संकेत कारण है यह भी ठीक नहीं है।

ईश्वरीय संकेतत्वेन रूपेण विशेषरूप से संकेत को बोध के प्रति कारण मानने पर भी दोष है।

लोकव्यवहारमात्र जाननेवाले मूर्खजन एवं मीमांसकों के मत में ईश्वर का अस्तित्व नहीं है। आदि पद से चार्वाक बौद्धों का ग्रहण है। ईश्वर की सत्ता अमान्य होने से उनके मत में ईश्वरीय संकेत, घटादि पद में नहीं है। आधुनिक व्यक्तियों का भी संकेत उन पदों में नहीं है ऐसी दशा में बोध कैसे होगा। अतः ईश्वरेच्छारूप संकेत भी शक्ति नहीं है।

शङ्का—इदं पदमर्थबोधजनकम् = यह पद अर्थबोध का जनक है इस प्रकार का ज्ञान अर्थबोधजनकत्वप्रकारकपदविशेष्यक है। इस ज्ञान में, विशेष्यितारूप विषयिता सम्बन्ध से पद विशेषण हैं। विषय विषयिता सम्बन्ध से ज्ञान में ज्ञान विषयता सम्बन्ध से विषय में रहता है यह सिद्धान्त है। ज्ञान अर्थबोधजनकत्व प्रकारक पद विशेष्यक है। अतः विशेष्यितासम्बन्ध से पद ज्ञान में विशेषण है। अर्थबोध की जनकता अर्थबोधजनकं पदम् इस ज्ञान में हैं उस जनकता की अवच्छेदकता विशेष्यिता सम्बन्ध से विशेषण पद में है, विशेषण अवच्छेदक होता है। अतः गवाद्यर्थविषयक बोधजनकता-वच्छेदकतावद् गवादिपदम् यह होने से गवादि पद में रहनेवाले अर्थबोधजनकता-वच्छेदकत्व रूप से संकेत के ज्ञान को कारण मानने से दोष का परिहार हो सकता है ऐसा किसी तटस्थ का मत है।

समाधान—अर्थबोधजनकतावच्छेदकत्व प्रकारकज्ञान की अपेक्षा अर्थबोधजनकत्व-प्रकारकज्ञान शाब्दबोध में कारण है। इसमें अवच्छेदक निवेश न करने से लाघव है। लाघव के कारण इसी को शाब्दबोध हेतु मानने से भूषण का मत सिद्ध हो जाता है। इनके मत में बोधजनकत्व शक्ति है।

शङ्का—अर्थविषयक बोधजनकत्व प्रकारक पद विशेष्यकज्ञान के विना भी आधुनिक देवदत्तादि स्थल में संकेतत्वेन संकेतज्ञान से अर्थबोध होने से कारण के अभाव से कार्य का अभाव होता है इस प्रकार की व्याप्ति का व्यभिचार है।

समाधान—ज्ञान इच्छा ये सविषयक होते हैं। किसी विषय का ज्ञान, किसी विषय की इच्छा होती है। "विषयेण विषयो हि निरूपणाधीननिरूपणः" यह वचन है। इच्छा के

पक्षान्तरमाह *तादात्म्यमिति* । साधुगवादिशब्दतादात्म्यप्रकारकज्ञानविषयतामापाद्य वेत्यर्थः । एवकारो वाऽर्थे । गोपदे उच्चारणीये करणापाटवेन गावित्युच्चारितम्, वस्तुतो गोपदमेवेदमिति तादात्म्येन । भासमाना गव्यादिशब्दा गवादिरूपार्थस्य प्रकाशका इत्यर्थः । न च वक्ष्यमाणकल्पाऽभेदः । तत्राऽपभ्रंशगतानुपूर्व्या एव शक्यताऽवच्छेदकत्वादत्र तु साधुगतायास्तस्यास्तत्त्वमिति भेदादिति भावः ।

यत्तु "शब्दार्थयोस्तादात्म्यं शक्तिरि"ति स्वोक्ताऽर्थे "तादात्म्यमि"त्यादिहरिकारिकार्द्धस्योपष्टम्भकतयोपन्यसनं तन्मुधैव । तादात्म्यस्य शक्तित्वेऽपि शब्दनिष्ठतादात्म्यज्ञानस्याऽर्थाबोधकत्वेन तस्य शक्तित्वाऽसम्भवात् । उपक्रमोपसंहारपर्य्यालोचनया साधुशब्दतादात्म्यभ्रान्त्याऽपभ्रंशानामर्थबोधजनकत्वमिति पक्षान्तरपरतयैव तद्व्याख्यानस्यौचित्यादिति ।

अवाचकत्वे युक्तिमाह —*न शिष्टैरिति* । यतस्तेऽपभ्रंशाः साधवः पर्याया इव शिष्टैः स्मृत्यादिना न प्रतिपाद्यन्तेऽतो न वाचका इत्यर्थः । "ते साधुष्वि"त्याद्युक्तमर्थं विशदयति—*अम्बाम्बेत्यादि* । अव्यक्तमिति भाषणक्रियाविशेषणम् । तद्विदाम्-अव्यक्तशब्दश्रोतॄणाम्, अव्यक्ते साधुशब्दे । अस्य, स्मृते सतीति शेषः । *निश्चयः* तदर्थशाब्दबोधो भवतीत्यर्थः ॥ *एवमिति* । इत्थमेवेत्यर्थः । *साधौ*—गवादिशब्दे । *अपभ्रंशः*गाव्यादिः । *तेन*—असाधुशब्देन । साधुव्यवहितः*—साधुस्मृतिद्वारकः । *कश्चित्*—प्रसिद्धोऽम्बादिरूपः । अभिधीयते-बोध्यते इत्यर्थः ।

उक्तमेवाऽर्थं द्रढयितुमाशङ्कते—*नन्विति* । *तेषाम्* = साधुपर्य्यायाणाम् । एकत्वादिति* ॥ एकजातीयत्वादित्यर्थः ॥ तथा एकजातीयत्वं येन तत्रापि विनिगमकाभावाच्छक्तिकल्पना स्यादिति भावः ।

*अन्यथेति* । एकजातीयत्वस्य शक्तिकल्पनायामतन्त्रत्वे शक्तिमत्त्वाऽविशेषात्साधूनामिवाऽपभ्रंशानामपि कोशादौ प्रतिपादनं प्रसज्ज्येतेत्यर्थः । *तन्मतेनैवेति* । 'ते साधुष्वनुमानेन' इत्याद्युक्तहरिमतेनैवेत्यर्थः । अपभ्रंशाद्-बोधस्योक्तरीत्योपपादितत्वात् । तत्र शक्तिकल्पनं स्वाग्रहमूलकमित्याशङ्कां निराचकीर्षुस्तत्रोक्तप्रकाराऽसम्भवं दर्शयति-*अयम्भाव इति* । *तानिति* । साधुशब्दानित्यर्थः । अज्ञानहेतुमाह—*पामराणामिति* । *बोधादिति* । व्यवहारेण तेषां बोधाऽनुमानादित्यर्थः ।

तथाचानधीतशास्त्राणां तेषां साधुत्वप्रकारकशब्दज्ञानाऽसम्भवेन न तत्र साधुशब्दस्मृतिकल्पनया शाब्दबुद्धिरुपपादयितुं शक्येति भावः । किञ्च साधुशब्दस्मृतिकल्पना कथञ्चिद्सम्भवेदपि यदि प्रत्यक्षश्रुतसाधुशब्दबोधोदयः स्यात्, स एव नास्तीत्याह—*तेषां साधोरिति* । *शक्तिभ्रमादिति* । अर्थनिरूपितायाः साधुशब्दनिष्ठायाः शक्तेरपभ्रंशे भ्रमादित्यर्थः ।

किं बोधकत्वरूपशक्तिभ्रमात् तत्र बोध उपपाद्यते ? उतेश्वरेच्छारूपशक्तिभ्रमात् ?

तत्र नाद्यः कल्प इत्याह—*बोधकत्वस्येति*। द्वितीयेत्वाह—*ईश्वरेच्छेति*। *सन्मात्रेति*। मात्रपदं कृत्स्नाऽर्थकम्। अपभ्रंशाद् बोधस्य सर्वानुभवसिद्धत्वेन बोधकत्वेनेश्वरेच्छाया अपि तत्राबाधेन तामादायाऽपि न शक्तिज्ञानस्य भ्रमत्वसम्पत्तिः। प्रतीतेर्भ्रमत्वे विषयबाधस्यैव तन्त्रत्वादिति भावः।

ननु लाक्षणिक इवाऽपभ्रंशेऽपि वाचकत्वव्यवहाराभावेन तद्व्यावृत्त्येश्वरेच्छारूपशक्तेस्तत्र भ्रमे बाधकाभावोऽत आह—*शक्तेरिति*। *भ्रमासम्भवाच्चेति*। तत्पदविशेष्यकतदर्थबोधजनकत्वप्रकारकेच्छायास्तत्पदविशेष्यकत्वेन गृहीतायाः पदान्तरविशेष्यकत्वासम्भवेन तद्भ्रमाऽसम्भवादित्यर्थः। यथाश्रुताऽभिप्रायेणेदम्। परिष्कृतविशेष्यत्वरूपायास्तत्सम्बन्धावच्छिन्नावच्छेदकत्वरूपायाः पदार्थान्तररूपाया वा शक्तेस्तत्र भ्रमे बाधकाऽभावादिति बोध्यम्। तथाच भ्रमेणापि बोधस्य दुरुपपादत्वेन भाषायां शक्तिरावश्यिकेति भावः।

अस्मिन्नपि पक्षे हरिसम्मतिमादर्शयति—*उक्तञ्चेति*। *पारम्पर्य्यादिति*। स्वार्थे ष्यञ्। विगुणेष्विति हेतुगर्भं विशेषणम्। वैगुण्यं च करणापाटवरूपम्. अभिघातृवैगुण्यस्याऽपभ्रंशनियामकत्वात्। तथाच विगुणेष्वभिधातृषु सत्सु परम्परया येष्वर्थेषु प्रसिद्धिमागता इत्यर्थः। *दैवीति*। संस्कृतरूपेत्यर्थः। *अशक्तैः*—करणाऽपाटववद्भिः। *व्यवकीर्णा*। उच्छिन्नाऽनुपूर्व्वीका कृतेत्यर्थः। *अनित्यदर्शिनाम्*। शब्दाऽनित्यत्ववादिनाम्। *अस्मिन् वादे*। शक्तिविचारे इत्यर्थः।

ननु 'तेषां साधुरवाचकं' इत्यनुपपन्नम्। यस्मिन्नर्थेऽपभ्रंशाः प्रयुज्यन्ते, तद्वाचकत्वस्य साधुषु सर्वसम्मतत्वादतो व्याचष्टे—*अबोधक इति*। व्यवहितः साधुर्न तत्र बोधकः किन्तु साक्षादपभ्रंशा एव तत्तदानुपूर्वीमत्त्वेन वाचका इति भावः।

नन्वियं अभ्रंशरूपा वाग् अभिधातृवैगुण्येनोच्छिन्नाऽनुपूर्वीकाऽपि दैवी संस्कृतरूपैव। नैयायिकानां त्वस्या अबोधकत्वे भ्रम एव। पारम्पर्य्यादित्युपपादनात् साधुतादात्म्यभ्रान्तिमूलकशक्तिभ्रमेण बोधकत्वसम्भवादित्यर्थकं "दैवी वाग्व्यवकीर्णेयमि"त्यपि पूर्वोक्तान्तिमकल्पस्यैवोपोद्वलकम्। नचैवं 'तेषां साधुरवाचकः' इत्यनुपपन्नम्। तत्कल्पे आरोपितसाधुत्वकाद्यपभ्रंशानां बोधकत्वेन साधुस्मरणाद् बोधाऽनभ्युपगमात्। तेषामित्यादेः साधुतादात्म्यारोपविषयास्त एव प्रसिद्धार्थानां बोधकाः, न तु तत्तदानुपूर्वीमत्त्वेन बोधका इत्यर्थात्तस्मान्नोक्तयुक्त्यापभ्रंशानां तत्त्वेन वाचकतासिद्धिरत आह—*किञ्चेति*। *तासाम्*—भाषाणाम्। *दोष इति*। तथा च गौरवान्न तत्र शक्तिरित्यर्थः। सकलदेशशिष्टपरिगृहीतत्वमेव विनिगमकमत आह—*अवच्छेदकेति*। बोधजनकतावऽच्छेदिकेत्यर्थः। *तयोरिति*। साध्वपभ्रंशयोरित्यर्थः।

सकलशिष्टपरिगृहीतत्वं तु न विनिगमकम्। "शवतिर्गतिकर्मा कम्बोजेषु प्रयुज्यते, विकार एवैनमार्य्या भाषन्ते" इति भाष्यात्तत्तद्देशनियतसंस्कृतेषु शक्तिसिद्धयनापत्तेः। वाचकस्य व्यवस्थायामालङ्कारिकाणां प्राकृतभाषोदाहरणस्यासङ्गतत्वा-

पत्तेश्च । अत एव तत्तद्देशीयशिष्टानां तत्तद्भाषासु निस्सन्दिग्धशक्तत्वप्रत्ययः सङ्गच्छते । न चाऽसौ भ्रमः; बाधकाभावादिति भावः । उपसंहरति—*तथाचेति* । *एवम्*—अपभ्रंशानामपि शक्तत्वे । *तेषाम्—अपभ्रंशानाम् । *साधुता स्यादिति* । शक्तत्वस्यैव साधुत्वादिति भावः । *साधुभिर्भाषितव्यमिति* । साधूनेव प्रयुञ्जीतेत्यादिरूपश्चेत्यर्थः । *नाऽसाधुभिरिति* । "नापभ्रंशितवै" इत्यादिनिषेधविधिरित्यर्थः । योग्यत्वं जनकतावच्छेदकधर्मवत्त्वम् । *तत्र*—साधुशब्दे । *जातिरिति* ।

तत्र प्रमाणं तु "एकः शब्दः सम्यग् ज्ञातः शास्त्रान्वितः सुप्रयुक्तः स्वर्गे लोके कामधुग् भवति" इति "एकः पूर्वपरयोः" (पा० सू० ६।१।६४) इत्यत्र भाष्यपठितश्रुतिः । सम्यग् ज्ञातः साधुत्वेन ज्ञातः । यदिह परिनिष्ठितं तत् साध्वित्यर्थापत्तिलभ्यवाक्येन । अतः शास्त्रान्वितः शास्त्रव्युत्पादनमार्गेणाऽभिसंहितः । सुप्रयुक्तः शिक्षायुक्तमार्गेण प्रयुक्त इति तदर्थः । "हेऽलय इति कुर्वन्तः" इति श्रुतिश्च । यदि च कत्वादिना साङ्कर्यान्न तस्य जातित्वमिति विभाव्यते तदाऽस्तूपाधिरिति भावः ।

*तज्ज्ञापकमिति* । तदभिव्यञ्जकमित्यर्थः । यथैतत्तथोक्तम् । व्याकरणादिपदाच्छिष्टप्रयुक्तत्वपरिग्रहः । *एवमेवेति* । तत्तदर्थपुरस्कारेण तत्तच्छब्दानां साधुत्वपर्यवसानलाभेनैवेत्यर्थः । *फलाजनकत्ववदिति* । क्षत्रियाऽधिकारिकृतस्यैव तस्य फलश्रवणादिति भावः । *साधुत्वमिति* । गवाद्यर्थपुरस्कारेणैव गवादिशब्दानां प्रयोगे पुण्यजनकत्वरूपं साधुत्वमित्यर्थः । ननु आधुनिकदेवदत्ताद्यर्थपुरस्कारेण देवदत्तादिशब्दानां शास्त्रे व्युत्पादनात्तेषां देवदत्तादौ साधुता न स्यादत आह—*आधुनिकेति* । *द्व्यक्षरमिति* । "घोषवदाद्यन्तरन्तःस्थं द्व्यक्षरं चतुरक्षरं वा पुरुषस्य नाम कृतं कुर्यान्न तद्धितम्" इति भाष्यस्थस्मृत्येत्यर्थः । तत्तद्देशभाषाऽनुसारेण "क्रियमाणानां नाम्नां तु शास्त्राव्युत्पन्नत्वादसाधुत्वमेवेति भावः । *गौणानामिति* । शुक्लादिशब्दानामित्यर्थः । *गुणे*—स्वशक्ये शुक्लादिरूपे ॥ *व्युत्पादनादिति* ॥ "गुणवचनेभ्यो मतुपो लुक्" इति स्मृत्या "गुणे शुक्लादयः पुंसि" इत्यादिकोशेन चेत्यस्यादिः । *तत्पुरस्कारेण* । नीलाऽऽद्यर्थपुरस्कारेणेत्यर्थः ॥ *प्रवृत्तौ*—गुणिनि प्रयोगे । शक्याऽर्थस्य बाधे अन्वयानुपपत्तिप्रतिसन्धानात्तैर्लक्ष्यार्थोपस्थापनेऽपि शक्यार्थमादाय तेषां साधुत्वं नानुपपन्नम् । शक्याऽर्थपुरस्कारेण तेषां शास्त्रव्युत्पन्नत्वादित्यर्थः । गौणपदस्य निरूढलाक्षणिकपदोपलक्षणत्वाच्च न गङ्गायां घोष इत्यादौ गङ्गादिपदानामसाधुत्वमितिभावः ॥ *आधुनिकानामिति* ॥ ऐच्छिकयत्किञ्चित्सम्बन्धेन शास्त्रकृतां तात्पर्याऽविशेषेण प्रयुक्तानामित्यर्थः ॥ ३८ ॥

अर्थ—बोधजनकत्व को शक्ति स्वीकार करने पर भाषा शब्दों से भी बोध देखने से वहाँ भी बोधकता रूप शक्ति माननी होगी। वहां शक्ति स्वीकार करने पर उनकी

साधुता हो जायगी। शक्तत्व को ही साधुता [1]व्याकरणाधिकरण में प्रतिपादित किया है—इस शङ्का का दो प्रकार से समाधान कारिका द्वारा करते हैं।

"असाधुरनुमानेन"—अपभ्रंश गावी आदि भाषा शब्द से साधु गौ इत्यादि शब्दों का स्मरण होने से (अनुमान का यहां स्मरण अर्थ है) परम्परा से बोधक हैं। अथवा (बोधकता शक्ति साधु असाधु दोनों प्रकार के शब्दों में होने पर भी) साधु प्रयोग में पुण्य और असाधु के प्रयोग में पाप इस प्रकार का नियम है।

असाधु गावी गोणी इत्यादि है। अनुमान साधु शब्दों का स्मरण करा कर वाचक अर्थात् बोधक है ऐसा किसी का मत है। लिपि का जिस प्रकार शब्दों के स्मरण में उपयोग है। असाधु साक्षात् वाचक नहीं है। इसलिये उनकी साधुता नहीं है।

वाक्यपदीय में कहा है—

वे अपभ्रंश साधु शब्दविषयक स्मरण द्वारा "प्रत्ययोत्पत्तिहेतवः" = गवादि अर्थ बोध के कारण हैं। (कारिका में एव शब्द विकल्प अर्थ में है) अथवा साधु गोपदादि के साथ तादात्म्य से भासमान गावी शब्द गो आदि अर्थ के प्रकाशक हैं।

जिस कारण वश शिष्ट जनों के द्वारा साधु शब्दों के समान व्याकरण स्मृति से अपभ्रंश का संग्रह पर्याय वाचक में नहीं किया जाता। इसीलिये वे साक्षात् वाचक नहीं हैं। शिक्षयमाण = शिक्षा प्राप्त करता हुआ बालक जब "वं वं वं" इस प्रकार अस्फुट बोलता है तब अव्यक्त शब्द सुनने वालों को साधु शब्द के जानने वाले को व्यक्त साधु शब्द के स्मरण द्वारा वं वं वा के अर्थ का बोध होता है। इस प्रकार साधु शब्दों के प्रयोग प्रसङ्ग में जो असाधु शब्द का प्रयोग होता है। उस असाधु शब्द से साधु शब्द के स्मरण द्वारा किसी प्रसिद्ध अर्थ का बोध होता है।

शङ्का—अपभ्रंश शब्दों के साक्षात् अवाचक होने में क्या प्रमाण है क्योंकि शक्तिबोधक व्यवहार दोनों में समान है।

समाधान—आपका यह कथन ठीक है। देशों के भेद होने से अपभ्रंशों के भी अनेक भेद होंगे। उन सभी अपभ्रंशों में शक्तिकल्पना करने पर गौरव होगा। यदि कहें कि जिस प्रकार सभी साधु पर्याय से एक अर्थ के बोधक होते हैं उसी प्रकार अपभ्रंश भी वाचक होंगे तो ऐसा कहना ठीक नहीं है। साधु पर्याय सभी देशों में एक ही है। विनिगमनाविरह = एकता निश्चायक प्रमाण न होने से सभी साधु के पर्यायों में शक्ति मानी जाती है। अपभ्रंशे तथा—अर्थात् सभी देशों में एक नहीं हैं (देशभेद से भिन्न हैं)

अन्यथा = अपभ्रंश में शक्ति मानने पर भाषा शब्दों की पर्यायरूप से गणना होने लगेगी। एवञ्च—अपभ्रंशों को अशक्त मानने पर शक्तत्व और साधुत्व एक ही हैं यह नैयायिक मीमांसकादिकों का मत, "ते साधुरनुमानेन" इत्यादि हरिकारिका की दृष्टि से प्रतिपादित है।

अब अपना मत कहते हैं—वाचकत्वाविशेषेऽपि भाव यह है कि—अपभ्रंशों को अशक्त अर्थात् शक्ति रहित मानने पर उनसे अर्थ का बोध ही नहीं होगा। यदि कहें कि उन अपभ्रंशों से साधु शब्दों के स्मरण द्वारा बोध होगा तो यह ठीक नहीं है।

---

१. व्याकरणाधिकरण...पूर्व में उक्त है।

"साधुषु" इसमें विषय सप्तमी है। अनुमानेन स्मरणेन।

क्योंकि साधु शब्दों को नहीं जानने वाले मूर्खों को भी उससे अर्थ बोध होता है। तथा साधु शब्दों से उनको अर्थ बोध नहीं होता। यदि कहें कि अपभ्रंश से शक्ति के भ्रम होने के कारण बोध होता है तो ठीक नहीं क्योंकि बोधकत्व के बाध न होने से शक्तिग्रह को भ्रम नहीं कह सकते।

ईश्वरेच्छा शक्तिवादियों के मत में भी "गगरी[1] पदजन्यबोधविषयो घटो भवतु" इत्याकारक ईश्वरेच्छा माननी होगी। सन्मात्र—मात्र का अर्थ सकल सत्पदार्थ को ईश्वरेच्छा विषय करती है। अतः उसको भी विषय करने में कोई आपत्ति नहीं है। एवं पद और पदार्थ विशेष से घटित होने से उसमें भ्रम होना सम्भव नहीं है। वाक्यपदीय में कहा भी है। पारम्पर्यादपभ्रंशाः—

अपभ्रंश, वक्ता की इन्द्रियों की अपटुता ही विगुणता है उसके कारण ( परम्परा ही पारम्पर्य है ) परम्परा से जिन अर्थों में प्रसिद्धि रूढि को प्राप्त किया है उन अर्थों का ( व्यवहित ) साधु शब्द अवाचक है। उच्चारण करने में असमर्थ वक्ताओं के द्वारा यह दैवी संस्कृत वाणी अनेक प्रकार से विकृत कर दी गई है। अनित्यदर्शिनाम् = शब्दानित्यत्ववादी नैयायिकों का अपभ्रंश के अवाचकत्व के सम्बन्ध में विपर्यय अर्थात् भ्रम है।

अवाचकः = अबोधक है। बुद्धिविपर्ययः = साधु शब्द ही वाचक है असाधु वाचक नहीं है यह उनका भ्रम है। एक के शक्ति निश्चय में प्रमाणाभाव से भाषा शब्दों में भी शक्ति है। यदि कहें कि देशभेद से भिन्नता भाषा शब्दों में है तो ठीक नहीं। संस्कृत भाषा के ही समान महाराष्ट्र भाषा सर्वत्र सब स्थानों में एक होने से किस भाषा शब्द में शक्ति है और किसमें नहीं इसका निर्णायक कोई प्रमाण नहीं है।

और भी—आनुपूर्वी पद में बोधजनकता का अवच्छेदक है। वह आनुपूर्वी संस्कृत शब्दों के पर्याय के समान भाषाशब्दों में भी भिन्न भिन्न है। इनमें विशेष क्या है। इसका विद्वान् लोग विचार करें।

इस प्रकार संस्कृत शब्द के समान भाषा शब्द भी शक्त हैं। यदि कहें कि पर्याय में भाषा शब्दों की भी गणना होने लगेगी तो कोश में साधु शब्दों की ही पर्याय में गणना है असाधु की नहीं। अतः दोष नहीं है।

अपभ्रंशों को भी शक्त मानने पर इनकी भी साधुता हो जायगी इसलिये कारिका में "नियमः" इत्यादि कहा गया।

पुण्य की उत्पत्ति के लिये साधुशब्दों से ही भाषण करना चाहिये इस प्रकार की विधि एवं पापोत्पत्ति के प्रसङ्ग से असाधु शब्दों से व्यवहार नहीं करना चाहिये यह निषेध है। इसलिये पुण्य जनन की योग्यता ही साधुत्व है और पापजनन योग्यता ही असाधुत्व है। साधु शब्दों में जनकतावच्छेदक जाति है। उसका अभिव्यञ्जक कोश, व्याकरण आदि है।

एवमेव = इसी प्रकार राजसूययाग ब्राह्मण के लिये फलोत्पादक नहीं है ( राजसूय

---

१. गगरीपदजन्यबोधविषयत्वप्रकारिका घटविशेष्यिका इच्छाशक्ति प्रकृत में होगी। यदि है तो बाध नहीं यदि नहीं है तो भ्रम नहीं, जो कहीं रहता है उसी का किसी स्थल में भ्रम होता है यह भाव है।

याग का अधिकारी क्षत्रिय है ) वैसे ही गौ आदि शब्दों की अश्वादि अर्थ में साधुता नहीं है।

आधुनिक देवदत्त आदि नामों की भी द्व्यक्षर अथवा चार अक्षर वाला नाम करना चाहिये इस भाष्य से व्युत्पादित होने से साधुता है। जो शब्द जिस अर्थ में व्याकरण से व्युत्पादित है वह शब्द उस अर्थ में साधु है यह निश्चित हुआ।

गौणानाम्—गुणाद् क्रौर्यादिगुणयोगात् आगताः प्रयुक्ताः गौणाः माणवक ( बालक ) में प्रयुक्त सिंह शब्द, गौण एवं शुक्लादि शब्द गुण सम्बन्ध से गुणी शुक्लवान् पट आदि अर्थ में प्रयुक्त का (गुणे=स्वशक्यशुक्लादिगुण एवं सिंह अर्थ में व्युत्पादन होने से) तत्पुरस्कारेण नीलगुण एवं शौर्य क्रौर्य के द्वारा गुणी तथा माणवक में प्रयोगप्रवृत्ति=प्रयोग में साधुत्व इष्ट है। इसीलिये "ब्राह्मणाय देहि" इसके स्थान में ब्राह्मणं देहि इस प्रकार का प्रयोग लक्षणा से भी साधु नहीं है। इत्यादि विस्तर से भूषण में निरूपण है ॥३८॥

हिन्दीभाष्य—वैयाकरणों के मत में संस्कृत शब्दों के समान ही अपभ्रंश ( उस उस देश की भाषा ) में शक्ति होने से वाचक है। अपभ्रंश उसके शुद्ध संस्कृत शब्द का स्मारक होता है तब उससे अर्थ बोध होता है यह अनुभव विरुद्ध है। अतः किसी साधक बाधक प्रमाण के न होने से शुद्ध और अपभ्रंश दोनों वाचक हैं।

शङ्का—अपभ्रंश में शक्ति नही है किन्तु शक्ति का भ्रम है। इसलिये उससे भी अर्थ बोध होता है।

समाधान—विषय के बाधित होने पर ही ज्ञान भ्रमात्मक होता है। शुक्तिशकल में रजत के न होने से "इदं रजतम्" यह भ्रमात्मक ज्ञान कहा जाता है।

बोधकता दोनों स्थलों में समान होने से भाषा ( अपभ्रंश ) स्थल में बोधकत्व रूप शक्ति का बाध न होने के कारण अबाधित विषयक शक्ति ज्ञान को भ्रम नहीं कहा जा सकता।

तत्पद विशेष्यक तदर्थबोधजनकत्व प्रकारक इच्छा तत्पदविशेष्यकत्वरूप से गृहीत होने से पदान्तर विशेष्यक नहीं हो सकती। अत एवं उसका भ्रम असम्भव है। अतः शक्ति भ्रम से भी अपभ्रंश के द्वारा शाब्दबोध नहीं होने से उसमें शक्ति स्वीकार आवश्यक है। इसीलिये "समानायामर्थावगतौ शब्दैश्चापशब्दैश्च शास्त्रेण धर्मनियमः" ऐसा पस्पशाह्निक में भाष्यकार ने कहा है। समानता शब्दान्तर के स्मरण के विना ही बोधक होने से है। अन्यथा समानायां विशेषण के उपादान का स्वारस्य नहीं होगा।

शङ्का—ऐसा स्वीकार करने पर "आर्यम्लेच्छाधिकरण" का विरोध प्राप्त होगा। वहां पीलुशब्द का प्रयोग आर्यलोग वृक्षविशेष में करते है। अनार्य लोग गज में प्रयोग करते है। उसी को पीलु शब्द से समझते हैं। इसी प्रकार यव शब्द का प्रयोग दीर्घशूक में आर्य लोग और अनार्य लोग उसका प्रयोग कङ्गु में करते हैं। इस सन्देह का निवारण पीलु शब्द वृक्ष में ही और यव शब्द दीर्घशूक में ही शक्त है इस आर्य प्रसिद्धि को मानकर किया गया है। यदि दोनों में शक्ति समान रूपसे होती तो यह निर्णय सङ्गत नहीं होगा।

समाधान—"आर्यम्लेच्छाधिकरण" का तात्पर्य यह है कि दोनों अर्थों में पद के शक्त होने पर ही आर्यप्रसिद्ध ही अर्थ का बोध होगा अनार्य प्रसिद्ध अर्थ का नहीं। क्योंकि अर्थ की प्रसिद्धि बलवान् है। आर्य से प्रतिपादित अर्थ अनार्य प्रतिपादितार्थ की अपेक्षा बलवान् होता ही है।

अपभ्रंश को वाचक मानने से ही उनको कभी व्यञ्जक कहा जाता है। काव्यप्रकाश में उदाहरण दिया है। माए[1] घरोव अरण अज्जहु सात्थिति साहिअं तुम ए। ताम्मण किं करासीज्जं एमें अण वासरो ढाई॥ प्राकृत गाथा। माता जी आज कोई भी गृहोपकरण भोजन सामग्री नहीं है। यह आपही ने कहा है। अब आप कहिये कि क्या करना है। दिन इसी प्रकार स्थायी नहीं रहेगा।

शङ्का—अपभ्रंश, भाषा के शब्दों में शक्ति मानने पर उनकी भी साधुता हो जायगी।

समाधान—शक्ति जिसमें रहती है वह साधु है यह नियम नहीं है। पुण्यजनकतावच्छेदक साधुत्व है। इसका ज्ञापक व्याकरण, कोश आदि है। व्याकरण से व्युत्पादित शब्द साधु होता है। अतः कोई भी पद शक्त होने मात्र से साधु नहीं हो सकता।

गुणादागतः गौणः "तत आगतः" इस सूत्र से अण् प्रत्यय होने से सिद्ध होता है। क्रौर्यादि गुण के योग से "सिंहो माणवकः" इस में सिंह पद का माणवक अर्थ में प्रयोग किया गया है। गौण अर्थात् "सिंहो माणवकः" इस प्रयोग स्थल का सिंह शब्द गुण[2] सिंहत्व धर्म में व्युत्पादित होने से सिंहत्व धर्मरूप प्रवृत्ति निमित्त का माणवक में आरोप के द्वारा माणवक अर्थ में प्रवृत्तौ-प्रयोग करने पर भी साधुता उसकी है। विशेष भूषण में देखिये॥ ३८॥

अतिरिक्तशक्तिग्रहोपायमाह—

**सम्बन्धिशब्दे सम्बन्धो योग्यतां प्रति योग्यता॥**
**समयाद् योग्यतासंविन्मातापुत्रादि योगवत्॥ ३९॥**

सम्बन्धो–विषयः। योग्यतां प्रति योग्यता–सम्बन्धिशब्दं प्रति योग्यता विषय इति। समयाद्–व्यवहारात्, योग्यतासंवित् शक्तिग्रहः। घटपदमत्र योग्यमेतत्सम्बन्धीति व्यवहारात्, सा ग्राह्येत्यर्थः॥ ३९॥

इति वैयाकरणभूषणसारे शक्तिनिर्णयः॥ ६॥



ननु शक्तिग्राहकयोः कोशव्याकरणयोर्विद्यमानत्वाच्छक्तिग्रहोपायकथनं व्यर्थमत आह—*अतिरिक्तेति*॥ कोशव्याकरणाभ्यामतिरिक्तो यः शक्तिग्रहोपायस्तमित्यर्थः। तथाचाऽनधीतव्याकरणानां तेन शक्तिग्रहाऽसम्भवात् तदर्थं व्यवहाररूपमप्युपायमाहेतिपर्य्यवसानान्न वैयर्थ्यमिति भावः। एतेन ग्रन्थकृताऽतिरिक्तशक्तेरनङ्गीकारेण तद्ग्रहोपायप्रदर्शनं व्यर्थमित्याशङ्कापि समाहिता। विषयपदाध्याहारेण मूलं व्याचष्टे—*सम्बन्धो विषय इति*॥

---

१. मातर्गृहोपकरणमद्य खलु नास्तीति साधितं त्वया।
तद् भण किं करणीयमेवमेव न वासरः स्थायी इति संस्कृतम्॥ ३८॥

२. गुणे–श्वशक्यशुक्लादिरूपे ऐसा अर्थ दर्पणकार का है। काशिकाकार ने गुणे गोत्वादिधर्मे इससे प्रवृत्तिनिमित्त में तात्पर्य माना है।

तथाचाऽयमेतत्सम्बन्धीति व्यवहारे, सम्बन्धो विषयः। योग्यतां प्रतिइदमत्रयोग्यमिति योग्यताव्यवहारे, योग्यता विषयो यतोऽतः समयात् तद्व्यवहाराद्योग्यतायां बोधकतारूपशक्तेः। *संवित्* । ज्ञानं भवतीत्यर्थः।

तत्र दृष्टान्तो--*भातापुत्रादियोगवदिति* ॥ यथाऽयमेतत्सम्बन्धीति व्यवहारस्तयोर्जन्यजनकभावनिश्चायकस्तद्वदित्यर्थः।

अन्ये त्विदं हरिपदमित्थं व्याचक्षते। सम्बन्धिशब्दे अयमेतत्सम्बन्धीति व्यवहारे योग्यतां प्रति अर्थबोधजनकताऽवच्छेदकधर्मवत्त्वरूपयोग्यताव्यवहारनिरूपितो यस्तादात्म्यलक्षणो अन्यो वा सम्बन्धः; स एव योग्यताऽपरपर्य्यायो विषय इति शेषः। स चानादिवृद्धव्यवहारापरपर्य्यायोऽस्मदादिसमयान्निश्चीयते, न तु बोधजनकत्वमेव-शक्तिरेतद्बोधजननेऽयं योग्य इति व्यवहारात्। अत एवैतच्छेषे—

सति प्रत्ययहेतुत्वं सम्बन्धे उपपद्यते।
शब्दस्यार्थे यतस्तस्मात् सम्बन्धोऽस्तीति गम्यते ॥ ३७ ॥

वाक्य० सम्बन्ध० ३७

इत्यन्तेनोक्ताऽर्थः स्पष्टीकृत इति। अधिकमन्यतोऽवधार्यम् ॥ ३९ ॥

इति भूषणासारदर्पणे शक्तिस्वरूपनिरूपणम् ॥ ६ ॥



अर्थ—कोश-व्याकरण से अतिरिक्त जो शक्तिज्ञान का उपाय उसको कहते हैं—

सम्बन्धि शब्द में विषयभूत जो शक्तिरूप सम्बन्ध और योग्यता शब्द के प्रति विषयीभूत जो योग्यता इसका समयात् अर्थात् व्यवहार से योग्यता अर्थात् शक्ति ( यह सम्बन्ध रूपशक्ति का भी उपलक्षण है ) का ज्ञान होता है। जैसे यह इसकी माता यह इसका पुत्र इसके द्वारा पूर्व सिद्ध जन्य जनकभाव रूप सम्बन्ध का ज्ञान होता है।

सम्बन्धी में सम्बन्ध विषय है। योग्यता सम्बन्धी शब्द के प्रति योग्यता विषय है। समयात्—व्यवहार से शक्ति का ग्रहण होता है। घटपद यहाँ योग्य और एतत्सम्बन्धी इस प्रकार के व्यवहार से शक्ति गृहीत होती है ॥ ३९ ॥

इति शक्ति निरूपणम्



-हिन्दी भाष्य—यह इसका सम्बन्धी इस व्यवहार में सम्बन्ध विषय है। "योग्यतां प्रति योग्यता"—इदमत्र योग्यम् इस व्यवहार में योग्यता विषय है। अत एव उसके व्यवहार से योग्यता में बोधकता रूप शक्ति का ज्ञान होता है। यथा माता और पुत्र का सम्बन्धी यह है इस व्यवहार से पूर्व में ही सिद्ध जन्यजनकभाव का निश्चय होता है। उसी प्रकार यहाँ भी समझिये। कारिका में किसी पुस्तक में "माता-पित्रादियोग्यवत्" और किसी में "माता-पित्रादियोगवत्" ऐसा पाठ मिलता है। योगवत् पाठ सुकर है माता पुत्रादि के सम्बन्ध उक्तार्थ का निश्चायक है। योग्यवत् पाठ में पुत्रादियोग्य का अध्याहृत सम्बन्ध में अन्वय होगा। मात्रादि प्रतियोगिकत्व विशिष्ट सम्बन्ध जैसे लोक-व्यवहार से गृहीत होता है उसी प्रकार यहाँ भी ॥ ३९ ॥

इति शक्तिनिरूपणम्।



## अथ नञर्थनिर्णयः

नञर्थमाह—

नञ्समासे चापरस्य प्राधान्यात् सर्वनामता।
आरोपितत्वं नञ्द्योत्यं न ह्यसोऽप्यतिसर्ववत् ॥ ४० ॥

नञ्समासे अपरस्य-उत्तरपदार्थस्य प्राधान्यात् सार्वनामता अभ्युपेयमिति शेषः।

अयम्भावः—असर्व्वं इत्यादावारोपितः सर्व्वं इत्यर्थे सर्वशब्दस्य प्राधान्याऽबाधात् सर्वनाम सिद्ध्यति। अन्यथा अतिसर्व्वं इत्यत्रेव सा न स्यात्। घटो नास्तीत्यादावभावविषयकबोधे तस्य विशेष्यताया एव दर्शनात्। अस्मद्रीत्या च स आर्थो बोधो मानसः।

तथाचासर्व्वस्मै इत्याद्यसिद्धिप्रसङ्गो नेति। अत्र चारोपितत्वमारोपविषयत्वम्। आरोपमात्रमर्थो; विषयत्वं संसर्ग इति निष्कर्षः। द्योत्यत्वोक्तिर्निपातानां द्योतकत्वमभिप्रेत्य ॥ ४० ॥

"समासे खलु भिन्नैव" इत्यत्र पङ्कजशब्दवदिति वदता समासे तद्घटकप्रत्येकशक्तिसहकृतसमुदायशक्तेर्व्यपेक्षात्वमङ्गीकृतम्। तच्चाऽनुपपन्नम्। यत्र समासघटकप्रत्येकपदस्याऽनर्थकत्वं तत्र प्रत्येकशक्तिसाचिव्याऽसंभवात् यथा नञ्समासघटकनञः।

द्वयोरर्थाऽभिधाने हि व्यापारो नैव विद्यते। इत्युक्तेः ॥

एवञ्च जहत्स्वार्थावाद इवेदृशस्थले उत्तरपदार्थाऽदिप्राधान्यस्य स्वरसतोऽनुपपत्तिरपीतीमां शङ्कां परिहर्तुं नञर्थनिरूपणमित्याह-*नञर्थमिति* ॥ मूले ॥*नञ्समास इति* ॥

अयम्भावः-'घटो न पटो' 'घटो नाऽस्ति' इत्यादावभावशाब्दबोधस्य सार्वजनीनप्रसिद्धिसिद्धत्वान्नञोऽभावार्थकत्वमावश्यकम्। तथाचोत्तरपदार्थप्राधान्यादिव्यवस्था सुलभा। यद्यपि घटो नेत्यादावभावविशेष्यक एव बोधस्तथाप्यऽसर्वं इत्याद्यनुरोधेनारोपितत्वार्थकत्वमपि नञोऽङ्गीकरणीयमितिशेषपूरणेन व्याचष्टे सारे-*सिद्ध्यतीति*॥ *अत एवेति* ॥ प्राधान्यानुपपत्तेरेवेत्यर्थः ॥

ननु नञस्तत्राभावार्थकत्वे कथं प्राधान्यानुपपत्तिरित्यतोऽभावार्थमाह—*अयम्मात्र इति* ॥ अन्यथा आरोपितत्वार्थकत्वानभ्युपगमे भेदार्थकत्व इति यावत् ॥ *सा*-सर्वनामसंज्ञा ॥ *न स्यादिति*। असर्वं इत्यत्र नञोभेदार्थकत्वे तत्र प्रतियोगितया सर्वपदार्थस्योपसर्जनत्वेन संज्ञोपसर्जनानां सर्वादिबहिर्भूतत्वेनाऽतिसर्वं इत्यादाविव तदप्रवृत्तेरिति भावः। ननु भेदप्रतियोगी सर्वं इति तत्र बोधाभ्युपगमान्नोत्तर-

पदार्थस्य प्राधान्यहानिरत आह—*घटो नास्तीत्यादाविति* ॥ *तस्य*-नञर्थस्य ॥ नञर्थाऽभाववत्त्वस्य विशेष्यतायां तन्त्रत्वादिति भावः।

ननु तवाप्यघटः पट इत्यतो घटभिन्नः पट इति सर्वसिद्धप्रतीत्यनुपपत्तिरत आह-*अस्मद्रीत्येति* ॥ *स*—भेदबोधः ॥ *आर्थ इति* ॥ अर्थादुपस्थितिविषयादागत इत्यर्थः ॥ *मानस इति*। तत्र शाब्दत्वप्रत्ययत्वसिद्ध एवेति भावः। नन्वसर्वशब्दस्य सर्वनामत्वाभावे का क्षतिरत आह-*तथाचेति* ॥ *अत्र चेति*॥ आरोपितत्वं नञ्वाच्यमिति कल्पे चेत्यर्थः ॥ *निष्कर्ष इति* ॥ विषयत्वस्य संसर्गमर्य्यादयैव लाभादनन्यलभ्यारोपस्यैव नञर्थत्वं न त्वारोपविषयत्वस्य गौरवादिति भावः। नन्वारोपस्य वाच्यत्वाभ्युपगमे द्योतकताप्रतिपादकमूलविरोधोऽत आह-*द्योत्यत्वोक्तिरिति* ॥ वाच्यस्याऽपि तस्य विशेषणतैव नाभाववद्विशेष्यतेति सूचयितुमेव तथोक्तिरिति भावः ॥ ४० ॥

अर्थ—नञ् के अर्थ का निर्णय करते हैं।

नञ्समास में अपरस्य—उत्तर पदार्थ की प्रधानता होने से (असर्व इत्यादि स्थल में) सर्वनाम संज्ञा सिद्ध होती है। आरोपितत्व-आरोपितब्राह्मणत्वादिधर्म नञ् पद का द्योत्य अर्थ है। ऐसा नहीं मानने पर "अतिसर्व इस के समान 'असः" इस में भी सर्वनाम संज्ञा नहीं होगी।

नञ् समास में उत्तर पदार्थ की प्रधानता होने से सर्वनाम संज्ञा ("सिध्यति" इसके आध्याहार से) सिद्ध होती है। इसी कारण आरोपितत्व ही नञ् से द्योतित होता है यह स्वीकार करना चाहिये। ("अभ्युपेयम्" इसका यहां अध्याहार है)।

कारिका का भाव यह है—"असर्व" इत्यादि नञ् समास में आरोपित सर्व ऐसा अर्थ मानने पर सर्व शब्द की प्रधानता अर्थात् अनुपसर्जनता होने से सर्वनाम संज्ञा सिद्ध होती है। अन्यथा उत्तर पदार्थ की प्रधानता नहीं रहने पर "अतिसर्वः" यहां के समान सर्वनाम संज्ञा (असः) इसमें नहीं होगी। "घटो नास्ति" इत्यादि स्थल में अभाव को विषय करने वाले ज्ञान में अभाव की विशेष्यता ही देखी जाती है। आरोपितत्व नञ् द्योत्य मानने वाले की रीति से भेद का बोध [1]अर्थतः प्राप्त है। अत एव शाब्द न होकर मानस है। ऐसा मानने से ही असर्वस्मै इत्यादि प्रयोगों की असिद्धि का प्रसङ्ग नहीं हुआ।

यहां आरोपितत्व से आरोपविषयत्वरूप अर्थ विवक्षित है। आरोप मात्र अर्थ है विषयता सम्बन्ध है यह निष्कर्ष है। निपात द्योतक है इस अभिप्राय से द्योत्यत्व का कथन है ॥ ४० ॥

हिन्दी भाष्य—शक्ति निरूपण के वाद द्योतकत्वरूप व्यञ्जना के निरूपण के लिये नञर्थ का निरूपण करते है।

"घटो न पटः घटो नास्ति" इत्यादि असमास स्थालों में घटप्रतियोगिक भेदवान् पटः घटप्रतियोगिक अभाव इत्यादि बोध होने से नञर्थ अभाव मानने पर भी कोई क्षति

---

१. घट से भिन्न में ही घटत्व का आरोप है। अतः आरोपित घटत्व वाला घट से भिन्न होने से ही भेद फलित हुआ।

नहीं है किन्तु समास स्थल में असर्व शब्द से सर्वाभाव बोध होने पर अभाव की प्रधानता और सर्व की अप्रधानता होने से "अतिसर्वः" इस के समान "संज्ञोपसर्जनीभूतास्तु न सर्वादयः"—संज्ञा और [1]उप सर्जन का सर्वादिगण में पाठ नहीं है इसके अनुसार सर्वादिगण में पाठ न होने से सर्वनाम संज्ञा नहीं होगी। इसलिये समासस्थल में नञ् का आरोपितत्व द्योत्य अर्थ है। अर्थात् नञ् का वाच्य नहीं है किन्तु उसका द्योत्य है। इस प्रकार समास "अब्राह्मण" इत्यादि स्थलों में आरोपितब्राह्मणत्ववान् ब्राह्मणः इत्यादि बोध होता है। जो वस्तुतः ब्राह्मण नहीं है किंन्तु क्षत्रिय वैश्य आदि है उसमें आरोपित ब्राह्मणत्वरूप प्रवृत्ति-निमित्त से ब्राह्मण पद प्रयोग है। सर्वनाम संज्ञा न होने से स्मै स्मात् स्मिन् इत्यादि आदेश नहीं होने के कारण "असर्वस्मै" "असर्वस्मात्" "असर्वस्मिन्" इत्यादि प्रयोग नहीं होगा।

अतिसर्वशब्द से सर्व का अतिक्रमण करनेवाला यह अर्थ होता है। इसमें अतिक्रमणकर्ता में सर्व का अर्थ विशेषण होने से सर्वशब्द उपसर्जन हो जाता है। अत एव वहां सर्वनाम संज्ञा प्रयुक्त कार्य नहीं होता।

शङ्का—नञर्थ भेद मानने पर भी "असर्वः" इत्यादि स्थलों में भेद का प्रतियोगी सर्व इस प्रकार बोध होने से सर्व विशेष्य ही है विशेषण नहीं होगा।

समाधान—"घटो न पटः" इत्यादि स्थल में भेद विशेष्य होकर ही प्रतीत होने से नञर्थ भेद प्रतियोगी सर्व में विशेषण नहीं हो सकता किन्तु विशेष्य होगा।

शङ्काः—"अघटः पटः" इत्यादि स्थल में घटभिन्न पट इस प्रकार के अनुभव सिद्ध बोध की आरोपितत्व अर्थ मानने से अनुपपत्ति होगी।

समाधान—घट भिन्न पदार्थ में घटत्व का आरोप होगा आरोपित घटत्व के बोध होने से घट भिन्न अर्थ फलित होता है। घट में घटत्व होने से उसमें उसका आरोप व्यर्थ है। अतः अर्थात् घट भेद का बोध है। वह बोध शब्द जन्य न होकर मानस है।

आरोपितत्व का अर्थ आरोप विषयत्व है। अर्थात ब्राह्मणत्वाभाववान् क्षत्रियादि में ब्राह्मणत्व प्रकारक ज्ञान का विषयत्व है। इसकी अपेक्षा आरोप नञ् का अर्थ है और विषयता सम्बन्ध मानने में लाघवं है। क्योंकि नञ् पद का शक्यतावच्छेदक आरोपत्व होगा। आरोपितत्व पक्ष में आरोप विषयत्व होगा। विषयता सम्बन्ध से आरोप विशिष्ट जो ब्रह्मणत्व तादृश ब्राह्मणत्ववान् अब्राह्मणः इस पद से बोध होगा ॥ ४० ॥

'घटो नास्ति' 'अब्राह्मण' इत्यादावारोपबोधस्य सर्वानुभवविरुद्धत्वात्पक्षान्तरमाह—

अभावो वा तदर्थोऽस्तु भाष्यस्य हि तदाशयात्।
विशेषणं विशेष्यो वा न्यायतस्त्ववधार्य्यताम् ॥ ४१ ॥

तदर्थो नञर्थः। अर्थपदं द्योत्यत्ववाच्यत्वपक्षयोः साधारण्येन कीर्त्तनाय ॥ *भाष्यस्येति* ॥ तथाच नञ्सूत्रे महाभाष्यम्-"निवृत्तपदा-

---

१. दूसरे पदार्थ की विशेष्यता से निरूपित जो प्रकारता ( विशेषणता ) उसका प्रयोजक उपसर्जन है। सर्व अभाव में विशेषण होने से उपसर्जन है।

र्थकः" इति। निवृत्तं पदार्थो यस्य, "नपुंसके भावे क्तः" (पा० सू० ३।१।११४) इति क्तः। अभावार्थक इत्यर्थः।

यत्तु -निवृत्तः पदार्थो यस्मिन्नित्यर्थः। सादृश्यादिनाऽध्यारोपितब्राह्मण्याः क्षत्रियादयोऽर्थाः यस्येत्यर्थ इति कैय्यटः, तन्न। अरोपितब्राह्मण्यस्य क्षत्रियादेर्नञवाच्यत्वात्।

अन्यथा सादृश्यादेरपि वाच्यतापत्तेः। यत्तु—

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिताः॥

इति पठित्वा, अब्राह्मणः, अपापम्, अनश्वः, अनुदरा कन्या, अपशवो वा अन्ये गोऽश्वेभ्यः, अधर्म इत्युदाहरन्ति। तत्त्वार्थिकार्थमभिप्रेत्येति स्पष्टमन्यत्र।

*घटो नास्तीति* ॥ यद्यपि समासयोग्यनञ एवारोपाऽर्थकत्वं मूले उक्तम्, तथापि घटो नाऽस्तीत्युक्तिरत्रैव तत्राऽप्यारोपाननुभव इति दृष्टान्तार्थेत्यवधेयम्। नञ्द्योत्यमित्यत्र नञो विशेषणतया व्यवधानेन चोपस्थितत्वेऽपि तत्पदादीनां बुद्धिस्थपरामर्शकत्वात्तदा तत्परामर्शो नाऽनुचित इत्याह—*तदर्थो नञर्थ इति* ॥ *साधारण्येनेति* ॥ प्रकृतेऽर्थपदस्य तज्जन्यबोधविषयपरतया पक्षद्वयसंग्रहः। तत्रासति बाधके वाचकत्वमेव सति तु तस्मिन् द्योतकतापीति भावः॥ *नञ्वाचकत्वादिति* ॥

यद्यप्युत्तरपदार्थप्राधान्येन नञ्तत्पुरुषस्य ब्राह्मणमात्रस्याऽऽनयनं प्राप्नोति। नञः प्रयोगान्नञर्थविशिष्टस्यानयनं भविष्यति। "कः पुनरसौ नञर्थो? निवृत्तपदार्थकः। ब्राह्मणदृष्टस्य गौरत्वादेदर्शनाद् दृष्टोपदेशाद्वा पूर्वमब्राह्मणोऽयमित्यध्यवस्यति। ततः पश्चादुपलभते नाऽयं ब्राह्मण इति। ततोऽब्राह्मणोऽयमिति प्रयुङ्क्ते। अतश्च तद्दृष्टगुणदर्शनाद् दृष्टोपदेशाद्वा ब्राह्मत्वाद्यध्यवसायपूर्वकमेव नाऽयं ब्राह्मण इति ज्ञानम्। नह्ययं कालवर्णमापणे दृष्ट्वाऽध्यवस्यति ब्राह्मणोऽयमिति। यथास्थितं वस्तुतत्त्वं तस्य निर्ज्ञातं भवति" इति नञ् सूत्रभाष्यपर्य्यालोचनया कैयटोक्तार्थस्यैव साधुत्वं लभ्यते। तथापि तद्भाष्यस्याऽभेदप्रत्यक्षे क्वचित् योग्याऽनुपलब्धेर्हेतुत्वप्रदर्शनपरतयैवोपपत्तेर्नञ आरोपवाचकत्वे तदुपष्टम्भकत्वाऽभावात्। अन्यथाऽत्यन्ताऽसदृशे उक्तयुक्त्या तदारोपासम्भवेन तत्र नञर्थस्तदर्थकत्वासम्भवादघटः पट इत्यनापत्तेः। 'प्रतियोग्यभावाऽन्वयौ तुल्ययोगक्षेमौ' इति तान्त्रिकोक्तेर्नीलो घट इत्यादौ तादात्म्येन घटांऽशे नीलपदार्थभानान्नञ्समभिव्याहारे तादात्म्यसम्बन्धावच्छिन्ननीलाभावबोधस्य सर्वानुभवसिद्धस्य नञोऽभावार्थकत्वं विनाऽनुपपत्तेर्नेदं रजतमिदं रजतमिति वाक्यजन्यबोधयोस्तत्तदभावानवगाहितया परस्परप्रतिबध्यप्रतिबन्धकभावाऽनापत्तेश्च नञो भेदार्थकत्वमावश्यकम्।

नच नञो भेदार्थकत्वेऽब्राह्मणमानयेत्यादितो ब्राह्मणभिन्नलोष्टादेरपि बोधाऽऽपत्तिः। न चेष्टापत्तिः "न ह्यब्राह्मणमानयेत्युक्ते लोष्टमानीय कृतो भवति" इति भाष्यविरोधादिति वाच्यम्। घटत्वेन घटार्थकघटपदात् सन्निहितव्यक्तिबोधवत् प्रकरणादिना ब्राह्मणभिन्नमात्रार्थकाद् ब्राह्मणपदात् क्षत्रियादेरेव बोधसम्भवात्। तस्माद्घटो न पट इत्याद्यसमस्ते नञोभेद एव शक्तिर्भेदत्वस्याखण्डोपाधितया तस्य शक्यताऽवच्छेदकत्वे लाघवात्। समासघटकस्य तस्य तूत्तरपदस्य तद्भिन्ने लक्षणायां तात्पर्य्यग्राहकत्वमेव॥

नच "न ब्राह्मणैरेतैरुपद्रुतम्" इत्यादौ नञो भेदार्थकत्वे तत्प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिकत्वाऽनुपपत्तिः। सामानाधिकरण्याभावादिति वाच्यम्। प्रतियोग्यनुयोगिनोरभेदाऽन्वयबोधौपयिकाङ्क्षायां सत्यामेव नञा भेदबोधनेन तयोः समानविभक्तिकत्वस्य तदुपजीव्यत्वात्। एवञ्च नञा भेदबोधनं प्रतियोग्यनुयोगिवाचकपदयोः समानविभक्तिवाचकत्वनियामकम्। अत एव 'भूतले न घट' इत्यादौ न भेदबोधः।

दृश्यते च—"यजतिषु येयजामहं करोति नानुयाजेषु" इत्यत्र नञा पर्य्युदासबोधः। उक्तवाक्ये यजतिशब्दो यागस्वरूपवचनः। तथाचाऽनुयाजभिन्नेषु यागेषु "येयजामह" शब्दवन्मन्त्रं करोति = उच्चारयतीत्यर्थः। अत एवात्रानुयाजभिन्नेषु यजतिषु ये यजामहपदवन्मन्त्रप्रयोगरूपैकाऽर्थविधानादेकविधेयार्थकत्वरूपैकवाक्यत्वमुपपद्यते। अन्यथा यागेषु येयजामहपदवन्मन्त्रविधानमनुयाजेषु निषेधविधानमिति विधेयद्वयार्थकत्वरूपवाक्यभेदापत्तेर्येयजामहपदानुषङ्गकल्पने गौरवाच्चेति भावः॥

अन्येतु शास्त्रविहितप्रतिषिद्धत्वात्, षोडशिग्रहणाग्रहणवद्विकल्पापत्तेर्नाऽनुयाजेष्वित्यत्र नञः प्रतिषेधार्थकत्वम्। तथाहि—क्रियायाः कारकसाकाङ्क्षत्वाद् विनिगमनाविरहेण सकलकारकविशिष्टां प्रतियोगिभूतां भावनामुद्दिश्याऽभावविधिस्तत्र वाच्यः। एवञ्चोद्देश्यस्य प्रसिद्ध्यर्थं तत्प्राप्तिरपेक्षिता प्राप्तिसापेक्षत्वात् प्रतिषेधस्य। प्राप्तिश्च-क्वचिद्रागतो, यथा "न कलञ्जं भक्षयेत्" इति। तत्र कलञ्जभक्षणादे रागत इष्टसाधनत्वाऽवगत्या प्रसक्तायाः कलञ्जभक्षणभावनाया निषेधशास्त्रेण निवृत्तिविषयत्वेऽवगतेऽर्थात् तद्विषयकलञ्जभक्षणस्यानिष्टसाधनत्वाक्षेपात् ततो निवृत्तिः॥ प्रकृते तु 'येयजामहङ्करोति, इति शास्त्रादेव सा। एवञ्च निषेधस्य शास्त्रविषयत्वेन प्राबल्यवद् विधिशास्त्रस्याऽप्युपजीव्यत्वेन प्राबल्यान्निषेधेन विधेरत्यन्तंबाधायोगाद् विकल्प एव प्राप्नोति।

विकल्पे च 'व्रीहिभिर्जुहोति' 'यवैर्वा जुहोति' इत्यादौ प्रथमं व्रीह्यनुष्ठाने वेदस्य विपर्य्यासरूपमितिजनकत्वासम्भवाद्यवशास्त्रस्याप्राप्ताप्रामाण्यस्वीकारः, प्रतीताप्रामाण्यपरित्यागश्चेति दोषद्वयम्। प्रयोगान्तरे यवोपादाने यवशास्त्रस्य स्वीकृताप्रामाण्यपरित्यागः परित्यक्तप्रामाण्योपादानञ्चेति दोषद्वयमिति चत्वारो दोषाः। पुनस्तृ-

तीये प्रयोग व्रीह्युपादाने व्रीहिशास्त्रस्य स्वीकृताऽप्रामाण्यपरित्यागस्त्यक्तप्रामाण्यस्वीकारश्चेति दोषद्वयम्। चतुर्थे यवोपादाने व्रीहिशास्त्रस्यास्वीकृताप्रामाण्यस्वीकारः; स्वीकृतप्रामाण्यत्यागश्चेति दोषद्वयमिति चत्वारोऽन्येऽपीत्यष्टदोषविकल्पापत्त्या नञनुयाजपदाभ्यामनुयाजभेदो बोध्यते। सोऽयं पर्य्युदासः। अस्मिश्च पक्षे येयजामहो न कर्त्तव्यतया विधीयते। 'यजतिषु येयजामहङ्करोति' इत्यनेनैव तद्विधानात्। किन्तु सामान्यशास्त्रविहितयेयजामहमनूद्य तस्याऽनुयाजव्यतिरिक्तविषयता बोध्यते।

तथाच सामान्यशास्त्रस्य विशेषविधिसापेक्षत्वान्नानुयाजेष्वित्यनेनानुयाजव्यतिरिक्तविषयसमर्पणादनुयाजव्यतिरिक्तेषु येयजामहः कर्त्तव्यतया प्रतीयतेऽनुयाजेषु तु न कर्त्तव्यतया प्राप्तो, नाऽपि प्रतिषिद्धः स इति न विकल्पः। नच नञा निषेधबोधनेऽपि पदशास्त्रेणाऽऽहवनीयशास्त्रस्येव, नाऽनुयाजेष्विति विशेषशास्त्रेण 'यजतिषु येयजामहङ्करोति' इतिसामान्यशास्त्रस्य बाधान्न विकल्प इति वाच्यम्।

परस्परनिरपेक्षयोर्हि बाध्यबाधकभावः। पदशास्त्रेणाऽऽहवनीयशास्त्रस्यानपेक्षणात् स उचितः। निषेधशास्त्रस्य तु प्रतियोगिप्रसिद्ध्यर्थमस्त्यपेक्षा विध्यर्थस्य। "प्रसक्तं हि प्रतिषिध्यते" इति न्यायात्तेन तद्बाधाऽसम्भवात्; किन्तूक्तयुक्त्या विकल्प एव तथा च द्विरदृष्टकल्पनाप्रसङ्गोऽपि। विधेर्ह्येवं ज्ञायते। यदनुयाजेषु येयजामहकरणेन कश्चनोपकारो भवति; निषेधाच्च तदकरणादनृतवदनाकरणादिव दर्शपूर्णमासयोः। स चोपकारो दृष्टरूप एवेत्यतोऽपि विकल्पो न युक्त इत्याहुः॥

अत्र केचित्-निषेधशास्त्राऽनालोचनेन सामान्यशास्त्रालोचनमात्रेण भ्रमात्मकप्रतियोगिप्रसिद्ध्याऽभावबोधनसम्भवेन विकल्पाऽप्रसक्तेः। विशेषनिषेधे सामान्यविधेस्तदितरपरत्वस्य 'ब्राह्मणेभ्यो दधि दातव्यं, कौण्डिन्याय न दातव्यम्' इत्यादौ व्युत्पत्तिसिद्धत्वाच्च।

न च तत्रापि पर्य्युदास एव नञा बोध्यते। नञा पर्य्युदासबोधने विशेष्यविशेषणवाचकपदयोः समानविभक्तिकत्वस्येव तयोः समानवचनस्यापि तन्त्रत्वात्, तस्य प्रकृतेऽभावात्। अन्यथा 'न महतो राज्ञ' इत्यादाविव न महतां राज्ञः इत्यादावपि महद्भेदप्रतीत्यापत्तिः। 'एको न द्वौ' इतिवत् कथञ्चित् समर्थनेऽपि द्वितीयस्य दातव्यमित्यस्य नैरर्थक्यप्रसङ्गश्च 'ब्राह्मणेभ्यो दधि दातव्यं कौण्डिन्याय न' इत्यादौ। अत एव कौण्डिन्यभिन्नब्राह्मणोद्देश्यकदधिदानबोधसम्भवादित्याहुः।

विकल्पप्रसक्तिरूपदोषाऽभावेऽपि वाक्यभेदाऽऽपत्तेर्जागरूकतया समानविभक्तिकत्वादेस्तद्बोधनियामकस्य सत्त्वेन च नञः पर्य्युदासाऽर्थकत्वमेव, नाऽनुयाजेष्वित्यत्रोचितमिति तु परे।

प्रकृतमनुसरामः॥ *अन्यथेति*। लाघवाऽनादरेणाऽऽरोपितत्वस्य नञ् वाच्यत्वाऽभ्युपगमे इत्यर्थः। सादृश्यादेरित्यादिना पठिष्यमाणाऽल्पत्वादेः सङ्ग्रहः; अब्राह्मण इत्यादेर्ब्राह्मणसदृशः, पाकाभावोऽश्वभिन्नोऽल्पोदरा गवाश्वेतरा पशवोऽप्रशस्ता धर्म-

विरुद्ध इत्यादिक्रमेणाऽर्थः। ननु सादृश्यादेरवाच्यत्वे कथं ततस्तद्बोधोऽत आह—*तत्त्वति*। तत्पठनं त्वित्यर्थः॥ *अभिप्रेत्येति*। भेदप्रतियोगित्वप्रकारकब्राह्मणादिबोधाऽनन्तरभाविमादसबोधमभिप्रेत्येत्यर्थः॥

ब्राह्मणादिबोधस्य तत्तत्पदादेव सम्भवाद्भेदप्रतियोगित्वेन ब्राह्मणादिबोधनाय यद् ब्राह्मणादिपदोपादानं तत्सादृश्यादिना क्षत्रियादिबोधनार्थमित्यूहमूलकक्षत्रियादिबोधस्य भेदप्रतियोगी ब्राह्मण इत्यादिशक्याऽर्थबोधोत्तरमेव सम्भवादिति भावः। तद्बोधे शाब्दत्वप्रत्ययस्याऽनुभवाल्लक्षणयैव सादृश्यादिना ब्राह्मणादिबोध इति त्वन्ये।

अर्थ—ब्राह्मण का अभाव इत्यादि स्थलों में आरोप का बोध सभी के अनुभव से विरुद्ध होने से दूसरे पक्ष को कहते हैं।

अभावो वेत्यादि—नञ् का अर्थ अभाव है। भाष्य का ऐसा ही आशय है। अभाव विशेषण या विशेष्य है इसका निर्णय न्याय से समझना चाहिये। "तदर्थः" अर्थात् नञर्थ है। द्योत्य और वाच्य पक्ष में साधारण्य प्रदर्शन के लिये अर्थ कहा गया। नञ् सूत्र के भाष्य में लिखा है "निवृत्तपदार्थकः"=निवृत्त पदार्थ जिसका निवृत्तम् में "नपुंसके भावेक्तः" इस सूत्र से भाव में क्त प्रत्यय होता है अर्थात् अभाव अर्थ है।

निवृत्तपदार्थकः (इस भाष्योक्त पद का) निवृत्त हो गया है पदार्थ अर्थात् ब्राह्मणत्वादिधर्म जिसमें यह अर्थ है। अर्थात् सादृश्यादि सम्बन्ध के द्वारा आरोपित ब्राह्मणत्वादि धर्म वाला क्षत्रिय आदि, नञ् का अर्थ है यह कैयटोक्त युक्त नहीं है।

आरोपित ब्राह्मणत्व वाला क्षत्रिय आदि नञ् का वाच्य नहीं है। यदि ऐसा न मानें तो सादृश्य आदि भी वाच्य हो जायगा।

सादृश्य अभाव तदन्यत्व (तद्भिन्नत्व) अल्पत्व अप्राशस्त्य (अनुत्कृष्टत्व) और विरोध ये छह नञ् के अर्थों का निर्देश कर अब्राह्मणः—ब्राह्मण सदृश अपापम्—पाप का अभाव अनश्वः—घोड़ा से भिन्न अनुदरा कन्या—छोटे पेटवाली कन्या "अपशवो वा अन्ये गोऽश्वेभ्यः" गौ और अश्व से अन्य उत्तम पशु नहीं है। एवं अधर्मः=धर्म विरोधी इस प्रकार उनके उदाहरण दिये गये हैं। वस्तुतः ये नञर्थ नहीं हैं किन्तु फलित अर्थ का कथन है। विशेषरूप से अन्यत्र स्पष्ट है।

हिन्दी-भाष्य—शक्ति लक्षणां व्यञ्जना के भेद से वृत्ति तीन प्रकार की है। वैयाकरण मत में लक्षणा अप्रसिद्धा शक्ति का ही भेद है। अतः शक्ति निरूपण के बाद प्रसङ्गतः व्यञ्जना का निरूपण प्राप्त होने से व्यञ्जक (द्योतक) नञ् के अर्थ का निरूपण किया गया।

घटो नास्ति से घटाभाव "घटो न पटः" इस से घट के भेदरूप अभाव की प्रतीति सर्वानुभय सिद्ध होने के कारण "असर्वः" इत्यादि समासस्थल में भी सर्वाभाव के बोध होने पर सर्वनाम संज्ञा उपसर्जन होने से नहीं होगी। अभाव में सर्व पदार्थ विशेषण होने से उपसर्जन है। किसी दूसरे पदार्थ की विशेष्यता से निरूपित प्रकारता का प्रयोजक पद उपसर्जन होता है।

"असर्वः"—सर्व का अभाव इस अर्थ के मानने पर अभाव विशेष्य है उसमें सर्व शब्दार्थ विशेषण (प्रकार) है। विशेष्य में विशेष्यता प्रकार (विशेषण) में प्रकारता रहती है। विशेष्यता प्रकारता में परस्पर निरूप्य निरूपक भाव माना जाता है। इस

प्रकार अभाव की विशेष्यता से निरूपित सर्वशब्दार्थ की प्रकारता है। उस प्रकारता का प्रयोजक सर्व शब्द है। अतः उपसर्जन हो जाता है यह भाव है। अतः नञ् आरोपितत्व अर्थ का द्योतक है। असर्वः इस से आरोपित सर्व अर्थ के बोध होने से सर्थपदार्थ हो विशेष्य है अतः [1]उपसर्जनत्व की शङ्का नहीं है।

शङ्का—नञ् का भेदरूप अभाव अर्थ मानने पर भी उपसर्जनत्व शङ्का नहीं हो सकती। "असर्वः" इस से भेदप्रतियोगी सर्व ऐसा बोध मानने से सर्व की प्रधानता = विशेष्यता होने से प्रकारता प्रयोजकत्व सर्व पद में नहीं है।

समाधान—"घटो नास्ति" इत्यादि स्थल में अभाव की ही विशेष्यता और उसमें प्रतियोगिरूप घट आदि की विशेषणता देखी गई है। उसके अनुसार प्रतियोगिभूत सर्व भेद में विशेषण ही होगा।

शङ्का—"अघटः पट" इत्यादि स्थल में घट से भिन्न पट इस प्रकार का बोध देखने से समासस्थल में भी नञ् का अभाव (भेद) अर्थ देखा गया है। उसके अनुसार यहां भी अभाव अर्थ होना चाहिये।

समाधान—उक्तस्थल में, घटभिन्न[2] पट ऐसा बोध आर्थ अर्थात् फलित है। वस्तुतः आरोपित घटत्ववान् पट ऐसा ही शब्द से बोध होता है। घट से भिन्न पदार्थ में ही घटत्व का आरोप होने से घट भिन्न पट यह फलितार्थ बोध हुआ।

आरोपितत्व अर्थात् आरोपविषयत्व नञये शक्यतावच्छेदक; आरोपित नञर्थ मानने पर होगा। आरोप को नञर्थ मानने पर आरोपत्व शक्यतावच्छेदक होने से लाघव है। आरोप तद्भाववान् में तत्प्रकारक ज्ञान है। विषयता को सम्बन्ध मानते हैं। विषयता सम्बन्ध से उक्त ज्ञान विषय में हैं। अतः विषयता सम्बन्ध से आरोप विशिष्ट जो ब्राह्मणत्व उसका आश्रय अब्राह्मण इस का अर्थ होता है। आरोप के वाच्य अथवा द्योत्य होने में कोई अन्तर नहीं है। सर्वथा आरोप विशेषण होकर ही भासित होता है। निपात द्योतक माना गया है इस अभिप्राय से आरोप को नञ् का द्योत्य कहा गया है।

जिस प्रकार "घटो नास्ति" इस में नञ् से आरोप अर्थ की प्रतीति नहीं होती है उसी प्रकार अब्राह्मणः इत्यादि स्थल में भी आरोप अर्थ की प्रतीति नहीं होने से नञ् का आरोप अर्थ मानना अयुक्त है। किन्तु अभाव अर्थ मानना युक्त है।

"नञ्" सूत्र के महाभाष्य में "निवृत्त पदार्थकः" नञ् को कहा गया है। इसकी निवृत्तम् अभावः पदार्थो यस्य (नञ् पदस्य) इस व्युत्पत्ति से नञ् का अभाव अर्थ स्पष्ट प्रतीत होता है। निवृत्तम् इसमें भाव अर्थात् धात्वर्थ निवर्तन व्यापार में क्त प्रत्यय होने से अभावार्थक निवृत्त पद है।

कैयट ने "निवृत्तपदार्थकः" इस की व्युत्पत्ति निवृत्तः पदार्थो मुख्यं ब्राह्मणत्वादि यस्य (नञ् पदस्य) ऐसी की है। इसके अनुसार सादृश्य से आरोपित ब्राह्मणत्व वाला क्षत्रि

१. इतर पदार्थनिष्ठविशेष्यतानिरूपित प्रकारताप्रयोजकत्वम् उपसर्जनत्वम्।

२. "घटो नास्ति" इस से घट की सत्ता का अभाव ऐसा बोध वैयाकरण मानते हैं।

यादि नञ् का अर्थ होगा। यह ठीक नहीं है। क्योंकि आरोपित ब्राह्मणत्ववाला क्षत्रियादि नञ् का वाच्य नहीं हो सकता।

नञ् का अभाव अर्थ होने में लोक प्रसिद्धि एवं अभावत्व के शक्यतावच्छेदक होने में लाघव भी सहायक है।

यद्यपि "कः पुनरसौ नञ्पदार्थः? निवृत्तपदार्थकः ब्राह्मणदृष्टस्य गौरत्वादेर्दर्शनात् दुष्टोपदेशाद्वा पूर्वंब्राह्मणोऽयमित्यध्यवस्यति" इत्यादि नञ् सूत्र के भाष्य पर्यालोचन से ऐसा प्रतीत होता है कि प्रथम में शुद्ध आचरण एवं गौरवर्ण आदि के देखने से यह ब्राह्मण है ऐसा निश्चय करने के वाद किसी प्रामाणिक व्यक्ति के 'यह ब्राह्मण नहीं है" ऐसा कहने पर अब्राह्मण का निश्चय होने से अब्राह्मण का प्रयोग करना है। ब्राह्मण ज्ञान होने के वाद अब्राह्मण का ज्ञान होने के कारण ऐसा निश्चित होता है कि निवृत्तः पदार्थो यस्मिन् अर्थात् पहले जिसमें ब्राह्मणत्वादि पदार्थ ज्ञात हुआ था बाद में वह निवृत्त हो गया है जिस क्षत्रियादि में, इस प्रकार की व्युत्पत्ति से लभ्य आरोप ही नञर्थ भाष्यसम्मत प्रतीत होता है। तथापि योग्यानुपलब्धि को अभावप्रत्यक्ष में कारण माना गया है। प्रत्यक्ष योग्य प्रतियोगी के उपलम्भाभाव को अभाव के प्रत्यक्ष में कारण माना जाता है यह भाव है। प्रत्यक्ष की सामग्री रहने पर यदि घट होता तो घट की उपलब्धि होती। उपलब्धि न होने से योग्य अनुपलब्धि को अभाव प्रत्यक्ष में कारण नैयायिक मानते हैं। अनुपलब्धि सामान्य से अभाव प्रत्यक्ष मानने पर अन्धकार में स्थित घट के अनुपलम्भ से घटाभाव का प्रत्यक्ष होने लगेगा, अतः अनुपलब्धि में योग्यता अपेक्षित है। [1]योग्यता प्रतियोगी के अस्तित्व प्रसञ्जन से प्रसक्त (प्राप्त) उपलब्धिरूप प्रतियोगी है जिस अभाव का तत्स्वरूपा है।

यदि घटः स्याद् उपलभ्येत। अन्धकार में घट के रहने पर भी ऐसा नहीं कह सकते कि यदि होता तो उसका ज्ञान होता। अतः योग्यानुपलब्धि वहां नहीं है। तादृश योग्यानुपलब्धि अभाव प्रत्यक्ष में कारण है। अतः अभाव प्रत्यक्ष के लिये प्रतियोगी की प्रसक्ति का प्रदर्शन अपेक्षित होने से अब्राह्मण कहने के पहले ब्राह्मणत्व रूप प्रतियोगी का आरोप प्रदर्शन है। वस्तुतः नञर्थ निर्णय में उस भाष्य का तात्पर्य नहीं है। ऐसा न मानने पर अत्यन्त असदृश में घटत्व का आरोप न होने से "अघटः पटः" ऐसा प्रयोग नहीं होगा।

शङ्का—नञ् का आरोप अर्थ नहीं होने पर अब्राह्मणमानय=अब्राह्मण को लाओ यहाँ ब्राह्मण से भिन्न जिस प्रकार क्षत्रियादि का आनयन होता है उसी प्रकार अब्राह्मण (ब्राह्मणभिन्न) लोहा पत्थल का भी आनयन होना चाहिये। यदि कहें कि उसका भी आनयन इष्ट है तो "न हि अब्राह्मणमानय इत्युक्ते लोष्ठमानीय कृती भवति" इस भाष्य के साथ विरोध होगा।

समाधानः—प्रकरण[2] आदि को देखते हुए अब्राह्मण पद से क्षत्रियादि वर्णविशेष की

---

१. योग्यता—प्रतियोगिसत्त्व-प्रसञ्जन-प्रसञ्जित-प्रतियोगिकत्वरूपा।

२. संयोग के समान विप्रयोग भी अर्थ विशेष का निर्णायक माना गया है। "सशङ्खचक्रो हरिः" इसमें शङ्ख चक्र के द्वारा भगवान् विष्णु का बोधक हरि पद

ही प्रतीति होती है। जिस प्रकार घटादि पद में यावद् घटादि के बोधन सामर्थ्य रहने पर भी जिस किसी घटादि व्यक्ति का ही बोध होता है सभी व्यक्ति का बोध नहीं होता उसी प्रकार अब्राह्मण शब्द से लोष्ठ आदि के बोधन सामर्थ्य रहने पर भी क्षत्रियादि व्यक्ति विशेष का ही बोध होता है। इस अभिप्राय से भाष्यकार ने "न हि लोष्ठमानीय कृती भवति" यह कहा है। 'अब्राह्मणो देवदत्तः" इत्यादि स्थल में सामानाधिकरण्य की प्रतीति नञ् की आश्रय में लक्षणा मानकर उपपन्न होगी। लक्षणा के बिना अभावरूप देवदत्त के न होने से सामानाधिकरण्य दुर्घट है। आरोपित-ब्राह्मण्य वाला क्षत्रिय को नञ्वाच्य मानने पर जो गौरव होता है उसका तिरस्कार न करें तो अब्राह्मण इत्यादि स्थल में अनुभूयमान सादृश्य आदि भी वाच्य हो जायगा। उसके नञ्वाच्य न मानने में कोई कारण नहीं है।

यदि ऐसा कहें कि—"तत्सादृश्यमभावश्च" इत्यादि कारिका के अनुसार नञ् के छह अर्थ माने गये हैं। उसमें सादृश्य का नाम भी है। तो ऐसा नहीं कहना चाहिये। उक्त-कारिका से प्रतिपादित छह अर्थ नञ् का वाच्य नहीं है किन्तु ब्राह्मणादि का बोध ब्राह्म-णादि पद से होने पर भी भेद प्रतियोगित्वरूप से बोध के लिये अब्राह्मण पद का प्रयोग है। सादृश्य से क्षत्रियादि के बोधनार्थ उसका प्रयोग है। इस प्रकार का ऊहापोह शक्यार्थ बोध के बाद ही होने से यह मानस बोध है शब्दार्थ नहीं है। यह भाव है।

विशेषणमिति प्रतियोगिनीति शेषः। तथाचासर्वपदे सर्वनामसंज्ञा। "अनेकमन्यपदार्थे," "सेव्यतेऽनेकया सन्नतापाङ्गया" इत्यादावेकशब्दार्थ-प्राधान्यादेकवचननियमः। 'अब्राह्मणः' इत्यादावुत्तरपदार्थप्राधान्यात् तत्पुरुषत्वम्। 'अत्वं भवसि' 'अनहं भवामि' इत्यादौ पुरुषवचनादिव्यवस्था चोपपद्यते।

अन्यथा त्वदभावो मदभाव इतिवदभावांशे युष्मदस्मदोरन्वयेन युष्म-त्सामानाधिकरण्यस्य तिङ्क्ष्वसत्त्वात् पुरुषव्यवस्था न स्यात्। अस्मिन्मते च भेदप्रतियोगित्वदभिन्नाश्रयिका भवनक्रियेत्यन्वयात् सामानाधिकरण्यं नानुपपन्नमिति भावः।

*विशेष्यो वेति*। प्रतियोगिनीति शेषः। अयम्भावः-गौणत्वेऽपि नञ्समासे, "एतत्तदोः सुलोपोऽकोरनञ्समासे हलि" (पा० सू० ३६।१।३२) इति ज्ञापकात् सर्वनामसंज्ञा नानुपपन्ना। 'असः शिवः' इत्यत्र सुलोपवार-णायाऽनञ्समास इति हि विशेषणम्। न च तत्र तच्छब्दस्य सर्वनामताऽ-

---

है ऐसा निर्णय किया जाता है। उसी प्रकार "अशङ्खचक्रो हरिः" इसमें शङ्ख चक्र के राहित्य से भी शङ्ख चक्र योग्यता वाले भगवान् विष्णु का ग्रहण होता है। शङ्ख चक्र रहित बानर का बोध नहीं होता। इसी प्रकार ब्राह्मण भिन्न की योग्यता वाले का अब्राह्मण से ग्रहण होगा ढेला पत्थल का नहीं उसमें ब्राह्मणत्व की योग्यता नहीं है यह तात्पर्य है।

स्ति। गौणत्वात्। अक्रोरित्यकच्सहितव्यावृत्त्या सर्वनाम्नोरेव तत्र ग्रहणलाभात्। तथा चानञसमास इति ज्ञापकं सुवचम्।

"अनेकमन्यपदार्थे" इत्यादावेकवचनं विशेष्यानुरोधात्। "सुवामन्त्रिते पराङ्गवत् स्वरे" (पा० सू० २।१।२) इत्यतोऽनुवर्तमानं सुब्ग्रहणं विशेष्यमेकवचनान्तमेव। किञ्चाऽनेकशब्दाद् द्विवचनोपादाने द्वयोर्बहुव्रीहिर्न सिद्ध्येदित्युभयसंग्रहार्थैकवचनं जात्यभिप्रायमौत्सर्गिकं वा।

"सेव्यतेऽनेकया" इत्यत्रापि योषयेति विशेष्यानुरोधात् प्रत्येकं सेवनान्वयबोधनाय चैकवचनं, न तूत्तरपदार्थप्राधान्यप्रयुक्तम्। अत एव "पतन्त्यनेके जलधेरिवोर्मयः" इत्यादिकमपि सुपपादम्। अत्वं भवसीत्यादेस्तद्भिन्ने लक्षणा। नञ् द्योतकः। तथा च भिन्नेन युष्मदर्थेन तिङः सामानाधिकरण्यात् पुरुषव्यवस्था। त्वद्भिन्नाश्रयिका भवनक्रियेति शाब्दबोधः।

एवं 'न त्वं पचसि' इत्यत्र त्वदभिन्नाश्रयक-पाकानुकूलभावनाऽभावः। घटो नास्तीत्यत्र घटाभिन्नाश्रयकास्तित्वाभाव इति रीत्या बोधः। असमस्तनञः क्रियायामेवान्वयबोधात्। स चाभावोऽत्यन्ताभावत्वान्योन्याभावत्वादिरूपेण शक्यस्तत्तद्रूपेण बोधादित्याद्यन्यत्र विस्तरः॥ ४१॥

इति वैयाकरणभूषणसारे नञर्थनिर्णयः॥ ७॥



विशेषणस्य विशेष्यस्याकाङ्क्षत्वादाह—*प्रतियोगिनीति*। एवं चाऽब्राह्मण इत्यादेः प्रतियोगितया भेदविशिष्टो ब्राह्मण इत्याद्याकारको बोध इति भावः। भेदस्य प्रतियोगितयोत्तरपदार्थान्वये उपपत्तिमाह—*तथा चेति*।

सर्वनामता चेत्यादि—प्रथमान्तचतुष्टयस्योपपद्यते इत्यनेनाऽन्वयः। *सर्वनामता*–सर्वनामसंज्ञा। तदन्तविधिनेति शेषः। अन्यथा संज्ञोपसर्जनानां सर्वादित्वाभावे तदर्थस्य नञर्थविशेषणत्वे तत्संज्ञानुपपत्तिरिति भावः। अनेकमित्यादावेकभिन्नमिति बोधे स्वीक्रियमाणे एकप्रतियोगिकभेदवति द्वित्वस्य बहुत्वस्य वाऽवश्यम्भावे ततस्तद्बोधकद्विवचनबहुवचनयोरापत्तिरेकत्वार्थस्य तत्र बाधात्तद्बोधकैकवचनस्यानुपपत्तिश्चेति भावः॥

*तत्पुरुषत्वमिति*। भेदविशेषणत्वे तदनुपपत्तिः स्यात्। *पुरुषेति*। तिवादित्रिकसङ्केतिततत्पुरुषेत्यर्थः। *वचनेति*। एकवचनत्वादिरूपेत्यर्थः। "अयुवां भवथ" इत्यादौ युष्मदस्मदर्थाभावविशेष्यकबोधे अभावे द्वित्वाद्यर्थस्य बाधाद् द्विवचनाद्यनुपपत्तिः। भावनाऽऽन्वयिन्येव सङ्ख्याऽन्वय इति त्वदभ्युपगमेनाऽन्याऽर्थगतसङ्ख्यामादाय द्विवचनाद्युपपादनस्य कर्तुमशक्यत्वादिति भावः।

*अन्यथेति* । नञर्थाभावस्योत्तरपदार्थाऽविशेषणत्वे तद्विशेष्यत्व इति यावद् । *पुरुव्यवस्थेति* । "युष्मद्युपपद" (पा० सू० ४।१।१०५) इति सूत्रद्वयाऽविषयतया, "शेषे प्रथमः" ( पा० सू० ४।१।१०८ ) इत्यस्य प्रवृत्त्या प्रथमपुरुषस्यैवापत्तेरित्यर्थः । *नानुपपन्नमिति* । तथा चोक्तव्यवस्था सुलभेति भावः । ननु नञर्थभेदस्य प्रतियोगितयोत्तरपदार्थांऽन्वये अघटमानयेत्यत्र स्वभेदप्रतियोगित्वस्य घटे सत्त्वात्तद्बोधानन्तरं घटानयनस्याऽऽव्यापत्तिरत आह--मूले--*विशेष्यो वेति*। विशेषणाकाङ्क्षायामाह सारे--*प्रतियोगिनीति* । उत्तरपदार्थरूपप्रतियोगिनीत्यर्थः ।

निरूपितत्वं सप्तम्यर्थः । उत्तरपदार्थरूपप्रतियोगिनिष्ठविशेषणतानिरूपितविशेष्यताश्रयो नञर्थं इति यावत् । ननु तर्हुत्तरदार्थाऽप्राधान्ये पूर्वोक्तदूषणगणो दुष्परिहरोऽत आह-*अयम्भाव इति* । *गौणत्वेऽपीति* । नञ्समासघटकैतदाद्यर्थस्य नञर्थविशेषणत्वेऽपीत्यर्थः । *ज्ञापकादिति* । तत्सूत्रस्थान्नञ्समासग्रहणाज्ज्ञापकादित्यर्थः । ज्ञापकतामेव प्रपञ्चयति-*असः शिव* इति ।

"एतत्तदोः" ( पा० सू० ३।१।१३२ ) इत्यनेन परस्परसाहचर्य्यात् सर्वनामैतत्तद्भ्यां परस्य सोर्हलि लोपो विधीयते । नञ्तत्पुरुषाऽन्तर्गततत्तदोरुपसर्जनतया सर्वनामत्वाभावानतिप्रसङ्गे व्यर्थं सद् नञ्समासग्रहणं नञ्समासे गुणीभूतार्थस्यापि सर्वादेः सर्वनामताज्ञापनेन चरितार्थमिति भावः । साहचर्य्यज्ञापकत्वस्यासार्वत्रिकत्वं सूचयन् सूत्रे सर्वनाम्नोरेव ग्रहणे मानान्तरमाह— *अकोरिति* ।

असर्वनाम्नः सर्वनामविहिताकजसम्भवेन तत्पर्युदासात् सर्वनाम्नोरेव तयोर्ग्रहणं निश्चीयत इत्यर्थः । एतत्कल्पे एतत्तदुत्तरस्य सोर्हलि लोप इति सूत्राऽर्थः । अर्थद्वारकसम्बन्धाश्रयणेन व्याख्यानं तु पूर्वकल्पाभिप्रायेणोत्तरपदलक्षणाभिप्रायेण वेति भावः । *विशेष्यानुरोधादिति* । असति विशेपानुशासने विशेषणवाचकपदस्य विशेष्यवाचकपदसमानवचनकत्वनियमादिति भावः ।

ननु 'विशेषणस्य विशेष्यसङ्ख्याविरुद्धसंख्यावत्त्वेऽपि विशेषणवाचकपदात्तद्वचनमित्यत्र प्रमाणाभावोऽत आह—*किञ्चेति* । नन्वनेकशब्दोपादानादेव द्वयोर्बहूनां वा तत्सिद्धेर्द्विवचनबहुवचनयोरपि समयपरिपालनार्थं त्वसम्भवादेकवचनोपादानं व्यर्थमेवेत्यत आह—*औत्सर्गिकं वेति* । "एकवचनमुत्सर्गतः करिष्यते" इति, "न केवला" इतिनियममूलकवचनविहितमित्यर्थः । सति तात्पर्य्ये क्वचित् सार्थकमप्येकवचनमिष्यत एवेत्याह—*प्रत्येकमिति* । एकभिन्नत्वेनोपस्थितासु योषासु प्रत्येकं सेवनाऽन्वयबोधायेत्यर्थः । उपसंहरति—*न त्विति* । *अत एवेति* । अनेकशब्दस्यैकभिन्नाऽर्थकत्वादेवेत्यर्थः ।

*सूपपादमिति* । भेदप्रतियोग्येकाऽर्थकत्वे तु तद् दुरुपपादं स्याद् । एकशेषेण समर्थनं त्वगतिकगतिरिति भावः । भाष्योदाहृते "नैकस्तिष्ठति" इति प्रयोगे जन

इत्यध्याहार्यम् । प्रत्येकं स्थित्यन्वयबोधार्थं च तत्रैकवचनम् । अनेको जना इति त्वसाध्वेव । उत्तरपदार्थप्राधान्यादिव्यपदेशस्तु प्रायिक इत्यद्यपि बोध्यम् । अत्वं भवसीत्यादिनाऽनहम्भवामीत्यादि गृह्यते । युष्मद् इत्यस्मदोऽप्युपलक्षणम् । एवं त्वद्भिन्न इत्यत्रापि लक्षणेति तु नैयायिकाद्यनुसारेण । स्वमते तदनभ्युपगमात् । अत्वम्भवसीत्यादावारोपादिबोधस्य सर्वानुभवविरुद्धत्वान्नञ्समासे सर्वत्रोत्तरपदस्य स्वाऽर्थभिन्नलाक्षणिकत्वमेव युक्तमिति भावः ॥

प्रसज्यप्रतिषेधार्थकनञो व्यवस्थामाह—*एवं न त्वं पचसीत्यादि* ॥ नञर्थे युष्मदर्थान्वये तु प्रकृते पुरुषव्यवस्था न सिद्धयेदितिसूचयितुं पचसीति मध्यमपुरुषनिर्देशः । अधिकं त्वादावेवोक्तम् । इदमुपलक्षणं 'घटौ न स्त' इत्यादौ द्विवचनाद्यनुपपत्तेः । क्रियाप्रतियोगिकाभावविशेष्यकबोधे हेतुमाह—*असमस्तेति* ॥ व्याख्यानात् नञः=तदर्थस्य प्रसज्यप्रतिषेधस्य तादृशनञर्थाऽभावनिष्ठविशेष्यतानिरूपितप्रकारतासम्बन्धेन बोधो, धातुजन्योपस्थितेर्भावनात्वावच्छिन्नविशेष्यतासम्बन्धेन हेतुत्वस्य पूर्वमुक्तत्वादिति भावः ।

नन्वभावस्य केन रूपेण शक्यता । न तावदभावत्वेन । चैत्रो न पचतीत्यादावपि भेदबोधापत्तेः । प्रसज्यप्रतिषेधत्वेन शक्यत्वेऽपि स एव दोषः । भेदस्याऽपि योग्याऽनुपलब्धिजन्यप्रत्यक्षविषयत्वात् । तदनुपस्थितावपि नञोऽभावबोधाच्चेत्यत आह—*स चेति* ॥ अभावश्चेत्यर्थः ॥ तथा च नञोऽन्योन्याभावत्वेनात्यन्ताभावत्वेन वाऽभावे शक्तिकल्पनान्न दोषः ।

*अत्यन्ताभावत्वेति* । अन्तं = स्वप्रतियोगिनिष्ठाभावप्रतियोगित्वमतिक्रान्तो व्यभिचरितोऽत्यन्तः । सचासावभावश्चेति विग्रहः । तस्य भावस्तत्त्वम् । स्वप्रतियोगिनिष्ठस्वदृशाभावप्रतियोगित्वव्यभिचारीतियावत् । "अन्त्यो जघन्यं चरमम्" इत्यमरेणाऽन्त्यशब्दस्य जघन्ये वृत्तिबोधनाज्जघन्यत्वं चोक्तार्थस्य जघन्यवृत्तिबोध्यत्वात् । घटात्यन्ताभावस्य स्वप्रतियोगिनिष्ठात्यन्ताभावप्रतियोगित्वाभाववति घटवृत्तिधर्मे सत्त्वात्त्वं तत्राऽक्षतम् । घटान्योन्याभावस्य तु स्वप्रतियोनिष्ठान्योन्याभावप्रतियोगीत्वव्यापकत्वात्तद्व्यावृत्तिः । व्युत्पत्तिप्रदर्शनं चेदम् । लक्षणं त्वत्यन्ताभावस्य तादात्म्येतरसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वम् ॥ *अन्योन्याभावेति* ॥ अन्योन्यस्मिंस्तादात्म्येनाभावोऽभवनमिति व्युत्पत्त्या तादात्म्यसम्बन्धावच्छिन्न प्रतियोगिताकाभावत्वमन्योन्याभावत्वम् । ताभ्यां शक्य इत्यर्थः ।

वस्तुतस्तु अत्यन्ताभावस्याभावत्वेनैव शक्यता, न तूक्तरूपेण, गौरवात् । तेन रूपेण बोधस्याननुभवाच्च । अत एव "तत्सादृश्यमभावश्च" इत्यत्राभावत्वेनैवात्यन्ताभावोपादानम् ।

नच नञः संयोगादिसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वादिनाऽऽभावे शक्त्य-

नभ्युपगमे 'भूतले न घट' इति वाक्यजबोधस्य संयोगसम्बन्धेन भूतलविशेष्यकघट-विशिष्टबुद्धेर्विरोधित्वानापत्तिस्तत्संसर्गावच्छिन्नतद्विशिष्टबुद्धौ तत्संसर्गावच्छिन्नप्रति-योगिताकत्वावगाहिन्या एव तदभावबुद्धेः प्रतिबन्धकत्वादिति वाच्यम् ।

निरुक्ताभावत्वेन शक्तावपि संयोगादीनां लक्षणे तादात्म्येतरसम्बन्धत्वेनानुगत-रूपेणैव निवेशनीयतया नञ्पदशक्त्याऽप्यभावे विशिष्य संयोगाऽवच्छिन्नप्रतियोगिता-कत्वभानासम्भवात् प्रतिबन्धकत्वाऽनुपपत्तितादवस्थ्यात् । तादृशविशिष्टबुद्धिविरो-धित्वाऽनुरोधेनाकाङ्क्षाबलादेव तादृशप्रतियोगिताकत्वस्य विशिष्यप्रतियोग्यभावयोः सम्बन्धविधया भानस्योपगन्तव्यत्वात् ।

नन्वन्योन्याभावसाधारणाभावत्वस्य नञ्पदप्रवृत्तिनिमित्तत्वेऽन्योन्याभावे पृथ-क्शक्तिकल्पनानर्थक्यम् । नचाऽन्योन्याभावत्वप्रकारकबोधानुरोधात्तस्यापि शक्यतावच्छेदकत्वकल्पनमावश्यकम् । अन्यथा तादात्म्यसम्बन्धेन प्रतियोगिप्रकारकोऽयं घट इति बोधे, नाऽयं घट इति वाक्यजबुद्धेरप्रतिबन्धकत्वापत्तेः । अन्योन्याभावत्वाव-गाह्यभावबुद्धेरेव तादृशबुद्धिविरोधित्वात् । घटाभाववानिति बुद्धेरपि तद्विरोधित्वा-पत्तेश्चेति वाच्यम् ।

तत्राभावत्वस्य नञ्पदशक्त्या तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताकत्वस्य समान-विभक्तिकप्रतियोग्यनुयोगिवाचकपदयोः समभिव्याहाररूपाकाङ्क्षाबलेन लाभेन तादा-त्म्यसम्बन्धावच्छिन्नप्रतियोगिताकाभावत्वस्याऽन्योन्याभावत्वावगाहितयैव तत्तद्बुद्धेः प्रतिबन्धकत्वोपपत्तौ तेन रूपेण शक्तिकल्पनस्याऽकिञ्चित्करत्वात् ।

न च नास्त्येव तदवच्छिन्ने शक्तिः पृथगुपादानं त्वभावसामान्यस्य नञर्थत्वा-लाभायैवेति वाच्यम् । तथा सति "नञर्थाः षट् प्रकीर्त्तिताः" इत्यस्यासङ्गत्यापत्ते-रिति चेत् ? स्यादेवम् । यद्यन्योन्याभावत्वं तादात्म्यसम्बन्धावच्छिन्नप्रतियोगिताका-भावत्वरूपं निर्वक्तुं शक्येत, तदेव न, संयोगितादात्म्यस्य संयोगरूपतया संयोगात्यन्ता-भावेऽतिव्याप्तिः । सम्बन्धविधया तादात्म्यनिष्ठावच्छेदकतानिवेशेऽपि संयोगसंबन्धाव-च्छिन्नसंयोगधर्मावच्छिन्नप्रतियोगिताकाऽत्यन्ताभावातिव्याप्तितादवस्थ्यात् , किन्त्वनु-योगिताविशेष एव । एवञ्च तादात्म्यस्याप्यन्योन्याभावप्रतियोगितावच्छेदकसम्बन्धत्व-मपि प्रामाणिकम् । इह संयोगेन घटो नास्तीतिवदयं तादात्म्येन न घट इत्यादि-प्रत्ययात् । एवञ्च तादृशानुयोगिताविशेषप्रकारताकत्वमेवाभेदसम्बन्धेन प्रतियोगिप्रका-रकधीविरोधित्वे तन्त्रमिति तदनुरोधेन नञः पृथगन्योन्याऽभावे शक्तिरावश्यिकेति ।

ननु नञोऽविशेषेणात्यन्ताभावबोधकत्वे 'भूतले न घट' इत्यादिवाक्यजबोधेऽत्य-न्ताभावभानापत्तिः । न च नञ्पदजन्यात्यन्ताभावबोधेऽनुयोगिवाचकपदोत्तरसप्तमी-समभिव्याहारज्ञानस्य हेतुत्वान्नोक्तापत्तिरिति वाच्यम् । 'चैत्रो न पचति' इत्यादिवा-क्यजभावनात्यन्ताभावबोधे व्यभिचारेणोक्तकार्यकरणभावस्यैवासम्भवादिति चेत् ?

अत्र वदन्ति—यत्र नञ्समभिव्याहारे प्रतियोग्यनुयोगिनोराधाराधेयभावसंसर्गबोधौपयिकाकाङ्क्षा; तत्रैव नञोऽत्यन्ताभावार्थकत्वोपगमेन नोक्तस्थले तद्बोधापत्तिः। तत्र नञ्समभिव्याहारे तादृशबोधौपयिकाकाङ्क्षाविरहात्। 'न पचति चैत्रो' 'नेदं चैत्रस्य' इत्यादौ नञ्समभिव्याहारे तिङर्थस्य कृत्यादेः प्रथमान्तपदोपस्थापितचैत्रादौ षष्ठ्यर्थस्वत्वस्येदंपदार्थे आधाराधेयभावबोधौपयिकप्रथमान्तपदादिसमभिव्याहाररूपाकाङ्क्षायाः सत्त्वेन तत्र नञा कृत्याद्यभावबोधनसम्भवात्।

एवञ्च यत्र प्रतियोग्यनुयोगिनोराधाराधेयभावः सप्तमीं बिनाऽनुपपन्नंस्तत्राऽनुयोगिवाचकपदात् सप्तम्यपेक्ष्यते। यथा 'भूतले न घट' इत्यादौ। तदुक्तं दीधितिकृता- 'वस्तुतो न पचति चैत्रो नेदं मैत्रस्येत्यादौ विभक्त्यर्थकृतिसम्बन्धादेरभावस्य बोधने नञा सप्तमी नापेक्ष्यते, अपेक्ष्यते च प्रातिपदिकार्थस्यैति'' इति।

न च 'चैत्रो न पचति' इत्यादौ नञाख्यातार्थभावनाभावबोधने, चैत्रो न पचतश्चैत्रा न पचन्तीत्यादौ द्विवचनाद्यनुपपत्तिः। भवन्मते भावनाऽन्वयिनि संख्यान्वयनियमेन भावनान्वयिन्यभावे द्वित्वाद्यभावेन द्विवचनादिना तस्य बोधयितुमशक्यत्वात्। वैयाकरणमते तु तत्र धात्वर्थक्रियाभावस्यैव नञा बोधनेन द्वित्वादिविशिष्टचैत्रं कर्तृकक्रियाभाव इति बोधाऽभ्युपगमेन तादृशानुपपत्त्यभावादिति वाच्यम्।

नञ्समभिव्याहारे भावनाभावान्वयिनि तिङर्थसङ्ख्यान्वय इति व्युत्पत्त्यन्तराभ्युपगमेन द्विवचनाद्युपपत्तेः। त्वन्मन्तेऽपि यच्चैत्रकर्तृकः पाकोऽप्रसिद्धस्तत्र चैत्रो न पचतीति प्रयोगानुपपत्त्या क्रियाप्रतियोगिकाभावस्य नञा प्रत्याययितुमशक्यत्वाच्च।

न च तत्र नञा भेद एव बोध्यते। प्रतियोगितया चैत्रादिविशिष्टस्य तस्याऽऽख्यातार्थकर्त्तर्य्येवाऽन्वयान्न तादृशप्रयोगानुपपत्तिरिति वाच्यम्। तथा सति प्रतियोगितासम्बन्धावच्छिन्नधात्वर्थप्रकारकबोधे असमस्तनञ्पदजन्योपस्थितेर्हेतुत्वस्यात्रैव व्यभिचारेण स्वसिद्धान्तव्याघातात्। नञ्समभिव्याहारे आख्यातार्थभावनाऽन्वय्यर्थकत्ववत् तत्समभिव्याहारे भावनान्वय्यर्थकत्वरूपसामानाधिकरण्यस्य युष्मदादौ सत्त्वान्न "न त्वं पचसी"त्यादौ मध्यमादिपुरुषानुपपत्तिः।

यद्वा—नञ्समभिव्याहारे स्वबोधकर्तृत्वबोधकत्वम्, तत्समभिव्याहारे तु भूतपूर्वं तदादाय पुरुषोपपत्तिरित्याहुः।

इदं त्ववधेयम्—नञ्समभिव्याहारे प्रतियोग्यनुयोगिनोऽर्थः सम्बन्धो भासते तत्समभिव्याहारे तत्सम्बन्धावच्छिन्नतदभावस्तदनुयोगिनि भासत इति व्युत्पत्तेर्न "भूतले न घटः" इत्यादावन्योन्याभावबोधस्तन्नियामकं त्वादावेवोक्तम्। परन्तु घटत्वादिविशिष्टोपस्थापकपदसमभिव्याहृतनञादिपदस्य घटत्वावच्छिन्नप्रतियोगितासम्बन्धेन घटप्रकारकाभावशाब्दत्वस्य, तथा 'नीलादिसाकाङ्क्षघटाद्युपस्थापकपदसमभिव्याहृतनञ्पदस्य नीलघटत्वावच्छिन्नप्रतियोगिताकत्वसम्बन्धेन नीलघटादिप्रकारकशाब्दबुद्धि-

त्वस्य च कार्य्यतावच्छेदकत्वोपगमान्न 'नीलघटो न घट' इत्यादिप्रयोगप्रसक्तिः, भवति च 'पीतो घटो न नीलघट' इत्यादिप्रयोगोपपत्तिरित्याद्यन्यतोऽवधार्य्यमित्याशयवानाह-*इत्याद्यन्यत्र विस्तर इति* ।। ४१ ।।

इति भूषणसारदर्पणे नञर्थनिरूपणम् ।। ७ ।।



अर्थ—सर्व ब्राह्मण आदि प्रतियोगी में भेद रूप अभाव विशेषण है। इसीलिये "असर्व" शब्द को सर्वनामसंज्ञा होती है। "अनेकमन्यपदार्थे" "सेव्यतेऽनेकया सन्नतापाङ्ग्या" इत्यादि स्थलों में एकशब्द के अर्थ की प्रधानता होने से एक वचन ही नियमतः होता है। "अब्राह्मणः" यहां उत्तरपदार्थ (ब्राह्मण) की प्रधानता होने से यह तत्पुरुष कहलाता है। "अत्वं भवसि" "अनहं भवामि" इत्यादि स्थल में मध्यम उत्तम पुरुष आदि एवं एक वचन द्विवचन आदि की व्यवस्था भी इससे उपपन्न होती है।

अन्यथा—उत्तर पदार्थ में नञर्थ अभाव को विशेषण नहीं मानने पर "त्वदभावः"= तेरा अभाव, "मदभावः" मेरा अभाव इसके समान अभावांश में युष्मदर्थ और अस्मद् के अर्थ का अन्वय होने से युष्मद् का तिङ् के साथ [1]सामानधिकरण्य नहीं होने के कारण मध्यमपुरुष, उत्तमपुरुष आदि पुरुष की व्यवस्था नहीं होगी। हमारे मत में "अत्वं भवसि" इससे भेद (अभाव) का प्रतियोगी जो तुम उससे अभिन्न जो आश्रय उसमें रहनेवाली भवन क्रिया इस प्रकार के अन्वय होने से सामानाधिकरण्य अनुपपन्न नहीं हुआ।

अथवा प्रतियोगी सर्व ब्राह्मण आदि में अभाव विशेष्य है। भाव यह है कि (असर्व इस में अभाव के विशेष्य होने पर सर्व शब्दार्थ विशेषण होने से उपसर्जन हो जायगा। अतः सर्वनाम संज्ञा नहीं होगी इस शङ्का का निराकरण करते हैं) नञ् समास में गौण (उपसर्जन) होने पर भी "एतत्तदोः सुलोपोऽकोरनञ् समासे हलि" इस [2]सूत्र के ज्ञापन से सर्वनामसंज्ञा अनुपपन्न नहीं है। "असः शिवः" इस नञ् समास में सुलोप वारण के लिये "अनञ् समासे" यह विशेषण दिया गया है।

वहां नञ् समास में तत् शब्द को सर्वनाम संज्ञा गौण होने से प्राप्त नहीं है। "अकोः" इस पर्युदास से अकच् सहित की व्यावृत्ति होने से सर्वनाम ही एतत् और तत् शब्द का ग्रहण होता है। इस प्रकार अनञ् समासे व्यर्थ होकर उक्तार्थ में ज्ञापक है।

"अनेकमन्यपदार्थे" इत्यादि स्थल में एक वचन प्रयोग विशेष्य के अनुसार है। "सुबामन्त्रिते पराङ्गवत्स्वरे" इस सूत्र से अनुवृत्ति द्वारा प्राप्त विशेष्यभूत सुप् पद एक वचनान्त ही है।

---

१. प्रतियोगितया भेदविशिष्ट ब्राह्मण इस प्रकार बोध होने से ब्राह्मण की ही प्रधानता है।

दूसरा कारण—अनेकम् यहां द्विवचन के निर्देश करने पर दो से अधिक सुबन्तों का तथा बहुवचन के निर्देश करने पर दो का बहुव्रीहि समास सिद्ध नहीं होगा। अतः जाति के अभिप्राय से अथवा औत्सर्गिक—"एकवचनमुत्सर्गतः" इस नियम की दृष्टि से एक वचन किया गया। "सेव्यतेऽनेकया" इस माघपद्य में भी योषया (स्त्रिया) इस एक वचन विशेष्य के अनुरोध से और प्रत्येक स्त्री के सेवनान्वय तात्पर्य से वहां एकवचनान्त का प्रयोग किया गया न कि उत्तर पदार्थ की प्रधानता के कारण वैसा प्रयोग किया गया है। इसीलिये "पतन्त्यनेके जलधेरिवोर्मयः" इत्यादि स्थल में बहुवचन प्रयोग भी उपपन्न होता है। "अत्वं भवसि" इत्यादि स्थल में युष्मद् का त्वद्भिन्न अर्थ में अस्मद् शब्द का मद्भिन्न में लक्षणा है। नञ् इसी का तात्पर्य ग्राहक है। इस प्रकार युष्मदर्थ अस्मदर्थ भिन्न हो जाने से युष्मदर्थ के साथ सामानाधिकरण्य हो जाने के कारण पुरुष की व्यवस्था हो जाती है। त्वद्भिन्न से अभिन्न आश्रय में रहने वाली क्रिया इस प्रकार का शाब्द बोध होता है। इसी प्रकार "न त्वं पचसि" यहां पर त्वद्भिन्नाश्रय (विक्लित्ति) अनुकूल भावना का अभाव (ऐसा बोध होता है) "घटो नास्ति" यहाँ पर घटाभिन्न आश्रयनिष्ठ अस्तित्वाभाव इस रीति से शाब्द बोध होता है। क्योंकि समास का अघट ही नञ् उसका क्रिया में जो अन्वय होता है। नञ्वाच्य अभाव अत्यन्ताभावत्वरूप से तथा अन्योन्याभावत्व रूप से शक्य है क्योंकि शाब्दबोध में तत्तद् रूप से बोध होता है इत्यादि का अन्यत्र विस्तृत रूप से निरूपण है।

इति नञर्थ निर्णयः



हिन्दी भाष्यम्ः—"विशेषणमिति" प्रतियोगिनीति शेषः—नञर्थ भेद रूप ब्राह्मण प्रतियोगी में (स्वनिरूपित) ब्राह्मणत्वावच्छिन्नप्रतियोगिता सम्बन्ध से "अब्राह्मणः" यहां पर विशेषण है। अतः उक्त सम्बन्ध से भेदविशिष्ट ब्राह्मण ऐसा बोध होता है। प्रतियोगिता का सम्बन्धरूप से भान न मानकर प्रकारता रूप से अनुभवसिद्ध बोध मानने पर "भेदप्रतियोगी ब्राह्मणः" "अघटः पटः" यहां पट वृत्तिभेद प्रतियोगी घट ऐसा बोध होता है। ब्राह्मणप्रतियोगी वाला भेद ऐसा बोध मानस है। इसी प्रकार "अघटः" इसः में घट प्रतियोगी वाले भेद की प्रतीति आर्थ है।

शङ्का—समान विभक्तिवाले नामार्थों का परस्पर अभेद से अन्वय माना जाता है। "अघटः पटः' इस में दोनों अघट और पट पद समानविभक्ति वाले होने से इनके अर्थों का अभेद से अन्वय होना चाहिये। आपने यहां घट वृत्तिभेद ऐसा वृत्तित्वरूप भेद सम्बन्ध से नञर्थभेद में अन्वय प्रतिपादन किया है।

---

१. युष्मद् सामानाधिकरण्य = तिङ्वाच्यकारकवाचकत्वरूप है। तिङ् से कहा जाने वाले कारक की वाचकतारूप युष्मद् सामानाधिकरण्य है।

२. ककाररहित एतत् और तत् शब्द से परवर्ती सु का लोप होता है हल् के आगे रहने पर किन्तु नञ् समास में नहीं। यह सूत्रार्थ है।

समाधान—निपातार्थ से अतिरिक्त नामार्थ ( जिनकी समान विभक्ति वाले पदों से उपस्थिति है ) के लिये अभेदान्वय नियम किया गया है। निपातार्थ में उस नियम को नहीं मानते यह भाव है।

शङ्का—"अघटः पटः" इससे पट निष्ठ—भेद प्रतियोगी[1] घट इत्यादि बोध मानने पर "अघटमानय" यहाँ आनयन क्रिया में भेद प्रतियोगी घट का अन्वय होने से घट का आनयन होने लगेगा। क्योंकि घट की ही प्रधानता है।

समाधान—राजपुरुषमानय यहाँ पुरुष की प्रधानता रहनेपर भी आनयन में राजा से सम्बद्ध पुरुष का ही आनयन होता है, उसी प्रकार घटप्रतियोगिक भेदवाले पट ( घट से भिन्न ) का ही आनयन में अन्वय होगा। नञ्पदोपादान के सामर्थ्य से भी यह कल्पना होती है। अन्यथा अघट कहने पर भी घट का ही आनयन होगा तो नञ् के उपादान करने का क्या फल होगा ?

इस प्रकार भेद का उत्तर पदार्थ में विशेषण तथा अन्वय होने से "असर्वस्मै" इत्यादि स्थल में सर्वनाम संज्ञा और तत्प्रयुक्त कार्यों की सिद्धि होती है।

"सर्वादीनि सर्वनामानि" इस सूत्र से संज्ञा ( नाम ) और उपसर्जन ( दूसरे में जो विशेषण ) इनसे अतिरिक्त जो सर्वादिगण में पठित है उनको सर्वनाम संज्ञा का विधान है। असर्व शब्द से यदि नञर्थ भेद विशेष्य रूप से प्रतीत होगा तो उसमें सर्व विशेषण होता है। सर्व विशेषण होने से उसके बोधक सर्व को उपसर्जन होने के कारण सर्वनाम संज्ञा नहीं होगी। ऐसी दशा में सर्वनाम संज्ञा से होने वाले स्मै स्मात् स्मिन् आदि कार्य नहीं होंगे। भेद को विशेषण सर्व को विशेष्य मानने पर उपसर्जन न होने से सर्व को सर्वनामसंज्ञा तथा उसके कार्य हो जाते हैं।

इसी प्रकार "अनेकमन्यपदार्थे" ( यह बहुव्रीहि समास विधायक सूत्र है। ) इसमें "अनेकम्" यहां एकवचन सिद्ध होता है। यदि अभाव ( भेद ) विशेष्य और एक उसमें विशेषण रहता तो एक से भिन्न ऐसा अनेक से बोध होने पर एक से भिन्न दो चार दश भी हो सकते है। ऐसी दशा में अनेक शब्द से द्विवचन बहुवचन का प्रयोग होना चाहिये था। एक से भिन्न एक न होने से एकवचन विभक्ति भी नहीं होगी।

"भेद प्रतियोगी एक" ऐसा भेद को विशेषण मानकर बोध होने से एकत्वार्थक है उस की प्रधानता भी है। अतः तदनुसार एकवचनान्त प्रयोग युक्तियुक्त है।

एवं "सेव्यतेऽनेकया[2] सन्नतापाङ्ग्या" इस माघ पद्य में भी "अनेकया" इस में तृतीया का एकवचन उपपन्न होता है।

---

१. जिसका अभाव विवक्षित होता है वही वहां प्रतियोगी है। जैसे अघटः यहां घट का अभाव कहने पर घट प्रतियोगी होता है। यस्याभावः स प्रतिगोगी।

२. सम्पूर्ण श्लोक इस प्रकार है—

वर्जयन्त्या जनैः सङ्गमेकान्ततः तर्कयन्त्या सुखं सङ्गमे, कान्ततः।
योषयैष स्मरासन्नतापाङ्ग्या सेव्यतेऽनेकया सन्नतापाङ्ग्या ॥

माघ ४ सर्ग ४२ वां श्लोक

उत्तर पदार्थ की प्रधानता तत्पुरुष समास में रहती है। पूर्वपदार्थ नञर्थ के विशेषण, तथा उत्तर पदार्थ ब्राह्मणादि के प्रधान होने से तत्पुरुष समास का लक्षण भी "अब्राह्मणः" इत्यादि में समन्वित हो जाता है।

युष्मद् के सामानधिकरण्य में मध्यमपुरुष अस्मद् के साथ सामानाधिकरण्य होने पर उत्तमपुरुष होता है यह "युष्मद्युपपदे समानाधिकरणे स्थानिन्यपि मध्यमः" "अस्मद्युत्तमः" इन सूत्रों का अर्थ है। समानाधिकरण-समान = तुल्य-अधिकरण = अर्थ होना। किससे समान अर्थात् लकार से। लकार का लोक में प्रयोग न होने से उसके आदेश तिबादि का अर्थ विवक्षित है। तिङ से वाच्य जो कारक-कर्ता या कर्म उसका वाचक युष्मद् और अस्मद् के होने पर वे समानाधिकरण कहे जाते हैं। ऐसा होने पर ही मध्यमपुरुष और उत्तमपुरुष होता है। प्रकृत में "अत्वं पचसि" "अनहं भवमि" यहां यदि नञर्थ अभाव विशेषण न होकर त्वं पदार्थ का विशेष्य हो जाय तो "अत्वम्" इससे त्वदभाव और "अनहम्" इस से मदभाव का बोध होगा। जिस प्रकार "त्वदभावः पचति" यहां मध्यमपुरुष और उत्तमपुरुष नहीं होता। तिङ् से प्रतीयमान कर्ता अर्थ, युष्मद् अथवा अस्मद् से प्रतीयमान अर्थ कर्ता नहीं है। पचति या भवति के कर्ता का अभाव है। अतः युष्मदर्थ अस्मदर्थ और पचत्यादि के तिङ् का अर्थ एक नहीं होने से प्रथम पुरुष होता है उसीप्रकार अत्वम् इससे तुम्हारा अभाव अनहम् इससे मेरा अभाव ऐसा अभाव-विशेष्यक बोध होने पर तिङर्थ की और युष्मदर्थ या अस्मदर्थ के साथ समानता नहीं है। अतः मध्यमपुरुष आदि की व्यवस्था नहीं हो सकेगी। तिङ् से वाच्य के समान ही वाच्य युष्मद् और अस्मद् के होने पर [1]सामानाधिकरण्य होता है। किसी ने तिङ्वाच्य के स्थान पर लकार वाच्य का निवेश किया है सो ठीक नहीं है। "लः कर्मणि च" इस सूत्र से तिङ् का कर्त्ता और कर्म अर्थ पूर्व में ही निर्णीत है। बोधकत्व तिङ् में है लकार में आरोपित है। अतः अनारोपित पूर्वनिर्णीत वाचकत्व छोड़कर आरोपित लकार की वाचकता का लक्षण में सन्निवेश व्यर्थ है। अत एव सिद्धान्तकौमुदी में तिङ्वाच्य का ही उल्लेख है।

हमारे (भूषणकार के) मत में अत्वम् इससे भेद का प्रतियोगी जो युष्मद् (त्वं) का अर्थ उससे अभिन्न जो आश्रय (कर्ता) उसमें रहने वाली भवनक्रिया (होना क्रिया) यही भेद प्रतियोगी त्वदभिन्नाश्रयिका भवनक्रिया से मूल में लिखा हैं। त्वम् का अर्थ और पचसि के सिप् का कर्ता अर्थ समान है। अर्थात् जो तिङर्थ कर्ता है वही त्वं पद का भी अर्थ है। अतः समानाधिकरण (समानार्थक) होने से मध्यम पुरुष होता है।

अथवा—अभाव, प्रतियोगी = उत्तर पदार्थरूप प्रतियोगी, में विशेष्य ही है। ऐसा मानने से "अब्राह्मणः" क्षत्रियः" यहां ब्राह्मण से भिन्न क्षत्रिय ऐसा बोध होता है।

शङ्का—नञर्थ अभावरूप भेद की प्रधानता और उत्तर पदार्थरूप प्रतियोगी की विशेषणता मानने पर "असर्वः" इस पद से सर्व भिन्न ऐसा बोध होने पर विशेष्य

---

१. तिङ्वाच्यकारकवाचकत्वं समानाधिकरण्यमत्र।

भूत भेद में सर्व पदार्थ के विशेषण होने से सर्व शब्द उपसर्जन हो जायगा। अतः सर्व-नाम संज्ञा नहीं होने से "स्मै" यह आदेश नहीं होगा। इसी प्रकार उत्तरपदार्थ की प्रधानता तत्पुरुष में मानी जाती है। यह व्यवस्था भी नष्ट हो जायगी इत्यादि पूर्वोक्त सभी दोषों का प्रसङ्ग प्राप्त हो जायगा।

समाधान—"एतत्तदोः सुलोपोऽकोरनञ् समासे हलि" इस सूत्र में अनञ् समास का उपादान नञ् समास घटित "असः" इत्यादि स्थल में "एतत्तदोः" इत्यादि सूत्र से सुलोप की व्यावृत्ति के लिये किया गया है। सूत्र में "अकोः" इस का अविद्यमानः ककारो ययोस्तयोः अर्थात् जहां ककार विद्यमान नहीं हो ऐसे एतत् और तत् शब्द का सूत्र में ग्रहण है। इसीलिये" एषको राहुः" इस में अकच् प्रत्यय होने से ककार विद्यमान है। अत एव सु का लोप नहीं होता। जहां अकच् होगा वहीं ककार से युक्त एतत् या तत् मिल सकेगा। कप्रत्यय होने पर उससे व्यवहित सु हो जाने से सुलोप प्राप्त ही नहीं होगा। अकच् होने पर तन्मध्यपतित का उसके ग्रहण से ग्रहण माना जाता है। अकच् मध्य (बीच) में होने से एतकत् तकत् इस को भी एतत् ओर तत् से पृथक् नही मानते। अतः प्राप्त सुलोप की व्यावृत्ति के लिये "अकोः" इस की आवश्यता हैं। अकच् प्रत्यय "अव्ययसर्वनाम्नाम्" इत्यादि सूत्र से सर्वनामसंज्ञा होने पर होता है। संयोग के समान विप्रयोग भी अर्थ निर्णायक होने से अकच् रहित से अकच् प्रत्यय होने की योग्यता रहनी चाहिये। अकच् प्रत्यय होने की योग्यता सर्वनाम संज्ञक शब्द में है। अतः अकच् के ककार से शून्य एतत् और तत् सर्वनाम ही लिये जायेंगे। ऐसी अवस्था में नञ् समास स्थल में नञर्थ की प्रधानता होने से सर्वादि विशेषण ही होंगे। इस कारण उपसर्जन होने से उनको सर्वनाम संज्ञा नहीं होगी। उक्त संज्ञा न होने से "असः शिवः" इत्यादि नञ् समास स्थल में सुलोप की प्राप्ति न होने से सूत्र में तद्व्यावृत्ति के लिये किया गया "अनञ् समास" इसका ग्रहण व्यर्थ हो जायगा। अतः अनञ् समास ग्रहण यह द्योतन करता है कि नञ् समास स्थल में उपसर्जन होने पर भी सर्वनाम संज्ञा होती है। अतः पूर्वपदार्थ के प्राधान्य होने पर भी दोष नहीं है।

"अनेकम्" "अनेकया" इत्यादि स्थलों में विशेष्यभूत सुबन्त तथा योषा (स्त्री) के एक होने से उसमें विशेषणीभूत एकभिन्न वाचक अनेक शब्द से एकवचन विभक्ति की साधुता होती है। वहां विशेष्य ऊर्मि (लहर) बहुत है वहीं उसके अनुरोध से "अनेके ऊर्मयः" यह प्रयोग उचित ही है।

"अत्वं भवसि अनहं भवामि" इत्यादि स्थलों में त्वद्भिन्न मद्भिन्न में लक्षणा है। नञ् उसी का द्योतक है ऐसा मानकर पुरुषव्यवस्था उपपन्न होती है। भिन्न भी युष्मद् और अस्मद् शब्द का ही अर्थ होने से तिङ्वाच्य कारकवाचकत्वरूप सामानाधिकरण्य युष्मदादि के साथ होने से मध्यम आदि पुरुष की व्यवस्था हो जायगी।

शङ्का:—पूर्व पदार्थ की प्रधानता पक्ष में उत्तर पदार्थ, तत्पुरुष में प्रधान होता है इस नियम का भङ्ग प्राप्त होगा।

समाधानः—उत्तर पदार्थ प्रधान तत्पुरुष है यह सर्वत्र के लिये नहीं है किन्तु प्रायोवाद है। अत एव अर्धपिप्पली आदि में पूर्वपदार्थ अर्ध की प्रधानता होने पर भी तत्पुरुषत्व का भङ्ग नहीं हुआ।

किसी का यह मत है कि—अनञ् समास ग्रहण नञ् समास में पूर्व पदार्थ प्राधान्य होने पर भी उत्तर पदार्थ प्राधान्य निमित्तक कार्य होते हैं इस प्रकार सर्वनाम संज्ञा पुरुषव्यवस्था तत्पुरुषत्वादि व्यवहार अनायास ही उपपन्न हो जाता है। अत्वम् अनहम् आदि में लक्षणा प्रयास नहीं करना पड़ता है। इत्यादि काशिका में स्पष्ट है।

असमस्त नञ् का क्रिया एवं गुण में ही अन्वय होता है। इसीलिये भाष्यकार ने "नञ्" सूत्र में लिखा है कि "प्रसज्य ( विधाय ) क्रियागुणौ ततः पश्चान्निवृत्तिं करोति" क्रिया के उदाहरण में घटो नास्ति पटो नास्ति। गुण का उदाहरण "न नः एकं प्रियम्"—नः अर्थात् हमलोगों का एक नहीं प्रिय इससे एक प्रिय के निषेध से अनेक प्रिय की प्रतीति होती है। यहां एकत्व गुण का ही प्रतिषेध इष्ट है। क्रिया का प्रतिषेध अनुभव से प्रतिकूल है। कैयट ने भी लिखा है कि यहां एकत्व के प्रतिषेध सामर्थ्य से ही अन्य संख्यायुक्त—बहुत्वसंख्यायुक्त वस्तु की प्रतीति होती है।

अभाव के प्रागभाव प्रध्वंसाभाव अत्यन्ताभाव और अन्योन्याभाव ये चार भेद हैं। नञ् से अन्योन्याभावरूप से कहीं और कहीं अत्यन्ताभाव रूप से बोध होता। इसका विचार विस्तृत रूपसे अन्यत्र देखिये।

इति नञर्थनिरूपणम्

# अथ निपातार्थनिर्णयः

प्रादयो द्योतकाश्चादयो वाचका इति नैयायिकमतमयुक्तम्। वैषम्ये बीजाभावादिति ध्वनयन्निपातानां द्योतकत्वं समर्थयते—

द्योतकाः प्रादयो येन निपाताश्चादयस्तथा।
उपास्येते हरिहरौ लकारो दृश्यते यथा॥ ४२॥

येन हेतुना प्रादयो द्योतकास्तेनैव हेतुना चादयो निपातास्तथा = द्योतका इत्यर्थः। अयम्भावः—ईश्वरमनुभवतीत्यादावनुभवादिः प्रतीयमानो न धात्वर्थः, भवतीत्यत्राप्यापत्तेः। नोपसर्गार्थः। तथा सत्यप्रकृत्यर्थतया तत्राख्यातार्थानन्वयापत्तेः। प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेः। अनुगच्छतीत्यादौ—अनुभवादिप्रत्ययापत्तेश्च। न विशिष्टार्थः। गौरवात्। तथा च, धातोरेव विद्यमानत्वादिवाचकस्यास्तु लक्षणा, उपसर्गस्तात्पर्य्यग्राहक इत्यस्तु। तथा च तात्पर्यग्राहकत्वमेव द्योतकत्वमिति।

तच्च चादिष्वपि तुल्यम्। चैत्रमिव पश्यतीत्यादौ सादृश्यविशिष्टं चैत्रपदं लक्ष्यम्। इवशब्दस्तात्पर्य्यग्राहक इत्यस्य सुवचत्वादिति। तत्र स्वयं युक्त्यन्तरमाह—*उपास्येते हरिहरौ इति*॥

तत्र ह्युपासना किमुपसर्गार्थो? विशिष्टस्य? धातुमात्रस्य वा? नाद्यः। तथा सति स्वार्थफलव्यधिकरणव्यापारवाचकत्वरूपसकर्मकत्वस्यास्धातोरुपासनारूपफलवाचकत्वाभावावादनापत्तेस्ततः कर्मणि लकारो न स्यात्। न द्वितीयो, गौरवात्। तृतीये त्वागतं द्योतकत्वम्। तात्पर्य्यग्राहकत्वलाभादिति भावः। दृश्यते इत्यत्र कर्म्मणीति शेषः॥ ४२॥

प्रासङ्गिकं निपातोपसर्गार्थनिरूपणमित्याशयेन मूलमवतारयति—*प्रादयो द्योतका इति*। द्योतकतारूपशक्तिमन्त इत्यर्थः। अत एव 'प्रजयति' इत्यादौ न प्रकर्षाद्यर्थस्य विशेष्यतेति भावः। मतान्तरे तु तात्पर्य्यग्राहकत्वं द्योतकत्वं वक्ष्यति। तत्र येनेत्यत्र यच्छब्दो नोत्तरार्द्धपठितहेतुमात्रपरामर्शकः; किन्तु हेत्वन्तपरामर्शकोऽपीत्याह—*अयम्भाव इति*। *न धात्वर्थ इति*। न तत्प्रयोगाऽन्तर्गतधातुशक्य इत्यर्थः। *आपत्तेरिति*। अनुभवादिप्रतीत्यापत्तेरित्यर्थः। *नोपसर्गार्थ इति*। न तद्धातुसमभिव्याहृतप्रादिशक्य इत्यर्थः। *अनन्वयापत्तरिति*। एतच्चानुभवादिमात्रप्रतीतिमभ्युपेत्य। वस्तुतस्तथा स्वीकारेऽक्रियार्थकत्वेन अनुभवादेर्धातुत्वानापत्तेरिति बोध्यम्।

नन्वनुभवार्थकत्वेऽपि तस्य फलस्थानीयत्वेन तदन्वयिव्यापारसामान्याऽर्थकान्वादेर्न धातुत्वानुपपत्तिरत आह—*अनुगच्छतीत्यादाविति* । अत्रानोरनुभवाऽर्थकत्वे तदनुरोधेन गमेरपि व्यापारसामान्याऽर्थकताया एवाऽभ्युपेयतया तया प्रतीतिदुर्वारा स्यादित्यर्थः ।

वस्तुतस्तु संयोगाऽवरुद्धव्यापारेऽन्वयानुभवस्य बाधेनाऽन्वयासम्भवान्नाऽनोरनुभवाऽर्थकत्वसम्भावनेति भावः । *गौरवादिति* । विशिष्टानुपूर्व्याः शक्ततावच्छेदकत्वे गौरवादित्यर्थः । *तथा चेति* । धातूपसर्गविशिष्टानां प्रत्येकं प्रतीयमानानुभावार्थप्रतिपादकत्वासम्भवादिति समुदितार्थः । विद्यमानत्वादीत्यादिनोत्पत्तिर्गृह्यते । लक्षणेत्यस्यानुभवादिरूपेऽर्थे इति शेषः । लक्षणाकल्पिकायास्तात्पर्य्यानुपपत्तेस्तात्पर्य्यग्रहाऽधीनतया तस्या चोपसर्गसमभिव्याहाराद्यायत्तत्वादित्यर्थः ।

नन्वेतावतोपसर्गस्य तात्पर्य्यग्राहकत्वमेव समायातम्, न द्योतकत्वमत आह-*तथा चेति* ॥ तात्पर्य्यग्राहकत्वमेवेत्येवकारेण द्योतकत्वस्य वृत्त्यन्तरव्यवच्छेदः । अनुभवादिफले धातोस्तात्पर्य्यग्राहकत्वस्योपसर्गसर्गसमभिव्याहाराऽधीनत्वात् "उपसर्गाः क्रियायोगे" (पा० सू० १।४।५९) इत्यत्रापि क्रियाविशेषणीभूताऽर्थतात्पर्य्यग्राहकत्वमेव "उपसर्गाः क्रियायोगे" इत्यनेन विवक्षितमिति भावः । एतत्तत्त्वमग्रे वक्ष्यते । *तत्रेति* । द्योतकत्व इत्यर्थः । सकर्मकत्वस्येत्यनापत्तेरित्यनेनाऽन्वितम् ॥

ननु माऽस्तु सकर्मकत्वमत आह—*तत इति* । उपोपसृष्टासुधातोरित्यर्थः । तथा चोपास्यते हरिरित्यादिप्रयोगानुपपत्तिरिति भावः । *तृतीये त्विति* । धातुमात्रार्थ इति कल्पे त्वित्यर्थः । आगतमितिकर्तृक्तान्तम् । उपाद्यसमभिव्याहारे विना शक्ति गम्धातोस्तादृशबोधादर्शनात्तस्येतरार्थपरतायामुपसर्गस्य नियामकत्वलाभादिति भावः ॥ ४२ ॥

अर्थ—प्रादि ( उपसर्ग ) द्योतक और चादि निपात वाचक है यह नैयायिक मत असङ्गत है । एक को द्योतक और दूसरे को वाचक स्वीकार करने में कोई कारण नहीं है । इस आशय को व्यक्त करते हुए निपातमात्र के द्योतकत्व का समर्थन करते है—

जिस हेतु से प्रादि द्योतक हैं उसी हेतु से निपात द्योतक हैं । "हरिहरौ उपास्येते" यहाँ पर जिस प्रकार ( कर्म में ) लकार देखा जाता है । उसी प्रकार "तथान्यत्र" इत्यादि अग्रिमकारिका से सम्बन्ध है । अर्थात् उसी प्रकार "साक्षात् क्रियते गुरुः" इत्यादि निपात स्थल में भी कर्म में लकार सिद्ध होता है ।

येन=जिस हेतु से प्रादि द्योतक हैं उसी कारण से चादि निपात भी तथा= द्योतक है ।

भावार्थ यह है कि—"ईश्वरमनुभवति" ( ईश्वर का अनुभव करता है ) इत्यादि स्थल में प्रतीयमान अनुभव धातु ( भू ) का अर्थ नहीं है । यदि धात्वर्थ—होता तो भवति से भी अनुभव की प्रतीति होने लगती । उपसर्ग का भी अर्थ नहीं है । उपसर्गार्थ मानने पर प्रत्ययों का प्रकृत्यर्थ में अन्वित होकर ही अपने अर्थ बोधन करने का स्वभाव

है इस व्युत्पत्ति से उपसर्गार्थ अप्रकृत्यर्थ होने से आख्यातार्थ ( प्रत्ययार्थ ) का अन्वय उसके साथ नहीं होगा। एवं अनुगच्छति इत्यादि स्थल में अनु से अनुभव की प्रतीति होने लगेगी। अतः उपसर्ग का अर्थ भी अनुभव नहीं है। धातु और उपसर्ग दोनों मिल कर अनुभव अर्थ का बोधक मानने पर गौरव है। ऐसी अवस्था में विद्यमानता आदि अर्थ-वाचक भू धातु की अनुभव अर्थ में लक्षणा है। उपसर्ग में तात्पर्यग्राहकत्व ही द्योतकत्व-रूप है। वह चादि निपात में भी समान ही है।

"चैत्रमिव पश्यति" इत्यादि स्थल में सादृश्य विशिष्ट चैत्र ( चैत्रपद का ) लक्ष्य और इव शब्द तात्पर्य ग्राहक है ऐसा कथन हो सकता है। द्योतकत्व में दूसरी युक्ति भी कहते हैं। "उपास्येते हरिहरौ" इत्यादि।

यहाँ उपासना क्या उपसर्ग का या उपसर्गविशिष्ट धातु का अर्थ है। इसमें आद्यपक्ष ठीक नहीं है। वैसा मानने पर ( उपासनारूप फल आस् धात्वर्थ नहीं होने से ) स्वार्थ ( धात्वर्थ ) फल नहीं हुआ, अतः तादृशफलव्यधिकरणव्यापार वाचकत्वरूप सकर्मकत्व की ( उपासना रूप फल का आस् धातु वाचक न होने से ) अनापत्ति हो जायगी। इस कारण से कर्म में लकार नहीं होगा। विशिष्ट वाचक मानने पर गौरव हो जायगा। तृतीय पक्ष में तो द्योतकत्व आता है। इससे तात्पर्यग्राहकत्व का लाभ होता है। कारिका में "दर्श्यते" इसके साथ "कर्मणि" इसका अध्याहार करके अन्वय करना चाहिये।

हिन्दी भाष्य—यद्यपि नञ् भी निपात होने के कारण निपातार्थ निरूपण से पृथक् नञर्थ का निरूपण अनावश्यक है तथापि ब्राह्मण के आनयन कहने से वशिष्ठ जी का भी आनयन प्राप्त था पुनः वशिष्ठ के आनयन के पृथक् कथन के ( ब्राह्मणमानय वशिष्ठ-मानय ) इसके समान यहां भी नञर्थ निरूपण पृथक् किया गया है।

प्रादि उपसर्ग द्योतक है चादिनिपात वाचक है यह नैयायिक मत कुछ को वाचक कुछ को द्योतक मानने में कोई युक्ति नहीं होने से असङ्गत है। जिस प्रकार "अनुभवति" इसमें अनु उपसर्ग अनुभव का द्योतक है उसी प्रकार चन्द्र इव इत्यादि स्थल में भी इव शब्द को सादृश्य का द्योतक मानने में कोई क्षति नहीं है।

स्वसमभिव्याहृतपदनिष्ठ शक्ति का उद्बोधकत्व ही द्योतकत्व है। अनुभवति इसमें स्वशब्द से अनु का ग्रहण है उससे समभिव्याहृत पद भू होता है उसमें रहनेवाली जो अनुभवविषयक शक्ति उसका उद्बोधन करना ही द्योतकपदों का कार्य है। इस प्रकार अनुभवविशिष्ट में भूधातु की ही शक्ति है। अथवा अनुभव विशिष्ट में भूधातु की लक्षणा है। अनु शब्द उसके तात्पर्य का ग्राहक है।

उपसर्ग को वाचक मानने पर "अनुभवति" इसके समान "अनुकरोति" इससे भी अनुभव की प्रतीति एवं "प्रभवति" इसके समान "प्रतिष्ठते" इससे भी प्रकर्ष की प्रतीति होनी चाहिये। अतः चादि वाचक नहीं है। किन्तु द्योतक है।

दूसरा कारण है अनु के विना भी धातु का प्रयोग हो सकता है पर धातु के विना उपसर्ग अनु आदि का प्रयोग नहीं होता। अतः उपसर्ग वाचक नहीं है।

यदि ऐसा कहें कि अनु प्र आदि उपसर्ग का अनुभव प्रकर्ष आदि अर्थ है धातु उसी में तात्पर्य ग्राहक है तो ऐसा नहीं कह सकते-उपसर्ग के विना भी भवति जयति आदि

केवल धातु का प्रयोग जैसे होता है। उसी प्रकार केवल उपसर्ग का शक्य अर्थ नहीं होने के कारण शक्य सम्बन्धरूपा लक्षणा उसमें नहीं हो सकती इसलिये धातु तात्पर्य ग्राहक नहीं होगी केवल धातु का शक्य अर्थ होने से उसकी लक्षणा होगी। उसके तात्पर्य का ग्राहक अनु प्र आदि हो सकते हैं यह भाव है।

उपसर्ग विशिष्ट धातु को वाचक मानने में गौरव है। विशिष्ट में वाचकता कहने से उपसर्ग और धातु दोनों में वाचकत्व कल्पना होने से गौरव है। इसलिये धातु ही अपेक्षित अर्थों में है उपसर्ग तात्पर्य ग्राहक है यही युक्ति-युक्त मार्ग है।

इसमें कारणान्तर भी है। "उपास्येते" इत्यादि। सकर्मक धातु से कर्म और कर्ता में अकर्मक धातु से भाव और कर्ता में प्रत्यय का विधान है। स्व अर्थात् सकर्मकत्वरूप से विवक्षित जो धातु उसका अर्थ जो फल उसके अधिकरण से भिन्न अधिकरण में रहनेवाला जो व्यापार उसके वाचक धातु को सकर्मक कहा जाता है। उपासना रूप फल यदि उप उपसर्ग का माना जायगा तो आस् धातु का अर्थ उपासना रूप फल नहीं होने से स्वार्थ (धात्वर्थ) फल (उपासना) व्यधिकरण वाचकत्वरूप सकर्मकत्व लक्षण संघटित नहीं होगा। अतः सकर्मक धातु से विहित कर्म में प्रत्यय न होने से "उपास्येते हरिहरौ" इस प्रयोग को असङ्गति हो जायगी। अतः उपासनासहित व्यापार धात्वर्थ है। उप द्योतक या तात्पर्यग्राहक है ॥ ४२ ॥

तद्धादिष्वपि तुल्यमित्याह—

९४ तथान्यत्र निपातेऽपि लकारः कर्म्मवाचकः ॥
विशेषणाद्ययोगोऽपि प्रादिवच्चादिके समः ॥ ४३ ॥

अन्यत्र = साक्षात्क्रियते अलङ्क्रियते, ऊरीक्रियते, शिव इत्यादौ। अत्रापि धातोस्तत्तदर्थे कर्मणि लकारसिद्ध्यर्थं तत्तदर्थवाचकत्वं वाच्यमित्युपसर्गवत् द्योतकत्वममीषामपीत्यर्थः। यद्यपि कृधातोः सकर्म्मकत्वमस्त्येव, तथाप्येष्वर्थेषु सकर्म्मकता न स्यात्। अन्यथा वायुर्व्विकुरुते, सैन्धवा विकुर्व्वते इत्यत्रापि स्यादिति भावः।

अथोपासनासाक्षात्कारादिर्निपातार्थोऽस्तु, "साक्षात्प्रत्यक्षतुल्ययोः" इति कोशस्वरसात्। तदनुकूलो व्यापार एव धात्वर्थोऽस्तु। स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवत्त्वं सकर्म्मकत्वमपि सुवचमिति दृष्टान्तदार्ष्टान्तिकावयुक्ताविति नेदं साधकमिति चेत्? न।

नामाऽर्थधात्वर्थयोर्भेदेन साक्षादन्वयाऽसम्भवेन निपातार्थधात्वर्थयोरन्वयस्यैवासम्भवात्। अन्यथा तण्डुलः पचतीत्यत्रापि कर्म्मतया तण्डुलानां धात्वर्थेऽन्वयापत्तेरिति।

किञ्च प्रादीनां वाचकत्वे 'भूयान् प्रकर्षः, 'कीदृशो निश्चय' इतिवद् भूयान् प्र; कीदृशो निरित्यपि स्यात्। अस्मन्मते प्रादेरनर्थकत्वान्न तदन्वय इत्यतो द्योतकता तेषां स्यादिति। साधकान्तरमभिप्रेत्याह—*विशेष-

चेति* ॥ शोभनः समुच्चयो द्रष्टव्य इतिवच्छोभनश्च द्रष्टव्य इत्यस्यापत्तेस्तुल्यसमाधेयत्वादितिभावः ।

अपि च निपातानां वाचकत्वे प्रातिपदिकार्थयोर्विना षष्ठ्यादिकं भेदेनान्वयासम्भवः । अन्यथा 'राजा पुरुषः' इत्यस्य राजसम्बन्धी पुरुष इत्यर्थापत्तेरित्यभिप्रेत्याह-*आदीति* ॥ धवखदिरयोः समुच्चय इतिवद् धवस्य च खदिरस्य चेत्येव स्यादिति भावः ॥ ४३ ॥

*तच्चादिष्विति* । तद्—द्योतकत्वम् ॥ *तत्तदर्थेति* । तत्तदर्थबोधकत्वमित्यर्थः । *अमीषामिति* । चादिनिपातानामपीत्यर्थः । *अस्त्येनेति* । घटः क्रियत इत्यादौ कर्मणि लकारदर्शनात् कृञः सकर्मकत्वानुपपत्त्या साक्षात्कारे लक्षणेति भावः । *एष्विति* । साक्षात्कारादिरूपार्थेष्वित्यर्थः । *अन्यथेति* । क्वचिदर्थान्तरमादाय कृञः सकर्मकस्य सर्वत्र तत्त्वाङ्गीकारे इत्यर्थः ।

*वायुर्विकुरुत इति* । विकारानुकूलव्यापारवाचकस्यापि सकर्मकतापत्त्या "अकर्मकाच्च" ( पा० सू० १।३।३५ ) इति विहितात्मनेपदानुपपत्तिरिति भावः । 'उपास्यते गुरुः' इत्यादावुपाद्युपसर्गाणामुपासनाद्यर्थवाचकत्वेऽपि पूर्वोक्तसकर्मकत्वानुपपत्तिं परिहरति-*इदमिति* । सकर्मकत्वाऽनुपपत्तिरूपमित्यर्थः ॥ *साधकम्* । द्योतकत्वसाधकम् । व्युत्पत्तौ निपातातिरिक्तत्वविशेषणान्नेयमापत्तिरत आह—*किञ्चेति* । *इत्यपि स्यादिति* । अभ्युच्चयवादोऽयं चाद्युपस्थाप्यसमुच्चयस्य नित्यं समुच्चेयसाकाङ्क्षतया समुच्चयार्थकपदप्रयोगं विना चादिप्रयोगासम्भवात् । शब्दशक्तिस्वाभाव्येन नित्यं धातुपरतन्त्रोपसर्गैः स्वार्थस्य धात्वर्थविशेषणतयैव बोधनेन तदसमभिव्याहारे तत्प्रयोगस्याप्यसम्भवात् । अत एव वक्ष्यति—*तुल्यसमाधेयत्वादिति* ॥

ननु निपातानां वाचकत्वे "चार्थे द्वन्द्वः" ( पा० सू० २।२।२९ ) इत्यादिसूत्रमेव मानम् । प्रादीनां वाचकत्वे तु मानाऽनुपलम्भात् द्योतकत्वौचितेति चेद् ? तत् किम् "ईषद्दुःसुषुकृच्छ्राकृच्छ्रार्थेषु खल्" ( पा० सू० ३।३।१२६ ) इत्यादिसूत्रात्मकं मानं पाणिपिहितमिति विभावय । षष्ठ्यादिकमित्यादिपदेन तदर्थविहितद्वितीयादिपरिग्रहः । अभेदातिरिक्तसम्बन्धावच्छिन्नप्रातिपदिकार्थप्रकारतानिरूपितविशेष्यतासम्बन्धेन शाब्दत्वावच्छिन्नं प्रति विशेष्यतया विभक्तिजन्योपस्थितेर्हेतुतया प्रकृते तदभावेन भेदान्वयासम्भव इत्यर्थः । *अन्यथा*—उक्तकार्यकारणभावानभ्युपगमे । *आपत्तेरिति* । भेदेनान्वयबोधापत्तेरित्यर्थः । *आदीति* । भेदान्वयसङ्ग्राहकमादिपदमित्यर्थः ॥ ४३ ॥

अर्थ—द्योतकत्व चादि में भी समान है । इस अर्थ को कारिका से स्पष्ट करते हैं ।

उसी प्रकार निपात स्थल में भी लकार कर्म का वाचक है । प्रादि के समान चादि में भी विशेषण का सम्बन्ध नहीं होता है ।

"साक्षात् क्रियते" "अलङ्क्रियते" तथा "ऊरीक्रियते शिवः" इत्यादि स्थल में कर्म में लकार विधान करने के लिये धातु को तत् तत् अर्थों का वाचक कहना होगा। इस प्रकार उपसर्ग के समान चादि की भी द्योतकता सिद्ध होती है।

यद्यपि कृधातु सकर्मक (साक्षात् अलम् इत्यादि के विना भी) है तथापि साक्षात्कार आदि अर्थों में सकर्मकता (जब तक इनको धातुवाच्य नहीं मानेंगे तब तक) नहीं होगी।

अर्थान्तर में कृञ् के सकर्मक होने से सभी अर्थों में सकर्मकत्व मानने पर "वायुर्विकुरुते," "सैन्धवा विकुर्वते" यहां भी सकर्मकत्व हो जायगा। (इस प्रकार अकर्मक कृधातु से विधीयमान आत्मनेपद नहीं होगा।)

शङ्का—"साक्षात् प्रत्यक्षतुल्ययोः" (प्रत्यक्ष और तुल्य अर्थ का साक्षात् पद वाचक है) इस कोश के अनुसार उपासना साक्षात्कार आदि निपात का अर्थ, और तदनुकूल व्यापार धातु का अर्थ मानना चाहिये। स्व अथवा स्वयुक्तनिपात का अर्थ जो फल तद् व्यधिकरण व्यापार का वाचक धातु सकर्मक होती है। प्रकृत में निपात उप, साक्षात् आदि जो स्व (धातु से) युक्त है उनका उपासना आदि अर्थ से व्यधिकरण व्यापार वाचक आस् कृञ् आदि धातु होने से सकर्मकत्व भी सुवच है। इस प्रकार दृष्टान्त उपास्येते हरिहरौ और दार्ष्टान्तिक (दृष्टान्त प्राप्त करने योग्य) "साक्षात् क्रियते गुरुः" इत्यादि दोनों अयुक्त हैं। अतः इससे निपातों की द्योतकता का साधन नहीं हो सकता।

समाधान—नामार्थ और धात्वर्थ का साक्षात् भेद सम्बन्ध से अन्वय नहीं होता। इसलिये साक्षात्कार का धात्वर्थ व्यापार के साथ अनुकूलत्व सम्बन्ध से अन्वय नहीं हो सकता। ऐसा न मानने पर "तण्डुलः पचति" इस में भी कर्मता सम्बन्ध से तण्डुल का पच् धात्वर्थ में अन्वय की आपत्ति हो जायगी।

और भी दोष है—यदि प्रादि को वाचक माना जायगा तो "भूयान्" "प्रकर्षः" "कीदृशो निश्चयः" इसके समान "भूयान् प्र" "कीदृशो निः" ऐसा भी प्रयोग होना चाहिये। हमारे मत में चादि वाचक नहीं होने से उनका उस अर्थ में स्वतन्त्र प्रयोग नहीं होता। इससे भी प्रादि की द्योतकता सिद्ध होती है। और भी प्रमाण देते हैं—

"शोभनः समुच्चयः" इसके समान "शोभनश्च द्रष्टव्यः" ऐसे प्रयोगों की आपत्ति का प्रादि के तुल्य निरर्थकत्व हेतु से परिहार करना होगा।

और भी—निपातों के वाचकत्व मानने पर षष्ठी आदि विभक्ति के विना प्रातिपदिकार्थों का परस्पर भेद सम्बन्ध से अन्वय नहीं हो सकेगा। ऐसा न मानने पर "राजा पुरुषः" इससे राजसम्बन्धी पुरुष ऐसा बोध होने लगेगा। इस आशय से कारिका में आदि पद दिया गया है। "धवखदिरयोः समुच्चयः" इस के समान "धवस्य च खदिरस्य च" ऐसा भी प्रयोग होना चाहिये ॥ ४३ ॥

हिन्दीभाष्य—जिस कारण से उपसर्ग द्योतक है वाचक नहीं उसी कारण से निपात चादि द्योतक ही है वाचक नहीं। "साक्षात्क्रियते" साक्षात् पूर्वक कृधातु का प्रत्यक्षानुकूलव्यापार "अलंक्रियते" यहां अलंपूर्वक कृधातु का शोभानुकूलव्यापार तथा "ऊरीक्रियते" इस में [1]ऊरीपूर्वक कृधातु से स्वीकृत्यनुकूल व्यापार अर्थ की प्रतीति होती है। साक्षात्

१. ऊरी शब्द अङ्गीकार अर्थ में है।

अलम् ऊरी आदि द्योतक है कृधातु ही पूर्वोक्त अर्थ का वाचक है ऐसा मानने पर हीं कृधातु से कर्म में लकार निष्पन्न होता है। अन्यथा साक्षात्कार आदि अर्थ धातु के न होने से धात्वर्थ फल नहीं हुआ। अतः तादृश फल से व्यधिकरण व्यापार नहीं होता है। तादृशव्यापार वाचकत्व धातु में नहीं होने से सकर्मकत्व व्यवहार कृधातु में नहीं होगा। अत एव सकर्मक धातु से ही कर्म में होनेवाला लकार नहीं होगा यह भाव है।

शङ्का—जो धातु किसी अर्थ में सकर्मक है अन्य अर्थ में भी सकर्मक ही है। कृधातु उत्पत्ति के अनुकूल व्यापार अर्थ में सकर्मक है। अतः साक्षात्कार आदि धात्वर्थ न मानने पर भी सकर्मकत्व का उच्छेद नहीं होने से कर्म में लकार की सिद्धि हो जायगी।

समाधान—किसी अर्थ में धातु के सकर्मक होने से सर्वत्र सकर्मकत्व व्यवहार मानने पर "वायुर्विकुरुते" "सैन्धवा विकुर्वते" इत्यादि स्थलों में विकारानुकूलव्यापारार्थवाची कृधातु का सकर्मक व्यवहार हो जायगा। ऐसी दशा में "अकर्मकाच्च" इस सूत्र से विधीयमान आत्मनेपद नहीं होगा। इसी प्रकार 'वायुना विक्रियते, सैन्धवैः विक्रियते' इत्यादि स्थल में भाववाची लकार नहीं होगा क्योंकि कृधातु अर्थान्तर में सकर्मक ही है। भाव में लकार अकर्मक धातु से ही होता है।

शङ्का—स्व-अर्थात् सकर्मकत्वरूप से विवक्षित धातु, उस धातु से युक्त जो निपात, जैसे कृधातु से युक्त "साक्षात् करोति" इसमें साक्षात् पद है। उसका जो अर्थ साक्षात्काररूप फल उससे भिन्न अधिकरण में रहनेवाला जो व्यापार उसका वाचक जो धातु वही सकर्मक है ऐसा मानने पर साक्षात् को साक्षात्कार का वाचक मानने पर भी कर्म में लकार हो सकता है। सकर्मक के लक्षण में ही फल धात्वर्थ हो ऐसा नियम नहीं है। फलधात्वर्थ या स्वसंयुक्त निपातार्थ हो ऐसा निवेश है। अतः निपात के वाचकत्व पक्ष में किसी प्रकार की बाधा नहीं है।

समाधान—नामार्थ का धात्वर्थ के साथ साक्षात् भेद सम्बन्ध से अन्वय नहीं होता। इसीलिये तण्डुलं पचति इसमें तण्डुल का अम् विभक्ति के अर्थ कर्मत्व में निष्ठत्वरूप भेद सम्बन्ध से अन्वय होता है। साक्षात् धात्वर्थ में नहीं। इसीलिये "तण्डुलः पचति" ऐसा प्रयोग नहीं होता क्योंकि अम् के विना कर्मत्व का बोध न होने से धात्वर्थ में अन्वय करना होगा। धात्वर्थ में साक्षात् भेद सम्बन्ध से अन्वय नहीं होने से वैसा प्रयोग नहीं हो सकता।

निपातों के वाचक मानने पर नामार्थ रूपी निपातार्थ का दूसरे नामार्थरूपी निपातार्थ के साथ अभेद से अन्वय होता है। इसी आशय का "नामार्थनामार्थयोरभेदातिरिक्तसम्बन्धोऽव्युत्पन्नः" यह न्याय है। प्रत्ययार्थद्वारा नामार्थ में भेद से अन्वय होता है यह भी नियम है। "धवखदिरयोः समुच्चयः" (धवखदिर का समुच्चय इस के समान धवस्य च खदिरस्य च ऐसा भी प्रयोग प्राप्त होगा। धवश्च खदिरश्च ऐसे प्रयोगों का उच्छेद हो जायगा इत्यादि ॥ ४३ ॥

ननु प्रातिपदिकार्थयोर्भेदेनान्वयबोधे विरुद्धविभक्तिजन्योपस्थितिर्हेतुरिति कार्य्यकारणभावो निपाताऽतिरिक्तविषय एवेति नोक्तदोष इत्याशङ्क्याह—

पदार्थः सदृशाऽन्वेति विभागेन कदापि न ॥
निपातेतरसङ्कोचे प्रमाणं किं विभावय ॥ ४४ ॥

सदृशा—सदृशेन, समानाधिकरणेनेति यावत्। अन्वेति, अभेदेनेति-शेषः। विभागेन-असदृशेन, असमानाधिकरणेनेति यावत्।

अयमर्थः—समानाधिकरणप्रातिपदिकार्थयोरभेदान्वयव्युत्पत्तिर्निपातातिरिक्तविषयेति कल्पने मानाभावो गौरवञ्च। अस्माकं निपातानां द्योतकत्वादन्वय एव नास्तीति नायं दोषः। अत एव 'घटो नास्ति' इत्यादौ घटपदं तत्प्रतियोगिके लाक्षणिकमितिनैयायिकाः॥ ४४॥

*भेदान्वयेति*। प्रातिपदिकार्थयोरभेदान्वय इति पाठस्तु तादृशान्वयबोधे विभक्तिजन्योपस्थितेर्हेतुत्वस्य केनाऽप्यनभ्युपगमादप्रक्रान्तत्वाच्च चिन्त्यः। *निपातातिरिक्तेति*। तथा च समुच्चयाद्यर्थस्य निपातार्थत्वेन न तेन साकं पदार्थान्तरस्य भेदान्वयानुपपत्तिरित्यर्थः। सदृक्शब्दस्य समाना दृगिति व्युत्पन्नस्योपादानेऽनन्वयापत्त्या प्रकृते तुल्ये रूढस्य, "तमिवेमं पश्यन्ति जना" इति भाष्ये कर्तृकर्मव्युत्पन्नस्य वा। तस्य ग्रहणमित्यभिप्रेत्य व्याचष्टे—*सदृशेनेति*। तुल्येनेत्यर्थः।

ननु विरुद्धविभक्तिकस्यापि नामत्वादिना तुल्यत्वात् तेनाभेदेनान्वयापत्तिरत आह-*समानाधिकरणेनेति*। तथा च समानविभक्तिकपदोपस्थाप्यत्वेन सादृश्यस्य विवक्षणान्नोक्तदोष इति भावः एवञ्च मूलेऽन्वेतीत्यनन्तरमभेदेनेतीति शेषः। स्तोकम्पचतीत्यादौ विभिन्नविभक्तिकपदोपस्थाप्यत्वादसदृशेनाप्यभेदान्वयादाह—*असमानाधिकरणेनेति*। विशेष्यवाचकपदप्रकृतिकविभक्तिविरुद्धार्थकविभक्तिप्रकृत्युपस्थाप्येनेत्यर्थः।

ननु वाचकतावादिनोक्तव्युत्पत्तेर्निपातातिरिक्तत्वेन सङ्कोचनीयतयेत्युक्त्यैवाक्षेपध्रौव्ये मूले समानाधिकरणेत्यादिव्युत्पत्तिकथनेऽर्थान्तरमत आह—अयमर्थ इति*। स चेत्थं "विभागेन कदाचन" इत्यनेन व्यधिकरणयोरभेदान्वयं व्यवच्छिन्दता नामार्थयोर्भेदेनाऽनन्वय इति व्युत्पत्तिरेव प्राधान्येन प्रदर्श्यते, न तु समानाधिकरणयोरितिव्युत्पत्त्यन्तरं तथा। किन्तु दृष्टान्तविधया तदुपन्यसनमिति नोक्तदोषः। तथाच प्रधानीभूतव्युत्पत्तावेव निपातेतरसङ्कोचोत्कीर्त्तनमिति सर्वं सुस्थम्।

ननु नामार्थयोरभेदान्वयबोधे समानविभक्तिकपदजन्योपस्थितिहेतुतायां पदांशे निपाताऽतिरिक्तत्वं निवेशनीयमिति नोक्तदोष इत्यवतरणं तु सध्रीचीनम्। न च तादृशव्युत्पत्तेरप्रक्रान्तत्वात् कथमेतदिति वाच्यम्। मूलोक्तादिपदेनैव षष्ठ्यादिकमन्तरेण भेदेनाऽन्वयासम्भवं प्रतिपादयता समानविभक्तित्वेन "धवश्चे"त्यादावभेदान्वयापादनस्याऽपि कुक्षीकृतत्वात्तदेव च सामानाधिकरण्यं व्युत्पत्तौ निविष्टमिति यथाश्रुतमूलसङ्गमनादिति।

ननु तदन्वयानुपपत्तिरेव मानमत आह—*गौरवञ्चेति*। ननु तवाऽपीदं दूषणं समानमत आह—अस्माकमिति*। द्योतकतावादिनामित्यर्थः। द्योतकत्वादिति*। चादीनां समभिव्याहृतपदसमुच्चिततत्तदर्थोपलक्ष्यार्थे तात्पर्यग्राहकत्वादित्यर्थः।

*नास्तीति*। समुच्चयादेस्तन्निरूपकत्वादेश्च समभिव्याहृतपदेनैव लाभात्तस्य पृथगुपस्थित्यभावेनाऽन्वयस्यैवाभावेनोक्तस्थलस्य तादृशव्युत्पत्त्यविषयत्वादिति भावः। *अत एवेति*। व्युत्पत्तौ निपातातिरिक्तत्वविशेषणाप्रवेशादेवेत्यर्थः। *प्रतियोगिके लाक्षणिकमिति*। व्युत्पत्तेस्तद्घटितत्वे तु तत्र लक्षणानुसरणं व्यर्थमेव स्यादिति भावः।

नैयायिकास्तु नञो वाचकतया भाष्यसम्मतत्वाद्, घटो न पटश्चैत्रो न पचति इत्यादौ नञर्थाभावस्य विशेषणतया घटचैत्रादिष्वन्वयाऽनुरोधादुक्तव्युत्पत्तौ व्यभिचारवारणाय निपाताऽतिरिक्तत्वविशेषणमावश्यकम्। एवञ्च घटश्च पटश्चेत्यादौ विभक्तिजन्योपस्थितिं विनाऽपि चाऽर्थस्य घटादिष्वन्वयः सुलभः।

न च घटो नेत्यत्र घटस्य नामार्थत्वाद्विभक्तिजन्योपस्थितिं विना प्रतियोगितासंसर्गकनञर्थविशेष्यकबोधानुपपत्तिर्दुष्परिहरैवेति वाच्यम्। एतद्भियैव घटादिपदानां तत्प्रतियोगिके लक्षणाभ्युपगमात् निपातातिरिक्तनामार्थयोः साक्षाद्भेदेनाऽन्वयोऽव्युत्पन्न इत्यत्र द्विवचनस्वारस्येन निपातातिरिक्तनामार्थनिष्ठभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितनिपातार्थाऽवृत्तिविशेष्यतासम्बन्धेन बोधे, विशेष्यतासम्बन्धेन विभक्तिजन्योपस्थितेर्हेतुत्वकल्पनाद्वा सामञ्जस्यादित्याहुः ॥ ४४ ॥

अर्थ प्रातिपदिकार्थों का परस्पर भेद सम्बन्ध से अन्वयबोध में (मध्य में) प्रत्ययजन्य उपस्थिति कारण है। विभक्त्यर्थ द्वारा ही नामार्थ का दूसरे नामार्थ के साथ भेद सम्बन्ध से अन्वय होता है। इस प्रकार का कार्यकारणभाव निपातार्थ से अतिरिक्त नामार्थ के सम्बन्ध में माना जाता है। अतः निपातार्थ के अन्वय में उक्त व्युत्पत्ति का विरोध नहीं होने से चार्थसमुच्चय में भेद से पदार्थान्तरान्वय विभक्ति के बिना भी हो जायगा इस प्रकार की आशङ्का का समाधान करते हैं—"पदार्थः सदृशा" इत्यादि से।

पदार्थ का सदृश अर्थात् समानाधिकरण[1] नामार्थ के साथ (अभेद) अन्वय होता है। विभागेन अर्थात् असमानाधिकरण के साथ अभेद अन्वय कभी भी नहीं होता। इस नियम का निपातातिरिक्त में सङ्कोच करने में कोई प्रमाण नहीं है।

कारिका में सदृशा का सदृशेन अर्थात् समानाधिकरणेन यह अर्थ है। विभागेन का असदृशेन अर्थात् असमानाधिकरणेन यह अर्थ है।

निपात तो केवल धात्वर्थनिष्ठशक्ति के उद्बोधकमात्र हैं।

यह अर्थ है समानाधिकरण—समानविभक्तिक प्रातिपदिकार्थों का अभेदान्वय नियम निपातातिरिक्त अर्थात् समानविभक्तिक निपातारिक्त प्रातिपदिक का अर्थ विवक्षित है। ऐसा यदि कहें तो इस कल्पना में कोई प्रमाण नहीं है और गौरव भी है। द्योतकतावादी के मत में निपात द्योतक होने से पृथक् उस अर्थ की निपात से उपस्थिति नहीं है। अतः परस्पर अन्वय होता ही नहीं। (पृथक्-पृथक् उपस्थितों का ही संसर्ग से अन्वय होता है) अतः कोई दोष नहीं है।

---

१. समानविभक्तिक पद से उपस्थाप्यत्व रूप से सादृश्य विवक्षित है। अन्यथा नामोपस्थाप्यत्व रूप से समानता तो सर्वत्र प्रातिपदिकार्थ में होने से अभेदान्वय हो जायगा।

अत एव = उक्त व्युत्पत्ति में निपातातिरिक्तत्व के प्रवेश न होने से ही "घटो नास्ति" इत्यादि स्थलों के घट पद की घटप्रतियोगिक अभाव में लक्षणा[1] नैयायिकों ने मानी है।

अपि च निपातानां वाचकत्वे काव्यादावन्वयो न स्यादिति साधकान्तरमाह—

शरैरुस्रैरिवोदीच्यानुद्धरिष्यन् रसानिव ॥

इत्यादावन्वयो न स्यात् सुपाञ्च श्रवणं ततः ॥ ४५ ॥

अत्रोस्रसदृशैः शरैः रससदृशानुदीच्यानुद्धरिष्यन्नित्यर्थः। अयञ्चोस्रादिशब्दानां तत्सदृशपरत्वे इवशब्दस्य द्योतकत्वे सत्येव सङ्गच्छते। अन्यथा प्रत्ययानां प्रकृत्यर्थाऽन्वितस्वार्थबोधकत्वव्युत्पत्तिविरोधः।

तथा हि—उस्रैरिति करणे तृतीया। न चोस्रोऽत्र करणम्। इवार्थसदृशस्य करणत्वेऽपि तस्य करणत्वं नानेन बोधयितुं शक्यम्। अप्रकृत्यर्थत्वात्। इवशब्दस्य चाऽसत्त्वार्थकतया तदुत्तरं तृतीयाया असम्भवात्। सम्भवे वा श्रवणप्रसङ्गात्। उस्रपदोत्तरतृतीयानन्वयप्रसङ्गाच्चेत्याह-*सुपां चेति* ॥ सुपां श्रवणञ्चेत्यर्थः। चकारादुस्रपदोत्तरतृतीयानन्वयः समुच्चीयते ॥

इत्यादावित्यादिपदाद्, "वागर्थाविव सम्पृक्तौ" "पार्वतीपरमेश्वरौ वन्दे" इत्यत्र वागर्थयोर्वन्दिकर्मत्वाभावात्तदुत्तरद्वितीयाया अनन्वयः। इवार्थस्य कर्मत्वान्वयबोधकासम्भवश्च संगृह्यते।

यदि च विशेषणविभक्तिरभेदार्था, साधुत्वमात्रार्था वा तदापि इवशब्दस्य वाचकत्वेऽनन्वय एव। उस्रसदृशशराणां समानाधिकरणपदोपस्थाप्यतया भेदेनान्वयायोगात्। बाधादभेदेनापि न सः। न हि उस्राभिन्नसदृशाभिन्नः शर इत्यर्थो द्रष्टव्यः ॥ ४५ ॥

उक्तव्युत्पत्तेर्निपातातिरिक्तविषयत्वेन पूर्वोक्तदोषपरिहारेऽपि स्थलान्तरे तन्मतेऽन्वयानुपपत्तिर्दुर्वारैवेत्याशयेन मूलमवतारयति—*अपि चेति*। *इत्यर्थ इति*। इत्यन्वयबोधः सर्वसम्मत इत्यर्थः। *अयञ्चेति*। उक्तार्थान्वयश्चेत्यर्थः। *अन्यथेति*। निपातानां वाचकत्वाभ्युपगम इत्यर्थः। व्युत्पत्तिविरोधं व्यक्तीकरोति—*तत्र*। उदीचोद्धारणे। *तथाहीत्यादि*।

नन्विवशब्दोत्तरलुप्ततृतीयार्थकरण एवेवार्थान्वयः सुलभोऽत आह- *इवशब्दस्येति*। *असत्त्वार्थकतयेति*। लिङ्गाद्यनन्वय्यर्थकतयेत्यर्थः। निपातत्वादिति यावत्। एवञ्च कारकानन्वयितावच्छेदकरूपेणोपस्थितेऽर्थे कारकान्वयासम्भवेन तदर्थकतृतीयाया

१. निपातातिरिक्तत्व का व्युत्पत्ति में सङ्कोच होने पर घटो नास्ति यहां पर स्वावच्छिन्नप्रतियोगिताकत्व सम्बन्ध से घट का नञर्थ में अन्वय हो जाता। लक्षणा का आश्रयण व्यर्थ है।

'असम्भवादिति भावः। *सम्भवे वेति*। वाकारोऽनास्थायाम्। अव्ययेवशब्दस्य सत्त्वार्थकताया क्वाप्यदृष्टत्वात्तदभ्युपगमे तु ततो विभक्तेस्तच्छ्रवणस्य च दुर्निवार्य्यतैव स्यादिति दूषणान्तरमाह—*उस्रपदोत्तरेति*। *अनन्वयप्रसङ्ग इति*। वाचकतावादिमत इति शेषः।

इदमुपलक्षणं तृतीयाऽनुपपत्तेः। उस्रस्येवार्थसदृशान्वये उद्धरणकरणत्वस्य तत्राभावात्। अस्मन्मते तु उस्रसदृशरूपोस्रार्थस्य करणत्वान्न तदनुपपत्तिरिति भावः। तदुत्तरं सुब्व्यतिरिक्तप्रत्ययश्रवणत्वापाद्यत्वासम्भवेन समुच्चेयासम्भवमाशङ्क्य चकारस्यान्यत्राप्रकर्ष इत्याह—*सुपां श्रवणञ्चेति*। चकारसमुच्चयं दर्शयति—*उस्रपदोत्तरतृतीयेति*। तृतीयायास्तदर्थस्य अनन्वयमेव स्पष्टयति—*उस्रसदृशेत्यादि*। तत्तत्पदार्थानामित्यर्थः। *भेदेनान्वयेति*। समानाधिकरणनामार्थयोरित्युक्तव्युत्पत्तेरिति भावः।

ननु तर्ह्यभेदान्वयस्तत्र स्यादत आह—*बाधादिति*। सादृश्यस्य भेदघटितत्वादिति भावः। अत्रेदम्बोध्यम्—वाचकतावादिना इवादिना सादृश्यादिबोधने पर्य्युदासनञि वानुयोगिप्रतियोगिवाचकपदयोः समानविभक्तिकत्वस्य नियामकताया अभ्युपगमेन प्रकृत उस्रनिरूपितसादृश्याश्रयशरकरणकोद्धरणबोधः सूपपादः, भेदाभेदयोर्विकल्पस्योपन्यासस्तु सारकारोक्तश्चिन्त्य एवेति ॥ ४५ ॥

अर्थ द्योतकतापक्ष में प्रमाणान्तर भी "अपि च" इससे देते हैं। निपातों के वाचक होने पर काव्य आदि में अन्वय नहीं होगा। (उदाहरण के लिये "शरैरुस्रैरिवोदीच्यान्" इस रघुवंश के श्लोक को देते हैं। उस्रैरिव शरैः—उस्र = किरण को कहते हैं। किरणों के सदृश जो शर-बाण उससे रसान् अर्थात् जल के समान उदीच्य = उत्तरदिग्वासी राजाओं का उद्धार करते हुये (यह श्लोकार्थ सर्वसम्मत है) इत्यादि स्थलों में अन्वय = बोध नहीं होगा। सुप् का श्रवण भी इव शब्द से होने लगेगा।

किरणसदृश बाणों से जलसदृश उत्तर दिशा में रहने वाले राजाओं का उद्धार करते हुये यह श्लोकार्थ का भाव है। उस्र पद की उस्र-सदृश में लक्षणा और इव शब्द को द्योतक मानने पर ही उक्त अर्थ का होना सम्भव है। निपातों के वाचकत्व मत में प्रत्ययों का प्रकृत्यर्थ में अन्वय होकर स्वार्थ का बोध करने का नियम असङ्गत हो जायगा। "उस्रैः" यहाँ पर करण में तृतीया है। उस्र करण यहाँ नहीं है। इवार्थ सदृश के करण होने से सदृश की कारणता (अनेन)—उस्रपदोत्तर तृतीया प्रत्यय से बोधित नहीं हो सकती क्योंकि (सदृश) तृतीयाप्रकृति (उस्र) का अर्थ नहीं है। इव शब्द असत्त्वार्थक = लिङ्गसंख्या में अनन्वयी होने से उसके आगे तृतीया विभक्ति का आना असम्भव है। यदि किसी प्रकार विभक्ति उससे होती भी है तो उसका श्रवण होने लगेगा और उस्र पद के उत्तर तृतीयाविभक्त्यर्थ का अन्वय नहीं होगा। इस आशय से कारिका में लिखते हैं—सुपाञ्च श्रवणं ततः॥ ("सुपा" इसके उत्तर चकार का) "श्रवणम्" इसके अनन्तर समझना चाहिये। इस प्रकार चकार उस्र पद के आगे तृतीयार्थ के अनन्वयापत्ति दोष का संग्राहक है।

कारिका में इत्यादौ के आदि पद से "वागार्थाविव सम्पृक्तौ वागार्थप्रतिपत्तये जगतः पितरौ वन्दे पार्वतीपरमेश्वरौ" यह सम्पूर्ण रघुवंश का आद्य श्लोक है। इसमें "वागार्थाविव" यहाँ पर (वाग् और अर्थ के सदृश के कर्म होने से) वाग् और अर्थ ये दोनों वन्द[1] धात्वर्थ के कर्म नहीं होने से वागर्थौ इसमें द्वितीया का अन्वय नहीं होगा। इवार्थ सादृश्य में कर्मत्वान्वय का बोधन (अप्रकृत्यर्थ होने से) सम्भव नहीं है। इसका संग्रह चकार से होता है।

यदि विशेषण विभक्ति का अभेद अर्थ अथवा साधुत्वमात्र प्रयोजन मानते हैं तो भी इवशब्द के वाचक होने पर अन्वय नहीं ही होगा। उन्न सदृश शरों की समानविभक्तिक पदों के द्वारा उपस्थिति होने से भेद सम्बन्ध से अन्वय नहीं होगा। अभेदसम्बन्ध से अन्वय बाध के कारण नहीं होगा। उन्न से अभिन्न सदृश इससे अभिन्न शर ऐसा बोध नहीं होता ॥ ४५ ॥

हिन्दी-भाष्य—अनन्त प्रातिपदिकों में शक्ति कल्पना की अपेक्षा परिगणित निपातों में शक्ति कल्पना में लाघव है। इस आशङ्का का समाधान "अपि च" इससे किया है।

यदि निपात को द्योतक मानते हैं तो उन्नपद का ही उन्न सदृश अर्थ है इव (निपात) उसी अर्थ का द्योतक है। इस प्रकार उन्न सदृश शरों से यह बोध होता है। यदि निपात को वाचक मानते हैं तो उन्न पद के आगे तृतीया का जो अर्थ है करणत्व उसका उन्न में अन्वय नहीं होगा। क्योंकि उन्नकरण नहीं है अपि तु उन्नसदृश करण हैं। सदृश के करण होने से तद्वाचक इव शब्द से तृतीया विभक्ति होगी उन्न के आगे तृतीया नहीं होगी। विभक्ति होने पर भी प्रत्ययार्थ का अन्वय प्रकृतिनिष्ठवृत्ति द्वारा उपस्थित अर्थ में होता है। अतः इवार्थसदृश में उन्नपदोत्तर तृतीया के अर्थ का अन्वय असम्भव है।

इव शब्द लिङ्गसांख्यकारकानन्वयी है। अत एव "चादयोऽसत्त्वे" इससे असत्त्वार्थक होने से निपातसंज्ञा होती है। कारकानन्वयितावच्छेदक रूप से उपस्थित इवार्थ का करणत्वेन अन्वय असम्भव होने से करणत्व बोधिका तृतीया विभक्ति इनके अनन्तर नहीं हो सकती।

जैसे "पृथिव्यामेव गन्धः" यहाँ दीधितिकार ने एवकारार्थ अन्य का एवपदोत्तर लुप्तसप्तम्यर्थ आधेयत्व में अन्वय मानकर दूसरे एवकारार्थ व्यवच्छेद (अभाव) में अन्वय स्वीकार कर "पृथिवीसमवेतः पृथिव्यन्यासमवेतः" ऐसा अर्थ किया है। उसी प्रकार यहाँ भी इवार्थ करणत्व मानकर तृतीयाविभक्ति की उत्पत्ति मानने पर तृतीया विभक्ति का श्रवण होने लगेगा। कारकत्व से अन्वय होने पर असत्त्वार्थक नहीं होगा। अत एव निपातसंज्ञा के न होने पर अव्ययसंज्ञा भी नहीं होगी। इस प्रकार अव्यय न होने से विभक्ति का लुक् नहीं होगा अत एव दीधितिकार का उक्तान्वय में विश्वास नहीं है ऐसा प्रामाणिक लोग मानते हैं। एवकार का आधेयत्व (प्रकृत में समवेतत्व रूप) भी अर्थ मानकर उक्त बोध की उपपत्ति करनी चाहिये। अत एव मूल में "श्रवण प्रसङ्गात्" ऐसा लिखा है।

इसी प्रकार पुत्रमिव छात्रं पाठयति, वागार्थाविव इत्यादि स्थलों में भी दोष है। अध्यापन का कर्म पुत्रसदृश है पुत्र नहीं; वाग् और अर्थ के सदृश सम्बन्ध पार्वती

---

१. वद् धातु को नुम् होने से धातु का स्वरूप वन्द् हो गया है।

परमेश्वर की वन्दना होने से वन्दना का कर्म वागर्थ नहीं हैं किन्तु वागर्थ सदृश है। इसलिये पूर्वोक्त दोष यहां भी है।

शङ्का—उक्त का प्रतियोगिता सम्बन्ध से सदृशपदार्थैकदेश सादृश्य में अन्वय और सादृश्य की अनुयोगिता सम्बन्ध से शर आदि में अन्वय मानने में क्या दोष है।

समाधान—उक्त सदृश और शर इन तीनों में विरुद्धविभक्तिराहित्य होने से भेदसम्बन्ध से अन्वय नहीं हो सकता। इसी प्रकार "घनश्यामः" इत्यादि स्थल में भी घनपद की घनसदृश में लक्षणा है। अत एव उत्तरपदार्थ में अभेदान्वय होने से कर्मधारयसमास सिद्ध होता है। समानाधिकरण होने से ही अन्यत्र पुंवद्भाव भी सिद्ध होता है।

कुछ निपात द्योतक और कतिपय वाचक हैं ऐसा भी मत है। हरिकारिका भी इसमें प्रमाण है।

निपाताः द्योतकाः केचित् पृथगर्थाभिधायिनः।
आगमा इव केऽपि स्युः सम्भूयार्थस्य वाचकाः॥

इसीलिये नञ् से अभाव बोध का अनुभव तथा किसका अभाव इस प्रकार की जिज्ञासा भी होती है। "आनो दिवो बृहतः पर्वतादा" इसमें पर्वत से पहले ऐसा अर्थबोध होने से वाचकत्व आवश्यक है। निरुक्त के प्रथमाध्याय में आ अर्वाग् अर्थ में है ऐसा लिखा है। "अन्यारात्" इस सूत्र से पर्वतात् इसमें पञ्च भी दिग्योग में है। दिगर्थ आ का नहीं मानने पर पञ्चमी अनुपपन्न हो जायगी। द्योत्य अर्थ विशेषण होते हैं। इसीलिये टाप् का द्योत्य स्त्रीत्व "अजा" इत्यादि स्थल में प्रकृत्यर्थ में विशेषण होकर भासित होता है। उसी प्रकार यहाँ भी अर्वाग् अर्थ आ शब्द का द्योत्य होने पर पर्वत में विशेषण रूप से भासित होने पर उक्तार्थ अनुपपन्न हो जायगा।

नामाख्यातमुपसर्गो निपातः इस प्रातिशाख्य से भी निपात की वाचकता सिद्ध होती है।

सदृश अर्थ को द्योत्य मानने पर उक्तसदृश शर यह अर्थ नहीं होगा। क्योंकि द्योत्य अर्थ विशेषण होता है।

इसी प्रकार घनश्यामः यहां पर घन पद घन सदृश में लाक्षणिक मानकर इव को तात्पर्य ग्राहक मानने पर "उपमानानि सामान्यवचनैः" इस सूत्र से उपमानस्वरूप से बोधक का सामान्यधर्मविशिष्ट उपमेयवाची के साथ समास होता है यह अर्थ है। घनशब्द के सदृशपरक हो जाने से उपमेयवाची होने से उपमानवाचक नहीं होता है। अतः समास नहीं होगा।

शङ्का—सम्प्रति घन शब्द तत्सदृशबोधक होने पर भी विग्रह वाक्य में घनमात्रार्थ का बोधक है। अतः भूतपूर्व गति का आश्रयण करने से घन में उपमानमात्र वाचित्ता सुलभ है। इस प्रकार समास होने में बाधा नहीं है।

समाधान—विग्रह वाक्य में भी "घन इव श्यामः" यहाँ पर घनपद सदृश का बोधक और इव द्योतक होने से भूतपूर्व गति से भी उपमानवाचकत्व नहीं लिया जा सकता है। इव पद के समभिव्याहार से घनपद सदृश का वाचक होने से उपमेय का बोधक होता है। घनेन तुल्यः श्यामः यहाँ यद्यपि घनशब्द उपमानपरक है तथापि यह उक्त समास का विग्रह वाक्य नहीं है। इत्यादि दोषों के कारण निपात की द्योतकता भी निर्दुष्ट नहीं है॥ ४५॥

ननु त्वन्मते अब्राह्मण इत्यादौ तत्पुरुषलक्षणाव्याप्त्यापत्तिः; पूर्वपदस्यानर्थकत्वेनैवोत्तरपदार्थप्राधान्याभावात्। उपसर्गस्यार्थवत्त्वाभावेन प्रातिपदिकत्वाभावाद्विभक्तिश्च ततो न स्यादित्यत आह—

नञ् समासे चापरस्य द्योत्यं प्रत्येव मुख्यता ॥
द्योत्यमेवार्थमादाय जायन्ते नामतः सुपः ॥ ४६ ॥

द्योतकत्व मार्थन

नञ्समासादौ योत्तरपदार्थप्रधानता सा द्योत्यमर्थमादायैव। तमेवार्थमादायार्थवत्त्वात् प्रातिपदिकत्वमित्यर्थः।

वस्तुतस्तु "अव्ययादाप्सुपः" ( पा० सू० २।४।८२ ) इतिज्ञापकात् सुबुत्पत्तिः। "निपातस्यानर्थकस्य" इतिवार्त्तिकाद्वा प्रातिपदिकत्वम्। "कृत्तद्धितसमासाश्च" ( पा० सू० १।२।४६ ) इत्यनुक्तसमुच्चयार्थकचकारेण निपातानां संग्रह इति वा बोध्यम्। तस्माद् युक्तं निपातानां द्योतकत्वम्। उक्तञ्चाकृत्यधिकरणवार्त्तिके—

चतुर्विधे पदे चात्र द्विविधस्यार्थनिर्णयः।
नाम और आख्यात का निर्णय
तन्त्रवा० अ० १ पा० ३

क्रियते संशयोत्पत्तेर्नोपसर्गनिपातयोः ॥
तयोरर्थाभिधाने हि व्यापारो नैव विद्यते।
तन्त्रवा० अ० १ पा० ३

तदर्थद्योतकौ तौ तु वाचकः स विचार्य्यते ॥ इति ॥
उपसर्गेण धात्वर्थो बलादन्यः प्रतीयते।
प्रहाराहारसंहारविहारपरिहारवदिति ॥

अत्रोपसर्गपदं निपातोपलक्षम्। धातुपदं पदान्तरस्येति बोध्यम् ॥४६॥

*उत्तरपदार्थप्राधान्याभावादिति*। प्राधान्यस्यान्यनिरूपितत्वनियमादिति भावः *द्योत्यार्थमिति*। द्योतकतावृत्त्युपस्थापितार्थमित्यर्थः। *तमेवेति*। द्योत्यमेवेत्यर्थः। *अर्थवत्त्वादिति*। अयम्भावः—द्योतकताया अपि वृत्तित्वेन तयाऽर्थवत्त्वस्य द्योतकेऽप्यक्षतत्वान्न तन्निबन्धनप्रातिपदिकसंज्ञानुपपत्तिः। न हि शक्तिलक्षणान्यतरदेवार्थोपस्थापकमिति वचनमस्तीति।

ननु शब्दादुपस्थितसामान्यस्य विशेषे पर्य्यवस्थापकत्वं द्योतकत्वम्, न तु तदुपस्थापकत्वमेवेति न तदादायार्थवत्त्वसम्भवोऽत आह—*वस्तुतस्त्विति*। *ज्ञापकादिति*। द्योतकतावादे तेषामनर्थकत्वादेव सुबभावे लुग्विधानमनर्थकं सदुक्तार्थे ज्ञापकमिति भावः।

ननु स्वरादीनां सत्त्ववचनानामपि सत्त्वात्तद्विहितसुब्लुग्विधाने चरितार्थस्य तस्य न ज्ञापकत्वमत आह—*निपातस्येति*। तद्वार्त्तिकप्रत्याख्याने त्वाह—*कृत्तद्धि-

तेति* । *सङ्ग्रह इति* । अनर्थकस्याऽपि निपातस्य प्रातिपदिकत्वमित्यर्थः । उपसंहरति—*तस्मादिति* । एतत्कल्पे मीमांसकसम्मतिमाह—*उक्तञ्चेति* । *चतुर्विध इति* । नामाख्यातोपसर्गनिपातभेदेन चतुःप्रकार इत्यर्थः । *पदे*—सुप्तिङन्तरूपे । *द्विविधस्य* । नामाख्यातस्वरूपस्य । अर्थनिरूपणे हेतुमाह—*संशयोत्पत्तेरिति* ।

नामार्थो जातिः, किं वा व्यक्तिः, धात्वर्थो व्यापार, फलं, किं वोभयमिति सन्देहे तन्निरूपणस्यौचित्यायातत्वादिति भावः । *तयोः*—निपातोपसर्गयोः । *व्यापारः*—शक्तिलक्षणान्यतररूपः । *तौ*—उपसर्गनिपातौ । *यदर्थद्योतकौ* । यदर्थविषयकतात्पर्यग्रहजनकौ । *तः*—नामाख्यातात्मकः शब्दः । तस्य च तिङ्कृत्तद्धितघटितत्वात्तदर्थोऽपि विचार्य्यत इत्यर्थः ।

यद्यपि स्वाद्यन्तत्वनिबन्धनं नामत्वमुपसर्गनिपातयोरपीति; तयोः पार्थक्येन निर्देशोऽनुचितः, तथापि लिङ्गसङ्ख्यानिष्ठप्रकारतानिरूपितविशेष्यताशाल्यर्थकत्वरूपपारिभाषिकनामत्वमादाय तथोक्तम् । उपसर्गाणां निपातत्वेऽपि तदुपादानं तु ब्राह्मणवसिष्ठन्यायेनेति बोध्यम् ।

ननु 'उपसर्गेण धात्वर्थ' इत्यत्र निपातत्वव्याप्योपसर्गत्वेन प्रादीनामुपादानात् कथं तच्चादीनां द्योतकत्वे उपष्टम्भकमत आह—*उपसर्गपदमिति* । *पदान्तरेति* । चन्द्र इव मुखमित्यादावर्थवत्त्वेन चन्द्रादीनामुपलक्षकमित्यर्थः । एवञ्च न तद्बलान्निपातानां वाचकत्वमिति भ्रमितव्यमिति भावः ।। ४६ ।।

अर्थ—शङ्का—निपात को द्योतक मानने पर अब्राह्मण इत्यादि स्थल में उत्तरपदार्थ के प्राधान्य होने पर तत्पुरुष समास कहा जाता है । इस नियम के भङ्ग होने से तत्पुरुष लक्षण की अव्याप्ति होगी । किसी के विशेषण होने पर ही किसी का प्राधान्य होता है । द्योतकता पक्ष में पूर्वपद में अर्थ न होने से नैरर्थक्य है । इसी प्रकार द्योतकत्व पक्ष में उपसर्ग में अर्थ न होने से अर्थवत्त्व का अभाव है । अत एव प्रातिपदिकसंज्ञा नहीं होने से विभक्ति भी उससे नहीं होगी ।

समाधान—नञ् समासे इत्यादि—नञ् समास स्थल में उत्तर पदार्थ की प्रधानता ( पूर्वपद के ) द्योत्य अर्थ की अपेक्षा होती है । द्योत्य अर्थ को मानकर ही ( अर्थवत्त्व होने से ) प्रातिपदिक के कारण विभक्ति उत्पन्न होती है ।

नञ् समासादि स्थल में जो उत्तरपदार्थ की प्रधानता है वह द्योत्य अर्थ को मानकर ही उसकी अपेक्षा है । उसी ( द्योत्य ) अर्थ के द्वारा ही अर्थवत्त्व होने के कारण निपात को प्रातिपदिक संज्ञा होती है ।

वस्तुतः यहां ( अर्थवत्त्व न होने से प्रातिपदिक संज्ञा न होने पर भी ) "अव्ययादाप्सुपः" इस सूत्र से लुक् विधान सामर्थ्य से सुप् की उत्पत्ति होगी ( अन्यथा अनर्थक होने से प्रातिपदिकसंज्ञा न होने से विभक्ति उत्पन्न नहीं होगी पुनः उसके लुक् विधान का क्या सार्थक्य है । अथवा अनर्थक निपात को प्रातिपदिक संज्ञा होती है इस अभिप्राय से किया गया "निपातस्यानर्थकस्य" इस वार्तिक से प्रातिपदिक संज्ञा हो जायगी । अथ वा "कृत्तद्धितसमासाश्च" इस सूत्र में अनुक्त अर्थ का समुच्चय करने वाले च कार से

निपातों का प्रातिपदिकत्व संगृहीत समझना चाहिये। इन सब कारणों से निपातों की द्योतकता युक्त है।

आकृत्यधिकरणवार्तिक में कहा भी है—

चार प्रकार के पद में दो प्रकार के पदों का अर्थ निर्णय संशय के कारण करते हैं। उपसर्ग और निपात के अर्थों का निर्णय नहीं करते हैं।

उपसर्ग और निपात के अर्थकथन में ( शक्तिलक्षणान्यतर रूप ) व्यापार नहीं है। उपसर्ग और निपात जिसके अर्थ के द्योतक हैं वह नामाख्यातरूप शब्द विचार का विषय है।

उपसर्ग के कारण एक धातु का अर्थ विभिन्न प्रकार का प्रतीत होता है। जिस प्रकार प्रहार आहार संहार विहार और परिहार इत्यादि स्थलों में भिन्न रूप से प्रतीत होता है।

कारिका में उपसर्ग पद निपात का और धातु पद पदान्तर का उपलक्षण समझना चाहिये ॥ ४६ ॥

हिन्दी भाष्य—

शङ्का—अब्राह्मण इत्यादि स्थल में नञ् के द्योतक होने से शक्ति-लक्षणान्यतर से उपस्थापित अर्थ के प्रति गुण प्रधानभाव होता है। इसलिये निपातार्थ उक्तरूप से उपस्थित नहीं होने से उसकी अपेक्षा उत्तरपद का प्राधान्य नहीं कहा जा सकता। इसी प्रकार उक्त रूप से उपस्थित अर्थ के द्वारा ही अर्थवान् को प्रातिपदिक संज्ञा का विधान होने से प्रातिपदिक संज्ञा भी नहीं होगी।

समाधान—शक्तिलक्षणा व्यञ्जना इन अन्यतम के द्वारा शक्य लक्ष्य तथा द्योत्य को अर्थ मानने से द्योत्य[1] अर्थ की अपेक्षा उत्तरपदार्थ की प्रधानता एवं द्योत्य अर्थ से अर्थवान् मानकर प्रातिपदिकसंज्ञा सिद्ध हो जाती है। अतः द्योतकता पक्ष में दोष नहीं है।

द्योतकत्व स्वसमभिव्याहृतपदनिष्ठशक्त्युद्बोधकत्वरूप है। उपसर्ग से समभिव्याहृत धातु की अनुभवाद्यर्थ निरूपित शक्ति का उद्बोधन होता है। द्योतकपद इस अर्थ का उपस्थापक नहीं होता ऐसी अवस्था में वृत्ति द्वारा अर्थोपस्थिति न होने से अर्थवत्त्व नहीं है इसलिये समाधानान्तर देते हैं।

स्वरादि और निपात को अव्ययसंज्ञा "स्वरादि निपातमव्ययम्" इस सूत्र से होती है। यदि निपात द्योतक होने से अर्थवान् नहीं है तो प्रातिपदिक संज्ञा न होने से सुप् विभक्ति की उत्पत्ति ही उनसे नहीं होगी। ऐसी अवस्था में सुप् के लुक् के लिये निपात को अव्यय संज्ञा की क्या आवश्यकता थी। अतः निपात को अव्यय संज्ञा विधान सामर्थ्य से विभक्ति की उत्पत्ति हो जायगी। मूल में लुक् विधान सामर्थ्य का कथन निपात को अव्यय संज्ञा के विधान का उपलक्षण है।

स्वरादिगण में सत्त्ववाची का भी पाठ होने से प्राप्त विभक्ति के लुक् के लिये लुक्विधान आवश्यक है। अतः मदुक्त युक्ति ही युक्त है। दूसरा उपाय "निपातस्य अनर्थकस्य" इस

---

१. उत्तरपदार्थ के प्राधान्य का तात्पर्य इतरपदार्थनिष्ठविशेषणतानिरूपित-विशेष्यताशालिबोधजनकत्व में है। इसमें इतरपदार्थ से वाच्य लक्ष्य के समान द्योत्य अर्थ का भी संग्रह होता है। अतः द्योत्यार्थ की विशेषणतानिरूपित उत्तरपदार्थ की विशेष्यता होने से तद्विषयकबोधजनकत्व होता है।

वार्तिक से प्रातिपदिकसंज्ञा करने से उक्त स्थान में दोष नहीं है। अथ वा "कृत्तद्धितसमासाश्च" इस सूत्र के चकार से निपात का संग्रह हो जाने के कारण प्रातिपदिकसंज्ञा का होना सुलभ है।

नाम आख्यात उपसर्ग और निपात के भेद से पद का चार भेद बताया है। यद्यपि सुबन्त मात्र नाम से गृहीत होने से उपसर्ग और निपात भी सुबन्त हैं। अत एव नाम से ही इनका संग्रह हो जाने से अलग उपादान अनावश्यक है तथापि लिङ्ग संख्यानिष्ठ प्रकारतानिरूपित जो विशेष्यता तद् शाली अर्थ के बोधक को नाम मानकर पृथक् उपादान है। उपसर्ग तथा निपात लिङ्ग संख्या में अनन्वयी हैं॥ ४६॥

नन्वन्वयव्यतिरेकाभ्यां निपातानां तत्तदर्थवाचकत्वमेव युक्तम्। बोधकतारूपशक्तेरबाधात्। किञ्चोक्तरीत्या पचतीत्यादौ धातोरेव कर्तृविशिष्टभावनायां लक्षणास्तु, तात्पर्य्यग्राहकत्वमात्रं तिङादेः स्यादित्यरुचेः पक्षान्तरमाह—

वाचकत्व

निपातानां वाचकत्वमन्वयव्यतिरेकयोः॥ दोनों पक्ष मानीय

युक्तं वा न तु तद्युक्तं परेषां मतमेव नः॥ ४७॥

एवञ्च धात्वर्थप्रातिपदिकार्थयोर्भेदेनान्वयबोधो न व्युत्पन्न इति निपातातिरिक्तविषयः। समानाधिकरणप्रातिपदिकार्थयोरभेदान्वय इत्यपि तथैत्यगत्या कल्पनीयमिति भावः। *न त्विति*। नैयायिकोक्तं प्रादिचाद्योर्वैषम्यमित्यर्थः।

यत्तु—सर्व्वेषां निपातानां वाचकत्वेऽर्थवत्सूत्रेणैव तेषां प्रातिपदिकत्वसम्भवाद्, "निपातस्यानर्थकस्य" इतिविधिवैयर्थ्यम्। सर्व्वेषां द्योतकत्वे "चानर्थकस्य" इति व्यर्थम्। तथा च केचिद् द्योतकाः, केचिद्वाचका इत्यभ्युपेयमिति। तन्न। एवं हि चादयो द्योतकाः प्रादयो वाचका इति वैपरीत्या वारणात् सर्व्वथानर्थकानां पादपूरणमात्रार्थमुपात्तानां संग्रहाय वार्त्तिकारम्भस्य कैयटादौ स्पष्टत्वात्। तस्य प्रत्याख्याततत्वाच्च।

परेषामिति बहुवचनं मीमांसकसङ्ग्रहाय। केवलवृक्षशब्दात् समुच्चयाबोधाच्चकारश्रवणे तद्बोधाच्चकार एव तद्वाचको न द्योतकः। किञ्च द्योतकत्वे पदान्तराणां तत्र शक्तिः कल्प्या, चकारादेर्द्योतकत्वशक्तिश्च कल्प्येति गौरवं स्यादिति हि समुच्चयाधिकरणे स्थितम्। तदपि न युक्तमिति भावः।

तथा हि—अन्वयव्यतिरेकौ तात्पर्य्यग्राहकत्वेनाऽप्युपयुक्तौ। घटादिपदानामेव समुच्चिते लक्षणा, तात्पर्य्यग्राहकः प्रकरणादिवच्चादिरिति स्वीकाराच्च शक्तिद्वयकल्पनापि। अस्माकं लक्षणाग्रहदशायां बोधात्तत्तत्कार्य्यकारणभाव आवश्यकः। एवं शक्तिग्रहस्यापीति पक्षद्वयेऽपि कल्प्यान्तराभावेन गौरवाभावादुभयमपि युक्तमित्यभिमतम्। अत एव—

"स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि वा"।

इति वाक्यपदीयं सङ्गच्छते। दर्शनान्तररीत्या वाचकत्वमेव द्योतकत्वमेव वेति नियमस्तु न युक्त इति ध्वनयन्नाह-*मतमेव न इति* ॥४७॥

इदानीं वाचकतापक्षं परिष्करोति—*नन्विति*। *अन्वयव्यतिरेकाभ्यामिति*। चन्द्र इव मुखमित्यादाविवादिनिपातसत्त्वे सादृश्याद्यर्थप्रतीतेस्तदसत्त्वे तदप्रतीतेश्च निपातानां घटादिपदवद्वाचकत्वमेव युक्तमित्यर्थः। नन्विच्छादिरूपशक्तेरभावात् कथं तेषां वाचकत्वमत आह—*बोधकतारूपेति*। तथा च तदर्थबोधकत्वमेव तद्वाचकत्वमिति तेषामपि घटादिपदवद्वाचकत्वमेवेत्यर्थः।

नन्वन्वयव्यतिरेकयोस्तदर्थतात्पर्य्यग्रहे उपयोगस्य प्रागभिहितत्वान्न तयोर्वाचकताप्रयोजकत्वमत आह—*किञ्चेति*। *उत्तरीत्येति*। अनन्यलभ्यस्यैव शब्दार्थतया प्रजयतीत्यादौ प्रकृष्टजयस्य लक्षणया जिधातोरेवोपस्थितौ न प्रादीनां प्रकर्षाद्यर्थकत्वं, तेषां तात्पर्य्यग्राहकतयैवोपयोगादित्युक्तरीत्येत्यर्थः। *तिङादेः स्यादिति*। तत्रान्वयव्यतिरेकाभ्यां कर्त्रादिवाचकत्वावधारणे तु प्रादीनामपि वाचकत्वावधृतिरिति भावः। परंतु 'अजर्घाः, अचकात्, इत्यादौ धातुमात्रात् कर्त्रादिबोधेन तिङा द्योतकत्वे इष्टैवापत्तिः।

नच तत्र लुप्तविभक्तिस्मरणाद् बोधः। लोपमजानतोऽपि बोधात् प्रत्ययलक्षणस्य लोपफलत्वं वदता भाष्यकृता लुप्तविभक्तिस्मरणाद् बोधस्यानभ्युपगमाच्च। यत्र प्रत्ययस्य वाचकता तत्रैव "प्रकृतिप्रत्ययार्थयोः" इति नियमावकाशो यथा 'पाचक' इत्यादिकृदन्ते। "लः कर्मणि" (पा० सू० ३।४।६९) इत्यादौ कर्मकर्तृविषयाद्धातोरित्यर्थान्न तद्विरोधः। "भावे" इत्यस्य सर्वैस्तथैव व्याख्यानात्।

नच सर्वत्रैव धातोर्भावनाविषयत्वात्तत्रैव लकारः स्यादिति शङ्क्यम्। भावविषयादित्यस्य केवलक्रियामात्रबोधकादित्यर्थेनादोषात्। अत एव "भावकर्मणोः" (पा० सू० १।३।१३) "शेषात्कर्त्तरि परस्मैपदम्" (पा० सू० १।३।७८) "द्व्येकयोः" (पा० सू० १।४।२२) इत्यादीनां नियम इति भाष्यकृदुक्तिसङ्गतिः। तेषामनिर्दिष्टार्थत्वेन "अनिर्दिष्टार्थाः स्वार्थे भवन्ति" इति न्यायेन सर्वत्र सिद्धत्वादित्याहुः।

तच्चिन्त्यम्—व्यतिसे इत्यादौ धातुं विनापि कर्तृबोधेनाद्ययुक्तेः शैथिल्यात्। तुल्ययुक्त्या सुपामपि द्योतकतापत्तेर्द्धातोर्द्विवचनाद्यनुपपत्तेश्च प्रत्ययलक्षणस्य लोपफलत्वेऽपि लुप्तविभक्तिस्मरणजन्यबोधस्य फलत्वाभ्युपगमे बाधकाभावाच्च। स्वोत्तरतिङ्वाच्यकर्त्रादिगतद्वित्वारोपेण द्विवचनादिरिति स्वोक्तविरोधाच्च।

भवदुक्तरीत्यैव कर्त्तृविशिष्टभावनावाचकात् कर्मविशिष्टभावनावाचकात् केवलभावनावाचकाच्च धातोर्लकारा भवन्तीत्यर्थे, "लः कर्मणि" इत्यर्थपर्यवसानेन, 'अनिर्दिष्टार्था' इति न्यायेनाऽपि तत्तत्कारकादिविशिष्टभावनाऽर्थकानां तिङां सर्वत्र सिद्धयसम्भवेन नियमस्यान्यथैव सङ्गमनीयत्वादित्यन्यत्र विस्तरः।

ननु निपातानां वाचकत्वे 'घटो न पट' इत्यादौ घटादेः प्रतियोगितया नञर्थाभावे तस्य चाश्रयतया घटादावन्वयोऽनुपपन्नः। भेदसम्बन्धेन प्रातिपदिकार्थप्रकारकबोधे विशेष्यतया प्रत्ययजन्योपस्थितेर्हेतुतया "नामाऽर्थयोर्भेदेनाऽन्वय" इति व्युत्पत्तिसिद्धत्वात्, एवं "समानाधिकरणनामोर्थयोः इति व्युत्पत्तेरभेदेनान्वयापत्तिश्चेत्यत आह—*एवञ्चेति*। *र्वाधवैयर्थ्यमिति*। तादृशवार्तिकेन प्रातिपदिकसंज्ञाविधानवैयर्थ्यमित्यर्थः। *अनर्थकस्येति*। *व्यर्थमिति*। व्यभिचाराभावेन तस्य विशेषणत्वायोगादिति भावः। *प्रत्याख्यातत्वाच्चेति*। "कृत्तद्धित" (पा० सू० १।२।४६) इत्यत्र चशब्देनैव तदर्थस्य समुच्चितत्वादिति भावः।

वक्ष्यमाणास्वरसादाह—*किञ्चेति*। प्रकरणादिवदित्यनेन द्योतकतया वृत्तित्वाभावो ध्वन्यते। *अस्माकमिति*। पक्षद्वयाभ्युपगन्तॄणामित्यर्थः। *कार्य्यकारणभाव इति* समुच्चितघटादिशाब्दबोधे घटपदनिरूपितलक्षणाज्ञानत्वेन हेतुतेत्याकारक इत्यर्थः। *शक्तिग्रहस्यापीति*। घटाद्यर्थबोधे घटशक्तिज्ञानस्य समुच्चयादिबोधे तच्छक्तिज्ञानस्य हेतुतेत्याकारकः कार्य्यकारणभावोऽप्यावश्यक इत्यर्थः॥

*कल्प्यान्तराभावेनेति*। द्योतकतापक्षेऽपि वाचकतापक्षेऽपि तत्तत्पक्षक्लृप्ताऽधिककल्पनीयाऽभावेनेत्यर्थः। *अत एवेति*। कल्प्यपक्षद्वये युक्तिसाम्यादेवेत्यर्थः। *स वाचक इति*। उपसर्गं प्रक्रम्येदं 'प्रतिष्ठत' इत्यत्र "गतिनिवृत्तिवाचकः स्थाधातुरुपसर्गस्तदभावरूपगतिवाचक" इति पुञ्जराजेन तदर्थस्य कथनात्। वाचकत्वमेवेत्यस्य निपातानामित्यादिः, एवं द्योतकत्वमेवेत्यस्योपसर्गाणामित्यादिः। *मतमेवेतीति*। *वा*। अथवाऽन्वयव्यतिरेकतो निपातानां वाचकत्वं युक्तम्। अस्माकं मते परेषां यदेकस्य वाचकत्वमपरस्य द्योतकत्वमिति मतं. तदेव तु न युक्तमिति मूलयोजना॥ ४७॥

अर्थ—इव शब्द के रहने पर सादृश्य की प्रतीति होती है (अन्वय) इव के न रहने पर सादृश्य की प्रतीति नहीं होती (व्यतिरेक) इनके द्वारा निपातों को ही उन उन अर्थों का वाचक मानना युक्त है। बोधकत्व शक्ति का इसमें अबाध है। इसी प्रकार पचति इत्यादि स्थलों में भी कर्तृविशिष्ट भावना में धातु की लक्षणा और तिङादि उसमें तात्पर्यग्राहकमात्र है ऐसा भी होने लगेगा। इस अरुचि से पक्षान्तर कहते हैं।

निपातानां वाचकत्वम्—उसके रहने पर उसका रहना अन्वय, उसके अभाव में न रहना व्यतिरेक इनके द्वारा निपातों को वाचक मानना चाहिये (द्योतक नहीं) प्रादि तथा चादि का वैषम्य (कुछ को वाचक कुछ को द्योतक) यह नैयायिकों का कथन युक्त नहीं है। दूसरों का (वाचकत्व या द्योतकत्व) जो मत है वही हमारा भी मत है। वैषम्य युक्त नहीं है। इस प्रकार धात्वर्थ प्रातिपदिकार्थ का भेद सम्बन्ध से अन्वय अयोग्य है, यह नियम निपातार्थ से अतिरिक्त (प्रातिपदिकार्थ) के लिये है। समानविभक्तिकपदोपस्थाप्य प्रातिपदिकार्थों का परस्पर अभेदान्वय नियम भी निपातार्थातिरिक्त विषय के लिये है, यह कल्पना करनी होगी। परन्तु नैयायिकोक्त प्रादि चादि का वैषम्य युक्त नहीं है। अर्थात् किसी को वाचक किसी को द्योतक इस प्रकार का भेद युक्त नहीं है।

यत्तु—किसी का मत है—यदि सभी निपात वाचक माने जायेंगे तो अर्थवत्सूत्र से ही सबको प्रातिपदिक संज्ञा सिद्ध होने से अनर्थक निपात को प्रातिपदिक संज्ञा विधान के लिये वार्तिक की क्या आवश्यकता थी। यदि सभी द्योतक ही हैं तब अनर्थक यह (निपात में) विशेषण व्यर्थ है (क्योंकि द्योतक होने से सभी निपात अनर्थक है) इसलिये किसी को द्योतक और किसी को वाचक मानना चाहिये।

यह कथन ठीक नहीं है। क्यों कि चादि द्योतक हैं प्रादि वाचक हैं, ऐसा विपरीत भी हो सकता है। पादपूर्तिमात्र के लिये उपात्त अनर्थकों के संग्रहार्थ वार्तिक का आरम्भ है ऐसा कैयटादि प्रणीत ग्रन्थ में स्पष्ट है।

अनर्थक को प्रातिपदिक संज्ञा के वचन का प्रत्याख्यान भी किया गया है।

"परेषाम्" इसमें बहुवचन मीमांसकों के संग्रह के लिये है। केवल वृक्षशब्द से समुच्चयार्थ की प्रतीति नहीं होती, चकार के उपादान करने से उसका बोध होता है। अतः चकार ही उसका वाचक है, द्योतक नहीं है। द्योतक मानने पर पदान्तर की उस अर्थ में शक्ति माननी होगी और चकारादि में द्योतकत्व शक्ति (सामर्थ्य) की कल्पना करनी होगी इस प्रकार इस मत में गौरव होगा। यह सब, मीमांसकों के समुच्चयाधिकरण में लिखा है। उनका ऐसा मत भी युक्त नहीं है।

अन्वय व्यतिरेक वाचकत्व का निर्णायक जिस प्रकार हो सकता है उसी प्रकार तात्पर्य का भी निर्णायक हो सकता है। घटादि पदों की समुच्चित में लक्षणा और प्रकरणादि के समान चादि तात्पर्य ग्राहक स्वीकार करने से दो शक्ति की कल्पना भी नहीं करनी होगी।

हमारे मत में लक्षणा ज्ञान की दशा में ही समुच्चय का बोध होने से समुच्चित घटादि शाब्दबोध में घटादिपदनिष्ठ लक्षणाज्ञान कारण हैं इस प्रकार का कार्यकारण भाव आवश्यक हैं। घटादि विषयकशाब्दबोध में समुच्चित घटादिविषयकशक्तिज्ञान की कारणता माननी होगी। इस प्रकार वाचकत्व और द्योतकत्व दोनों पक्षों में प्रत्येक पक्ष में निश्चित पदार्थ से अधिक की कल्पना नहीं होने से गौरव नहीं है। अतः दोनों पक्ष युक्त हैं, यह अभिप्राय है। इसीलिये उपसर्ग विशेषार्थ का (गतिनिवृत्तिवाचकस्था धातु प्र के योग में गतिनिवृत्ति के अभाव रूप गति का) वाचक है। अथवा द्योतक है इस आशय का वाक्यपदीय सङ्गत होता है। दर्शनान्तर की रीति से वाचकत्व ही है अथवा द्योतकत्व ही है, यह नियम युक्त नहीं है, इसी अर्थ को व्यक्त करते हुये कहते हैं—"मतमेव नः"।

फलितार्थ का उपसंहार करते हुये कहते हैं-निपातत्वं परेषाम्-दूसरों के मत में जैसा निपातत्व है वैसा ही हमारे मत में भी है। यह स्थिति अर्थात् मर्यादा है। शक्तता का अवच्छेदक अधिकदेशवृत्तित्वरूप व्यापकत्व होने से निपातत्व इष्ट है।

परेषाम्=दूसरों के यहाँ जो निपातत्व है असत्वार्थक होकर जिसका चादिगण में पाठ हो। अथवा शक्ति सम्बन्ध से निपातपदत्वरूप उपाधि या जातिरूप है। वही हमारे यहाँ भी निपातत्व हैं। परन्तु सामान्य धर्म में प्रमाणों के पक्षपात होने से शक्तता और द्योतकता निपातत्वावच्छेद से ही कल्पना करनी चाहिये। नैयायिकोक्त प्रादि चादि का वैषम्य सर्वथा अयुक्त है। व्यापकत्वात्—सामान्यात् अर्थात् अधिकदेशवृत्तित्वम्। शक्तताया यह द्योतकता का उपलक्षण है। यह भी समझना चाहिये॥ ४७॥

इति निपातार्थनिर्णयः।

हिन्दीभाष्य—"चन्द्र इव मुखम्", "अनुभवति" इत्यादि स्थलों में इव के रहने पर सादृश्य एवं अनु के रहने पर अनुभव की प्रतीति, उन दोनों के न रहने पर क्रमशः सादृश्य और अनुभव की अप्रतीति (अबोध) रूप अन्वय व्यतिरेक जिस प्रकार वाचकत्व के निर्णय में सहायक है, उसी प्रकार चन्द्र की चन्द्रसदृश में लक्षणा भूधातु की अनुभव विशिष्ट व्यापार में लक्षणा इसमें इव और अनु क्रमशः तात्पर्यग्राहक हैं। इस निर्णय में भी सहायक होने से निपातमात्र वाचक हों अथवा द्योतक हों, हमको दोनों पक्ष अभिमत है। परन्तु कुछ को वाचक, कुछ को द्योतक इस प्रकार का वैषम्य अभिमत नहीं है। अतः सभी वाचक या द्योतक इष्ट हैं।

शङ्का—उपसर्गरूप निपात को वाचक मानने पर "अनुभवति" इस स्थल में भूधातु सकर्मक नहीं होगी। अनुभवरूप फल धातु का अर्थ नहीं होने से धात्वर्थफल नहीं हुआ। अतः धात्वर्थफलव्यधिकरण व्यापार वाचित्वरूप सकर्मकत्व का अभाव है। इस दोष के परिहारार्थ—स्वस्वयुक्तनिपातान्यतरार्थफलव्यधिकरणव्यापारवाचकत्वरूप सकर्मकत्व मानने से धात्वर्थ नहीं होने पर भी स्वयुक्तनिपातार्थ फल हो जाता है। अतः सकर्मकत्व का लक्षण संघटित हो जाता है।

इसी प्रकार प्रत्ययों का स्वप्रकृत्यर्थ में अन्वय होता है इस नियम में प्रकृत्यर्थसमभिव्याहृतनिपातार्थ एवं प्रकृत्यर्थ के अन्यतर (किसी एक में) प्रत्ययार्थ का अन्वय होता है, ऐसा मानने से "प्रतिष्ठते" यहाँ प्र का अर्थ गति होने पर भी आख्यातार्थ कर्त्ता का अन्वय हो जाता है। यदि उपसर्ग प्र का फलमात्र अर्थ है, धातु का गति (व्यापार) अर्थ है तब व्युत्पत्ति में उक्त सङ्कोच की आवश्यकता नहीं है।

इसी प्रकार नामार्थप्रकारकभेदसंसर्गकशब्दबोध के प्रति प्रत्यय और निपात, इनमें से किसी एक से होने वाली उपस्थिति कारण है, ऐसा नियम करना होगा। अन्यथा "चन्द्र इव" यहाँ चन्द्र रूप प्रतिपादिकार्थ का इवार्थ सादृश्य में प्रतियोगितारूप भेदसम्बन्ध से अन्वय नहीं होगा। भेद से अन्वय के प्रति प्रत्ययजन्य उपस्थिति कारण है। यहाँ चन्द्र का साक्षात् इवार्थ में अन्वय विवक्षित है। मध्य में प्रत्ययार्थ का अभाव है। अतः अन्वय नहीं होगा। निपातातिरिक्त व्युत्पत्ति के मानने से निपातार्थ के साथ साक्षात् अन्वय नियम विरुद्ध नहीं है। इसीलिये केवल न से भी बोध होता है। अन्यथा द्योतक पक्ष में वाचक के समभिव्याहार के बिना निषेध का बोध नहीं होगा।

शङ्का—वाचक मानने पर प्र आदि केवल उपसर्ग का भी प्रयोग होना चाहिये।

समाधान—"ते प्राग्धातोः" इस सूत्र से पूर्व में ही उपसर्ग के प्रयोग का विधान है। अतः केवल का प्रयोग नहीं होता। नञ् आदि का केवल भी प्रयोग होता ही है। कुछ का केवल प्रयोग वाचक मानने पर भी नहीं होता। इसका कारण है शब्दों का स्वभाव। प्रत्ययवाचक होने पर भी प्रकृति के बिना प्रयुक्त नहीं होता। इसी प्रकार कुछ निपात केवल प्रयुक्त नहीं होता।

वाक्यपदीय में लिखा है—

प्रत्ययो वाचकत्वेऽपि केवलो न प्रयुज्यते ।

प्रत्यय वाचक होने पर भी केवल का प्रयोग नहीं होता।

"शोभनः समुच्चयः" इसके समान शोभनश्च ऐसा प्रयोग शब्दशक्तिस्वभाव से नहीं होता। नित्य परतन्त्र होने से दूसरे में विशेषण होकर ही अपने अर्थों का उपस्थापन कराने का इनका स्वभाव है॥ ४७ ॥

पर्य्यवसितमुपसंहरन्नाह—

निपातत्वं परेषां यत्तदस्माकमिति स्थितिः ।
व्यापकत्वाच्छक्तताऽयास्तवच्छेदकमिष्यते ॥ ४८ ॥

परेषां यन्निपातत्वम्—असत्त्वार्थकत्वे सति चाऽऽदिगणपठितत्वं शक्तिसम्बन्धेन निपातपदवत्त्वञ्चोपाधिर्वा जातिर्वा तदेवास्माकमपि। परन्तु सामान्यधर्मे प्रमाणानां पक्षपाताच्छक्तता द्योतकता वा तदवच्छेदेनैव कल्प्येति नैयायिकोक्तं प्रादिचाद्योर्वैषम्यमयुक्तमित्यर्थः। व्यापकत्वात्=सामान्यत्वात्। शक्तताया इत्युपलक्षणं द्योतकताया वेत्यपि द्रष्टव्यम् ॥ ४८ ॥

इति वैयाकरणभूषणसारे निपातानां द्योतकत्वादिनिर्णयः ॥ ८ ॥



ननु "चादयोऽसत्वे" (पा० सू० १।१।४७) इत्यत्राऽसत्व इति प्रसज्यप्रतिषेधाश्रयणेऽसमर्थसमासापत्तिर्वाक्यभेदापत्तिश्चेतिपर्य्युदास एवाश्रयणीयः। तथाचोक्तलक्षणस्याश्रयणेऽनर्थके तस्मिन्नव्याप्तिः। तावदन्यतमत्वस्य निवेशे तु गौरवमत आह-शक्तिसम्बन्धेनेति*। तस्य लक्ष्यताऽवच्छेदकत्वमभिप्रेत्याह—*जातिरिति*। निपातपदशक्यतावच्छेदकतया च तत्सिद्धिरिति भावः।

ननु हत्वादिना साङ्कर्य्यान्न निपातत्वं जातिः। तथाहि—निपातत्वाभाववति हत्वं धात्वादिहकारे, हत्वाभाववति निपातत्वं निपातात्मकचकारे; तयोरेकत्र हकारे समावेशात्। तद्दूषकताबीजं तु स्वसामानाधिकरण्यस्वाभावसामानाधिकरण्योभयसम्बन्धेन जातिविशिष्टजातित्वावच्छेदेन स्वसमानाधिकरणाभावाप्रतियोगित्वनियमभङ्ग एव। निरुपाधिसहचारग्रहश्च तादृशनियमेऽनुकूलस्तर्कः। अन्यथा तन्मात्रबलप्रवृत्तानां 'सत्तावान् जातेः' इत्याद्यनुमानानां विलयप्रसङ्गात्। अत एव 'भूतत्वं न जातिः' इति साम्प्रदायिकाः।

हत्वादिव्याप्यनिपातत्वस्य नानात्वाभ्युपगमेन साङ्कर्य्यस्य परिहारेऽपि सकलचादिसाधारण्याभावेनाननुगततया तस्यैवासिद्धिर्निष्प्रमाणत्वात्। किञ्च कार्यतावच्छेदकत्वादीनां जातित्वसाधकानां तत्राभावादपि न सा जातिः। शक्यतावच्छेदकत्वं तु न तत्साधकम्। अभावत्वविभुत्वादीनामपि जातित्वापत्तेः। अत एव गुणदीधितौ गुणत्वस्य जातित्वं दीधितिकृता खण्डितमत आह—*उपाधिर्वेति*। सामान्ये व्यापकधर्म इत्यर्थः।

अयम्भावः—उपसर्गेषूभयमतेऽपि द्योतकत्वे वाचकत्वे वा कल्पनीये तद्धर्मिवृत्तितयोपस्थितोपसर्गत्वनिपातत्वयोरुभयोर्धर्मयोर्मध्ये द्योतकत्वादिकमुपसर्गत्वावच्छेदेन कल्प्यमुत निपातत्वावच्छेदेनेति संशये अवच्छेदकनिर्णिनीषायां व्यापकतया निपातत्वावच्छेदेनैव तत् कल्प्यते। सङ्ग्राहकलाघवात्। अत एवेश्वरानुमाने कर्त्तृजन्यत्वं

घटत्वादिनावच्छिद्यते, उत कार्यत्वेनेत्यवच्छेदकजिज्ञासायामुक्तलाघवात् कार्य्यत्वमेकं तदवच्छेदकं, न तु घटत्वादिकमिति न्यायसिद्धान्त इति।

अत्र वदन्ति—प्रमाणानां सामान्यधर्मस्यावच्छेदकतायां तत्र पक्षपातो, यत्र च बहूनां धर्माणामवच्छेदकत्वकल्पनाप्रयुक्तं गौरवम्। यथा कर्त्रजन्यत्वानुमाने कृतिजन्यतायां घटत्वाद्यपेक्षया कार्य्यत्वस्य। यत्र तु विशेषोऽप्येक एव तत्रोक्तयुक्तिविरहात् तस्यैवावच्छेदकत्वम्। अत एव व्यापारत्वस्याऽधिकसंग्राहकत्वेऽपि कृतित्वस्यैवाख्यातशक्यतावच्छेदकत्वम्। स्वीकृतं च मीमांसकैरपि द्रव्यप्रत्यक्षत्वं विहाय द्रव्यचाक्षुषत्वस्यैव रूपकार्य्यतावच्छेदकत्वम्। प्रकृते व्यापकत्वान्निपातत्वस्याधिकसंग्राहकत्वेऽपि व्यापकस्योपसर्गत्वस्याप्येकत्वेन तस्यैवावच्छेदकत्वमुचितम्। ननु निपातत्वस्य, अद्योतकेऽवाचके पादपूरणमात्राऽर्थके वृत्तित्वेनातिप्रसक्तत्वात्। 'प्रादयो द्योतकाः, उपसर्गत्वात्' इत्यनुमानाच्च।

नच प्रादीनां द्योतकता निपातत्वलिङ्गेनैव सेत्स्यतीति वाच्यम्। तस्योपसर्गत्वरूपोपाधिमत्तया तदसाधकत्वात्। नच चेष्टादौ साध्याऽव्यापकत्वान्न तस्योपाधित्वमिति वाच्यम्। शुद्धसाध्याव्यापकत्वेपि साधनावच्छिन्नसाध्यव्यापकत्वसम्भवात्। अस्ति हि निपातत्वावच्छिन्नं द्योतकत्वं यत्र तयोपसर्गत्वम्। यत्र निपातत्वं नञादौ तत्र तदभावाद्। ननु प्रकर्षाद्यर्थः प्रादिवाच्यः। तदन्वयव्यतिरेकानुविधायिशाब्दधीविषयत्वात्, यो यदन्वयव्यतिरेकानुविधायिशाब्दधीविषयः स तद्वाच्य इति सामान्यव्याप्तौ घटादिर्दृष्टान्तः।

नचानन्यलभ्यत्वमुपाधिः। तस्य वाच्यत्वरूपसाध्यव्यापकत्वात् कर्त्रादौ आख्यातान्वयव्यतिरेकानुविधायिशाब्दधीविषये साधनाऽव्यापकत्वादिति वाच्यम्। उक्तहेतुघटकशाब्दबुद्धेराक्षेपाद्यजन्यत्वेन विशेषणेनानन्यलक्ष्यत्वस्य साधनव्यापकत्वेनोपाधित्वायोगात्।

नच स्वरूपाऽसिद्धिः। धातोरेव प्रकृष्टजयाऽर्थकत्वेनोपसर्गस्य तात्पर्यमात्रग्राहकत्वादिति वाच्यम्। धातोः प्रकृष्टजयार्थकत्वस्य ग्रन्थकृतैव खण्डनात्। नापि लक्ष्यता तस्य। प्रोत्तरत्वादेर्लक्षकतावच्छेदककोटिप्रवेशे गौरवात्। तस्माज्जयत्यादिधातोः शक्यतावच्छेदकम्, प्रकर्षत्वादिकं तूपसर्गस्येति वाच्यम्। तथाच क्व हेत्वसिद्धिः। किञ्चार्थस्य धातुलक्ष्यत्वे जिपूर्वप्रत्वेनापि विनिगमनाविरहाल्लक्षकतावच्छेदकोटौ निवेशापत्तिः। नाऽपि तदर्थस्य धात्वर्थेन साकमनन्वयप्रसङ्गः। निपातातिरिक्तत्वस्योक्तव्युत्पत्तौ विशेषणात्। एवञ्च 'प्रतिष्ठत' इत्यादौ धातोर्गत्यभावोऽर्थः तदभावश्चोपसर्गार्थः।

तथाच ततो गत्यभावाभाववानिति धीः, गमनत्वप्रकारकबोधस्तूत्तरकालिको मानस एवेति चेद्? न। 'प्रत्ययानाम्' इति व्युत्पत्तेर्जागरूकतया गमनाभावाभाववानिति बोधस्यापि गगनकुसुमायमानत्वात्॥

किञ्च तथा बोधाङ्गीकारे तादृशस्थले प्रादीनामुपसर्गत्वमपि दुर्घटम्। क्रियाया

अविशेषकत्वात्। क्रिया ह्यत्रोपसर्गार्था भावविशेषिका, न तूपसर्गार्थो गत्यभावविशेषकः। स्वादीनां द्योतकताव्यवस्थापनोक्तरीत्याप्युपसर्गाणां साऽवसेयेति। निपातानां तु केषाञ्चिद् वाचकत्वम्। तत्र नञर्थो निरूपितः। चार्थश्च समुच्चयादिभेदेन चतुर्विध इति, "चार्थे द्वन्द्वः" ( पा० सू० २।८।८६ ) इत्यत्राकरेषु व्यक्तमेव।

इवार्थस्तु सादृश्यम्। तच्च तद्भिन्नत्वे सति तद्गतधर्मवत्त्वम्। यत्तु सादृश्यं न भेदघटितमिति, तन्न। तावतापि "नञिवयुक्तम्" इति परिभाषणेन तस्यैवार्थत्वानपायात्। तद्बोधे त्वनुयोगिप्रतियोगिवाचकपदयोः समानविभक्तिकत्वं नियामकम्। नातश्चन्द्र इव मुखमित्यर्थे चन्द्रणेव मुखमिति साधु।

एवकारस्य त्वन्ययोगव्यवच्छेदोऽयोगव्यवच्छेदोऽत्यन्तायोगव्यवच्छेदश्चार्थः। तत्र विशेष्यगतैवस्थले 'पार्थ एव धनुर्द्धरः' इत्यादावन्यतादात्म्यव्यवच्छेदोऽर्थः। अन्यत्वं च—समभिव्याहृतपदार्थापेक्षिकम्। तथा च पार्थान्यतादात्म्याभाववद्धनुर्द्धराभिन्नः पार्थ इति बोधः। पृथिव्यामेव गन्ध इत्यत्र पृथिव्यन्यसमवेतत्वाभाववान् पृथिवीसमवेतश्च गन्ध इति बोधः। अत्र भावान्वयबोधानुपगमे पृथिव्यामेवाकाशमित्यपि प्रसज्ज्येत। एवञ्चैवकारेणान्ययोगव्यवच्छेदबोधे विशेष्यवाचकपदविशेषणवाचकसप्तम्यन्तान्यतरसमभिव्याहारो नियामकः। विशेषणसङ्गतैवस्थलेऽयोगव्यवच्छेदः। 'शङ्खः पाण्डुर एव' इत्यादौ शङ्खत्वावच्छेदेन पाण्डुरवत्त्वसमवायाभावव्यवच्छेदबोधात्। 'नीलं सरोजं भवत्येव' इत्यादौ क्रियासङ्गतैवस्थलेऽत्यन्तायोगव्यवच्छेदोऽर्थः॥

अत्र केचित्—अयोगे आत्यन्तिकत्वं व्यवच्छिद्यते। तच्चान्वयितावच्छेदकव्यापकत्वम्। खण्डशश्च तत्र शक्तिः। तथाचोक्तस्थले सरोजनिष्ठाभावप्रतियोगिनीलभवनाभाव इति बोध इति वदन्ति॥

वस्तुतस्त्वन्ययोगव्यवच्छेदाऽयोगव्यवच्छेदयोरेवैवकारस्य शक्तिः। अन्वयितावच्छेदकावच्छेदेनायोगव्यवच्छेदबोधे ग्रहणाऽध्ययनार्थकधातुसमभिव्याहारस्यापि नियामकत्वाज्ज्ञानमर्थं गृह्णात्येवेत्यादिवन्न ज्ञानं रजतं गृह्णात्येवेत्यादिप्रयोगः। क्रियान्तरसमभिव्याहारे तु प्रायः सामानाधिकरण्येन तद्ज्ञानम्। इत्थञ्चान्वयितावच्छेदकसामानाधिकरण्येनान्ययोगव्यवच्छेदोऽत्यन्तायोगव्यवच्छेदः, अन्वयितावच्छेदकावच्छेदेन त्वयोगव्यवच्छेद इति व्यवह्रियते। विस्तरस्त्वन्यतोऽवधार्य्यः।

'क्वेव भोक्ष्यसे' इत्यादावसम्भावनाऽपि तदर्थः। एवमन्येषामपि सार्थकानां निपातानामर्था ऊह्याः। वैयाकरणमते त्वेवकारस्य वाचकत्वासम्भवादवधारणात्मकज्ञानविशेषद्योतकत्वमेव। स च समभिव्याहृतपदार्थानुरोधादनेकविधः। यथा ज्ञानमर्थं गृह्णात्येवेत्यत्रावच्छेदकावच्छेदेनाऽर्थग्रहणाभावानधिकरणज्ञानप्रकारकज्ञानविषयो ज्ञानकर्तृकमर्थकर्मकं ग्रहणमिति बोधादुक्तपदार्थघटितः सः। परन्त्वनेकधात्वादीनां तत्तदर्थे वृत्तिकल्पनापेक्षयैवकारस्यैव सोचितेत्यन्ये।

यद्यप्युपसर्गं प्रक्रम्य—

स वाचको विशेषाणां सम्भवाद् द्योतकोऽपि च।

इति हरिणा पक्षद्वयमविशेषेणोक्तम् ; ग्रन्थकृता च तदेवानुसृतम् । तथापि

क्वचित् सम्भविनो भेदाः केवलैरनिदर्शिताः । वाक्यप० का० २

उपसर्गेण सम्बन्धो व्यज्यन्ते प्रपरादिना ॥ १८६

इति तदुक्तोपसंहृतिपर्य्यालोचनयोपसर्गाणां द्योतकत्वमेवाऽवसीयते ।

अत्रेदं बोध्यम्—उपसर्गत्वाद्यजानतोऽपि प्रजयतीत्यादौ प्रकृष्टजयबोधात् प्रत्वादिनैव तेषां द्योतकत्वम् । निपातानामपि चत्वादिनैव बाचकता; यत्र न वाचकतामन्तरेण निर्वाहः । क्वचिद् द्योतकत्वमप्युक्तयुक्त्यानभ्युपगम्ये तथा "शरैरुस्रैः" इत्यादौ । क्वचिन्नोभयम् । यथा पादपूरणमात्रार्थके त्वादौ ।

तदुक्तम्—निपाता द्योतकाः केचित् पृथगर्थाभिधायिनः । वाक्यप० का० २

आगमा इव केऽपि स्युः सम्भूयाऽर्थस्य वाचकाः ॥ इति । १९२

केचिदित्युभयाऽन्वयी । न तूपसर्गत्वेन प्रादीनां, निपातत्वेन चादीनां द्योतकता वाचकता चेति स्थितेरुपसर्गत्वावच्छेदेन द्योतकता, न निपातत्वावच्छेदेनेति विवादः सिद्धान्तानालोचनमूलक एव । कर्मप्रवचनीयानां तु नोपसर्गवत् क्रियाविशेषकत्वम् ; किन्तु क्रियागतसम्बन्धविशेषकत्वम् । कर्म = क्रियां प्रोक्तवन्तः कर्मप्रवचनीया इत्यन्वर्थसंज्ञाविज्ञानात् । अधिपर्योस्तु सूत्रारम्भसामर्थ्यादेव सा । 'जपमनुप्रावर्षत्' इत्यत्र हेतुभूतजपनिरूपितलक्षणभावसम्बन्धस्य वर्षणक्रियानिष्ठस्यामुनाद्योतनात् , एवमन्यत्रापि ज्ञेयम् । अत एव न तेषामुपसर्गत्वम् क्रियागतविशेषद्योतकी ह्युपसर्गः ।

उक्तञ्च हरिणा—क्रियाया द्योतको नाऽयं सम्बन्धस्य न वाचकः । वाक्यप० का० २

नाऽपि क्रियापदाऽऽक्षेपी सम्बन्धस्य तु भेदकः ॥ इति । २।४

तदर्थस्तु—कर्मप्रवचनीयसंज्ञकोऽन्वादिः; प्रजयतीत्यादावुपसर्गवन्न क्रियागतविशेषस्य द्योतकः । विभक्त्यर्थबोधत्वाच्च न सम्बन्धस्य वाचकः । नाऽपि, "प्रादेशं विलिखति' इत्यादौ विशब्दवत् क्रियाक्षेपकः । तत्र विना मानक्रियाक्षेपात् । तथा सति तत्तत्क्रियानिबन्धना कारकविभक्तिरेव स्यात् । किन्तु विशिष्टक्रियाजनितो यः सम्बन्धो विभक्त्यर्थ इति तद्द्योतकः । प्रादेशं विमाय लिखतीत्यर्थप्रतीतेरित्यधिकमन्यतोऽवधार्य्यम् ॥ ४८ ॥

इति भूषणसारदर्पणे उपसर्गनिपातार्थनिरूपणम् ॥ ८ ॥



अर्थ—"प्रादि" और "चादि" इन दोनों के वाचक मानने पर उपसर्गत्व और निपातत्व दो शक्तावच्छेद होने से गौरव होगा । उपसर्ग को द्योतक मानने पर वाचकतावच्छेदक एक ही होने से लाघव होता है इस शङ्का का समाधान करते हैं—

"निपातत्वं परेषां यत्" इत्यादि से दूसरों के मत में निपातत्व जातिरूप या उपाधिरूप जैसा माना जाता है उसी प्रकार हमारे मत में भी निपातत्व की स्थिति अर्थात् मर्यादा है ।

उपसर्ग निपात के अन्तर्भूत होने से निपातत्व उपसर्गत्व की अपेक्षा व्यापक हैं। अतः उपसर्ग के वाचक होने पर भी वाचकताच्छेदक निपातत्व ही होगा, उपसर्गत्व नहीं होगा। अतः गौरव नहीं है।

हिन्दीभाष्य—"चादयोऽसत्त्वे" इस सूत्र में असत्त्वपद प्रसज्यप्रतिषेधार्थक मानने पर चादि को निपात संज्ञा होती है। सत्त्वार्थवाले चादि को निपात संज्ञा नहीं होती है, इस प्रकार दो वाक्य होने से गौरव होगा इसलिए पर्युदास मानते हैं। इस पक्ष में असत्त्वार्थक चादि को नियात संज्ञा होती हैं इस प्रकार एक ही वाक्य होता है। अतः लाघव से पर्युदास पक्ष मानने पर अनर्थक चादि के निपात संज्ञा नहीं होगी। पर्युदास पक्ष में सत्त्व से भिन्न अर्थ होने पर ही असत्त्वार्थक को निपात संज्ञा होगी, अनर्थक को नहीं होगी। इसलिए कहते है—शक्ति ईश्वरेच्छाया बोधकतारूपा है। उस सम्बन्ध से निपातपदवत्त्व को शक्तता का अवच्छेदक मानते हैं।

तादृशपदत्त्व पदरूप होने से शक्ततावच्छेदक पद अनन्त होने से गौरव होगा इसलिए कहते है निपातत्व जातिरूप है।

शङ्का—व्यक्तेरभेदस्तुल्यत्वं सङ्करोऽथानवस्थितिः इत्यादि जाति के बाधक हैं। इसमें सङ्कर का भी जातिबाधकरूपसे निर्देश है। परस्पर का जो अत्यन्ताभाव उसके साथ सामानाधिकरणवाले धर्मों का एक में समावेश साङ्कर्य है। "ह" यह निपात है और अक्षर भी है। निपातत्वाभाववान् दृष्टिघटक हकार में हत्व है, निपातत्व नहीं है। च वा ह इत्यादि हत्वाभाववान् स्थल में निपात है, हत्व नहीं है। इस प्रकार अत्यन्ताभाव समानाधिकरण हत्व और निपातत्व का एकत्र ह निपात में समावेश होने से सांकर्य हो जाता है। अतः निपातत्व जाति नहीं होने के कारण उपाधि कहते हैं। निपातत्व उपाधिरूप है।

उपसर्ग में द्योतकत्व अथवा वाचकत्व मानने पर उपसर्गत्वावच्छेदेन द्योतकत्व या वाचकत्व की कल्पना अथवा निपातत्वावच्छेदेन उसकी कल्पना है। इस सन्देह में व्यापक धर्म में प्रमाणों का पक्षपात है इस नियम से निपातत्वव्यापक धर्म से ही द्योतकत्व या वाचकत्व की कल्पना उचित है। सर्वथा वैषम्य अयुक्त है। विशेष अन्यत्र देखिये।

निपात द्योतक हैं—इस पक्ष में कविसम्प्रदाय सिद्ध व्यञ्जना वृत्ति द्वारा व्यञ्जकत्व अभिमत है या नहीं यह विचार प्रस्तुत है।

भूषणसार एवं उनकी टीकाओं से स्पष्ट निर्द्धारण नहीं होता। "तमेवार्थमादाय अर्थवत्त्वात्प्रातिपदिकत्वमिति" यह निपातार्थ निरूपण में सार की पङ्क्ति है। द्योत्य अर्थ के द्वारा निपात अर्थवान् होने से प्रातिपदिक संज्ञक होता है यह अर्थ है। दर्पणकार ने इस का स्पष्टीकरण इस प्रकार से किया है—द्योतकताया अपि वृत्तित्वेन तथार्थवत्त्वस्य द्योतकेप्यक्षतत्वान्न तन्निबन्धनप्रातिपदिकसंज्ञानुपपत्तिः। द्योतकता भी वृत्ति है अतः द्योतकों में भी अर्थवत्व अक्षत होने से प्रातिपदिक संज्ञा की अनुपपत्ति नहीं है। दर्पण में आगे लिखा कि शक्ति और लक्षणा ये दो ही अर्थोपस्थापक नहीं है।

मूल की व्याख्या करते हुए काशिकाकार लिखते हैं कि अर्थबोधजनकज्ञानविषयत्वमेव अर्थवत्त्वमर्थवत्सूत्रे निविष्टं न तु वृत्त्या अर्थबोधजनकत्वरूपमतो नानुपपत्तिरिति भावः। इसका भाव यह है कि अर्थबोध के जनक ज्ञान के विषय को अर्थवान् मानते हैं,

वृत्ति द्वारा अर्थ बोधजनक ज्ञान के विषय को नहीं। इससे यह स्पष्ट होता है कि द्योतकत्व पक्ष में व्यञ्जनावृत्ति द्वारा निपात से अर्थ की उपस्थिति नहीं है।

दर्पणकार भी आगे लिखते हैं कि—शब्दादुपस्थितसामान्यरूप विशेषपर्यवस्थापकत्वं द्योतकत्वं न तु तदुपस्थापकत्वमेवेति न तदादाय अर्थवत्वसम्भवः = शब्द से उपस्थित सामान्य का विशेष में पर्यवस्थापन द्योतकत्व है, अर्थोपस्थापकत्वरूप नहीं है। अतः द्योत्यार्थ के द्वारा अर्थवत्व नहीं है। इसीलिए मूल में वस्तुतः इसके द्वारा समाधानान्तर दिया है।

काशिका, दर्पण तथा "वस्तुतः" इससे समाधाता मूल के देखने से द्योतकत्व के द्वारा व्यञ्जना वृत्ति अभिमत नहीं है।

वस्तुतः इसके द्वारा प्रतिपादित समाधान को वास्तविक कहने से पूर्व समाधान में अवास्तविकता स्वतः सिद्ध हो जाती है अर्थात् उसमें अरुचि है।

द्योतकत्व स्वसमभिव्याहृतपदनिष्ठशक्त्युद्बोधकत्वरूप है। अतः धात्वर्थ शक्तिका उपसर्ग उद्बोधक मात्र है।

स्फोटाभिव्यञ्जक वर्णों में ध्वनि का व्यवहार वैयाकरणों ने किया है। अतः हम लोग (कवि लोग भी) व्यञ्जक को ध्वनि कहते हैं। (ध्वन्यालोक) स्फोट के व्यञ्जन के लिये क्या व्यञ्जना वृत्ति वर्णों में वैयाकरण मानते हैं। व्यञ्जना जो वर्ग में उपसर्ग में साहित्य में मानी गई हैं वह इससे भिन्न रूप है। वर्णमात्र से किसी प्रकार का अर्थबोध होता हो या न होता हो उसकी अपेक्षा स्फोट व्यञ्जन में नहीं है। वर्णमात्र से प्रकृतार्थ में वैशिष्ट्य ध्वनित होता है। उपसर्ग के द्वारा प्रकृत्यर्थ के उद्बुद्ध अर्थ को उपसर्ग का मानकर उपसर्ग का द्योत्य अर्थ कहा जाता है।

परिभाषा ध्वनित होती है ऐसा कहते हैं। यहाँ क्या व्यञ्जना व्यापार से ध्वनन विवक्षित है।

इन सब युक्तियों को देखते हुये द्योतकत्व पक्ष में भी व्यञ्जनावृत्ति आवश्यक नहीं है। अतएव व्यञ्जना कविगृह में ही शोभा पाती है।

इति निपातार्थ निर्णयः



---

१. परस्परात्यन्ताभावसमानाधिकरणधर्मयोरेकत्र समावेशः सङ्करः, मुक्तावली टीका। भूतत्वाभाव मन में है वहाँ मूर्तत्व नहीं है। आकाश में मूर्तत्वाभाव है वहाँ भूतत्व है, इस अत्यन्ताभाव के साथ सामानाधिकरण दोनों का पृथिवी आदि में (दोनों का समावेश) है। अतः भूतत्वमूर्तत्व ये दोनों जाति नहीं है।

# अथ त्वादिभावप्रत्ययार्थनिर्णयः

भावप्रत्ययार्थमाह—

कृत्तद्धितसमासेभ्यो मतभेदनिबन्धनम् ।
त्वतलोरर्थकथनं टीकायां हरिणा कृतम् ॥ ४९ ॥

"कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भावप्रत्ययेनाऽन्यत्र रूढ्यभिन्नरूपाव्यभिचरितसम्बन्धेभ्य-" इति वार्त्तिकवचने मीमांसकादीनां भ्रममपाकुर्वन्नाह—*टीकायामिति* ॥ भर्तृहरिणा महाभाष्यटीकायामित्यर्थः ॥ त्वतलोरिति भावप्रत्ययमात्रोपलक्षणम् ।

अयमर्थः—समासादौ शक्तिः कल्प्यमाना राजादिसम्बन्धविशिष्टे कल्प्यत इत्युक्तम् । तथाच तदुत्तरभावप्रत्ययः सम्बन्धं वदतीत्यर्थः । एतदपि भेदः संसर्ग उभयं वेत्युक्तेषु भेदपक्षे न सम्भवतीत्यत आह—*मतभेदेति* ॥ पक्षभेदे इत्यर्थः ।

एवञ्च राजपुरुषत्वम्, औपगवत्वं, पक्तृत्वमित्यादौ स्वस्वामिभावसम्बन्धः, उपगवपत्यसम्बन्धः, क्रियाकारकभावसम्बन्ध इत्यन्वयबोधः । औपगवादावव्यभिचरितसम्बन्धे तु अर्थान्तरवृत्तिस्तद्धित उदाहार्य्यः ।

दामोदरत्वं, कृष्णसर्पत्वमित्यादौ जातिविशेषेण बोधादाह—*अन्यत्रेति* । रूढेरभिन्नरूपादव्यभिचरितसम्बन्धेभ्यश्चान्यत्रेत्यर्थः । रूढिरुक्ता । द्वितीयं यथा शुक्लत्वम् । अत्र "तदस्यास्त्यस्मिन्" ( पा० सू० ५।२।९४ ) इति मतुपो "गुणवचनेभ्यो मतुपो लुगिष्टः" ( का० वा० ) इति लुप्तत्वात् तद्धितान्तत्वेऽपि, घटः शुक्ल इत्यभेदप्रत्ययाद्गुणस्यैव प्रकारत्वेन भानं जायते । तृतीयम्—सतो भावः सत्तेति । अत्र जातावेव प्रत्यय इति दिक् ॥ ४९ ॥

प्रक्रान्ते नामार्थनिरूपणे नामघटककृत्तद्धितानामर्थमुपोद्घातसङ्गत्या निरूपयिष्यन्नादौ प्रकृत्यर्थप्रकारत्वाद्भावप्रत्ययार्थनिरूपणमित्याशयेनाह—*भावेति* । ष्यञ्वुञादेरपि सम्बन्धरूपभावबोधकत्वात् तत्संग्रहार्थमाह—*त्वतलोरिति* । *भावप्रत्ययेति* । भावविहिततद्धितप्रत्ययेत्यर्थः । हरिवाक्यं विवृणोति—*अयमर्थ इत्यादिना* । इत्युक्तमित्यस्य समासशक्तिनिरूपणावसर इति शेषः । *सम्बन्धमिति* । उत्तरपदार्थे पूर्वपदार्थसम्बन्धस्यैव धर्मत्वेन भासमानत्वादिति भावः ॥ *भेदपक्ष इति* । तत्पक्षे हि 'राजपुरुष' इत्यत्राऽराजकीयभिन्नः पुरुष इति बोधेन पुरुषांशे राजसम्बन्धाभानादिति भावः ॥ *उपगवपत्यसम्बन्ध इति* । उपगवपत्ययोर्जन्य-

जनकभावात्मक: सम्बन्ध इत्यर्थः ।। *अन्वयबोध इति* । तत्तत्पदोत्तरभावप्रत्ययस्य तत्तत्सम्बन्धवाचकत्वादिति भावः ।

*अव्यभिचरितसम्बन्धे त्विति* ।। अव्यभिचरितसम्बन्धरूपजात्यैवभानोपगमे तु इत्यर्थः । तुशब्दसूचिताऽरुचिबीजं तु, "तस्याऽपत्यम्" (पा० सू० ४।१।८२) इत्यनेन षष्ठीप्रकृत्यर्थोपगवादिसम्बन्धेऽपत्येऽणादीनां विधानेन षष्ठ्यर्थसम्बन्धान्तर्भावेणैव तत्रैकार्थीभावस्योपगन्तव्यतया तत्रापत्याद्यंशे संसर्गस्यैव प्रकारतया तस्यैव तदुत्तरभावप्रत्ययार्थत्वेन जातेस्तद्वाच्यत्वासम्भवादिति ।। *अर्थान्तरवृत्तिरिति* । धात्वर्थघटितार्थवृत्तिराक्षिकाद्यन्तर्गतठगादिरित्यर्थः । तदर्थे कर्त्रादौ देवनादिरूपक्रियायाः क्रियाकारकभावसम्बन्धस्य प्रकारतया भानादित्याशयः ।। *रूढेरिति* । कथमप्यज्ञातयोगादर्थविशेषप्रसिद्धादित्यर्थः ।। *अभिन्नरूपादिति* । प्रत्ययान्तत्वेऽपि प्रत्ययलुका प्रकृतिसमानाऽऽकारात् "शिष्यमाणं लुप्यमानाऽर्थाभिधायि" इति न्यायेन प्रकृत्यर्थान्वितप्रत्ययार्थाभिधायिन इत्यर्थः । *अव्यभिचरितसम्बन्धेभ्य इति* ।। अव्यभिचरितो व्यक्तिनिष्ठाऽत्यन्ताभावाप्रतियोगी, सम्बन्धः–समवायात्मको यस्य जात्यादेस्तद्विशिष्टवाचकादित्यर्थः । नाऽतः पाकादिना नाशेन स्वाश्रयनिष्ठाऽप्रतियोगिना–तत्त्वम् ।। *उक्तेति* ।। दामोदरत्वमित्यादौ जातिविशेषेण भानादिति ग्रन्थेनेत्यर्थः ।। *द्वितीयं यथेति* ।। अभिन्नरूपोदाहरणं यथेत्यर्थः । तद्धितान्तत्वेऽपीत्यपिना तदुत्तरभावप्रत्ययेन सम्बन्धाभिधानं प्राप्नोतीति सूचितम् ।। *अभेदप्रत्ययादिति* ।। इदञ्च षष्ठ्यर्थे विहितस्य मतुपः सम्बन्धाऽर्थकत्वशङ्कानिरासाय । तृतीयमित्यस्योदाहरणं यथेति शेषः ।

*सत इति* ।। सच्छब्दजन्यबोधे शत्रर्थकर्त्रंशे सत्तायाः प्रकारतया भानात्तदुत्तरभावप्रत्येनाऽपि सैवाभिधीयते इत्यर्थः । तथा चोक्तस्थलेषु भावप्रत्ययान्तात् सम्बन्धाभानादुक्तवाक्ये, अन्यत्रेत्युपात्तमिति भावः ।।

ननु शुक्लत्वं सत्त्वमित्यादौ सतोऽपि शौक्ल्यादिसम्बन्धस्य भावप्रत्ययेनाऽनभिधानवद् राजपुरुष इत्यत्रापि तदनभिधानं स्यात् । तत्रापि राजादीनां पुरुषादिपदार्थे स्वत्वादिसम्बन्धेन प्रकारतेत्यस्यापि वक्तुं शक्यत्वादित्यत आह—*दिगिति* ।। तदर्थस्तु— निर्वक्ष्यमाणभावे "तस्य भावः" (पा० सू० ५।१।११९) इति सूत्रेण त्वतलादयो विधीयन्ते ।। ननु जातित्वादिना जातावेव सम्बन्ध एवेति नियमः । तथा-च यत्प्रकृतेर्यद्धर्मप्रकारकबोधः शास्त्रकृत्सम्मतः, स एव धर्मस्त्वाद्यभिधेय इति रूढ्यादिभिर्भिन्नप्रकृतेः कृदन्तादितोऽपि सम्बन्धप्रकारकबोधस्य भाष्यसम्मतत्वात् तस्यैव-भावप्रत्ययेनाऽभिधानमुचितमिति नोक्तेषु भावप्रत्ययस्य जात्याद्यभिधायकत्वमिति ।। ४९ ।।

अर्थ भावप्रत्यय के अर्थ को कहते हैं—कृत्तद्धित इत्यादि—

कृदन्त, तद्धितान्त और समास से विहित भाव प्रत्ययों से सम्बन्ध की प्रतीति होती है। भर्तृहरि ने त्व और तल का प्रभेद से अर्थ टीका (महाभाष्य टीका) में किया है।

"कृत्तद्धितसमासेभ्यः सम्बन्धाभिधानं भाव प्रत्ययेन" इत्यादि वार्तिककार का वचन है। हरिवचन का अर्थ इस प्रकार है। कृदन्त, तद्धितान्त और समस्त पदोत्तर उत्पन्न, त्व तल् आदि भाव में विहित तद्धित प्रत्यय सम्बन्ध के बोधक हैं किन्तु रूढ़ि अभिन्नरूप और अव्यभिचरितसम्बन्धवालों से अतिरिक्त स्थलों में पूर्वोक्त नियम है। यह वार्तिककार का वचन है। इस प्रकार के मीमांसकों के भ्रम को दूर करते हुये कहते हैं—"टीकायाम्" भर्तृहरि ने महाभाष्य की टीका में उक्तार्थ का उल्लेख किया है। त्वतलोरिति—भावप्रत्ययमात्र का त्वतल उपलक्षण है।

वक्ष्यमाण अर्थ यह है कि—समास आदि में कल्पित शक्ति राजादिसम्बन्ध विशिष्ट में मानी गई है। यह (समासशक्ति प्रकरण में) कह चुके हैं। अतः इसके उत्तर त्वतल् आदि भावप्रत्यय सम्बन्ध का बोधक है। "इत्यर्थः" अर्थात् यह तात्पर्यार्थ है।

यह सम्बन्धाभिधान भेद, संसर्ग और उभय इस प्रकार कथित भेदपक्ष में संभव नहीं है; इसलिये "मतभेदनिबन्धनम्" ऐसा कहा। मतभेद—पक्षभेद यह भाव है।

इस प्रकार "राजपुरुषत्वं", "औपगवत्वं" तथा "पक्तृत्वम्" इत्यादि स्थलों में स्वस्वामिभाव सम्बन्ध, उपगु के अपत्य का जन्यजनकभाव सम्बन्ध और क्रियाकारकभाव सम्बन्ध क्रमशः इस प्रकार का अन्वयबोध-शाब्दजन्य बोध होता है। क्योंकि तत्तत्पदोत्तरभावप्रत्यय तत्तत्सम्बन्ध का वाचक है। अव्यभिचरितसम्बन्ध-अव्यभिचरित अर्थात् नित्य है सम्बन्ध जिसका एवंभूत जाति होती है। यदि औपगवादि में रहनेवाली जाति औपगवत्व आदि है तो त्वप्रत्यय से औपगवत्व जाति का बोध होगा। अतः अर्थान्तर[1] का वाचक तद्धित उदाहरण में देना चाहिये।

"दामोदरत्वं" "कृष्णसर्पत्वम्" इत्यादि स्थलों में जाति विशेष से बोध होने के कारण अन्यत्र यह दिया गया। रूढि अभिन्नरूप तथा अव्यभिचरित सम्बन्ध से भिन्न स्थल में (सम्बन्धाभिधान भावप्रत्यय से होता है) रूढि का उदाहरण दामोदरत्वम् आदि दिया जा चुका। अभिन्न रूप का उदाहरण शुक्लत्व है। यहाँ शुक्लः अस्ति अस्मिन् इस विग्रह में "तस्यास्त्यस्मिन्" इस सूत्र से मतुप् प्रत्यय होता है। उसका गुणवचनेभ्यो लुगिष्टः" इससे लुक् होने से शुक्ल शब्द तद्धितान्त होने पर भी घटः शुक्लः ऐसा अभेदबोध होने से शुक्ल गुण ही प्रकारतया (भावप्रत्यय से) प्रतीत होता है। तीसरे (अव्यभिचरित सम्बन्ध) का उदाहरण सतो भावः सत्ता। यहाँ तल्प्रत्यय जाति अर्थ में है। अर्थात् सत्ता द्रव्यगुण और कर्म में रहनेवाली परा जाति है। इस प्रकार इन उदाहृत तीनों स्थलों में भाव प्रत्यय सम्बन्ध का वाचक नहीं होता ॥ ४९ ॥

हिन्दी भाष्य—तद्धितान्त को प्रातिपदिक संज्ञा होने से वह भी नाम (प्रातिपदिक) है। नामार्थ एवं तद्विशेष निपातार्थ निरूपण के अनन्तर नामघटक भावविहित त्व तल् आदि तद्धित प्रत्यय के अर्थ का निरूपण करते हैं।

कृदन्त तद्धितान्त और समास के आगे त्व तल् ष्यञ् आदि प्रत्यय करने पर उसके सम्बन्ध का कथन होता है। अर्थात् त्व तल् आदि प्रत्ययों का सम्बन्ध अर्थ समझना चाहिये। किन्तु इस नियम का अपवादस्थल—रूढि, अभिन्नरूप और अव्यभिचरित-सम्बन्ध है। यहाँ भावविहित प्रत्यय से सम्बन्ध का बोध नहीं होता है। जहाँ अवयवार्थ

---

१. ऐन्द्रत्वम् इत्यादि देवताद्यर्थक तद्धित उदाहरणीय है। यहाँ त्वप्रत्यय से इन्द्रदेवतासम्बन्ध की प्रतीति होती है।

की अपेक्षा किये विना समुदाय शक्ति द्वारा ही अर्थबोध होता है उसको रूढ कहते हैं। जिस प्रकार दामोदर तथा कृष्णसर्प। यह किसी विशेष का नाम है। बाल्य यौवन वार्धक्य अवस्थाओं के भेद से भिन्न २ शरीरों में रहने से दामोदरत्व जाति है। कृष्णसर्प में कृष्णसर्पत्व जातिविशेष है। दाम उदरे यस्य कृष्णश्चासौ सर्पश्च इस प्रकार समस्त पद होने पर भी त्व प्रत्यय से सम्बन्ध का बोध न होकर जाति का बोध होता।

इसी प्रकार अभिन्नरूप स्थल में भी सम्बन्ध का बोध नहीं होता। शुक्ल शब्द से शुक्लसम्बन्धवान् अर्थ में मतुप् और उसका लुक् होता है। उसके विधान का प्रयोजन है 'पटस्य शुक्लः'[1] यहाँ शुक्ल शब्द गुणमात्रवाची है। "शुक्लः पटः" यहाँ गुणी का बोधक है। अतः द्विविध प्रयोगनिर्वाहार्थ शुक्लादि शब्द गुणमात्रवाची होता हुआ और गुणी अर्थ की प्रतीति के लिये मतुप् और लुक् का विधान किया गया है।

इस प्रकार गुण और गुणी अर्थ में शुक्ल आदि शब्द अभिन्न रूप अर्थात् समान आनुपूर्वी वाले हैं। अत एव समवाय सम्बन्ध की प्रतीति त्वादि प्रत्यय से नहीं होती किन्तु शुक्लादि गुण का बोध होता है।

एवं अव्यभिचरित सम्बन्ध से भी भावप्रत्यय करने पर सम्बन्धबोध नहीं होता। सतो भावः सत्ता यहाँ सत्ता परा जति रूपा है। सत् पदार्थ सत्ता (जाति) सम्बन्ध से रहित कभी नहीं होता। अतः अव्यभिचरित सम्बन्ध सत्ता का सद्वस्तु के साथ है। सत्पदार्थ के साथ अव्यभिचरित सत्ता जाति का सम्बन्ध होने पर भी सत् सत् इत्याकारक प्रतीति का जनक सत्ता जाति है न कि सम्बन्ध अतः तल् प्रत्यय का जाति अर्थ है। राजपुरुषत्व से राजपुरुषनिष्ठ स्वस्वामिभाव सम्बन्ध औपगवत्व से उपगु के अपत्यनिष्ठ जन्यजनकभाव, पक्तृत्व से पाककर्ता का क्रियाकारकभाव सम्बन्ध का बोध होता है।

"राजपुरुषः" इससे अराजकीयभेदविशिष्टपुरुष यह बोध भेद पक्ष में होने पर सम्बन्ध का बोध भावप्रत्यय से नहीं हो सकता क्योंकि पुरुष में राजसम्बन्ध का भान नहीं है। इसीलिये कारिका में लिखा गया है "मतभेदनिबन्धनम्" अर्थात् पक्षभेद से उक्त व्यवस्था है।

"औपगव" इसमें उपगु के अपत्य की उत्पत्ति से लेकर विनाश पर्यन्त जन्यजनकभाव सम्बन्ध का अत्यन्ताभाव उस अपत्य में नहीं है। अतः अभाव का प्रतियोगी नहीं होने से तन्निष्ठात्यन्ताभावाप्रतियोगी जन्यजनकभाव सम्बन्ध हुआ। अतः अव्यभिचरित सम्बन्ध होने से यहाँ सम्बन्ध का भान, भावप्रत्यय से नहीं होगा, इसीलिये मूल में अर्थान्तरवृत्ति तद्धित को उदाहरणार्थ प्रस्तुत किया है। ऐन्द्रत्व में इन्द्राभिन्न देवता सम्बन्ध की प्रतीति होती है।

दिगर्थ का तात्पर्य है अर्थबोधन में जिसकी अपेक्षा कर शब्द प्रवृत्त होता है उसको प्रवृत्तिनिमित्त कहते हैं। प्रवृत्तिनिमित्त भी त्वतलादि भावप्रत्यय[2] का अर्थ है। घट शब्द

---

१. गुणे शुक्लादयः पुंसि गुणि लिङ्गास्तु तद्वति। अमरकोष।

२. प्रकृतिजन्य बोध में प्रकारीभूत को भाव कहते हैं। मुख्य विशेष्यता से साक्षात् निरूपित विषयता के आश्रय को प्रकार कहते हैं। विषयता प्रकारतारूप अथवा संसर्गतारूप विवक्षित है। "राजपुरुष" इसमें स्वस्वामिभाव सम्बन्ध का संसर्गतयाभान होने पर स्वस्वामिसम्बन्ध से राजविशिष्ट पुरुष "औपगवः" इसमें जन्यजनकभावसम्बन्ध से उपगुविशिष्ट अपत्य इत्यादि बोध होता है॥

घटत्व जाति की अपेक्षा कर व्यवहृत होता है। अतः इसका प्रवृत्ति निमित्त घटत्व जाति है। "शुक्ल- घटः" इसमें शुक्ल गुण की अपेक्षा से शुक्ल शब्द का प्रयोग किया गया है। अतः गुण प्रवृत्तिनिमित्त है। वहाँ वही त्वतलादि प्रत्ययों के अर्थ हैं। कहीं सम्बन्ध कहीं द्रव्य आदि इसके अर्थ हैं जैसे "राजपुरुष" इसमें राजपुरुषसम्बन्ध "दण्डवत्त्व इस में दण्ड अथवा दण्डसम्बन्ध इत्यादि।

दण्डीत्यादौ प्रकृत्यर्थविशिष्टद्रव्यमात्रवाचकता तद्धितस्येति वदन्तं मीमांसकम्मन्यं प्रत्याह—

अत्रार्द्धजरतीयं स्याद् दर्शनान्तरगामिनाम्।
सिद्धान्ते तु स्थितं पक्षद्वयं त्वादिषु तच्छृणु ॥ ५० ॥

अत्र = भावप्रत्ययविषये। तथाहि—दामोदरत्वं, घटत्वमित्यादौ भावप्रत्ययस्य सम्बन्धानभिधायकत्वेन मीमांसकानां दण्डित्वमित्यदिष्वपि तदभिधानं न स्यात्। प्रकृतिजन्यबोधे प्रकारः प्रकृत्यर्थसमवेतो हि तदुत्तरभावप्रत्ययेनाभिधीयते। अन्यथा घटत्वमित्यत्र द्रव्यत्वादेर्दण्डित्वमित्यादौ दण्डादेश्च तदुत्तरभावप्रत्ययवाच्यतापत्तेः।

न च तन्मते दण्डीत्यादिबोधे सम्बन्धः प्रकारः। यत्तु—

यदा स्वसमवेतोऽत्र वाच्यो नास्ति गुणोऽपरः।
तदा गत्यन्तराभावात् सम्बन्धो वाच्य आश्रितः॥ इति।

तन्त्रवा. अ. ३ पा. १

तन्न। इनादेः सम्बन्धिवाचकत्वेनोपपत्तौ गत्यभावाभावात्। प्रपञ्चितं चैतदादावेव वैयाकरणभूषणे।

ननु तवापीदं वैषम्यं कथमित्यत आह-*सिद्धान्ते त्विति* ॥ जायन्त इति वक्ष्माणविशेषणेऽन्वितम्। सिद्धान्ते प्रकृतिजन्यबोधे प्रकारे त्वादयो जायन्त इत्यर्थः। प्रकृतिजन्यबोधे प्रकार इत्यग्र पक्षद्वयं स्थितमिति योजना ॥ ५० ॥

'प्रकृत्यर्थविशिष्टद्रव्यमात्रवचनता' इति पाठः। मात्रपदेन सम्बन्धव्यवच्छेदः ॥ *तद्धितस्येति*। इन्पादेरित्यर्थः ॥ *सम्बन्धानभिधायकत्वेनेति* ॥ प्रकृतिजन्यबोधे तस्याप्रकारत्वादिति भावः ॥ *तदभिधानम्*—सम्बन्धाभिधानम् ॥ *न स्यादिति* ॥ किन्तु दण्डस्यैवाऽभिधानं स्यान्न च तदभिधानमिष्टमिति भावः।

ननु प्रकृतिजन्यबोधविषयत्वे सति प्रकृत्यर्थवृत्तित्वं भावत्वम्। तच्च दण्डसम्बन्धस्याऽक्षतमिति भावप्रत्ययेन तदभिधानं भविष्यतीत्यत आह—*प्रकृतिजन्यबोध इति* ॥ उक्तार्थस्य भावत्वे तु दामोदरत्वमित्यादौ जातिगुणसम्बन्धस्याऽपि भावाऽर्थता प्रसज्ज्येतेति भावः। क्रमेण दलद्वयव्यावर्त्यमाह—*अन्यथेति* ॥ एकतरदलमात्रोपादाने इत्यर्थः। *तदुत्तरेति* ॥ घटदण्डिपदोत्तरेत्यर्थः। तथाच घटत्व-

-मित्यादौ द्रव्यत्वस्येव त्वन्मते दण्डीत्यादौ दण्डसम्बन्धस्याप्यपदार्थतयाऽप्रकारत्वाद-भावत्वेन न तस्य प्रत्ययार्थत्वसम्भव इति भावः।

वस्तुतस्त्वन्त्यदलोपादानं व्यर्थम्। मतुबादीनां सम्बन्धयर्थकतया दण्डीत्यादि-वाक्य–जन्यबोधसम्बन्धस्यैव प्रकारत्वेन दण्डादीनां प्रकृत्यर्थेऽप्रकारत्वादेवानतिप्रस-ङ्गात्। मीमांसकैकदेशिमते मत्वर्थीयानां सम्बन्धवाचकत्वेऽपि तदाक्षिप्ताश्रयविशेष्य-कबोधस्यैव तैरभ्युपगमेन तन्मतेऽपि प्रकृतिजन्यबोधविशेष्यांशे दण्डादीनामप्रकारत्वेन प्रयोजनविरहादिति विभावनीयम्॥ *सम्बन्ध प्रकार इति*॥ अस्य येन तस्य त्वादिप्रत्ययवाच्यता स्यादिति शेषः। मीमांसकमतमुपन्यस्यति–*यत्त्विति*॥ *अत्र*–दण्डित्वमित्यादौ॥ *स्वसमवेत*–त्वादिप्रकृत्यर्थसमवेतः॥ नीलत्व-मित्यादौ नीलादिगुणवन्न सम्भवति यतोऽतः सम्बन्धस्यैव भावप्रत्ययवाच्यत्वं नाश्रित-मित्यर्थः, दण्डादेः प्रकृत्यर्थांशे प्रकारत्वेऽपि प्रकृत्यर्थाऽसमवेतत्वेनाभावत्वादिति भावः।

*सम्बन्धिवाचकत्वेनेति*॥ "तदस्यास्त्यस्मिन्" (पा० सू० ५।२।४०) इनि मतुपः सम्बन्धे विधानेऽपि "दण्डी पुरुष" इति सामानाधिकरण्यानुरोधात् सम्ब-न्धिवाचकत्वस्यावश्यकत्वादिति भावः॥ *गत्यभावाभावादिति*॥ सम्बन्धस्यैव भावत्वसम्भवादिति भावः। *आदावेवेति*। एवं वैश्वदेवीत्यादिसामानाधिकरण्य-स्योक्तरीत्यैवोपपत्तेरित्यन्तग्रन्थेन भूषण इत्यर्थः।।*तवापीति*। वैयाकरणस्यापी-त्यर्थः॥ *इदम्*। क्वचिज्जात्यादिवाचकत्वं, क्वचित् सम्बन्धवाचकत्वमित्येवं रूपं वैषम्यमित्यर्थः॥ ५०॥

अर्थ—दण्डी[1] इत्यादि स्थल में दण्ड आदि प्रकृत्यर्थ विशिष्ट पुरुष या देश मात्र का वाचक तद्धित इन प्रत्यय है। संयोग सम्बन्ध का वाचक नहीं है। इसके माननेवाले मीमांसकाभिमानी के प्रति कहते हैं।

अर्द्धजरतीयमित्यादि—दर्शनान्तरगामी = मीमांसकों के मत में अर्द्धजरती[2] हो जायगा। अर्थात् कहीं भावप्रत्यय सम्बन्धवाचक कहीं तद्भिन्न का वाचक होने से प्राप्त वैषम्य अयुक्त है। एक ही प्रकार का अर्थ उचित है। वैयाकरण सिद्धान्त में प्रकृतिजन्य-बोध में जो प्रकार है उसमें त्वादिप्रत्यय होते हैं। प्रकार में जाति और सम्बन्ध को लेकर दो पक्ष अवस्थित है। वे ही पक्षद्वय त्वादि में भी समझो।

अत्र—भावप्रत्यय के विषय में। दामोदरत्व घटत्व इत्यादि स्थल में भावप्रत्यय से सम्बन्ध का अभिधान—कथन नहीं होने के कारण मीमांसकों के मत में दण्डित्वमित्यादि

---

१. दण्डी आदि में प्रकृति का दण्ड आदि अर्थ और इन प्रत्यय का आश्रय मात्र अर्थ है। संयोग सम्बन्ध संसर्गमर्यादा से भासित होता है। इसमें शक्ति नहीं है।

२. जरत्या अर्द्धम् अर्द्धजरती लक्षणा से तत्सदृश। जरत्याः कुक्कुट्यः अर्द्धं प्रसवाय अर्द्धं भक्षणाय इति न सम्भवति। वृद्धा कुक्कुटी का अर्द्धभाग भक्षण के लिये अर्द्धभाग अण्डा देने के लिये, ऐसा नहीं होता उसी प्रकार भावप्रत्यय कहीं सम्बन्धवाचक और कहीं तद्भिन्नवाचक नहीं हो सकता, यह भाव है।

स्थलों में भी सम्बन्ध का कथन नहीं हो सकता। प्रकृतिजन्यबोध में प्रकार और प्रकृत्यर्थ में समवेत=समवाय सम्बन्ध से रहनेवाला प्रकृति से अनन्तर विहित भावप्रत्यय से प्रतीत होता है। (यह नियम है) ऐसा नियम न मानने पर "घटत्वम्" यहाँ पर त्वप्रत्यय से द्रव्यत्व का बोध होना चाहिये। (द्रव्यत्व घटपदजन्य बोध में प्रकार नहीं है। अतः घटत्व से द्रव्यत्व का बोध नहीं हुआ) इसी प्रकार "दण्डित्वम्" इस स्थल में दण्डिपद-जन्यबोध का विषय संयोग सम्बन्ध नहीं है क्योंकि सम्बन्ध में इन् प्रत्यय की शक्ति नहीं मानी गई है। अतः वहाँ भावप्रत्यय से दण्ड की वाच्यता हो जायगी। मीमांसक मत में इसकी प्रतीति संसर्गतया होती है।

मीमांसक की शङ्का—यदा=जहाँ[1] अत्र=दण्डित्व आदि स्थल में स्वसमवेतः—त्व आदि प्रत्ययों की प्रकृति के अर्थ में समवाय से वृत्ति, अपरः=सम्बन्ध से भिन्न, त्वादि-प्रत्यय से अभिधानयोग्य नीलादि के समान गुण नहीं है वहाँ गत्यन्तर=उपायान्तर के अभाव से सम्बन्ध ही भावप्रत्यय का वाच्य माना गया है।

यह कहना ठीक नहीं है। दण्डी में इन्प्रत्यय का दण्डसम्बन्धी अर्थ मान लेने से ही सम्बन्ध, त्वादि वाच्य हो सकता है पुनः उपायान्तराभाव का प्रतिपादन असङ्गत है। भात्वर्थनिर्णय में ही" एवं वैश्वेदेवीत्यादि सामनाधिकरण्यस्योक्तरीत्यैवोपपत्तेः" इस ग्रन्थ से तद्धित को द्रव्यवाचक बताया गया है।

शङ्का—वैयाकरण भी कहीं त्वादिप्रत्यय को जाति तथा कहीं सम्बन्ध का वाचक मानते हैं। अतः उनके मत में भी वैषम्य क्यों नहीं है।

समाधान—सिद्धान्ते=इसका अग्रिम कारिका के "जायन्ते" इस पदार्थ के साथ सम्बन्ध है। वैयाकरण सिद्धान्त में प्रकृतिजन्य बोध में प्रकारीभूत अर्थ में त्वादि प्रत्यय होते हैं। प्रकृतिजन्य बोध में दो पक्ष (जाति और सम्बन्ध) अवस्थित है ॥ ५० ॥

हिन्दीभाष्य—मीमांसकों ने "दण्डी" इत्यादि स्थानों में तद्धित इन् आदि प्रत्ययों को द्रव्यमात्रवाची माना है। दण्ड और पुरुष के संयोग सम्बन्ध को वाच्य नहीं माना है। ऐसी दशा में "दण्डित्वम्" इसमें त्वप्रत्यय से सम्बन्ध की प्रतीति नहीं होगी। क्योंकि सम्बन्ध किसी से वाच्य नहीं है। इस प्रकार त्वादिप्रत्ययार्थ अर्धजरती के सदृश हो जायगा। कहीं सम्बन्ध और कहीं उससे भिन्न का वाचक होने से उक्त न्याय का प्रसङ्ग प्राप्त होगा।

शङ्का—प्रकृतिजन्य बोध का विषय तथा प्रकृत्यर्थवृत्ति को भाव प्रत्यय से कथन किया जाता है। इस प्रकार "दण्डी" इसमें भी सम्बन्ध प्रकृत्यर्थ के बोध का विषय तथा प्रकृत्यर्थ दण्ड में वृत्ति होने से त्वादिप्रत्यय का अर्थ हो सकता है।

समाधान—प्रकृतिजन्य बोध में प्रकारतयाभासमान होकर जो प्रकृत्यर्थ में समवाय सम्बन्ध से रहता हो वही त्वादि भाव प्रत्यय का वाच्य माना जाता है। ऐसा नियम न मानने पर आपकी रीति से "दामोदरत्वं" घटत्वम्" इत्यादि स्थानों में भी सम्बन्ध की प्रतीति होने लगेगी। सम्बन्ध प्रकृतिजन्य बोध का विषय तथा प्रकृत्यर्थ में वर्तमान है।

---

१. श्लोक में यदा तदा पदों का यत्र और तत्र इस अर्थ में पर्यवसान समझना चाहिये। दण्ड आदि प्रकृत्यर्थ दण्डी में प्रकार होने पर भी प्रकृत्यर्थ में समवेत नहीं होने से त्वप्रत्ययार्थ दण्ड नहीं हो सकता।

मदुक्त नियम मानने पर दोष नहीं है। उक्त उदाहरणों में सम्बन्ध प्रकृत्यर्थ बोध में प्रकार नहीं है। क्योंकि वृत्ति ज्ञानाधीन उपस्थिति जिसकी होती हैं उसका बोध में प्रकारतया अथवा विशेष्यतया भान होता है। आप के मत में सम्बन्ध में किसी की शक्ति नहीं है।

शङ्का—जहाँ त्वादिप्रत्यय की प्रकृति से जन्य अर्थ में समवेत गुणजात्यादि के समान दूसरा कोई नहीं है वहाँ उपायान्तर के न होने से सम्बन्ध ही त्वादिप्रत्ययों का अर्थ माना जाता है। अतः "दण्डित्वम्" यहाँ पर प्रकृत्यर्थ दण्ड, पुरुष में समवेत[1] न होने से त्वप्रत्यय का वाच्य दण्ड नहीं है किन्तु सम्बन्ध ही वाच्य होगा।

समाधान—यदि इन् आदि तद्धित प्रत्ययों का सम्बन्धी अर्थ स्वीकार करने से उक्त आपत्ति का परिहार हो सकता है तो उपायान्तरा भाव के प्रतिपादन द्वारा सम्बन्ध की त्वादिप्रत्यय वाच्यता सिद्ध करना असङ्गत है। उपाय के रहने पर उपायान्तराभाव का कथन अयुक्त है॥ ५०॥

वैयाकरणों के मत में भी अर्धजरती दोष पूर्ववत् है। "घटत्वं" "पटत्वम्" आदि स्थलों में त्वादि प्रत्ययी से जाति का एवं "दण्डित्वम्" आदि स्थल में सम्बन्ध का बोध होता है। इस प्रकार वैषम्य प्रयुक्त उक्त दोष का प्रसङ्ग प्राप्त है।

समाधान—प्रकृतिनिष्ठ शक्ति ज्ञान जन्यबोध में प्रकारतया भासमान जात्यादि रूप हो अथवा सम्बन्ध रूप हो उसका भान त्वादि प्रत्ययों से होता है, ऐसा नियम मानने से वैषम्य दोष नहीं होता। प्रकारतया जहाँ जो भासमान होगा वहाँ वही त्वादि भाव-प्रत्यय का अर्थ है, ऐसा मानने पर एकरूपता स्पष्ट है।

तौ पक्षावाह—

प्रयोगोपाधिमाश्रित्य प्रकृत्यर्थे प्रकारताम्।
धर्म्ममात्रं वाच्यमिति यद्वा शब्दपरा अमी॥ ५१॥
जायन्ते तज्जन्यबोधप्रकारे भावसंज्ञिते।

प्रयोगे उपाधिं-निमित्तं, प्रकृत्यर्थे प्रकारतां = प्रकारतया भासमानं धर्म्मं वाच्यतया आश्रित्य त्वाद्यो जायन्ते। प्रकृतिजन्यबोधे प्रकारस्त्वाद्यर्थ इति यावत्।

ननु घटत्वमित्यत्र प्रकारत्वात् तदुत्तरभावप्रत्ययेन घटत्वत्वस्यापि वाच्यता स्यादित्यत्रेष्टापत्तिमाह-*धर्ममात्रमिति*॥ न त्वत्र लघुगुरुविचार इत्यभिप्रायः॥ तत्तद्व्यक्तिविशिष्टब्रह्मसत्ताया एव घटत्वघटत्वत्वादि-रूपत्वात्।

सम्बन्धभेदात् सत्तैव भिद्यमाना गवादिषु। वाक्य० जाति ३३
जातिरित्युच्यते तस्यां सर्वे शब्दा व्यवस्थिताः॥
तां प्रातिपदिकार्थञ्च धात्वर्थञ्च प्रचक्षते।
सा नित्या सा महानात्मा तामाहुस्त्वतलादयः॥ ३४

---

१. दण्ड का पुरुष के साथ संयोग सम्बन्ध है अतः दण्ड समवेत नहीं है।

इति वाक्यपदीयात्। उक्तञ्च 'तस्य भावस्त्वतलौ" (पा० सू० ५।१। ११९) इति सूत्रे वार्त्तिककारः—'यस्य गुणस्य भावाद् द्रव्ये शब्दनिवेशस्तदभिधाने त्वतलौ' इति। यस्य गुणस्य = विशेषणतया भासमानस्य, भावाद् = आश्रयत्वाद्, द्रव्ये = विशेष्ये, शब्दनिवेशः = शब्दप्रवृत्तिः, तस्मिन् वाच्ये त्वतलावित्यर्थः।

तथाच रूपादिशब्देभ्यो जातौ, शुक्लाणुदीर्घमहदादिभ्यो गुणे, पाचकादिशब्देभ्यः क्रियायां, घटादिशब्देभ्यो जातौ प्रत्ययः। रूपादि शब्दानां जातिप्रकारकबोधजनकत्वात्। पाचकादिशब्दानां क्रियाप्रकारकबोधजनकत्वे तस्यां प्रत्ययः, संसर्गप्रकारकबोधजनकत्वमिति मते च संसर्गे इति व्यवस्था सूपपादेति भावः।

तत्र जातिवाचकानां व्यक्तय एव शक्यतावच्छेदिकाः। तथाच घटत्वमित्यत्र घटवृत्तिरसाधारणो धर्म्म इति बोध इत्यादि द्रष्टव्यम्।

पक्षान्तरमाह—*यद्वेति*॥ यद्वा "सर्वे भावाः स्वेनार्थेन भवन्ति, स तेषां भावः" इति वार्त्तिकोक्तेः—यद्वाशब्दस्तत्सूचनप्रयोजनकोऽपि। भवन्ति वाचकत्वेन प्रवर्त्तन्त इति भावाः = शब्दाः। स्वेन-स्वरूपेण = अर्थेन। भवन्ति = प्रवर्त्तन्ते; अतः स तेषां भावः = प्रवृत्तिनिमित्तमित्यर्थः।

अयम्भावः—अर्थवच्छब्दोऽपि द्रव्ये प्रकारः। हरिहरनलेक्ष्वाकुयुधिष्ठिरवशिष्ठादिशब्देभ्यस्तत्तद्वाच्यः कश्चिदासीदिति शब्दप्रकारकबोधस्य सर्वसिद्धत्वात्। अन्यथा वनौषधिवर्गादेर्नागरिकान् प्रत्यबोधकत्वापत्तेश्च। एवमेवाप्रसिद्धार्थकपदेष्वनुभवः सर्वसिद्धो, न तु घटादिपदेष्विव तत्तज्जात्यादिरूपेण। तथाचोभयमवच्छेदकम्। यस्य तथा शक्तिग्रहस्तस्य जात्यादिरूपेणैवोपस्थितिः।

पदप्रकारकः शक्तिग्रहस्तु विशिष्य नापेक्षितः। किन्तु इदं पदं कचिच्छक्तं, साधुपदत्वादित्यादिरूप एवापेक्ष्यते इति विशिष्याग्रहीतशक्तिकेभ्यस्तथैव बोधः। तथाच शब्दोऽपि त्वप्रत्ययार्थ इति प्रपञ्चितं भूषणे॥ ५१॥

इति वैयाकरणभूषणसारे त्वादिभावप्रत्ययार्थविचारः॥ ९॥



*प्रयोग इति*॥ शब्दप्रवृत्तावित्यर्थः॥ निमित्तमिति*॥ यद्धर्मवत्त्वेन ज्ञातेऽर्थे यश्शब्दः प्रयुज्यते स धर्मस्तच्छब्दप्रवृत्तौ निमित्तमित्यर्थः॥ सः—दामोदरत्वमित्यादौ जातिः, शुक्लत्वमित्यादौ गुण एवेति। ननु प्रकृतिजन्यबोधप्रकारकत्वेनैवोपाधेः संग्रहे तस्य पृथगुपादानं व्यर्थमत आह—*प्रकृतिजन्येति*॥ स च प्रकृत्यर्थवृत्तिरसाधारणो धर्मस्तस्मिन्नसाधारण्यञ्च—तदितरावृत्तित्वे सति सकलतद्वृत्तित्वम्।

सत्यन्तोपादाने द्रव्यत्वादेर्घटासाधारण्यं, विशेष्योपादानाच्च तद्व्यक्तित्वादिनिरासः। तेन रूपेण धर्मो भावप्रत्ययवाच्यः। तत्र तत्पदार्थस्य घटादेस्त्वादिप्रकृत्यैव लाभादनन्यलभ्य इतरावृत्तित्वप्रतियोगिकाभावस्यातिप्रसक्तत्वादितरवृत्तित्वत्वाऽवच्छिन्नप्रतियोगिताकाभावस्याप्रसिद्धत्वात् घटत्वादौ बाधाच्च विशिष्टस्य शक्यत्वासम्भवात्। अत्र च प्रकृतिजन्यबोधे येन सम्बन्धेन प्रतिपाद्यतावच्छेदकधर्मस्य प्रकारता; तेन सम्बन्धेनेतरावृत्तित्वं वृत्तिमत्वं च बोध्यम्। नाऽतः कालादौ कालिकादिसम्बन्धेन घटत्वस्य वृत्तावपि क्षतिः। न वा घटत्वमित्यादौ कम्बुग्रीवादिमत्त्वस्य भानम्। प्रमेयत्वमित्यादौ त्वितरावृत्तित्वांशो न भासते, अप्रसिद्धत्वात्; किन्तु सकलप्रमेयवृत्तित्वमात्रम्।

न च विशिष्टस्याऽनतिरिक्तत्वमते गुणाऽन्यत्वविशिष्टसत्त्वमित्यादौ विशिष्टसत्त्वे विशिष्टसदितरावृत्तित्वस्य महत्त्वमित्यादौ सकलमहद्वृत्तित्वस्य महत्परिमाणादावसम्भव इति वाच्यम्। तदितरत्वव्यापकात्यन्ताभावप्रतियोगितावच्छेकतद्वृत्त्यत्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्वे दलद्वयतात्पर्य्यात्। तत्राद्यदलं घटत्वमित्यादौ द्रव्यत्वादेरसाधारण्यवारणायेति भावः॥ *प्रकारत्वादिति*॥ घटत्वासाधारणधर्मत्वादित्यर्थः। *लघुगुर्विति*।

अयम्भावः—धर्मस्यासाधारणधर्मत्वेन वाच्यत्वेऽप्येकत्वमित्यादौ परिमाणादेर्भानापत्तिः। उक्तासाधारण्यस्य परिमाणे सत्त्वात्। नच प्रकृत्यर्थतावच्छेदकनिरूपितत्वविशिष्टसमवायसम्बन्धेन तदितरावृत्तित्वं तद्वृत्तित्वं च विवक्षितम्। न च तेन सम्बन्धेन परिमाणं तत्र वृत्तीति नोक्तदोष इति वाच्यम्। तथा सत्यनन्तशक्तिकल्पनावश्यकत्वे तत्तद्धर्मत्वेनैव धर्मे शक्तिरस्तु, किमितरावृतित्वादिगौरवसहिष्णुतया।

अत एव पृथक्त्वमित्यादौ प्रकृत्यर्थतावच्छेदकगुणान् भावप्रत्ययः प्रतिपादयति। प्रतीतिस्तु ताद्रूप्येण धर्मत्वेन वेत्यन्यदिति गुणदीधितावुक्तं सङ्गच्छत इति। एतेन भावशक्तत्वादिप्रत्ययेन कम्बुग्रीवादिमत्त्वमित्यादौ गुरोरपि धर्मस्य कम्बुग्रीवादिमावस्य बोधनेन तद्वद्घटत्वत्वमित्यादावपि गुरोर्धर्मस्य त्वप्रत्ययेन बोधनसम्भवादाशङ्का निःसारेत्यपास्तम्। धर्मस्य भावप्रत्ययवाच्यत्वे सम्मतिमाह–*सम्बन्धिभेदादिति*। जातिः पदार्थ इति कल्पे साधकमिदम्। *सम्बन्धिभेदाद्*—अनुयोगिभेदाद्, *भिद्यमाना*–गवेतरासमवेतत्वे सति सकलगोसमवेतत्वादिना, तद्व्यक्त्युपरागेण वा पार्थक्येन प्रतीयमाना गवादिनिष्ठा ब्रह्मसत्तैव जातिरित्युच्यते। तस्यां सर्वे शब्दा वाचकत्वेन व्यवस्थिता इत्यर्थः। तदेव व्यक्तीकरोति—*तामिति*। ताम्–तत्तद्व्यक्त्युपरक्तां सत्तामित्यर्थः॥

*धात्वर्थमिति*। आकृत्यधिकरणन्यायेन "जातिमन्ये क्रियामाहुः" इति पक्षाभिप्रायेण वा। "महानि"त्यात्मविशेषणम्। क्वचिज्जात्यादिः, क्वचित् सम्बन्ध इत्युक्तार्थे वार्तिकं प्रमाणयति—*उक्तञ्चेति*। गुणशब्दस्य वैशेषिकाणां रूपादि-

ष्वेव प्रसिद्धेः प्रकृतोपयुक्तार्थपरतामाह—*विशेषणतयेति* । तथाच प्रकृते गुणपद-मुपसर्ज्जनीभूतार्थपरमिति भावः । पर्य्यवसितमाह—*तथाचेति* । रूपादीत्यादिना रसादेर्गुणपरशुक्लादेश्च सङ्ग्रहः । *बोधजनकत्व इति* । बोधजनकत्वमत इत्यर्थः । व्यपेक्षावादे क्रियाकारकभावसम्बन्धेन कृदर्थकर्त्रादौ घावर्थस्यैव प्रकारतया भानोपगमादिति भावः । स्वसिद्धान्तमनुसृत्याह—*संसर्गप्रकारकेति* । *सूपपा-देति* । भावप्रत्ययो जातावेवेत्याद्यनियमादिति भावः । *तत्रेति* । जात्यादिवाच-कभावप्रत्ययेषु मध्ये इत्यर्थः । *जातिवाचकानामिति* । अर्थनिष्ठशक्तेरितिशेषः ।

गुणाद्यात्मकभाववचनानां शुक्लत्वादिशब्दानां जातेः शक्यताऽवच्छेदकत्वसम्भवा-दाह—*जातिवाचकानामिति* । भावप्रत्ययानामिति शेषः । *अवच्छेदिका इति* । उपस्थितत्वाद् घटत्वादिजातिनिष्ठशक्तेः स्वेतरावृत्तित्वावच्छिन्ननिखिलस्य-वृत्तिरूपाधेयत्वादिसम्बन्धेनाऽवच्छेदिका इत्यर्थः । तेन न द्रव्यत्वादिनिष्ठशक्तेर्घटा-वच्छिन्नत्वम् । अवच्छेदकानुगमकं च गोत्वादिकमेवेति भावः । पर्य्यवसितबोधमाह—*घटवृत्तिरिति* । *पक्षान्तरमिति* । 'तत्तच्छब्द एव भावप्रत्ययवाच्य' इति मता-न्तरमित्यर्थः । "अथ कस्माद्गौरित्युच्यते ? गौरित्येव हि गौर्गवि वर्त्तते" इत्यौ-विथका इति निरुक्तमप्येतत्कल्पे उपष्टम्भकं बोध्यम् । *तत्सूचनप्रयोजनकोऽपीति* । यद्वा शब्दघटितोक्तवार्त्तिकसूचनप्रयोजनकोऽपीत्यर्थः । अपिना पक्षान्तरसङ्ग्रहः । वार्त्तिके—"स्वेनाऽर्थेन भवन्ति" इत्यत्र स्वशब्दस्यात्मीयवचनतयात्मीयाऽर्थेन जात्या-दिना प्रवर्त्तन्ते इत्यर्थात् कथं पक्षान्तरपरता कथं वार्थावृत्तेर्धर्मस्य शब्दस्य भावत्वं चेत्यत आशयं प्रकाशयति—*अयम्भाव इति* ।

जात्याद्यर्थस्य द्रव्यांशे विशेषणतायाः प्रसिद्धत्वात्तद्दृष्टान्तेन शब्दस्यापि तां साधयति—*अर्थवदिति* । जात्यादिवदित्यर्थः । शब्दस्यार्थविशेषणतायामसाधारण-स्थलमाह—*हरिहरेति* । कश्चिदासीदित्यनेन जात्यादिप्रकारकबोधासम्भवो ध्वन्यते । हर्य्यादौ सन्निकर्षाभावेनानुपस्थितहरित्वाद्यवच्छेदेन शक्तिग्रहाभावेन तद्धर्म-प्रकारकशाब्दबोधासम्भवादुपस्थितपदस्यैव विशेषणत्वमभ्युपगम्य शाब्दबोध उपपाद-नीयः । यथाच वृत्त्याद्युपस्थितिस्तथोपपादितं नामार्थनिरूपण इति भावः ॥

*अन्यथेति* । अर्थांशे शब्दस्य प्रकारत्वानभ्युपगम इत्यर्थः । आरण्यकानां सन्निकर्षेण जातिधर्मितावच्छेदकशक्तिग्रहसम्भवादुक्तम्—*नागरिकानिति* । *एव-मेवेति* । पदप्रकारेणैवेत्यर्थः । *अप्रसिद्धेति* । अगृहीतजात्यादिविशिष्टशक्तिक-पदेष्वित्यर्थः । *जात्यादिभेदेनेति* । तद्विशेषेणेत्यर्थः । क्वचितु जात्यादिरूपेणै-वेत्येव पाठः । *उभयमिति* । जात्यादिरूपं पदं चेत्यर्थः । *अवच्छेदकमिति* । शक्त्यवच्छेदकमित्यर्थः ।

ननु जात्याद्यनुपस्थितिदशायामयमर्थं एतत्पदवानिति शक्तिग्रहोऽप्यसम्भवदुक्ति-कोऽत आह—*पदप्रकारक इति* ॥ *विशिष्येति* । घटपदत्वादिरूपेणेत्यर्थः ।

यद्यपि 'सर्वे भावाः' इति सर्वशब्दोपादानादेतत्कल्पे शब्दस्यैव सर्वशब्दप्रवृत्तिनिमित्तत्वमवगम्यते, तथापि घटत्वादिना गृहीतशक्तिकघटादिपदाद् घटत्वप्रकारकबोधस्य सार्वजनीनप्रसिद्धिसिद्धस्यापह्नोतुमशक्यतया प्रायशः प्रसिद्धार्थकस्थले शब्दाप्रकारकबोधस्याननुभवेन चैतत्कल्पेऽपि जात्यादीनां शब्दप्रवृत्तिनिमित्तत्वमङ्गीकरणीयमेव ।

वार्त्तिकं तु भावशब्दस्याप्रसिद्धार्थकशब्दपरतया योज्यम् । तत्र निमित्तान्तराभावेन वार्त्तिकबलाच्छब्दस्यैव शब्दप्रवृत्तिनिमित्तत्वावधारणात् । यथा कादिपञ्चकशक्त-कुपदे । अत एव "अनुदात्तङित" ( पा० सू० १।३।१२ ) इति सूत्रेऽनुदात्तङितौ द्वावात्मनेपदमित्यस्य "तङानौ द्वावर्थं" इति तत्र "सङ्ख्यातानुदेशः प्राप्नोति" इति यथासङ्ख्यसूत्रे भाष्यकृदुक्तं सङ्गच्छते । अन्यथा नवानां तङर्थत्वेनात्मनेपदवत्त्वेन बोधे सर्वेषामेकत्वेन तत्र च द्वावित्यस्यानुपपत्तिः स्पष्टैव । अत एव सारकृताऽप्युभयमवच्छेदकमित्युपसंहृतम् । क्वचिच्छब्दोऽपीति तदाशय इति ।

कथं तर्हि तत्र शक्तिग्रहोऽत आह—*किन्त्विति* । *कञ्चिच्छक्तमिति* ॥ किञ्चिन्निष्ठशक्तिनिरूपकमित्यर्थः । तथाच नृपादिवर्णनप्रस्तावे नृपत्वादिनोपस्थितनलादीनां शक्यंशे भाने उपस्थितत्वान्नलादिपदानामपि तदर्थे भानमविरुद्धम् । इदमेतच्छक्यमित्याकारकार्थशक्तिग्रह एव विशेषरूपेणोपस्थितेस्तन्त्रत्वादिति भावः । *तथैव बोध इति* ॥ पदवाच्यत्वप्रकारक एवेत्यर्थः । एवकारेण जात्यादिप्रकारकबोधव्यवच्छेदः । इदञ्च कश्चिदर्थो नलादिपदशक्योऽर्थत्वादित्यानुमानिकशक्तिग्रहाभिप्रायेण । उक्तोपनीतपदशक्तिग्रहे त्वर्थविशेष्यकबोधानुपपत्तिरेव । शक्तिज्ञानपदार्थोपस्थितिशाब्दबोधानां समानप्रकारकत्वनियमादित्यवधेयम् ।

नैयायिकास्तु—नलादिपदानामपि विशिष्य शक्तिग्रहो नानुपपन्नः । यत्र नलत्वादिसम्बन्धेन यत्किञ्चिद्धर्मवत्वधीस्तद्विषयीभूतनलत्वादेः शक्तिग्रहे धर्मितावच्छेदकतया भाने बाधकाभावात् । यद्वा यत्र प्रमेयत्वेन प्रमेयवानित्याकारा नलत्वादिविशिष्टबुद्धिः, ततश्च प्रमेयत्वांशे मोषदशायां स्वरूपतो नलत्वादिप्रकारकनलविशेष्यकस्मरणे बोधकाऽभावात्तद्विषयनलत्वादिना विशिष्य नलादौ नलादिपदशक्तिग्रहेण तत्तद्रूपेण नलादिपदान्नलादिबोधस्य सुलभत्वात् ।

न च प्रमेयत्वांशे मोषकल्पने मानाभावः । अनूभूयमानतत्तद्धर्मप्रकारकशाब्दबोधानुपपत्तेरेव मानत्वात् । कथमन्यथानुभवात्मकसमूहालम्बनादेकपदार्थोद्बोधकाऽसमवधानेऽन्यपदार्थस्मृतिः । अक्लृप्तस्यार्थांशे पदविशेषणत्वस्य कल्पनापेक्षया तादृशस्मृतौ प्रमेयत्वांशे मोषकल्पनस्यैव न्याय्यत्वात् । पदस्यार्थधर्मत्वाभावेन तस्य पदांशे विशेषणत्वासम्भवाच्च । तस्य पदस्य तस्मिन् पदे शक्तिरित्यर्थस्य लौकिकत्वेन पदप्रकारकबोधस्य सार्वत्रिकत्वासम्भवाच्चेत्याहुः ॥ ५१ ॥

इति भूषणसारदर्पणे भावप्रत्ययार्थनिरूपणम् ॥ ९ ॥

अर्थ—तौ पक्षौ आह—उन पक्षों को कहते हैं—प्रयोगोपाधिमाश्रित्य इत्यादि-प्रयोग = शब्दप्रवृत्ति उसमें उपाधि = निमित्त तथा प्रकृत्यर्थ में प्रकारता रूप से आश्रित्य= आश्रयण करके त्वादि प्रत्यय जायन्ते=होते हैं। अतः धर्ममात्र वाच्य है। अथवा शब्दपरा शब्दरूप अर्थपरक अमी = त्वादिभावप्रत्यय प्रकृत्यर्थ बोध में प्रकार = भाव संज्ञित में उत्पन्न होते हैं।

प्रयोग—शब्दप्रवृत्ति में निमित्त-कारण प्रकृत्यर्थे प्रकारताम्–प्रकृत्यर्थ में प्रकारता को प्राप्त अर्थात् प्रकारता से भासमान धर्म को वाच्यत्व रूप से आश्रयण कर त्वादिप्रत्यय होते हैं। प्रकृतिजन्य बोध में जो प्रकार है वही त्व आदि प्रत्ययों का अर्थ है।

शङ्का—घटत्व में घटत्वत्व प्रकार अर्थात् असाधारणधर्मरूप होने से घटपद से विहित भावप्रत्यय (त्वादिप्रत्यय) से घटत्वत्व की भी वाच्यता हो जायगी।

तादृशबोध इष्ट होने से कोई आपत्ति नहीं है। इसी अभिप्राय से धर्ममात्र कारिका में लिखा है। भावप्रत्यय स्थल में लघु और गुरु का विचार नहीं है। यह तात्पर्य है।

तत्तद् व्यक्ति—घटादि व्यक्ति विशिष्ट ब्रह्म की सत्ता ही घटत्व घटत्वत्वादि रूप है। वाक्यपदीय का वचन उद्धृत करते हैं।

सम्बन्धिभेदात्—इत्यादि। सम्बन्धी अनुयोगी के भेद से भिन्नतया प्रतीयमान गवादिनिष्ठ ब्रह्मसत्ता ही को जाति कहते हैं। उसमें सभी शब्द वाचकरूप से व्यवस्थित हैं। तां = तत्तद् व्यक्तियों में सम्बद्ध सत्ता को प्रातिपदिकार्थ और धात्वर्थ भी कहते हैं। वह सत्ता नित्य तथा महान् आत्मा है। उसी सत्ता को त्व तल् आदि प्रत्यय कहते हैं। "तस्य भावस्त्वतलौ" इस सूत्र के भाष्य में वार्तिककार ने लिखा है।

"तस्य गुणस्य भावात्" इत्यादि वार्तिक में यस्य गुणस्य गुण से उपसर्जनीभूत (विशेषण) का ग्रहण है। जिस उपसर्जनीभूत पदार्थ के रहने से द्रव्ये = विशेष्य में शब्द-निवेश=शब्दप्रवृत्ति होती है उसी वाच्य अर्थ में त्व तल् प्रत्यय होता है।

जिस गुण विशेषणरूप से भासमान का आश्रयण लेकर द्रव्य = विशेष्य में शब्द प्रवृत्ति होती है उस वाच्य में त्व तल् होता है यह भाव है। इस प्रकार रूपादि शब्द से रूपत्वादि जाति शुक्ल (गुणिपरक) अणु दीर्घ और महत् आदि शब्दों से गुण, "पाचक" आदि शब्दों से क्रिया में घटादि शब्दों से जाति में त्वतल् आदि प्रत्यय होते हैं। रूपादि-शब्द जाति प्रकारक बोध के जनक हैं। पाचक आदि शब्द क्रियाप्रकारक बोधजनक होने से क्रिया में भावप्रत्यय होते हैं। जिनके मत में पाचक आदि से संसर्ग प्रकारक बोध होता है उनके मत में संसर्ग में प्रत्यय होता है ऐसी व्यवस्था उपपन्न होती है।

जातिवाचक घटत्वादि शब्दों का वाच्यतावच्छेदक व्यक्तियों को मानते हैं। अतः घटत्व से घटवृत्ति असाधारणधर्म इस प्रकार का बोध होता है।

पक्षान्तर कहते हैं—सर्वे भावाः स्वेन अर्थेन भवन्ति इत्यादि वार्तिक[2] सभी भाव-

---

१. घट संयोग सम्बन्ध से भूतल में है। यहाँ संयोग का प्रतियोगी घट और उस सम्बन्ध का अनुयोगी भूतल माना जाता है। अतः संयोगी (सम्बन्धी) अनुयोगी है।

२. "तस्य भावस्त्वतलौ" इस सूत्र में यदा सर्वे भावाः स्वेन भावेन भवन्ति स तेषां भावस्तदभिधाने किमेभिः त्रिभिर्भावग्रहणैः क्रियते एकेन शब्देन प्रतिनिर्दिश्यते द्वाभ्यामर्थं इति।

शब्द स्वेन आत्मीयवाची स्वशब्द है। आत्मीय अर्थ से भवन्ति प्रवृत्त होते हैं। (वाचकत्व से उस अर्थ में शब्द प्रवृत्त होते हैं यह भाव है) कारिका में यद्वा शब्द का प्रयोग वार्तिकोक्त यद्वा शब्द के सूचनार्थ भी किया गया है। और पक्षान्तर के लिये भी उसका प्रयोग है।

भवन्ति वाचकत्व रूप से प्रवृत्त होते हैं। अतः शब्द भावपद से कहे जाते हैं। स्वेन अपने रूप से—अर्थात् अर्थ से भवन्ति—प्रवृत्त होते हैं। सः वह शब्द तेषाम् उन शब्दों का भावः अर्थात् प्रवृत्तिनिमित्त हैं। यह तात्पर्य है।

यह भाव है—जात्यादि अर्थ के समान शब्द भी विशेषण है। हरि हर नल इक्ष्वाकु युधिष्ठिर वशिष्ठ इत्यादि शब्दों से तत् तत् पदों का वाच्य कोई था इस प्रकार शब्द का शाब्दबोध में विशेषणरूप से भान सर्वानुभव सिद्ध है। शब्द का भान न मानने पर वनौषधिवर्ग नागरिकों के प्रति अबोधक हो जायगा। अप्रसिद्ध अर्थवाले पदों में इसी प्रकार का अनुभव सर्व सिद्ध है न कि घटादि पदों के समान तत् तत् जात्यादि रूप से बोध का अनुभव होता है। अतः जाति और शब्द दोनों ही (शक्यता के) अवच्छेदक हैं।

जहाँ जात्यादिरूप से शक्तिग्रह है वहां जात्यादिप्रकारक उपस्थिति होती है। पदप्रकारक शक्तिग्रह घटत्वपटत्वादि विशेषरूप से अपेक्षित नहीं है किन्तु यह पद किसी अर्थ में शक्त है साधु पद होने से इत्यादिरूप ही अपेक्षित है। इसलिये विशेषरूप से अगृहीतशक्तिकपदों से (अर्थात् अप्रसिद्धार्थक पदों से) शब्दप्रकारक ही बोध होता है। इसलिये उन स्थलों में शब्द ही त्वप्रत्यय का अर्थ है। विस्तर से बृहद्वैयाकरणभूषण में निरूपण किया गया है॥ ५१॥

इति त्वादिभावप्रत्ययार्थनिर्णयः

हिन्दी भाष्य—प्रकृति जन्य बोध के प्रकार के सम्बन्ध में दो पक्ष हैं—

प्रयोगोपाधिम्—तत्तदर्थ के बोध के लिये किये गये शब्दों के उच्चारण प्रसङ्ग में उपाधि=निमित्त कारणभूत जो प्रकारतया भासमान जात्यादि धर्म उसको वाच्यरूप से आश्रयण कर त्वादि भावप्रत्यय प्रकृति से उत्पन्न होते है। अर्थात् जिस धर्मवत्ता के ज्ञान से जिस अर्थ में जिस शब्द का प्रयोग होता है वह धर्म उस शब्द के प्रयोग में निमित्त है। और वही त्वादि प्रत्यय का अर्थ होता है।

"दामोदरत्वं घटत्वम्" इन स्थलों में जाति को निमित्त मानकर उन शब्दों का प्रयोग किया गया है। अतः यहाँ जाति प्रवृत्ति निमित्त होने से भावप्रत्यय का जाति वाच्य है। "शुक्लत्वम्" इसके प्रयोग में शुक्लगुण निमित्त है। तथा "पाचकत्वम्" यहाँ पाक क्रिया प्रवृत्ति निमित्त है। अतः उक्त स्थलों में क्रमशः गुण एवं क्रिया प्रवृत्ति निमित्त होने से गुण तथा क्रिया त्वप्रत्यय का अर्थ हैं।

प्रकृति जन्य बोध में जो जहाँ प्रकार है वहाँ वही त्वादिभावप्रत्यय का वाच्य हैं। यही निष्कर्ष है।

शङ्का—"घटत्वम्" यहाँ पर त्वप्रत्यय से घटत्वत्व भी वाच्य होना चाहिये। अनुल्लिख्यमान जाति का स्वरूपतः भान माना जाता है। जैसे "घट" इस पद से घटत्व जाति का स्वरूपतः भान होता है। क्योंकि घटत्व जाति का यहाँ उल्लेख नहीं है। अनुल्लिख्यमान होने से धर्मान्तर द्वारा भान नहीं होता। "घटत्व" यहाँ घटत्व जाति का स्पष्ट

उल्लेख होने से घटत्वत्वरूप से उसका भान माना जाता है। अतः घटत्वत्व भी प्रकारतया भासमान होने से त्वप्रत्यय का वाच्य अर्थ होना चाहिये।

समाधान—प्रकारतया भासमान धर्ममात्र त्वादिप्रत्यय का वाच्य मान लेने से उक्तापत्ति का निरास हो जाता हैं। अर्थात् वहाँ घटत्वत्व को त्वप्रत्यय वाच्य माना ही जाता हैं। इसीलिये कारिका में "धर्म मात्रं वाच्यम्" ऐसा लिखा है। लाघव गौरव की चर्चा यहाँ नहीं है।

वस्तुतः घटरूप व्यक्ति विशिष्ट घटत्वरूप व्यक्ति विशेष ब्रह्मसत्ता ही जाति है। इसीका स्पष्टीकरण वाक्यपदीय से मूल में किया गया है।

कारिका में "यद्वा" शब्द से सूचित पक्षान्तर का अभिप्राय इस प्रकार है। कारिका में उपात्त "यद्वा" यह पद यद्वाघटित वार्तिक का भी सूचक है।

वार्तिक का स्वरूप इस प्रकार है—"यद्वा सर्वे भावाः स्वेन अर्थेन भवन्ति स तेषां भावः।" भवन्तीतिभावाः। "भवतेश्चेति वक्तव्यम्" इस वार्तिक से कर्ता में ण प्रत्यय होने से भाव शब्द सिद्ध होता है। वार्तिक में स्वशब्द आत्मीय वाची है। स्वेन=आत्मीय जात्यादि अर्थ से भवन्ति अर्थात् प्रवृत्त होता है। भूधातु यहाँ प्रवृत्ति अर्थ में है। अतः इस व्युत्पत्ति से भाव शब्द का अर्थ शब्द होता है। भावाः=शब्दाः यह भाव है। अपने जात्यादि रूप से प्रवृत्त प्रयुक्त होने के कारण प्रवृत्ति निमित्त जात्यादि भी भाव प्रत्यय के वाच्य हैं। प्रवृत्ति निमित्त कहीं जाति कहीं गुण कहीं क्रिया और कहीं शब्द के कारण जात्यादि के समान शब्द भी त्वादिप्रत्यय का वाच्य है।

शङ्का—वाक्यार्थ में प्रकारतया भासमान ही प्रवृत्ति निमित्त होता है। शब्द प्रकारतया भासमान नहीं होता। अतः प्रवृत्तिनिमित्त नहीं हो सकता।

समाधान—हरि हर नल इत्यादि स्थलों में तत्तत् पदवाच्य कोई होगा ऐसा बोध हरिहरादि पद से सर्वानुभव सिद्ध है। जिसका अर्थ विशेष रूप से प्रसिद्ध नहीं है वहाँ सब स्थलों में इस शब्द का वाच्य कोई है इसी प्रकार का बोध होता है। ऐसा न मानने पर अमरकोश के वनौषधि वर्ग में पठित वस्तुओं का नागरिकों को विशेष रूप से ज्ञान नहीं होने से अबोधकत्व का प्रसङ्ग प्राप्त हो जायगा। अतः उक्त स्थलों में प्रकारतया शब्दों का भान अनुभव सिद्ध होने से उसको भी त्वादिप्रत्यय का वाच्य अर्थ मानना उचित है। अतः पद और जात्यादि दोनों ही शक्ति निरूपकता के अवच्छेदक हैं। जिसको विशेष रूप से शक्तिग्रह है, उसको उस स्थल में भी जात्यादि का ही त्वादिप्रत्यय से बोध होगा। जिसको विशेष रूप से ज्ञान नहीं है उसको वहाँ त्वादिप्रत्यय से पद को वाच्य मानना चाहिये॥ ५१॥

इति त्वादिप्रत्ययार्थ निर्णयः



## अथ देवताप्रत्ययार्थनिर्णयः

"सास्य देवता" ( पा० सू० ४।२।२४ ) इत्यत्र दैवताविशिष्टं देयं प्रत्ययार्थः । "ऐन्द्री वैश्वदेवी"त्यादाविन्द्रादेर्देवतात्वोपस्थापकान्तराभावात् । तेन रूपेणोपस्थितये शक्तिकल्पनावश्यकत्वात् । अत एव—

आमिक्षां देवतायुक्तां वदत्येवैष तद्धितः । तन्त्रवा० अ० २ पा० २
आमिक्षापदसांनिध्यात्तस्यैव विषयार्पणम् ॥ इति ।
केवलाद्देवतावाची तद्धितोऽग्नेःसमुच्चरन् ।
नान्ययुक्तोऽग्निदैवत्यं प्रतिपादयितुं क्षमः ॥

इति च मीमांसकैरप्युक्तमित्याशयेनाह—

**प्रत्ययार्थस्यैकदेशे प्रकृत्यर्थो विशेषणम् ॥ ५२ ॥**
**अभेदश्चात्र संसर्ग आग्नेयादावियं स्थितिः ।**
**देवतायां प्रदेये च खण्डशः शक्तिरस्तु वा ॥ ५३ ॥**

एकदेशे = देवतारूपे । तच्च विशेषणमभेदेनेत्याह-*अभेदश्चेति* ॥ ननु देवतायाः प्रत्ययार्थैकदेशत्वान्न प्रकृत्यर्थस्य तत्राभेदेनाप्यन्वय इत्याशयेनाह-*देवतायामिति* ॥ तथाच पदार्थैकदेशतैव नास्तीति भावः ॥ ५३ ॥

ननु देवताया इन्द्रादिपदाल्लाभेन तदन्तर्भावेण तद्धितशक्तिकल्पनमनर्थकमत आह—*देवतात्वोपस्थापकेति* ॥ इन्द्रत्वेन रूपेण देवतोपस्थितावपि देवतात्वेन रूपेण तदुपस्थापकाभावादित्यर्थः । *तेन रूपेणेति* ॥ देवतात्वेन रूपेणेन्द्रोपस्थितये इत्यर्थः । अन्यथा—

तद्धितेन चतुर्थ्या वा मन्त्रलिङ्गेन वा पुनः ।
तन्त्रवा० अ० २ पा० २ पृ० ५३१
देवतासङ्गतिस्तत्र दुर्बलं च परं परम् ॥

इति मीमांसकसिद्धान्तासङ्गतिरिति भावः । द्रव्यस्य देवतासम्बन्धित्वं च तदुद्देश्यकत्यागकर्मत्वं त्यागोद्देश्यत्वमपि वेदबोधिताबाधितद्रव्यस्वामित्वप्रकारेणेच्छाविषयत्वम् । तदेव च देवतात्वम् । नातो घृतादिसम्प्रदानब्राह्मणस्य त्यागोद्देश्यत्वेऽपि देवतात्वम् । तस्य तत्स्वामित्वाबोधात् । 'ऐन्द्रो मन्त्र' इत्यादौ मन्त्रस्य तद्देवताकत्वं च न तदुद्देश्यकत्यागकरणत्वम् , विनाऽपि मन्त्रमिच्छाविशेषात्मकत्यागोत्पत्त्याव्यभिचारात् । किन्तु त्यागाङ्गोच्चारणकत्वम् । एवञ्च देवतासम्बन्धी प्रत्ययार्थः । नतु तद्देवताकत्वम्, 'ऐन्द्रं हविः' इति सामानाधिकरण्यानुपपत्तेः । स चामिक्षादिपदसमभिव्याहारे दानकर्मत्वेनापि प्रतीतेरित्यभिप्रायेणेति भावः । उक्तार्थे

सम्मतिमाह—*अत एवेति* ॥ देवतासम्बन्धिनः प्रत्ययार्थत्वादेवेत्यर्थः। *सान्निध्यादिति* ॥ 'सामिक्षा वैश्वदेवी' इत्यत्रामिक्षापदसमभिव्याहारादित्यर्थः। *विषयार्पणमिति* ॥ आमिक्षात्मकद्रव्यस्यैव देवतोद्देश्यकत्यागकर्मत्वप्रतीतिरित्यर्थः।

*केवलादिति* ॥ सोमादिपदासमभिव्याहृतात् ॥ *अग्नेः समुच्चरन्* । प्रत्ययत्वादग्निशब्दात् पुरः प्रादुर्भवन्। "आग्नेयोऽष्टाकपालो भवत्यमावस्यायाम्" इत्यादौ ॥ *नान्येति* ॥ सोमादिसाहित्यापन्नाऽग्निदेवतोद्देश्यकं द्रव्यं प्रतिपादयितुं नेष्टे, किन्तु तद्देवताकमेवेति तद्भावः। तथाच देवताविशिष्टदेयस्य तद्धितार्थत्वं तेषामपि सम्मतमिति भावः ॥

*प्रकृत्यर्थेति* ॥ 'पदार्थः पदार्थेनाऽन्वेति' इति व्युत्पत्तेरिति भावः ॥ अस्मिन् कल्पे च प्रकृत्यर्थस्याभेदसम्बन्धेन देवतारूपतद्धितार्थेऽन्वयः। तस्य च स्वोद्देश्यकत्यागकर्मत्वसम्बन्धेन द्रव्यरूपतद्धिताऽपरपदार्थे इति बोध्यम् ॥ ५३ ॥

अर्थ—"सास्य देवता" इस सूत्र से विहित (अण्) प्रत्यय का देवता विशिष्ट देय (हविरादि) अर्थ है। "ऐन्द्रम्" "वैश्वदेवी" इत्यादि स्थल में इन्द्रादि का देवतात्व रूप से उपस्थापक कोई अन्य पद नहीं है। (इसलिये) देवतात्वरूप से इन्द्र की उपस्थिति के लिते अण् प्रत्यय की (उस अर्थ में) शक्ति कल्पना आवश्यक है।

अतएव—देवता सम्बन्धी को प्रत्ययार्थ मानने से ही। इसी आशय की "आमिक्षां देवतायुक्ताम्" इत्यादि कारिका मीमांसकों ने भी लिखी है। अमिक्षामित्यादि—

"वैश्वदेवी" इसमें जो अण् प्रत्यय है वह विश्वेदेवादेवता से युक्त आमिक्षा[1] का बोधक है। आमिक्षा पद के सामीप्य से तस्य=आमिक्षात्मक देय द्रव्य की ही, विषयार्पणम्= देवता को उद्देश्य कर त्याग कर्मत्व रूप से प्रतीति होती है। केवल=सोमादि पदों से अयुक्त अग्निशब्द से प्रादुर्भूत देवतावाची तद्धित प्रत्यय, सोमादियुक्त अग्नि देवता सम्बन्धी देय का प्रतिपादन करने में समर्थ नहीं है।

इसी आशय से अग्रिमकारिका लिखते हैं। "प्रत्ययार्थस्यैकदेशे" इति। प्रत्यय अण् आदि तद्धित के अर्थैकदेश में प्रकृत्यर्थ (अग्नि का अर्थ) का अन्वय होता है। यहाँ सम्बन्ध अभेद है। "आग्नेयादि" स्थल में यही स्थिति है।

अथवा देवता और प्रदेय में खण्डशः शक्ति है। (देवतासम्बन्धी देय में शक्ति अथवा एक वृन्तगत फलद्वय के समान खण्डशः शक्ति है।)

एक देश अर्थात् देवतारूप। इसमें प्रकृत्यर्थ अभेद से विशेषण है। इसको कहते हैं— "अभेदश्चेति"।

शङ्का—देवता, प्रत्यय के अर्थ का एक देश है इसलिये प्रकृत्यर्थ का अन्वय नहीं होगा।

समाधान—देवता और प्रदेय दोनों में खण्डशः शक्ति होने से पदार्थैकदेश नहीं होने से अन्वय एकदेश में नहीं हुआ। ॥५३॥

---

१. तप्ते पयसि दध्यानयति सा वैश्वदेवी आमिक्षा वाजिभ्यो वाजिनम्। गरम दूध में दधि डालने पर घनीभूत (छेना) को आमिक्षा तथा पानी के समान तरल को वाजिन कहते हैं। यह भाव है।

नन्वग्न्यादिदेवस्य प्रकृत्यैव लाभान्न तत्र शक्तिः कल्प्या। न च देवतात्वेन रूपेणोपस्थितये सा कल्प्यते। प्रकृतेर्लक्षणयैव तथोपस्थितिसम्भवात्। उपसर्गाणां द्योतकत्वनये प्रजयतीत्यत्र प्रकृष्टजयप्रत्ययवदित्यभिप्रेत्याह—

प्रदेय एव वा शक्तिः प्रकृतेस्त्वस्तु लक्षणा॥
देवतायां निरूढेति सर्वे पक्षा अमी स्थिताः॥ ५४॥

न च 'ऐन्द्रं दधि' इत्यादौ द्रव्यस्य पदान्तराल्लाभात् कुतः पुनः प्रत्ययस्य तत्र शक्तिः कल्प्यत इति वाच्यम्। पदान्तराश्रवणेऽपि तत्प्रतीतेः। ऐन्द्रं दधीति सामानाधिकरण्याच्च।

अन्यथाऽऽख्यातस्यापि कर्त्तृकर्मवाचित्वं न स्यात्। मीमांसकानां पुनः प्रत्ययस्य देवतात्वमेवार्थोऽस्तु। द्रव्यं पदान्तराल्लभ्यत एवेति आख्यातस्य कर्त्तृवद्वाच्यत्वं मास्त्विति कुतो न शक्यते वक्तुमिति दिक्। देवतायाम्—देवतात्वेन रूपेण। निरूढेति = अनुपपत्तिज्ञानापूर्वकत्वमनादिप्रयोगावच्छिन्नत्वं वा तत्त्वमिति भावः॥ ५४॥

*द्योतकत्वनय इति*। वाचकत्वनये प्रकर्षस्योपसर्गार्थत्वेन तद्विशिष्टे धातोर्लक्षणाया अकल्पनेन दृष्टान्तत्वासम्भवादिति भावः॥ *प्रकृष्टजयवदिति*। प्रकृत्यंशमात्रमादाय दृष्टान्तत्वं बोध्यम्॥ *लाभादिति*। समभिव्याहृतदध्यादिपदेन देवतारूपसम्बन्धिलाभादित्यर्थः॥ *कुतः पुनरिति*। "अनन्यलभ्यो हि शब्दार्थः" इति न्यायात्। किन्तु सम्बन्धार्थकत्वमेवोचितमिति भावः॥ *तत्प्रतीतेरिति*। देवतासम्बन्धिप्रतीतेरित्यर्थः। तथाच तदनुपपत्त्या तद्धितस्य तदर्थकत्वमावश्यकमिति भावः।

पदान्तराश्रवणे सम्बन्धिप्रतीतेश्च शपथनिर्णेयत्वादाह—*ऐन्द्रं दधीति*। सम्बन्धमात्रार्थकत्वे सामानाधिकरण्यानुपपत्तिरित्यर्थः। *अन्यथेति*। उक्तानुपपत्तेस्तदसाधकत्वे इत्यर्थः। 'पचति देवदत्तः' 'पच्यते तण्डुल' इत्यत्र सामानाधिकरण्यानुपपत्तिर्हि कर्त्रादिवाचित्वसाधिकेति भावः॥ वैयाकरणान् प्रतीयमापत्तिः। मीमांसकान् कटाक्षीकृत्याह—*मीमांसकानामिति*। तन्मते तत्तद्देवताकत्वरूपप्रत्ययार्थेन धर्मिण आक्षेपाल्लाभेन सामानाधिकरण्योपपत्तेरिति भावः। पदान्तरादित्याक्षेपस्याऽप्युपलक्षणम्॥ *वाच्यत्वं मास्त्विति*। आख्यातस्य कर्तेव तद्धितस्य द्रव्यं वाच्यं मास्त्वित्यर्थः। इष्टापत्तौ "आमिक्षां देवतायुक्ताम्" इति त्वत्सिद्धान्तभङ्ग इति भावः।

ननु तेषां कर्तुरनन्यलभ्यत्वान्न प्रत्ययाऽवाच्यत्वं, किन्तु प्राधान्यापत्तेरेव तत्त्वमत आह—*दिगिति*। तदर्थस्तु "प्रकृतिप्रत्ययार्थयोः" इति न्यायस्य सङ्ख्यादौ व्यभिचारेण तेन प्राधान्यापत्त्यभावात्। "भावप्रधानमाख्यातम्" इति निरुक्तात्तस्याख्यातार्थातिरिक्तप्रत्ययार्थविषयकत्वोपगमान्नेति।

अत्रेदम्बोध्यम्—तद्धितस्य देवतात्वाघटितार्थकत्वे, "तद्धितेन चतुर्थ्या वा" इति न्यायस्य सर्वसिद्धस्यानुपपत्तिः। नच तद्धितस्य तदर्थकत्वेऽपि कथं तदपेक्षया चतुर्थ्या जघन्यत्वं त्यागोद्देश्यकत्वरूपदेवताबोधकत्वस्योभयत्राविशिष्टत्त्वादिति वाच्यम्। न हि देवतासम्बन्धिदेयमात्रं तद्धितार्थः, किन्तु वेदबोध्यदेवतात्वघटितः। एवञ्च तद्धितान्तेन बोधस्य देवतात्वांऽशे वेदबोध्यत्वाऽवगाहितत्वेन तदंशे अप्रामाण्यशङ्काया अनुदयाज्झटिति विनियोजकतया बलवत्वम्, चतुर्थ्या तु तदंशे वेदबोध्यत्वावगाहिबोधस्यैव जननेन तत्राप्रामाण्यशङ्कानिरासार्थमुपायान्तरस्यापेक्षणाज्जघन्यत्वम्।

यद्वा तद्धितेन देवतात्वेन रूपेण देवताबोधे "साऽस्य देवता" (पा० सू० ४।२।२४) इति स्मरणमस्ति। चतुर्थ्यास्तु देवतात्वे न स्मरणम्। "चतुर्थी सम्प्रदाने" (पा० सू० २।३।१३) इति सम्प्रदान एव तत्स्मरणात्। सम्प्रदानत्वं च त्यज्यमानद्रव्योद्देश्यकत्वे सति प्रतिग्रहीतृत्वम्। एवञ्च ततः सम्प्रदानत्वघटकतया देवतात्वप्रतीतावपि तद्धितादिवन्मुख्यतया देवतात्वानधिगमात् तस्यास्तद्धिताऽपेक्षया जघन्यत्वम्। एवं मन्त्रवर्णादधिष्ठानप्रतीतावपि देवतात्वस्य साक्षादप्रतीतेर्मन्त्रवर्णस्य चतुर्थ्यपेक्षया जघन्यत्वं बोध्यम्। तद्धितस्य देवतार्थकत्वाऽनभ्युपगमे तु तदसङ्गतिः स्पष्टैवेति।

नन्विन्द्रादिपदाच्छक्त्यैव देवतालाभे तत्र लक्षणाभ्युपगमो व्यर्थोऽत आह—*देवतात्वेन रूपेणेति* ॥ तथाच "शक्यादन्येन रूपेण ज्ञाते भवति लक्षणा" इतिवृद्धोक्तेर्देवताया इन्द्रस्वरूपायाः शक्यत्वेऽपीन्द्राभिन्नदेवतात्वेन तज्ज्ञानार्थं सोचितैवेति भावः। अनुपपत्तिज्ञानपूर्विकायामपि तीरनिष्ठगङ्गापदलक्षणायां निरूढत्वव्यवहारादाह—*अनादीति* ॥ एतत्तत्त्वमभिहितं प्राक् ॥ ५४ ॥

अर्थ-शङ्का—अग्नि आदि देवता का प्रकृति से ही लाभ हो जाने से देवता अर्थ में अण् आदि प्रत्यय की शक्ति कल्पना अनावश्यक है। यदि कहें कि देवतात्व रूप से अग्नि आदि की उपस्थिति के लिये शक्ति की कल्पना आवश्यक है तो प्रकृति = अग्नि आदि पदों की अग्नि देवता अर्थ में लक्षणा मानने से ही देवता की प्रतीति हो जायगी। जिस प्रकार उपसर्गों को द्योतक माननेवालों के मत में "प्रजयति" इसमें धातु से प्रकृष्ट जय की प्रतीति लक्षणा से होती है उसी प्रकार यहाँ भी लक्षणा से प्रतीति हो जायगी। इसको मानकर लिखते हैं। "प्रदेये एव वा शक्तिः" इत्यादि

अथवा प्रदेय त्यागकर्मीभूत द्रव्य मात्र में तद्धित प्रत्यय की शक्ति है। प्रकृति = अग्नि आदि पद की देवता अर्थ में निरूढ़ा = अनादितात्पर्यवती लक्षणा है। इस प्रकार ये सब पक्ष मीमांसकों के ग्रन्थों में अवस्थित हैं।

शङ्का—"ऐन्द्रं दधि" इत्यादि स्थल में देय द्रव्य का दध्यादि पद से ही लाभ हो जाने से प्रत्यय की उस अर्थ में शक्ति की कल्पना क्यों करते हैं।

समाधान—पदान्तर के श्रवण न होने पर भी देय द्रव्य की प्रतीति होने से उसमें शक्ति है। ऐन्द्र के साथ दधि का सामानाधिकरण्य (अभेदान्वय) होने से भी देय में शक्ति मानना आवश्यक है। अन्यथा = सामानाधिकरण्य की अनुपपत्ति यदि द्रव्यवाचित्व की साधिका नहीं होगी तो तिङ् कर्ता कर्म का वाचक है यह भी सिद्ध नहीं होगा।

( सामानाधिकरण्य देखने से ही कर्तृकर्मवाचित्व आख्यात में सिद्ध होता है। ) मीमांसकों के मत में प्रत्यय का देवतात्व अर्थ हो, द्रव्य का लाभ पदान्तर से हो ही जाता है पुनः देवता सम्बन्धी द्रव्य की वाच्यता आख्यातार्थ कर्ता अर्थ के समान नहीं है ऐसा क्यों नहीं कह सकते। देवता में देवतात्व रूप से। निरूढा—अनुपपत्ति के ज्ञान के विना होनेवाली अथवा अनादि प्रयोगावच्छिन्न लक्षणा ही निरूढा कही जाती है। यही सार है। ॥५४॥

हिन्दी भाष्य—"सास्य देवता" इत्यादि सूत्रों से विहित तद्धित प्रत्यय के अर्थ में विभिन्न मत होने से इसके अर्थ का निर्णय आवश्यक है। अपत्य आदि अर्थवाले तद्धित प्रत्ययों में किसी प्रकार की विप्रतिपत्ति न होने से उनके अर्थों का निरूपण नहीं किया गया।

"ऐन्द्री" "वैश्वदेवी" आदि स्थलों में अण् प्रत्यय का देवता सम्बन्ध मात्र अर्थ नहीं है किन्तु देवता सम्बन्धी अर्थ है। अत एव अभेद सम्बन्ध से आमिक्षा आदि के साथ वैश्वदेवी आदि का अन्वय होता है। नहीं तो सम्बन्ध मात्र अर्थ होने पर अभेद नहीं हो सकेगा। सम्बन्ध और आमिक्षा एक नहीं है।

देय द्रव्य को प्रत्ययार्थ मूल में कहा गया है। यह उपलक्षण है। देवता सम्बन्धी कहीं आमिक्षा हवि आदि देय है कहीं "ऐन्द्रो मंत्रः" यहाँ मन्त्र देवता सम्बन्धी है न कि देय द्रव्य है, अतः देवतासम्बन्धी प्रत्ययार्थ है। विशेष्य के सन्निधान से सम्बन्धी का निर्णय होता है।

देवता सम्बन्धित्व = देय द्रव्य के साथ देवता को उद्देश्य कर जो त्याग उसका कर्मत्व रूप है। मन्त्र में देवता सम्बन्ध स्वोद्देश्यक त्यागकरणत्व रूप से श्रुतिबोधितत्व है।

मीमांसकों का भी यही मत है। तद्धित, देवतायुक्त आमिक्षा का बोधक है। इससे स्पष्ट है कि सम्बन्धी अर्थ है, सम्बन्ध मात्र नहीं। आमिक्षा आदि के सान्निध्य = समभिव्याहार से तद्धितार्थ देय की आमिक्षा रूप से प्रतीति होती है। आमिक्षात्व रूप से तद्धित की शक्ति नहीं है। केवल अग्नि आदि शब्द से उत्पन्न तद्धित प्रत्यय सोमादियुक्त अग्निदेवतासम्बन्धी के बोधन में समर्थ नहीं है। अत एव अग्निषोमीय पुरोडास को आग्नेय शब्द से ग्रहण नहीं होता है।

"आग्नेयः ऐन्द्रः" आदि स्थल में तद्धित प्रत्ययार्थ के एकदेश देवता में प्रकृत्यर्थ (अग्नि आदि के अर्थ ) का अभेद से अन्वय होता है। तद्धितार्थ देवता का स्वोद्देश्यकत्याग कर्मत्व से द्रव्य रूप अपर पदार्थ में अन्वय होता है। अग्नि से अभिन्न देवतासम्बन्धी हवि इत्यादि बोध होता है।

पदार्थ = वृत्तिज्ञान से जन्य जो उपस्थितीय मुख्य विशेष्यता इसका आश्रय जो अर्थ उसका पदार्थ में ही अन्वय होता है एकदेश (प्रकारतया भासमान) में नहीं। इस नियम के अनुसार एकदेश में अन्वय नहीं हो सकता। अतः देवता और सम्बन्धी में खण्डशः शक्ति है। एकही शक्ति से दोनों अर्थ उपस्थित होते हैं। परस्पर विशेषणविशेष्यभाव न होने से पदार्थैकदेश नहीं हुआ।

अथवा अग्नि आदि शब्द का अग्नि आदि देवता में लक्षणा है। तद्धित प्रत्यय का केवल सम्बन्धी द्रव्य में शक्ति मानने से उक्त बोध का निर्वाह हो जाता है। अतः देवता में शक्ति नहीं है। यहाँ लक्षणा निरूढा मानी गई है। किसी प्रयोजन के विना अनादि तात्पर्य से उस अर्थ का बोधन करनेवाला व्यापार निरूढलक्षणा है। "गङ्गायां घोषः" इस में गङ्गापद की तीर में लक्षणा का शैत्यपावनत्वप्रतीति प्रयोजन है। जैसे शुक्लः इस शब्द की शुक्लवान् में लक्षणा करने का कोई फल नहीं है। अतः यह निरूढलक्षणा है। यद्यपि स्वमत में अप्रसिद्ध शक्ति का ही नामान्तर है लक्षणा। अतः लक्षणा का उपन्यास युक्त नहीं है। तथापि दूसरे लोगों के मत की वासना से ऐसा लिखा है।

लक्षणा देवतात्व रूप से देवता में मानने से देवतात्व रूप से देवता की प्रतीति इस पक्ष में भी हो जायगी। अतः तद्धितार्थ सम्बन्धी (देय) मात्र है।

तद्धितार्थ के विषय में अनेक पक्षों का उल्लेख मिलता है। जैसे—देवतासम्बन्धी देय देवता और देय पृथक् तद्धित के अर्थ लक्षणा से इन्द्राद्यभिन्न देवता प्रकृत्यर्थ, प्रत्ययार्थ देय द्रव्य देवतात्व और देय प्रत्ययार्थ इत्यादि ॥ ५४ ॥

अनयैव रीत्यान्यत्राप्यवधेयमित्याह—

**क्रीडायां णस्तदस्यास्तीत्यादावेषैव दिक् स्मृता ॥**
**वस्तुतो वृत्तिरेवेति नात्रातीव प्रयत्यते ॥ ५५ ॥**

"तदस्यां प्रहरणमिति क्रीडायां णः" (पा० सू० ४।२।५६) इत्यत्र प्रहरणविशिष्टा क्रीडा प्रहरणक्रीडे क्रीडामात्रं वार्थः। आदिना, "सोऽस्य निवासः" (पा० सू० ४।३।८९) "सास्मिन् पौर्णमासी" (४।२।२१) इति, "तदस्यास्त्यस्मिन्निति मतुप्" (पा० सू० ५।२।१४) इत्यादिकं संगृह्यते।

वृत्तिमात्रेऽतिरिक्तशक्तेः, "समर्थः पदविधिः" (पा० सू० २।१।१) इति सूत्राल्लाभादुक्तो विचारः शास्त्रान्तरीयैः सह तद्रीत्यैवोक्तः। आरोपितप्रकृतिप्रत्ययार्थमादाय वा। वस्तुतो विशिष्टशक्त्यैवार्थोपस्थितिरित्याह—वस्तुत इति० ॥ ५५ ॥

इति वैयाकरणभूषणसारे देवतादिप्रत्ययार्थनिर्णयः ॥ १० ॥

---

एकदेशान्वयप्रसङ्गमाह—*प्रहरणक्रीडेति* ॥ व्युत्पत्तिवैचित्र्यादेकपदोपस्थितयोरपि तयोः परस्परमन्वय इति भावः ॥ प्रहरणस्यापि प्रकृत्यैव लाभमभिप्रेत्याह—*क्रीडामात्रं वेति* ॥ क्रीडारूपसम्बन्ध्येवेत्यर्थः ॥ मात्रपदेन तत्प्रहरणस्य तद्धितार्थत्वव्यवच्छेदः ॥ तथाच दण्डाभिन्नप्रहारसाधनविशिष्टा क्रीडेति बोधः ॥ *सोऽस्येति* ॥ एतत्सूत्रविहितप्रत्ययस्य निवासः सम्बन्धी चार्थः। अत्र निवासशब्दोऽधिकरणघञन्तो—निशब्देन च वासे नैरन्तर्यरूपातिशयः प्रत्याय्यते। स च प्रकरणादिना तत्तत्कालघटितो ग्राह्यः। तथाच स्रुघ्नाभिन्न—वासाऽधिकरणसम्बन्धीति बोधः।

निवासश्च प्रत्यासत्या प्रत्ययार्थसम्बन्धकर्तृक एव। अत एव कादाचित्कस्रुघ्नावासकर्तरि न तथा प्रयोगः॥

*सास्मिन्निति*। सूत्रविहिततद्धितस्य तु पौर्णमासीघटितत्वावच्छिन्नोऽर्थः। नक्षत्रयुक्तकालविहिताऽणाद्यन्तपौषादिशब्दानां पुष्याभिन्ननक्षत्रकर्मकशशिभोगाश्रयकालोऽर्थः। तस्योक्तार्थैकदेशपौर्णमास्यामभेदान्वयः। तथा च 'पौषो मास' इत्यादौ पुष्याभिन्ननक्षत्रकर्मकशशिभोगाश्रयकालाभिन्नपौर्णमासीघटितो मास इत्यादिबोधः। पौषादिपदं च न केवलयौगिकम्। 'पौषः पक्ष' इति व्यवहारविरहात्, किन्तु रूढमपि। एतद्बोधनायैव सूत्रे संज्ञाग्रहणम्। रूढिनिरूपकतावच्छेदकश्च त्रिंशत्तिथिसमुदायत्वरूपमासत्वमात्रम्। यत्किञ्चित्तिथ्यवधिकत्रिंशत्तिथिसमुदाये मासादिव्यवहारेऽपि चान्द्रसौरपौषादिबहिर्भूतपौष्यादिघटितत्रिंशत्तिथ्यन्तर्गततिथिषु पौषादिव्यवहारविरहात्, किन्तु शुक्लप्रतिपदादिदर्शाऽन्ततिथिसमुदायत्वगतो नोक्तदोष इत्याद्यन्यत्र विस्तरः।

"तदस्यास्त्यस्मिन्" (पा० सू० ५।२।९४) इति सूत्रेण प्रथमान्तादस्त्यर्थोपाधिकात् सम्बन्धिन्यधिकरणे च मत्वर्थीया विधीयन्ते। यद्यप्यस्येत्युक्तेः षष्ठ्यर्थसम्बन्ध एव मतुबादिविधानमाभातिः तथापि गोमांश्चैत्र इति समानाधिकरण्यानुरोधात् सम्बन्धि वाचकत्वेत्युक्तं प्राक्। एवञ्च गोमानित्यादौ गोनिरूपितस्वामित्वसम्बन्धवानित्याद्यन्वयबोधः। नच—

भूमनिन्दाप्रशंसासु नित्ययोगेऽतिशायने।
सम्बन्धेऽस्तिविवक्षायां भवन्ति मतुबादयः।

इति सम्बन्धसमकक्षतया भूमाद्यर्थानामप्युपादानात् तेषामपि मतुबादिशक्यत्वमिति शङ्क्यम्। स्यादेवम्, यदि तेष्वर्थेषु मतुबादीनां विधायकं सूत्रादिकमुपलभ्येत, किन्तु प्रयोगोपाधित्वमेव तेषाम्। अस्त्यर्थवद् गवादिपदानां बहुत्वादिविशिष्टलाक्षणिकतयैव भूमादिप्रतीतिसौलभ्याच्च। अन्ये त्वस्तिशब्दान्मतुबर्थं तद्ग्रहणमित्याहुरित्यन्यत्र विस्तरः।

इत्यादिकमित्यादिपदात्, "तस्यापत्यम्" (पा० सू० ४।१।९२) "तेन रक्तं रागात्" (पा० सू० ४।२।१) "संस्कृतं भक्षाः" (पा० सू० ४।२।१६) इत्यादिसङ्ग्रहः। तत्र 'गार्गिः' इत्यादौ तद्धितार्थापत्यस्य जन्यपुरुषरूपस्यैकदेशे जन्यत्वे प्रकृत्यर्थगर्गादेर्निरूपकतयाऽन्वयाद् गर्गनिरूपितजन्यताश्रयः पुमानित्वादिबोधः। 'गार्ग्यं' इत्यादौ तु जन्यपुरुषजनकपुरुषाद्यात्मकगोत्रापत्यार्थैकदेशे जन्यत्वे प्रकृत्यर्थान्वयः। 'गार्ग्यायिण' इत्यादौ तद्धितार्थयुवापत्यैकदेशे गोत्रप्रत्ययान्तार्थस्य निरूपकतयाऽन्वयः। परन्तु "जीवति तु वंश्ये युवा" (पा० सू० ४।१।१६३) इति परिभाषणाद् गर्गजीवनसमानकालिकत्वमपि प्रधानप्रत्ययार्थे विशेषणम्। तस्याऽपि प्रत्ययशक्यत्वात्।

एवञ्च गर्गजीवनसमानकालिको गर्गगोत्राऽपत्यनिरूपितजन्यतावानयं पुमानिति बोधः ।

"तेन रक्तम्" ( पा० सू० ४।२।१ ) इति विहितप्रत्ययस्य तत्सम्बन्धाधीनतदीयरूपारोपविषयोऽर्थः । तादृशारोपविषयत्वमेव तेन रक्तत्वम् । "शङ्खः पीत" इत्यारोपमादाय शङ्खादेरारोप्यपीतिमाश्रयहरितालादिना रक्तत्ववारणायाधीनान्तमारोपविशेषणम् । माञ्जिष्ठपटादेश्चक्षुरादिना रक्तत्ववारणाय तदीयत्वं रूपविशेषणम् । अत्र च रागकरणस्य मञ्जिष्ठादेः प्रकृत्यर्थस्य तद्धितार्थैकदेशसम्बन्धे प्रतियोगितया रूपे चाधेयतयान्वयः । तथाच मञ्जिष्ठासंबन्धाधीनो यो मञ्जिष्ठानिष्ठरूपारोपस्तद्विषयताश्रय इति 'माञ्जिष्ठ' इत्यतो बोधः । 'शूल्यम्, 'उख्यम्' इत्यादौ, "संस्कृतं भक्षाः" ( पा० सू० ४।२।१६ ) इति सूत्रविहिततद्धितार्थैकदेशे पाकादिसंस्कारे शूलोखादेः प्रकृत्यर्थस्याऽधिकरणत्वेनाऽन्वयः ।। अनयैव रीत्या तद्धितान्तराद् बोध ऊहनीयः ।

तद्धितानां क्वचित्प्रकृत्यऽर्थे स्वार्थैकदेशस्य, क्वचित् स्वार्थस्यैवान्वयबोधकत्वादिति जहत्स्वाऽर्थवृत्तिपक्षमवलम्ब्य मूलमवतारयति—*वृत्तिमात्र इति* ।। तथाच तत्पक्षे पदानामानर्थक्यात् तदर्थनिरूपणे सिद्धान्तप्रच्युतिरिति भावः ।। *तद्रीत्यैवेति* ।। शास्त्रान्तरीयरीत्यैवेत्यर्थः । ननु वैयाकरणमते जहत्स्वार्थवृत्त्याश्रयणे, "न पूजनात्" ( पा० सू० ५।४।१ ) "तेन रक्तं रागात्" ( पा०सू० ४।२।० ) इत्यादिसूत्राणां का गतिरत आह—*आरोपितेति* ।। *विशिष्टशक्त्यैवेति* । विशिष्टार्थस्येति शेषः ।। वृत्तौ पक्षद्वयाभ्युपगमेन जहत्स्वार्थपक्षे तद्घटकपदाऽर्थनिरूपणस्यानुपयोगेऽप्यजहत्स्वार्थपक्ष विशिष्टशक्तिग्रहस्य प्रत्येकशक्तिनिरूपणोपजीवकतया तन्निरूपणस्यौचित्यमेव : एतत्सूचनायैव मूलेऽतीवेत्युपात्तमिति रहस्यम् ॥ ५५ ॥

इति भूषणसारदर्प्पणे देवतादिप्रत्ययार्थनिरूपणम् ।। १० ।।



अर्थ—"तदस्यां प्रहरणम्" इत्यादि से अस्ति अस्य इत्यादि अर्थ में विहित ण प्रत्यय में भी यही रीति का अनुसरण करना चाहिये ।

वस्तुतः प्रहरणविशिष्ट क्रीडा में ण प्रत्यय की शक्ति है । इसमें अधिक प्रयास नहीं करते ।

"तदस्याम्"—इत्यादि सूत्र से विहित ण का प्रहरण विशिष्ट क्रीड़ा या खण्डशः शक्ति मानने पर प्रहरण तथा क्रीड़ा अथवा क्रीड़ामात्र अर्थ है । आदि पद से "सोऽस्य निवासः" "साऽस्मिन् पौर्णमासी "तदस्यास्त्यस्मिन्निति मतुप्" इत्यादि का संग्रह है। वृत्ति मात्र में अतिरिक्त शक्ति का "समर्थः पदविधिः" इस सूत्र से लाभ होता है । अतः उक्त विचार शास्त्रान्तर विचारकों के साथ शास्त्रान्तर रीति से ही किया है । अथवा आरोपित प्रकृत्यर्थ और प्रत्ययार्थ को लेकर विचार किया है । वस्तुतः विशिष्ट शक्ति से ही अर्थों की उपस्थिति है । यही "वस्तुतः" से कहा गया है ॥ ५५ ॥

इति देवताप्रत्ययार्थ निरूपणम्

हिन्दीभाष्य—इसी प्रकार "तदस्यां प्रहरणम्" इससे विहित ण का प्रहरणविशिष्ट क्रीड़ा १ प्रहरण तथा क्रीड़ा २ एवं क्रीड़ामात्र प्रत्ययार्थ है।

वस्तुतः "समर्थः पदविधिः" इस सूत्र के अनुसार पदसम्बन्धी विधि के लिये सामर्थ्य एकार्थीभाव रूप है। एकार्थीभावरूप शक्ति समुदाय में होने से समुदाय से अर्थबोध होने के कारण प्रकृति और प्रत्यय का पृथक्-पृथक् अर्थ नहीं है। यदि अर्थ है तो वह प्रकृति प्रत्यय-समुदायार्थ का सहायक ही हैं। अतः तद्धितार्थ का विचार शास्त्रान्तर दृष्टि से है। शास्त्रान्तर में अवयव शक्ति ही मानी गई है समुदाय में शक्ति नहीं है।

मीमांसकों के विचार से देवता का कोई स्वरूप तथा निवास विशेष नहीं है। किन्तु वेद के द्वारा बोधित अबाधित जो द्रव्य का स्वामित्व एतत् प्रकारक इच्छाविषयत्व ही है। ब्राह्मण को घृत प्रदानस्थल में देवतात्वब्राह्मण में नहीं है। क्योंकि घृतद्रव्य का स्वामित्व ब्राह्मण में वेद द्वारा बोधित नहीं है। विशेष विचार अन्यत्र देखिये ॥ ५५ ॥

इति देवतादिप्रत्ययार्थ निर्णयः



## अथाऽभेदैकत्वसंख्यानिर्णयः

वृत्तिप्रसङ्गात् तत्राभेदैकत्वसङ्ख्या प्रतीयत इति सिद्धान्तं दृष्टान्तेनोपपादयति—

अभेदैकत्वसङ्ख्याया वृत्तौ भानमिति स्थितिः ॥
कपिञ्जलालम्भवाक्ये त्रित्वं न्यायाद् यथोच्यते ॥ ५६ ॥

सङ्ख्याविशेषाणामविभागेन सत्त्वम्—अभेदैकत्वसङ्ख्या । उक्तञ्च वाक्यपदीये—

यथौषधिरसाः सर्वे मधुन्याहितशक्तयः । वृत्तिसमु०
अविभागेन वर्त्तन्ते, सङ्ख्यां तां तादृशीं विदुः ॥ इति ॥ १००

परित्यक्तविशेषं वा सङ्ख्यासामान्यं तत् । उक्तञ्च—

भेदानां वा परित्यागात् सङ्ख्यात्मा स तथाविधः ।
व्यापाराज्जातिभागस्य भेदापोहेन वर्त्तते ॥ इति ॥ १०१
अगृहीतविशेषेण यथा रूपेण रूपवान् ।
प्रख्यायते न शुक्लादिर्भेदापोहस्तु गम्यते ॥ इति ॥ १०२

अस्याः वृत्तौ—समासादौ; भानं न्यायसिद्धमिति शेषः । मतस्थिति-र्वैयाकरणानाम् ।

अयम्भावः—राजपुरुष इत्यादौ, राज्ञो, राज्ञोः, राज्ञां वाऽयं पुरुष इति जिज्ञासा जायते । विशेषजिज्ञासा च सामान्यज्ञानपूर्विकेति सामान्यरूपेण तत्प्रतीतिः शब्दादावावश्यकी । अतस्तस्यां शक्तिरिति । तस्या एकत्वेन प्रतीतौ न्यायमाह-०कपिञ्जलेति० ॥ बहुत्वगणनायां त्रित्वस्यैव प्रथमोपस्थितत्वात् तद्रूपेणैव भानवद् एकत्वस्य सर्व्वतः प्रथमोपस्थितत्वमस्तीति भावः ।

वस्तुतस्तु जिज्ञासैव नानुभवसिद्धा । तथात्वे वा ज्ञानेच्छयोः समानप्रकारकत्वेनैव हेतुहेतुमद्भावात्तत्तद्रूपेणैव वाच्यता स्यादिति ध्येयम् ॥ ५६ ॥

इति वैयाकरणभूषणसारे अभेदैकत्वसङ्ख्यानिरूपणम् ॥ ११ ॥



ननु प्रकान्ते प्रातिपदिकघटकप्रत्ययार्थनिरूपणेऽभेदैकत्वसङ्ख्यानिरूपणमसङ्गतमत आह—*वृत्तिप्रसङ्गादिति* । तथाच वृत्तिनिरूपणे क्रियमाणे स्मृतिपथप्राप्ततद्धर्मोपेक्षाऽनुचितेति प्रसङ्गसङ्गतिसत्त्वान्नोक्तदोष इति भावः । यद्यपि वक्ष्यमाणत्वाद्यन्तेऽपि कृद्वृत्तिसत्त्वात्तदनन्तरमेव सङ्ख्यानिरूपयितुमुचिता, तथापि तत्प्रकृत्यर्थे सङ्ख्याया

अभानादाकाङ्क्षाविच्छेदः स्यादित्यत्रैव तन्निरूपितमिति बोध्यम् । अभेदैकत्वसङ्ख्यां पदार्थं मतभेदेन द्विधा निर्वक्ति—*सङ्ख्याविशेषाणामिति* । एकत्वत्वाद्यवच्छिन्नानामित्यर्थः । *अविभागेन*—अभेदेन, अविरोधेनेति यावत् : उक्तार्थे हरिवाक्यं प्रमाणयति—*उक्तञ्चेति* । *आहितशक्तयः* । आहिता समर्पिता तत्तदोषविभेदनिबन्धनविरोधरूपा शक्तिर्यैरित्यर्थः । त्यक्तविरोधा इति यावत् । अत एव—*अविभागेन* । अविरोधेनेत्यर्थः । *ताम्* । अभेदैकत्वसङ्ख्याम् । *तादृशीम्* । मधुनिष्ठरसस्थितितुल्यामित्यर्थः ।

नन्वेकत्वद्वित्वादीनामेकत्र सत्त्वमनुपपन्नम् । न हि द्वावेकत्वेन व्यवह्रियेते, नाप्येको द्वाविति । "न हि द्विपुत्र" इति भाष्यात् ॥ किञ्च दृष्टान्तोऽपि न समञ्जसः । तत्तद्रसवदारब्धेऽवयविनि माक्षिकेऽवयवसजातीयरसान्तरस्यैवोत्पादाभ्युपगमादत आह—*परित्यक्तेति* । वाशब्दः पक्षान्तरे । अगृहीतविशेषधर्मकं संख्यामात्रमित्यर्थः । पूर्वकल्पे उक्तास्वरसाभिसन्धिकं वाक्यपदीयं तत्पक्षेऽपि प्रमाणत्वेनोपन्यस्यति—*भेदानामिति* । *भेदानाम्०*—एकत्वत्वद्वित्वत्वादिविशेषधर्माणाम् । *परित्यागात्* । अग्रहात् । इदञ्च व्यापारपदार्थेऽभेदेनाऽन्वयि ॥ *संख्यात्मा*—संख्यास्वरूपः ॥ *सः*—एकत्वादि ॥ *तथाविधः*। अभेदैकत्वव्यपदेश्य इत्यर्थः । तदेव विशदयति—*जातिमात्रस्येति* । एकत्वत्वत्वादेरित्यर्थः ।

*भेदापोहेनेति* । भेदस्य विशेष(ण)स्य योऽपोहोऽग्रहस्तेनेत्यर्थः ॥ यद्वा भेदापोहेनेत्यस्य व्यापारादित्यनेनाऽन्वयः । प्रकृत्यादित्वात् तृतीया । तथाचैकत्वत्वादेर्जातिविशेषस्य भेदाग्रहरूपो यो व्यापारो विशेषणाऽत्मा ततो वर्त्तत इत्यर्थः ॥ "भेदाप्रोहो न वर्त्तते" निवर्त्तते इति वा पाठे तु भेदरूपो योऽपोहोऽतद्व्यावृत्तत्वम्, स न वर्त्तते; न भासत इत्यर्थोऽवसेयः । पद्यान्तरावलोकनेनैतत्पाठस्यैव हरिसम्मतत्वमध्यवसीयते । द्वित्वत्वाद्यग्रहकालिकसङ्ख्यात्वप्रकारकप्रतीतिगोचरा सङ्ख्यापदार्थोऽभेदैकत्वपदव्यपदेश्यो भवतीतिसमुदितार्थः । तत्र दृष्टान्तमाह—*अगृहीतविशेषणेति* ॥ शुक्लत्वादिप्रकारकग्रहासमानकालिकरूपत्वप्रकारकप्रतीतिविषयेण शुक्लादिनैव यथा घटादी रूपवानिति प्रतीयते । शुक्लादेर्यो भेदरूपापोहः—शुक्लत्वादिरतद्व्यावृत्तिरूपः; स तु न प्रतीयते । तद्वद्राजपुरुष इत्यादौ राजादिपदार्थः सङ्ख्यावानिति प्रतीयते, न तत्र सङ्ख्यांऽशे एकत्वादि भासते इत्यर्थः ।

तादृशसङ्ख्याभानस्य परानभ्युपेतत्वात् कथमियं स्थितिरित्यन्तरा शेषपूरणेन व्याचष्टे—*वैयाकरणानामिति* । ननु तादृशसङ्ख्याया वृत्तौ भाने किं प्रमाणमत आह—*अयम्भाव इति* । *सामान्यज्ञानपूर्वकेति* । तद्धेतुकेत्यर्थः । *आवश्यकीति* । तां विनोक्तजिज्ञासाया अभावादिति भावः । सा च संख्या पूर्वोत्तरपदार्थयोः सम्बन्धवद् वृत्तिशक्त्यैव । अजहत्स्वार्थावृत्तिपक्षे पूर्वपदस्य संख्याविशेषवाचकत्वे मानाभावात् । तेन 'द्विपुत्रः' 'मौदृगिको' 'मासजातः' 'तावकीनः' 'भवदृगिरामवसरः' इत्यादौ वृत्तावभेदैकत्वसंख्याया भानेऽपि न क्षतिः ।

आद्ये सङ्ख्याविशेषस्यैव पूर्वपदार्थत्वात् । द्वितीये, एकमुद्गस्य क्रयकरणायोग्यत्वात् बहुत्वाऽवगतिः । तृतीये विशिष्टकालावगमाय मासपदयोगात् संख्याऽध्यवसायः । चतुर्थे तवकाद्यादेशादेकत्वावगतिः । पञ्चमे प्रकरणाद् द्वित्वावगतिः । एवं कारकमध्य इत्यादावप्यूह्यम् एकस्य मध्यासम्भवात् । सति प्रकरणे राजपुरुष इत्यादावपि संख्याविशेषप्रकारेणैव भानम् । तदा तत्रापि न तस्य वृत्त्यर्थत्वमिति । भेदो भेदसहिता द्वित्वादिसंख्या, तदभावसहितमेकत्वमभेदैकत्वमिति व्युत्पत्या संख्यात्वेनैकत्वमेवोपसर्जनपदार्थे भासते । *तथा* । अत एव "एकवचनमुत्सर्गतः करिष्यते" इति वचनाद्राजन् अस्-पुरुष-सु-इत्यलौकिकविग्रहे एकवचनं प्रयुज्यते । यत्र तु प्रकरणादिना संख्याविशेषभानं तत्र बहुवचनमपि यथा चित्रगुरित्यादौ-'चित्रा-अस्-गो—अस्' इत्यभिप्रेत्योत्तरग्रन्थमवतारयति—* तस्या इति* । वृत्तिघटकपदार्थोपसर्जनव्यक्तेरित्यर्थः ।

*प्रतीताविति* ॥ सङ्ख्यात्वावच्छिन्नैकत्वप्रकारतानिरूपितविशेष्यत्वेन बोध इत्यर्थः । उपसर्जनपदार्थे सङ्ख्यात्वेनैकत्वमेव प्रतीयते, न द्वित्वादीत्यत्र दृष्टान्तमाहेति यावत् ॥ *गणनायामिति* ॥ बहुत्वविशिष्टानेकसंख्यासङ्ख्याने इत्यर्थः । "कपिञ्जलानालभेत" इति वाक्येन बहुत्वव्याप्यसंख्याविशिष्टकपिञ्जलालम्भनं विधीयते । तत्र त्रयाणां चतुरादीनां वालम्भनमिति संशये बहुत्वव्याप्यत्वस्य त्रित्वादिषु सर्वेष्वविशिष्टत्वाद्यथाप्राप्तमेवालब्धव्यमिति पूर्वपक्षे चतुरादीनामालम्भनं, "मा हिंस्यात्" इति सामान्यशास्त्रविहितनिषेधस्यालभ्यतावद्व्यक्तीतरपरत्वरूपतात्पर्यसङ्कोचकल्पने गौरवाद् गणनायां प्रथमोपस्थितत्रित्वपरतयाऽपि वचनस्य चारितार्थ्याल्लाघवाच्च बहुत्वेन त्रित्वमेव बहुवचनाऽर्थं इति सिद्धान्तितम् । तन्न्यायादत्रापि संख्यात्वेनैकत्वस्यैव वृत्त्यर्थत्वम्, न तु द्वित्वादीनामप्रतीयमानविशेषधर्मकैकत्वमभेदैकत्वमिति व्युत्पत्तेरिति भावः "निजां त्रयाणाम्" ( पा० सू० ७।४।७५ ) इत्यादिनिर्देशैरस्मिन् व्याकरणे व्यासिन्यायस्यैवाश्रयणेन प्रकृते संख्यात्वेनैकत्वप्रतीतिर्हि दुरुपपादेत्यपि केचित् ।

ननु जिज्ञासायां शाब्दमेव सामान्यधर्मप्रकारकज्ञानदर्शनमपेक्षितमिति न नियमः । आम्रादिफलदर्शनेनाऽपि तद्रसास्वादनेच्छाया उत्पत्त्या व्यभिचारात् । नचैवं सामान्यधर्मप्रकारकज्ञानस्यैव हेतुत्वं विलीयेतेति वाच्यम् । आम्रदर्शनस्योद्बोधकतया तद्रसस्मरणेन तदुपपत्तेः । प्रकृते तस्या अशक्यत्वेऽपि तदव्यभिचरितद्रव्यत्वेनाऽनुमानिकतद्बोधसम्भवात् । तादृशजिज्ञासाया अननुभवाच्च नोक्तयुक्तिर्वृत्तेरभेदैकत्वसंख्यार्थत्वसाधिकेत्यभिप्रेत्याह—*वस्तुत इति* ॥ *अनुभवसिद्धेति* । अस्य, येन तदनुरोधेन सामान्यधर्मप्रकारकज्ञानस्यावश्यकता स्यादिति शेषः । अभेदैकत्वसंख्याया वृत्तौ भानमिति मूलं तु प्राचीनग्रन्थानुवाद एवेति भावः ।

अनुभवसिद्धत्वस्य शपथनिर्णेयत्वं मत्वाह—*उपात्ते चेति* ॥ वा शब्दोऽना-

स्थायाम् । अनुभवसिद्धत्वे चेत्यर्थः ॥ *समानप्रकारकत्वेनैवेति* ॥ एवकारेण विभिन्नप्रकारकत्वव्यवच्छेदः । तद्धर्म्मप्रकारकेच्छां प्रति तद्धर्म्मप्रकारकत्वज्ञानस्य हेतुतायाः सुखादीच्छास्थले क्लृप्तत्वात् । प्रकृते विशेषधर्मप्रकारकजिज्ञासायाः सविषयविषयकत्वेन ज्ञानप्रकारीभूतविशेषधर्मप्रकारकत्वस्यावश्यकत्वेन तत्पदार्थविशेषधर्मप्रकारकज्ञानकार्य्यतावच्छेदकाक्रान्तत्वादिति भावः ॥

* तत्तद्रूपेणैवेति* ॥ एकत्वत्वादिरूपेणैवेत्यर्थः । एवकारेण संख्यासामान्यधर्मव्यवच्छेदः । इष्टापत्तिस्तु न । तथा सति शब्दादेव विशेषधर्मावगतौ जिज्ञासाया असम्भवादिति भावः ।

अत्र वदन्ति—तद्धर्मप्रकारकज्ञानस्य कार्य्यतावच्छेदककोटौ स्वातन्त्र्येण तद्धर्मप्रकारकत्वं सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाजनकत्वानुरोधान्निवेशनीयम् । अन्यथा सामान्यधर्मप्रकारकज्ञानस्योक्तजिज्ञासां प्रति हेतुत्वं विलीयेत ।

न च तत्र मानाभावः । जायते च कार्ये कारणे वा ज्ञाते किमस्य कार्यं कारणं वा इति दीधितिकृद्वाक्यस्यैव मानत्वात् । प्रकृते विशेषधर्म्मस्य पारतन्त्र्येणेवेच्छांशे प्रकारत्वात्तद्धर्मप्रकारकज्ञानं विनापि सामान्यधर्मप्रकारकज्ञानात् तादृशजिज्ञासायाः सूपपादत्वात् । सामान्यधर्मप्रकारकज्ञानं तु विशेषधर्मप्रकारत्वावच्छिन्नविशेष्यकेच्छात्वमिति न गुणत्वसामान्यज्ञानात् सुखादीच्छाप्रसक्तिः, अधिकमन्यत्रानुसन्धेयम् । तथाचात्र जिज्ञासायाः सर्वसिद्धत्वे तदुपपत्तयेऽभेदैकत्वे वृत्तेर्वृत्तिरावश्यिका । एवञ्च "अभेदैकत्वसंख्याया वृत्तौ" इति मूलस्य सङ्गतिः । एतेन भेदस्य तत्सहचरितद्वित्वादेरेकत्वस्य च या प्रतीतिस्तदभाव इत्यर्थपरतया व्याख्यानं परास्तमिति ॥ ५६ ॥

इति भूषणसारदर्पणेऽभेदैकत्वसंख्यानिरूपणम् ॥ ११ ॥

---

अर्थ—तद्धित वृत्ति के प्रसङ्ग से वृत्ति में प्रतीत होनेवाली अभेदैकत्व संख्या के सम्बन्ध में सिद्धान्त का दृष्टान्त द्वारा उपपादन करते हैं ।

अभेदैकत्व संख्याया इत्यादि—

वृत्ति—कृत्तद्धितसमासादिरूप में अभेदैकत्व संख्या का भान होता है यह स्थिति मर्यादा है । "कपिञ्जलान् आलभेत" इस वाक्य में जिस प्रकार न्यायतः बहुत्वेन पूर्वोपस्थितत्रित्व संख्या का ही ग्रहण होता है । उसी प्रकार प्रथमोपस्थित एकत्व संख्या का वृत्ति में संख्यात्व रूप से भान होता है ।

एकत्व द्वित्व और त्रित्व आदि संख्याओं का अविभागेन अर्थात् अभेद से=अविरोध से रहना अभेदैकत्व संख्या है । वाक्यपदीय में लिखा भी है—यथौषधिरसाः सर्वे इत्यादि—

जिस प्रकार मधु में सभी औषधियों के रस विरोधभाव को आहित=समर्पित फलतः

विरोध को त्याग कर स्वस्वरूप से हैं। अविभागेन = अविरोध से रहते हैं। तादृशी = उसी प्रकार वृत्ति में एकत्व संख्या भी रहती है।

अथवा परित्यक्तविशेषम् = एकत्वद्वित्वादि संख्या के भेदों से रहित संख्यात्वरूप से संख्या की प्रतीति होती है। एकत्वत्व द्वित्वत्व आदि धर्मों का परित्याग कर संख्यात्वरूप से संख्या की प्रतीति होती है। लिखा भी है—भेदानां परित्यागात्—

एकत्वत्व द्वित्वत्वादि धर्मों के अथवा-एकत्वादि संख्याविशेष के अग्रहणात्मक-एवं एकत्वत्वादि जात्येकदेश का भेदापोहेन यहाँ "प्रकृत्यादिभ्यः" इससे तृतीया अभेद में होने के कारण भेदस्य = एकत्वादिविशेष का जो अपोह-अर्थात् अग्रहण एवं भूत व्यापार से संख्यात्मा संख्यात्व से प्रतीयमान संख्या तथाविध = अभेदैकत्व संख्या पद से व्यवहार विषय सः—एकत्वादि है।

"अगृहीत विशेषेण" इत्यादि।

जिस प्रकार दूरी के कारण शुक्ल घट आदि को शुक्लत्वादि रूप विशेष ज्ञान के विना रूपत्व रूप से ही सामान्यतः "रूपवान् घटः" इस प्रकार से कहा जाता है। शुक्लादि का जो भेद रूप अपोह = शुक्लत्वादि रूप अतद्व्यावृत्ति उसकी प्रतीति नहीं होती है (शुक्लत्व तद् भिन्न भेद रूप है इसी को अतद्व्यावृत्ति कहते हैं।)

कारिका का आशय इस प्रकार है—तस्याः = विगलित भेदा संख्या अभेदैकत्व संख्या उसका समासादि वृत्ति में भान न्याय सिद्ध है। राजपुरुष[1] घटकराजपदार्थ संख्यावान् है इस प्रकार की प्रतीति होती है। संख्या एकत्वादिरूप से प्रतीत नहीं होती। इस प्रकार की प्रतीति भी मतान्तर में नहीं होती है। अतः वैयाकरणों की मत स्थिति कही गई है। संख्या सामान्य प्रतीति में "अयम्भावः" इससे प्रमाण का उपन्यास किया गया है। "राजपुरुषः" इत्यादि स्थलों में राजा या दो राजाओं या राजाओं का पुरुष ऐसी विशेष जिज्ञासा होती है। सामान्य संख्या ज्ञान के बिना विशेष संख्या की जिज्ञासा उत्पन्न नहीं हो सकती। अतः संख्यासामान्य का शब्द द्वारा बोध आवश्यक होने से उस अर्थ में समासादि की शक्ति है।

"निवृत्तभेदा" अभेदैकत्व[2] संख्या की प्रतीति नहीं मानने वाले के मत से राजपुरुष घटक राजपद से एकत्वत्व रूप से एकत्व संख्या की प्रतीति होती है। जिस प्रकार "कपिञ्जलान् आलभेत"—कपिञ्जल का आलम्भन करो। यहां बहुवचन के श्रवण से दो से अधिक निरवधि कपिञ्जलों का मारण प्राप्त होने पर यह निर्णय किया गया कि बहुत्व की गणना में प्रथमतः त्रित्व संख्या उपस्थित होती है। अतः उसी के ग्रहण से बहुवचन की उपपत्ति हो जाने से लाघवात् तीन संख्या का ग्रहण होता है। उसी प्रकार यहां भी प्रथमतः उपस्थित एकत्व का ग्रहण होता है। इसलिये अभेदैकत्व संख्या एकत्वत्व रूप से भासित होती है।

---

१. राजपुरुषः इत्यादि स्थल में संख्यावान् राजपदार्थ को प्रतीति होगी एकत्वादिविशेष रूप से संख्यावान् की प्रतीति नहीं होती यही प्रकरणार्थ है।

२. एकत्वद्वित्वादिभेद से रहित संख्यासामान्य ही अभेदैकत्व संख्या का तात्पर्य है।

वस्तुतः जिज्ञासा अनुभव सिद्ध नहीं है। इसलिये उसके अनुरोध से समासादि वृत्ति में अभेदैकत्व संख्या का भान नहीं होता है। यदि अनुभव सिद्धा जिज्ञासा होती तो समान प्रकारक इच्छा और ज्ञान के कार्यकारणभाव होने से एकत्वत्वादि रूप से एकत्वादि संख्या की वाच्यता सिद्ध होगी ऐसा समझना चाहिये ॥ ५६ ॥

॥ इति अभेदैकत्वसंख्यानिरूपणम् ॥

हिन्दी भाष्य—"कपिञ्जलान् आलभेत" यह वाक्य है।

यहाँ कपिञ्जलान् (यह द्वितीया बहुवचन का रूप है। त्रित्व आदि में रहनेवाला त्रित्वादि संख्या व्यापक धर्म विशेष बहुत्व है वही बहुवचन विभक्ति का अर्थ है। व्याप्य संख्या त्रित्व की चतुष्ट्व पञ्चत्व आदि की अपेक्षा प्रथम उपस्थिति होने के कारण त्रित्व संख्या का यहाँ ग्रहण होता है पश्चात् उपस्थित चतुष्टवादि संख्या का नहीं। इसलिये तीन कपिञ्जल का आलम्भन (मारण) विहित अन्य का मारण अविहित होता है। उसी प्रकार राज्ञः राज्ञोः तथा राज्ञां पुरुषः इन सभी विग्रहों में समास होने पर "राज-पुरुषः" ऐसा ही प्रयोग होता है। इन स्थलों में सर्वत्र उक्त कपिञ्जल न्याय से सब से प्रथम उपस्थित होने के कारण एकत्व की प्रतीति एकत्वत्वरूप से होती है; संख्या सामान्य की प्रतीति का भी पक्ष है। इसमें प्रमाण हारिकारिका है। जिस प्रकार विभिन्न प्रकार की औषधियों का रस, विरोध को त्याग कर अविभाग अर्थात् अविरोध से मधु में रहता है। उसी प्रकार परस्पर प्रतिवध्य प्रतिबन्धकभाव रूप विरोध को त्यागकर संख्यात्व रूप से संख्या रहती है। एकत्वत्वरूप जो भेद अर्थात् भेदक उसका अभाव जिस संख्या में हो उसी को अभेदैकत्व संख्या कहते हैं। संख्यात्व रूप से प्रतीयमान एकत्व संख्या। यह भाव है।

दूसरे सिद्धान्त में संख्यात्वरूप से संख्यासामान्य की प्रतीति समासादि वृत्ति में होती है। जिस प्रकार वस्तु विशेष में कदाचित् शुक्लादि गुण विशेष की प्रतीति न होकर रूपवान् ऐसी प्रतीति होती है उसी प्रकार संख्या विशेष एकत्वद्वित्वबहुत्वादि की प्रतीति न होकर "संख्यावान् राजपुरुषः" ऐसी प्रतीति होती है। संख्या सामान्य में शक्ति नहीं मानने पर राज्ञः राज्ञोः राज्ञां वा इस प्रकार संख्या विशेष की जिज्ञासा नहीं होगी। क्योंकि सामान्य ज्ञान होनेपर ही विशेष की जिज्ञासा होती है। अतः सामान्य संख्या ज्ञान के लिये उसमें समासादि की शक्ति आवश्यक है।

अथवा संख्यात्व रूप से एकत्व संख्या का भान है। भेद सहिता द्वित्वादि संख्या तदभावसहितमेकत्वम् अभेदैकत्वम् इस व्युत्पत्ति से उक्तार्थ विवक्षित है। इसी में उक्तार्थ कपिञ्जलाधिकरण का प्रमाणतया उपन्यास किया गया है।

वस्तुतः "णिजां त्रयाणां गुणः श्लौ" (७।४।७५) इस सूत्र में "त्रयाणाम्" इस पद के बिना भी कपिञ्जलाधिकरण से "णिजाम्" इस बहुवचनान्त पद की तीन संख्या में विश्रान्ति हो जाने से त्रित्व संख्या विशिष्ट धातु का बोध सिद्ध हो सकता था पुनः सूत्र में "त्रयाणाम्" इस के उल्लेख की क्या आवश्यकता थी। अतः इससे कल्पना की जाती है कि व्याकरण में कपिञ्जलाधिकरण न्याय की मान्यता नहीं है। इस प्रकार की कल्पना करने वाले के मत में संख्यात्व रूप से एकत्व की प्रतीति सम्भावना क्षीण हो जाती है।

संख्या विशेष्य की जिज्ञासा को अनुभव सिद्ध नहीं मानने पर संख्या सामान्य भी समासादि वृत्ति का अर्थ नहीं है। जिज्ञासा मानने पर तद्धर्म प्रकारक इच्छा के प्रति तद्धर्म प्रकारक ज्ञान हेतु है। ऐसी दशा में विशेष धर्म प्रकारक जिज्ञासा होने पर विशेष धर्म का ज्ञान भी होना आवश्यक होने से एकत्वत्वादि रूप से एकत्वादि संख्या का शाब्द बोध का विषय मानना होगा। वैसा इष्ट मानने पर विशेष की जिज्ञासा ही समाप्त हो जायगी। इत्यादि शास्त्रों की विषम स्थली है। अभेदैकत्व संख्या की प्रतीति एकत्वत्व रूप से न होकर संख्यात्व सामान्य रूप से होती है यह भाव है।

संख्या विशेष तथा संख्या सामान्य किसी का भान वृत्ति में नहीं होता। जहां "द्वि-पुरुषी तावकीनां" इत्यादि स्थलों में यत्न विशेष किया गया है वहीं संख्या प्रतीत होती है यह निर्गलितार्थ है ॥ ५६ ॥

इति अभेदैकत्वसंख्यानिर्णयः



## अथ सङ्ख्याविवक्षानिर्णयः

सङ्ख्याप्रसङ्गादुद्देश्यविधेययोः सङ्ख्याविवक्षाविवक्षे निरूपयति—

लक्ष्यानुरोधात् सङ्ख्यायास्तन्त्राऽतन्त्रे मते यतः ॥
पश्वेकत्वादिहेतूनामाश्रयणमनाकरम् ॥ ५७ ॥

"ग्रहं संमार्ष्टि" इत्यत्रोद्देश्यग्रहगतमेकत्वमविवक्षितमितिवन्नास्माक-मुद्देश्यविशेषणाविवक्षानियमः। धातोरित्येकत्वस्य विवक्षितत्वात्।

उत्पद्येत समस्तेभ्यो धातुभ्यः प्रत्ययो यदि। (पार्थसारथि[1] मिश्राः)
तदा सर्वैर्विशिष्येत द्वन्द्वोत्पन्नसुबर्थवत्॥

(शास्त्र० अ० २ पा० २ अधि० १ पृ० १२२)

इति शब्दान्तराधिकरणे भट्टपादैरभिधानाच्च। "आर्द्धधातुकस्येड् वलादेः" (पा० सू० ७।२।३५) इत्यत्रानुवाद्यार्द्धधातुकविशेषणस्य वलादि-त्वस्य विवक्षितत्वाच्च।

एवं "पशुना यजेत" इतिवद् विधेयविशेषणं विवक्षितमित्यपि नियमो न। "रदाभ्यां निष्ठातो नः पूर्व्वस्य च दः" (पा० सू० ८।२।४२) इत्यत्र नकारद्वयलाभो न स्यात्। "आद्गुणः" (पा० सू० ६।१।८७) इत्यादावे-कत्वविवक्षयैवोपपत्तौ, "एकः पूर्व्वपरयोः" (पा० सू० ६।१।८४) इत्येक-ग्रहणवैयर्थ्यापत्तेश्चेति भावः। शब्दार्थस्तु सङ्ख्याया लक्ष्याऽनुरोधात्तन्त्रा-तन्त्रे यतो मते, अतः पश्वैकत्वाधिकरणोक्तहेतूनामाश्रयणं नास्मत्सिद्धान्त-सिद्धमिति। आदिना ग्रहैकत्वसंग्रहः॥ ५७॥

ननु विधेयविशेषणविवक्षा आवश्यकी। अन्यथा 'सुद्ध्युपास्य' इत्या-दावनन्तयकाराद्यापत्तेः। 'भिन्न' इत्यत्र नकारद्वयवदन्येषामप्यापत्तेः। "एकः पूर्वपरयोः" इत्यत्रैकग्रहणञ्च स्थानिभेदादादेशभेदवारणायेत्यभिप्रेत्याह—

विधेये भेदकं तन्त्रमन्यतो नियमो न हि।
ग्रहैकत्वादिहेतूनामाश्रयणमनाकरम् ॥ ५८ ॥

भेदकं विशेषणम्। तन्त्रं विवक्षितम्। विधेयविशेषणं विवक्षितमित्यस्तु तथाऽप्यन्यतः—अनुवाद्यस्य नियमो न हि। क्वचित् तन्त्रं क्वचिन्नेत्यर्थः। ग्रहैकत्वादौ यो हेतुर्वाक्यभेदादिस्तस्यात्राश्रयणमनाकरम्। एकत्व-

१. शास्त्रदीपिकायाम्।

विशिष्टं धातुं वलादित्वविशिष्टमार्द्धधातुकञ्चोद्दिश्य प्रत्ययेऽडागमादेर्विधिसम्भवादिति भावः ॥ ५८ ॥

नन्वेवं भिन्न इत्यत्र नकारद्वयलाभो न स्यादित्यत आह—

रदाभ्यां वाक्यभेदेन नकारद्वयलाभतः ।
क्षतिर्नैवास्ति तन्त्रत्वे विधेये भेदजस्य तु ॥ ५९ ॥

चकारसूचितं—निष्ठातस्य नः, पूर्व्वस्य दकारस्य च न इति वाक्यभेदमादाय नकारद्वयलाभ इत्यर्थः ॥ ५९ ॥

इति वैयाकरणभूषणसारे सङ्ख्याविवक्षादिनिर्णयः ॥ १२ ॥



सङ्ख्याविवक्षाऽविवक्षानिरूपणे सङ्गतिं दर्शयति—*प्रसङ्गादिति* ॥ अभेदैकत्वसङ्ख्यानिरूपणे 'कपिञ्जलानालभेत' इत्यत्र विधेयविशेषणतया त्रित्वसङ्ख्याविवक्षायाः स्मृतत्वाद् उपेक्षानर्हत्वाच्चेत्यर्थः ॥ *अविवक्षितमितीति* । तद्विवक्षणे यज्ञीययावत्पात्राणां मार्जनाऽलाभ इति भावः ॥ *धातोरितीति* ॥ प्रत्ययविधौ "धातोः" ( पा० सू० ३।१।९१ ) इति सूत्रस्थधातुपदार्थविशेषणीभूतैकत्वादेरेतच्छास्त्रे अविवक्षणादित्यर्थः । अस्मच्छास्त्रे तु उद्देश्यगतविशेषणस्याविवक्षा मीमांसकानामपि सम्मतेत्याह—*उत्पद्येतेति* ॥ *विशिष्येतेति* ॥ तदा स प्रत्ययार्थः सर्वैर्धात्वर्थैर्विशिष्येतेत्यर्थः ।

ननु नेयं युक्तिर्विवक्षासाधिका, तादृशसमुदायस्य क्रियावचनत्वाभावेन ततः प्रत्ययोत्पत्तेर्गगनकुसुमायमानत्वेन स्वत एव विवक्षासत्त्वादत आह—*आर्द्धधातुकस्येड्वलादेरितीति* ॥ *विवक्षितत्वाच्चेति* ॥ अन्यथा तदुपादानवैयर्थ्यापत्तेरिति भावः । *एवमिति* ॥ अनुवाद्यविशेषणमविवक्षितमेव । नियमाऽनाश्रयणवदित्यर्थः । 'पशुना यजेत' इत्यत्र यज्यर्थयागस्य करणाकाङ्क्षायां साधनत्वेन पशुर्विधीयते । एवञ्च पशुशब्दस्य विधेयसमर्पकतया तदुपस्थितानां केषाञ्चिद् ग्रहणे केषाञ्चित् परित्यागे मानाभावेन पशुत्वपुंस्त्वादिवदेकत्वमपि यागसाधनत्वेन विवक्षितम् । तेन नानेकपशुकरणयागाददृष्टसिद्धिः । एवमन्यत्रापि विधेयविशेषणं विवक्षितम् । अत्र विवक्षाकारणविरहादिति मीमांसकपरिशीलिता सरणिस्तदनुसरणनियमो नाऽस्माकमित्यर्थः ।

एतच्छास्त्रे तदाश्रयणेऽनिष्टं प्रदर्शयति—*रदाभ्यामिति* ॥ *विधानानापत्तेरिति* ॥ 'न' इत्येकवचनोपस्थितैकत्वस्यापि विधेयविशेषणतया तद् विवक्षायां नकारद्वयविधानं न स्यादित्यर्थः । ननु मास्तु नद्वयविधानमत आह—*तथाचेति* ॥ इदञ्चैकवाक्यतया विधानमभिप्रेत्य, वाक्यभेदेन विधानपक्षे त्वाह—*आद् गुण इत्या-

दाविति* । *एकत्वविवक्षयैवेति* ।। विधेयगुणगतैकत्वविवक्षयैवेत्यर्थः । तथा चैकग्रहणमेवोक्तार्थे ज्ञापकमिति भावः ।

ननु पश्वेकत्वादिविवक्षाहेतूनां जैमिनिसम्मतत्वान्न तदाश्रयणस्यानाकरत्वमित्याशङ्कामपाकरिष्यन् योजनाप्रदर्शनमिषेणाऽऽकरपदार्थं व्याचष्टे—*शब्दार्थस्त्वित्यादि*। पश्वेकत्वाऽधिकरणोक्तहेतूनामिति* ।। 'पशुना यजेत' इत्यत्र विधेयगतैकत्वस्याविवक्षणे पश्वन्तरालम्भे प्रयोगप्राशुभावबाधेन यागवैगुण्यापत्तिः । गुणानुरोधेन यागाऽऽवृत्तौ प्रधानत्वभङ्गापत्तिर्यावत्पशुकरणकयागासम्भवश्चेत्येवमादयो दोषा हेतवस्तेषामित्यर्थः ।। *सिद्धान्तसिद्धमिति* ।। सिद्धान्तार्थप्रतिपादकमहाभाष्यादिसिद्धमित्यर्थः ।। ५७ ।।

*आदेशभेदवारणायेति* ।। वस्तुतस्तु नैकग्रहणं विधेयगतविशेषणाविवक्षायां तन्त्रम् । "अनयोः पूलयोः कटं कुरु" इत्यादाविव "आद् गुण" इत्यादावपि "पूर्वपरयोः" इति द्वन्द्वनिर्देशेनेनैकवाक्यतयैवोभयोः स्थाने एकविधानसम्भवात् स्थानिभेदान्नानेको गुण इत्येकग्रहणस्य भाष्ये प्रत्याख्यानादिति रहस्यम् । *वाक्यभेदादिति* ।। "प्राजापत्या नव ग्रहा" इति वाक्यविहितग्रहोद्देशेन सम्मार्गो विधीयते । "ग्रहं सम्मार्ष्टि" इत्यनेन तत्रानुवाद्यग्रहैकत्वविवक्षायामुत्पत्तिवाक्यगतसङ्ख्याया विरोधाद् वाक्यस्य यो भेदो विभिन्नविशेष्यकबोधजनकत्वं तदापत्त्यादीत्यर्थः ।। अन्येतु—"ग्रहं संमार्ष्टि" तं चैकमित्याकारकवाक्यभेदापत्तिमाहुः ।

आदिपदेनोत्पत्तिवाक्यगतनवत्वसङ्ख्यया ग्रहपदार्थस्य परिच्छिन्नत्वात्परिच्छेदकाङ्क्षाभावस्य ग्रहमिति द्वितीयया संस्कार्यत्वलक्षणप्राधान्यबोधनात् "प्रतिप्रधानं गुणाऽऽवृत्तिः" इति न्यायाद्विनिगमनाविरहात् सोमावसेकनिरासफलकसम्मार्गस्य सर्वैर्ग्रहैरपेक्षणाद्विधेयपश्वादिविशेषणवत् क्रियाङ्गत्वाभावेन तद्वैकल्यप्रयुक्तक्रियावैकल्याप्रसक्तेश्च तद्विवक्षाविरहबीजस्य च संग्रहः । अनाकरमिति पूर्ववत् । इडागमादेरित्यादिना "उदीचामातः स्थाने यकपूर्वायाः" (पा० सू० ६।३।४६) इति विहितेत्वसंग्रहः । तत्राऽऽकारस्थानिकमतमुद्दिश्येत्वविधानात् । अत एवेण्निषेधविधायक "एकाच्" (पा० सू० ७।२।१०) इति सूत्रेऽच इत्येकत्वविवक्षादरेणानेकाच्त्वोपदेशव्यावृत्तिर्ग्रन्थकृद्भिर्व्याख्याता ।

वस्तुतस्तु ग्रहैकत्वदृष्टान्तेनात्राप्यनुवादविशेषणानां क्वचिदविवक्षाऽस्तु, तदितरविशेषणानां विवक्षायां तु न किञ्चिद् बाधकम् । मीमांसायामनुवाद्यांशे जातिलिङ्गसङ्ख्याऽतिरिक्तविशेषणस्यादर्शनात् । एषाञ्चोत्पत्तिवाक्यादेवावगमेनाऽऽनुषङ्गिकत्वादविवक्षा युज्यते । प्रकृते तु न तथेति बोध्यम् ।। ५८ ।। ५९ ।।

इति भूषणसारदर्पणे संख्याया विवक्षादिनिर्णयः ।। १२ ।।

अर्थ—"कपिञ्जलान्" इसमें त्रित्वसंख्या की विवक्षा के निरूपण से संख्या का स्मरण तथा उसका निरूपण उपेक्षा के योग्य न होने के कारण प्रसङ्ग सङ्गति द्वारा उद्देश्य गत संख्या की विवक्षा तथा अविवक्षा के विषय में विचार प्रस्तुत करते हैं। "लक्ष्यानुरोधात्" इत्यादि—

लक्ष्य के अनुसार (उद्देश्य गत) संख्या की विवक्षा तथा अविवक्षा होती है। अतः "पशुना यजेत" (पशु द्वारा याग करें) यहां याग के साधन पशुपदोत्तर टा-विभक्त्यर्थ एकत्व की विवक्षा होने के समान व्याकरण में सर्वत्र विधेय विशेषण संख्या की विवक्षा का आश्रयण भाष्यादि विरुद्ध है।

"ग्रहं संमार्ष्टि"—ग्रह = यज्ञ का पात्रविशेष, उनका संमार्जन (शोधन) के विधायक इस वाक्य में उद्देश्य ग्रहपद के आगे अम् विभक्ति के अर्थ एकत्व की विवक्षा नहीं है। अत एव अनेक यज्ञीय पात्रों का मार्जनशुद्धी करण होता है। उसी प्रकार व्याकरण में उद्देश्यगत संख्या की अविवक्षा का नियम नहीं है। यदि यह नियम माना जायगा तो "धातोः" इसमें एकत्व अविवक्षित होने से धातु समूह से तिङादि प्रत्यय का विधान प्राप्त हो जायगा। अतः वहां एकत्व विवक्षित होने से एक ही धातु से प्रत्यय होता है धातु समुदाय से नहीं।

उत्पद्येत इत्यादि—यदि धातु समुदाय से प्रत्यय की उत्पत्ति होगी तो द्वन्द्वसमास से उत्पन्न विभक्त्यर्थ संख्यादि का जिस प्रकार द्वन्द्वसमास घटक प्रत्येक पदार्थों के साथ अन्वय होता है उसी प्रकार प्रत्येक धात्वर्थ के साथ प्रत्ययार्थ एक भावना का अनिष्ट अन्वय होने लगेगा। ददाति यजति जुहोति इत्यादि स्थलों में भिन्न-भिन्न धात्वर्थानुरक्त भावना की प्रतीति इष्ट है यह शब्दान्तराधिकरण में श्री कुमारिल[1] भट्ट ने कहा है।

अनुवाद्य = उद्देश्य का विशेषण, उसकी अविवक्षा मानने पर "आर्द्धधातुकस्येड् वलादेः" इस सूत्र में उद्देश्य भू ल आर्द्धधातुक का विशेषण वलादि है उसकी विवक्षा है ऐसा न मानने पर वलादिग्रहणव्यर्थ हो जायगा।

इसी प्रकार "पशुना यजेत" इस वाक्यगत यागसाधनत्वेन विवक्षित विधेय पशु में विशेषण एकत्व विवक्षित है। उसी के समान विधेय विशेषण विवक्षित है ऐसा नियम नहीं है। "रदाभ्यां निष्ठातो नः" यहां "नः" इस पद के आगे एकत्व की विवक्षा होने पर एक ही नकार का विधान प्राप्त होने से नकारद्वय का विधान नहीं होगा। ऐसी दशा में "भिन्नः" यहां नकारद्वय का लाभ नहीं होगा। "आद्गुणः" इत्यादि स्थल में गुणपदोत्तर सुविभक्त्यर्थ एकत्व की विवक्षा होने से ही एकत्वविशिष्ट गुण का विधान हो जाता पुनः "एकः पूर्वपरयोः" इस अधिकार में एकग्रहण की क्या आवश्यकता है। इससे भी विवक्षा का अनियम ही प्रतीत होता है। संख्या की "तन्त्रातन्त्रे" विवक्षा और अविवक्षा लक्ष्य की सिद्धि के अनुसार है। यह भावार्थ है। अत एव पशुगत एकत्व अधिकरण में कथित युक्तियों का आश्रयण करना हमारे सिद्धान्तार्थ के प्रतिपादक महाभाष्यादि से सिद्ध नहीं है। आदि पद से (ग्रहं संमार्ष्टि) ग्रहगत एकत्व का संग्रह है ॥ ५७ ॥

---

१. यह पार्थ सारथि मिश्र का वचन है। कुमारिलभट्ट का वचन नहीं है।

‡"निष्पद्येत" ऐसा भी पाठ है।

विधेयविशेषण रूप संख्या की विवक्षा आवश्यक है ऐसा न मानने पर "सुद्ध्यु-पास्यः" इत्यादि स्थल में अनन्त यकारादेश की आपत्ति हो जायगी। "एकः पूर्वपरयोः" इसमें एकग्रहण स्थानि भेद से आदेशद्वय की व्यावृत्ति के लिये किया गया है इस आशय से कहते हैं—"विधेये भेदकम्" इत्यादि—

विधेय में भेदक विशेषण तन्त्र—विवक्षित है। अन्यतः विधेयस्थल से अन्यत्र उद्देश्य में संख्या विवक्षा या अविवक्षा का नियम नहीं है। "ग्रहं संमार्ष्टि" "पशु-नायजेत" इत्यादि स्थलों में प्रदर्शित संख्या विवक्षा अविवक्षा नियम के साधक हेतु का आश्रयण भाष्यादि विरुद्ध है॥ ५८॥

भेदकम् अर्थात् विशेषण [1]तन्त्रम् = अर्थात् विवक्षित, विधेय में विशेषण विवक्षित है किन्तु उद्देश्य में नियम नहीं है। कहीं संख्या विवक्षित है कहीं नहीं। [2]"ग्रहं संमार्ष्टि" इसमें उद्देश्यग्रहगत एकत्व संख्या की विवक्षा में ग्रह का मार्जन करो, तथा वह एक हो इस प्रकार के वाक्यभेद दोष होने से संख्या की अविवक्षा वहां उचित है। इस प्रकार संख्या की अविवक्षा नियम के हेतु का आश्रयण यहां नहीं है। एकत्व विशिष्ट धातु, आर्धधातुक को उद्देश्य कर क्रमशः तिङादि प्रत्यय और इट् के आगम का विधान हो सकता है। यह भाव है॥ ५८॥

इस प्रकार एकत्व की विवक्षा मानने पर "भिन्नः" में दो नकार का लाभ नहीं होगा अतः कारिका लिखते है—रदाभ्याम् इत्यादि—

"रदाभ्यां निष्ठातो नः" इस सूत्र में वाक्यभेद करने से नकारद्वय का लाभ हो जायगा। अतः विधेय विशेषण कीं विवक्षा में कोई क्षति नहीं है। निष्ठा सम्बन्धी तकार को नकार और पूर्वदकार को नकार इस प्रकार का वाक्य भेद मानकर नकारद्वय का लाभ होगा। यह "रदाभ्यां निष्ठातो नः पूर्वस्य च दः" इस सूत्र के चकार से सूचित होता है॥ ५९॥

इति संख्याविवक्षानिर्णयः

हिन्दी भाष्य—ज्योतिष्टोम याग प्रकरण में "ग्रहं संमार्ष्टि" इस वचन से ग्रह अर्थात् यज्ञीय पात्र का संमार्जन कहा गया है। प्रमाणान्तर से प्राप्त और विधेय में अन्वित ही उद्देश्य कहा जाता है। इस प्रकार उद्देश्य ग्रह पद के आगे उत्पन्न द्वितीया विभक्ति का अर्थ एकत्व की विवक्षा नही है। इसीलिये यज्ञीय सभी पात्रों का संमार्जन होता है। अन्यथा एक ही पात्र का संमार्जन होगा जो इष्ट नहीं है। ऐसा मीमांसकों का विचार है। वैयाकरण मत में उद्देश्यगत संख्या की सर्वत्र अविवक्षा ही है ऐसा नियम नहीं है।

---

१. '-तस्मादित' इस सूत्र में ह्रस्वग्रहणमतन्त्रम् सिद्धान्तकौमुदी में लिखा है। जिसका मनोरमा में अविवक्षितम् ऐसा अर्थ किया है। उसी के अनुसार यहाँ भी तन्त्र का अर्थ विवक्षित है अतन्त्र का अर्थ अविवक्षित है। शब्दार्थ निर्णय में आप्त व्यवहार प्रमाण है। अतः तन्त्रातन्त्र के अर्थ के विषय में सन्देह प्रकट करना निर्मूल है।

२. गृह्यते अनेन इस व्युत्पत्ति से सोमरसादिधारण करने वाला पात्र विशेष ग्रह है।

ऐसा मानने पर "धातोः" इस अधिकार सूत्र में धातु पदोत्तर ङस् विभक्त्यर्थ एकत्व की अविवक्षा होने से दा, पच् आदि धातुओं के समुदाय से तिङ् प्रत्यय का विधान भी प्राप्त होगा। अतः इसके निराकरण के लिये "धातोः" यहां एकत्व की विवक्षा आवश्यक है।

एकत्वसंख्याविशिष्ट धातु से प्रत्यय के विधान होने से धातु समुदाय से प्रत्यय नहीं होता। श्लोक वार्तिक के शब्दान्तराधिकरण में कुमारिल भट्ट ने भी कहा है। उत्पद्येत— समस्त धातु अर्थात् धातु समुदाय से प्रत्यय के विधान होने पर द्वन्द्व से उत्पन्न सुप् के संख्यादि अर्थ का जिस प्रकार द्वन्द्व समास घटक सभी पदार्थों के साथ अन्वय होता है उसी प्रकार समुदाय घटक प्रत्येक धातु के अर्थ के साथ प्रत्ययार्थ भावना का अन्वय होने लगेगा। यह भाव है। वस्तुतः धातु समुदाय क्रियावाची नहीं होने से समुदाय में धातुत्व नहीं होने से समुदायोत्तर प्रत्यय की उत्पत्ति नहीं हो सकती। इसलिये "धातोः" इस सूत्र में एकत्व की विवक्षा में उक्त प्रमाण नहीं हो सकता। अतः दोषान्तर देते हैं— आर्धधातुकस्य–यहां उद्देश्य आर्द्धधातुक में विशेषण वलादि की अविवक्षा नहीं है। अन्यथा "प्रदीव्य" यहां भी इडागम हो जायगा।

यदि उद्देश्य विशेषण से संख्या का ग्रहण है तो वलादित्व संख्या नहीं होने से उसकी अविवक्षा नहीं होगी। अतः इस नियम में यह दोष लागू नहीं होता।

ज्योतिष्टोम प्रकरण में "अग्निष्टोमीयं पशुमालभेत" "पशुना यजेत" "स्वर्गकामो यजेत" इत्यादि वाक्यान्तर से याग का विधान होने से उसमें करणत्वाकाङ्क्षा में "पशुना यजेत" इस वाक्य के द्वारा याग साधनत्व रूप से पशु का विधान होता है। अतः पशु शब्द के विधेय समर्पक होने से उससे उपस्थित पशुत्व की विवक्षा के समान ही एकत्व संख्या की भी विवक्षा होती है। इसी कारण से अनेक पशु के द्वारा सम्पन्न याग से अदृष्ट की सिद्धि नहीं होती। इससे यह सिद्ध हुआ कि विधेयभूत पशु में विशेषण एकत्वसंख्या विवक्षित है। यह मीमांसकोक्त पक्ष भी वैयाकरण मतःमें उपादेय नहीं है। विधेय विशेषण रूप संख्या की विवक्षा मानने पर "रदाभ्याम्" इस सूत्र से विहित नकार में एकत्व की विवक्षा होने से एक ही नकार का विधान होगा। ऐसी दशा में "भिन्नः" "छिन्नः" इत्यादि प्रयोगों में नकारद्वय का विधान नहीं होने से उक्त प्रयोगों की सिद्धि नहीं होगी। अतः लक्ष्य के अनुरोध से कहीं संख्या की विवक्षा और कहीं अविवक्षा होती है। अतः यहां मीमांसकोक्त हेतु का आश्रयण नहीं होता।

"पशुना" इससे एकत्व की विवक्षा न होने पर पशु के अनुसार याग की आवृत्ति करनी होगी। प्रधान याग की आवृत्ति होने पर प्राधान्यभङ्ग हो जायगा। एवं संख्या नियत न होने से सभी पशु से याग की निष्पत्ति प्राप्त होने से सब पशुओं के लाभ नहीं होने पर याग विगुण हो जायगा। तथा "ग्रहं संमार्ष्टि" इसमें उद्देश्यग्रहगत एकत्व संख्या की विवक्षा होने पर "प्राजापत्याः नव ग्रहाः" इस उत्पत्ति वाक्यगत संख्या के साथ विरोध होगा। उसके निवारणार्थं संमार्जन करो और उस एक को इस प्रकार का वाक्यभेद करना होगा। एवं ग्रहं संमार्ष्टि इसका नव वार आवृत्ति प्रयुक्त दोष भी प्राप्त होगा।

इति संख्या विवक्षा निर्णयः

## अथ क्त्वाद्यर्थनिर्णयः

क्त्वाप्रत्ययादेरर्थं निरूपयति ।

अव्ययकृत इत्युक्तेः प्रकृत्यर्थे तुमादयः ॥
समानकर्तृकत्वादि द्योत्यमेषामिति स्थितिः ॥ ६० ॥

तुमादयः-तुमुन्नादयः । प्रकृत्यर्थे-भावे । आदिना क्त्वादेः संग्रहः । भावे इत्यत्र मानमाह-*अव्ययकृत इति* ॥ "अव्ययकृतो भावे" इति वार्त्तिकादित्यर्थः ।

ननु "समानकर्तृकयोः पूर्वकाले" इत्यादिसूत्राणां का गतिस्तत्राह-*समानकर्तृकत्वादिति* ॥ अयम्भावः-'भोक्तुं पचति, भुक्त्वा व्रजतीत्यादावेकवाक्यता सर्वसिद्धा भोजनपाकक्रिययोर्विशेषणविशेष्यभावमन्तरेणानुपपन्ना । अन्यथा भुङ्क्ते व्रजतीत्यादाविवैकवाक्यतापत्तेः । तथाच तयोर्विशेषणविशेष्यभावनिरूपकः संसर्गो, जन्यत्वं सामानाधिकरण्यं, पूर्वोत्तरभावो, व्याप्यत्वञ्चेत्यादिरनेकविधः । तथाच भोक्तुं पचति, भुक्त्वा तृप्त इत्यादौ भोजनजनिका पाकक्रिया, भोजनजन्या तृप्तिरिति बोधः । अत एव जलपानानन्तर्यस्य तृप्तौ सत्त्वेऽपि, पीत्वा तृप्त इति न प्रयोगः । सामानाधिकरण्यस्यापि संसर्गत्वेनार्थात् समानकर्तृकत्वमपि लब्धम् । भुक्त्वा व्रजतीत्यादौ पूर्वोत्तरभावः सामानाधिकरण्यञ्च संसर्ग इति भोजनसमानाधिकरणा, तदुत्तरकालिकी व्रजनक्रियेति बोधः ।

"अधीत्य तिष्ठति", "मुखं व्यादाय स्वपिती"त्यादौ चाध्ययनव्यादानयोरभावकाले अप्रयोगात्, यदा यदाऽस्य स्थितिः, स्वापश्च तदा तदाध्ययनं मुखव्यादानञ्चेति कालविशेषावच्छिन्नव्याप्यत्वबोधाद् व्याप्यत्वं, सामानाधिकरण्यञ्च संसर्गः । एवञ्चान्यलभ्यत्वान्न सूत्रात्तेषां वाच्यत्वलाभ इति युक्तम्-"अव्यय कृतो भावे" इति ।

एवञ्च प्रकृत्यर्थक्रिययोः संसर्गे तात्पर्य्यग्राहकत्वरूपं द्योतकत्वं क्त्वादीनाम् । अत एव 'समानकर्तृकयोः" इति सूत्रे स्वशब्देनोपात्तत्वाच्चेति भाष्यप्रतीकमादाय पौर्वापर्य्यकाले द्योत्ये क्त्वादिर्विधीयते, न तु विषय इति भाव इति कैयटः ।

यत्तु "समानकर्तृकयोः' (पा० सू० ३।४।२७) इति सूत्रात् समानकर्तृकत्वं क्त्वावाच्यम् । अन्यथा ओदनं पक्त्वाऽहं भोक्ष्ये" इत्यत्र मयेति तृतीयाप्रसङ्गश्च । नचाख्यातेन कर्तुरभिधानान्न सेति वाच्यम् । भोजनक्रियाकर्तु-

ऽभिधानेऽपि पाकक्रियाकर्त्तुस्तदभावात्। अनभिहिते भवतीति पर्युदासाश्रयणात्।

अत एव 'प्रासादे आस्ते' इत्यत्र प्रसादनक्रियाधिकरणस्याभिधानेऽप्यस्तिक्रियाधिकरणस्यानभिधानात् सप्तमीति भाष्ये स्पष्टम्। तस्मात् क्त्वाप्रत्ययस्य कर्तृवाचित्वमावश्यकमिति। तन्न। सूत्रात्तस्य वाच्यत्वालाभात्। समानकर्तृकयोः क्रिययोः पूर्व्वकाले क्त्वा इत्येव तदर्थात्। अन्यथा समानकर्त्तरीत्येव सूत्रन्यासः स्यात्। तृतीयापादानं तु आख्याताऽर्थक्रियायाः प्रधानभूतायाः कर्तुरभिधानात् प्रधानानुरोधेन गुणे कार्य्यप्रवृत्तेर्न सम्भवति।

उक्तञ्च वाक्यपदीये—

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक्। साधन समु०
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुद्धयते॥ ८१
प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयते॥ इति॥ ८२

किञ्चान्यथा कर्म्मणोऽपि क्त्वार्थतापत्तिः। 'पक्त्वौदनो मया भुज्यते' इत्यत्र द्वितीयायाः प्रकारान्तरेणावारणादित्यास्तां विस्तरः॥ ६०॥

इति वैयाकरणभूषणसारे क्त्वाद्यर्थनिर्णयः॥ १२॥



अवसरसङ्गतिं क्त्वाद्यर्थनिरूपणे दर्शयति—*क्त्वाप्रत्ययादेरिति*। प्रकृत्यर्थस्य फलेऽपि सत्त्वादाह—*भावइति*। तत्रापि सत्त्वभूते व्यापारे एव, न तु पूर्वकालादावित्यर्थः। पाक इत्यादाविव, पक्तुं, पक्त्वेत्यादिजन्यबोधे भावांशवैलक्षण्यस्याननुभवादिति भावः।

वस्तुतस्तु पक्त्वेत्यादिजन्यबोधे भावे लिङ्गसङ्ख्यानन्वयित्वात् तदनुभूयत एव। एवं 'पक्तुमित्यादौ फलार्थकतुमुना साध्यत्वेन तद्बोधाच्चेत्युक्तप्रायमिति॥ *कागतिरिति*॥ तत्र पूर्वकाल इत्याद्युपादानात् पूर्वकालादीनां वाच्यता प्रतीयते। भावमात्रार्थकत्वे तु तदनुपपत्तिरिति भावः॥ *समानकर्त्तृकत्वादिति*॥ तथाच समानकर्तृकयोर्धात्वर्थयोर्मध्ये पूर्वकालसम्बन्धी योऽर्थस्तद्वाचकात् क्त्वेत्यर्थेऽर्थाकाङ्क्षायां "कर्तरि कृद्" इत्यस्य प्रसक्त्या तद्बोधनार्थे वार्तिकाऽऽरम्भेण भावस्यैव वाच्यता निर्धार्य्यते। कर्त्तुः प्रत्ययविशेषणत्वे तु समानकर्त्तरीत्येव ब्रूयात्। सूत्रोपात्तानां तु द्योत्यत्वमेव, वर्त्तमानत्वादिति भावः।

वस्तुतस्तु न द्योत्यतायामपि निर्भरः; संसर्गमर्यादयैव तज्ज्ञानसम्भवादित्याह—*अयम्भाव इति*॥ *एकवाक्यतेति*॥ (पा० सू० ३।४।२१) इत्यादिसूत्राणां

धातुसम्बन्धाधिकारीयत्वादिति भावः ।। *अनुपपन्नेति* ।। विशेष्यविशेषणत्वयोः संसर्गविषयतानिरूप्यत्वेन सम्बन्धं विना विशिष्टबुद्धेरेवासम्भवात् सम्बन्धभानं तद्वाच्यतां विनाऽप्युपपन्नमिति भावः ।। *अन्यथेति* ।। विशेष्यविशेषणभावमन्तरेणाऽप्येकवाक्यताभ्युपगमे इत्यर्थः ।। *सामानाधिकरण्यमिति* । एकाश्रयवृत्तित्वमित्यर्थः ।। *पूर्वोत्तरभावः* । स्वोत्तरसमयोत्पत्तिकत्वम्, स्वपूर्वसमयवृत्तित्वं वा ।। *व्याप्यत्वम्* । अविनाभावित्वम् ।।

तुमुनाद्यन्ते शाब्दबोधदिशमाह—*तथाचेति* ।। *भोजनजनिकेति* ।। जनकत्वस्यात्र संसर्गतेति स्फुटीकर्त्तुमिथमुक्तिः । बोधाकारस्तु, भोजनविशिष्टेत्येव जनकत्वस्यापदार्थतया अप्रकारत्वात् । क्रिययोर्जन्यजनकभावस्यापि सम्बन्धत्वे युक्तिमाह *अत एवेति* ।। जन्यत्वस्य संसर्गत्वाभ्युपगमादेवेत्यर्थः ।। जलपानाऽऽनन्तर्यंस्येत्यनेन पूर्वोत्तरभावसम्बन्धसत्त्वं बोध्यते । तज्जन्यत्वविवक्षायान्तु प्रयोग इष्ट एवेति भावः । सामानाधिकरण्यस्य संसर्गताऽभ्युपगमस्तु यत्र पूर्वापरीभावान्नभोजनतृप्त्योर्वैयधिकरण्यं तत्र भुक्त्वा तृप्यतीति प्रयोगवारणार्थं। अव्यवहितोत्तरत्वस्य तु दिनान्तरितपूर्वकालवृत्तिसमानाधिकरणभोजनादिक्रियामादाय क्त्वावारणाय । व्यवधानञ्च तात्पर्य्यवशादृण्डमुहूर्त्तादिना ग्राह्यम् । अतो भोजनानन्तरं दण्डादिव्यवधानेऽपि न तादृशप्रयोगाऽनुपपत्तिरिति बोध्यम् ।

ननु पूर्वोत्तरभावस्य सम्बन्धताभ्युपगमेऽध्ययनकाले 'अधीत्य तिष्ठति' इति प्रयोगाऽनुपपत्तिः । स्थितावध्ययनानन्तर्य्याभावात् । एवम् 'मुखं व्यादाय स्वपिति' इति न स्यात् । ओष्ठपुटविभागरूपव्यादानकाल एव स्वापादिसत्त्वे तादृशप्रयोगस्येष्टत्वेन व्यादानस्य स्वापपूर्वकत्वाभावादत आह—*अधीत्य तिष्ठतीत्यादि* ।। *कालविशेषेति* ।। विभिन्नकालिकयोः कालिकसम्बन्धघटितव्याप्यव्यापकभावाभावेन तत्सम्बन्धावच्छिन्नत्वस्यापि संसर्गतोपगन्तव्या ।

न केवलं व्याप्यत्वस्यैव संसर्गता, किन्तु सामानाधिकरण्यस्यापीत्याह—*सामानाधिकरण्यञ्चेति* ।। नातो विभिन्नकर्त्तृकैककालिकाऽध्ययनादिकमादायोक्तप्रयोगापत्तिः इत्थञ्च—"समानकर्तृकयोः" (पा० सू० ३।४।२१) इति सूत्रविहितक्त्वान्तस्थले समानकर्त्तृकत्वरूपसामानाधिकरण्यसंसर्गस्य शाब्दबोधविषयता सार्वत्रिकी । जन्यत्वादीनां तु तात्पर्यवशात् क्वाचित्की सेति भावः ।।

अन्येतु—सामानाधिकरण्यस्यैव पूर्वोत्तर भावस्यापि क्त्वान्तजबोधविषयता सार्वत्रिकी । मुखं व्यादायेत्यादौ 'सुप्त्वा मुखं व्यादत्ते' इत्यत्रेव व्यादानोत्तरमपि स्वापानुवृत्तेः तथा पौर्वापर्य्यभानाय प्रयोगोपपत्तिः ।। एवञ्चोक्तसम्बन्धद्वयातिरिक्तसम्बन्धभानस्यैव क्वाचित्कत्वमित्याहुः । न च

अवजानासि मां यस्मादतस्ते न भविष्यति ।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा ।। रघुवं० १ स० ७७ श्लो०

इत्यत्र मत्प्रसूतिमनाराध्य ते प्रजा न भविष्यतीत्यर्थाद्विभिन्नकर्तृकादपि क्त्वाद-र्शनात् समानकर्तृकत्वस्यापि क्त्वान्तजन्यबोधविषयता न सार्वत्रिकीति वाच्यम्। सूत्रस्वारस्यात् तादृशस्थले स्थित्यादिक्रियाभ्याहृत्यानाराध्य स्थितस्येति बोधस्याऽभ्युपगमेन सार्वत्रिकत्वाऽक्षतेरिति ॥

*अन्यलभ्यत्वादिति* ॥ आकाङ्क्षानियम्यत्वाद्वाक्यशक्तिलभ्यत्वाद्वेत्यर्थः ॥ क्रिययोः संसर्ग इति* ॥ प्रकृत्यर्थविशेषकत्वरूपस्य तस्यासम्भवेऽपि निरुक्तं यत्तदिह बोध्यमित्यर्थः ॥ *अत एवेति* ॥ क्त्वः समानकर्तृकत्वादिद्योतकत्वादेवेत्यर्थः ॥ *भाष्यप्रतीकमिति* ॥ इह कस्मान्न भवति पूर्वं भुङ्क्ते, पश्चाद् व्रजतीति ? स्वशब्दे-नोपात्तत्वात्' इति भाष्यम्। तत्र समानकर्तृकत्वेन पूर्वकालत्वेन च क्त्व आपाद-नम् ॥ *न तु विषय इति* ॥ न तु प्रयोगघटकयत्किञ्चित्पदबोध्य इत्यर्थः। 'उक्तार्था-नामप्रयोग' इति न्यायादिति भावः ॥ तथा च "समानकर्तृकयोः" इति निर्द्धारणे षष्ठी। "पूर्वकाल" इति षष्ठ्यर्थे बहुव्रीहिरिति कैयटाशयः। वाक्यार्थस्तु पूर्वमेवोक्तः।

न च पूर्वकालस्य पूर्वादिशब्देनाऽभिधाने क्त्वोऽसाधुत्वे 'पूर्वं भुक्त्वा पश्चाद् व्रजति' इत्यत्र क्त्वाऽनुपपत्तिस्तदवस्थैवेति वाच्यम्। भाष्यकृतैव तत्समाधानात्। तथाच भाष्यम्—"नैतत् क्रियापौर्वकाल्यं, किं तर्हि कर्तृपौर्वकाल्यमेतत्। पूर्वमसौ भुक्त्वाऽन्येभ्यो व्रजितृभ्यः पश्चाद् व्रजति" इति अन्येभ्यो भोक्तृभ्यः पूर्वं भुक्त्वाऽपरेभ्यो गन्तृभ्यः पश्चाद्व्रजतीत्यर्थे साधनाऽन्तरक्रियापेक्षे पौर्वकाल्यमादाय "विभाषाग्रह (पा० सू० ३।१।१४३) इति क्त्वः सम्भव इति तदाशयः।

नव्यास्तु—'पूर्वकाल' इति कर्मधारयः। 'भूत' इति तु नोक्तम्। पर्यायशब्दत्वात् तेन रूपेण बोधाननुभवाच्च। तथाच समानकर्तृकयोरर्थयोर्मध्ये पूर्वकालविशिष्टार्थ-वृत्तिधातोः क्त्वेति सूत्रार्थः। तथाच पूर्वकालः क्त्वार्थो धात्वर्थप्रकार एव। अत एव समानकर्तृकत्वेन "पूर्वं भुङ्क्ते पश्चाद् व्रजती"त्यत्र क्त्वाप्रत्ययमाशङ्क्य स्वशब्देनोपा-त्तत्वान्नेति परिहृतं भाष्ये। पूर्वशब्दस्य पूर्वकालोऽर्थो, न तु धातोस्तत्र वृत्तिरिति तदर्थो, न तु 'उक्तार्थानामप्रयोग' इति। अत एव "इह कस्मान्न भवत्यास्यते भोक्तुम्" इत्यग्रिमशङ्कासङ्गतिः। अन्यथा फलार्थकतुमुना पूर्वकालत्वस्यासिक्रियायां द्योतनात् तदसङ्गतिः स्पष्टैव। पूर्वकालत्वस्य ततोऽप्रतीतौ तु कथं क्त्व आपादानं वासरूपन्यायेन लटा साधितमित्यन्यत् ॥ एवञ्च षष्ठ्याः सम्बन्ध वाचकत्ववदमीषामपि सम्बन्धवाच-कत्वं सुवचमित्याहुः।

अत्रेदं चिन्त्यम्—ननु धातोस्तत्र वृत्तिरित्यर्थे, आस्यते भोक्तुमित्यग्रिमशङ्कानुपप-त्तेरुपष्टम्भकत्वेनोपन्यसनं शिथिलम्। यतः कैयटमतेऽप्यस्यार्थे पूर्वकालसम्बन्धित्वस्य केनचिदनभिधानेन "उक्तार्थानामप्रयोगः" इति न्यायानवतारादाशङ्कोत्थानसम्भवात्। प्रत्ययवाच्यस्य कृत्प्रत्ययस्थले धात्वर्थविशेष्यताया नव्यानामपि सम्मतत्वेन पूर्वकालः क्त्वाऽर्थो धात्वर्थप्रकार एवेति पूर्वग्रन्थविरोधश्च। न च द्योतकत्वाऽभ्युपगमादुक्त-सङ्गतिः। षष्ठ्याः सम्बन्धवाचकत्ववदमीषामपि सम्बन्धवाचकत्वमित्युत्तरग्रन्थ-

विरोधात्। न च तदपि सुवचम्। समानकर्तृकत्वादीनां वाच्यतायाः सूत्रादलाभात्। तस्मात् कर्मप्रवचनीयवत् क्रियासम्बन्धविशेषकत्वमेव क्त्वादीनामिति कैयटोक्तमेव सम्यगिति।

मतान्तरं दूषयितुमुपन्यस्यति-*यत्त्विति*। *क्त्वावाच्यमिति*॥ समानकर्तृकयोः पूर्वकाले" (पा० सू० ३।४।८१) इत्युभयोः पदयोर्बहुव्रीहित्वा विशेषण पूर्वकालस्य वाच्यत्वमितरार्थस्य द्योत्यत्वमिति वैषम्ये बीजाभावादिति। वैषम्ये बाधकमाह—*अन्यथेति*॥ तस्य क्त्वाप्रत्ययावाच्यत्वे इत्यर्थः। तृतीयाप्रसङ्गश्चेति*॥ क्त्वाप्रत्ययेन कर्तुरनभिधानादिति भावः॥

ननु "अनभिहित" इति सूत्रे नञः प्रसज्यप्रतिषेधाऽर्थकतया प्रकृते कर्तुराख्यातेनाभिधानान्न तृतीयापत्तिरित्याशङ्क्य निराचष्टे—*न चेति*॥ *अनभिहित इति*॥ न प्रसज्यप्रतिषेधो, वाक्यभेदादिदोषात्। न चानुपपत्त्या तत्स्वीकारः। वक्ष्यमाणभाष्यविरोधात्। तथाचैकेनाभिधानेऽप्यन्येनानभिधानात् तृतीयापत्तिरित्यभिप्रायेणाह—*पाकक्रियाकर्तुरित्यादि*॥ *तदभावादिति*॥ अभिहितभिन्नत्वादित्यर्थः॥ *अत एवेति*। तत्सूत्रस्थनञः पर्युदासार्थकत्वादेवेत्यर्थः॥ भाष्ये इत्यस्यानभिहितसूत्रस्थे इति शेषः॥ *तस्येति*॥ समानकर्तृकत्वस्येत्यर्थः। द्विवचनप्रकृतिबहुव्रीहिणा समानकर्तृकत्वस्य धात्वर्थविशेषणतैव प्रतीयते, नतु विधीयमानत्व इति भावः।

तदेव विशदयति—*अन्यथेति*। एतत्सूत्रस्य कर्तृशक्तिप्रतिपादकत्वे इत्यर्थः॥ *समानेति*। तदुपादानाच्च कर्तृद्वयस्यैव लाभः। *न्यासः स्यादिति*॥ "कर्त्तरि कृत्" इतिवद्। वस्तुतस्तु न तथा सम्भवति। "कर्त्तरि कृत्" ( पा० सू० ३।३।६७ ) इति सूत्रेणैव गतार्थत्वाद्, "अव्ययकृतो भावे" इति वार्तिकविरोधाच्चेति भावः। उक्तापत्तिं निरस्यति—*तृतीयापादनं*। आख्यातार्थक्रियाया इति*। क्रियाद्वयनिरूपितकर्तृशक्त्योरनेकत्वेऽपि प्रधानतिङन्तार्थक्रियानिरूपितकर्तृशक्तेराख्यातेनाभिधाने तत्र कृदन्तार्थक्रियानिरूपितत्तच्छक्तेरनभिहिताया अप्यभिहितत्वातिदेशस्य अनभिधाने त्वनभिहितत्वातिदेशस्य चोक्तभाष्यप्रामाण्येनाऽभ्युपगमान्न तृतीयापत्तिः प्रकृते इति भावः।

*प्रधानेतरयोरिति*। गुणप्रधानक्रियानिरूपितशक्तिद्वयं यत्रैकस्मिन् द्रव्ये तत्र गुणक्रियानिरूपितशक्तिः प्रधानक्रियानिरूपितशक्तिधर्ममनुरुणद्धीत्यर्थः। उक्तातिदेशेऽपि तत्सम्मतिमाह—*प्रधानविषयेति*। प्रधानः विषयो निरूपकं यस्याः सा शक्तिर्यदा प्रत्ययेन तिङाऽभिधीयते, तदा गुणक्रियावाचकधातूत्तरप्रत्ययेनाऽनभिहिताप्यभिहितवत् प्रतीयत इत्यर्थः। इदमुपलक्षणम्। अभिहिताया अपि अनभिहितवत्प्रतीतेः। 'तत्र प्रासादे आस्त' इत्युदाहर्तव्यम्। अवश्यं चेत्थमभ्युपेतव्यम्। अन्यथा कर्तुः क्त्वार्थत्वाभ्युपगमेनोक्तत्वे तृतीयापत्तिवारणेऽपि, 'पक्त्वौदनो मया भुज्यते' इत्यत्रौदन-

पदोत्तरद्वितीयापत्तिर्दुर्वारा। तत्र पाकक्रियानिरूपितकर्मत्वशक्तेः कृतानभिधानादुक्तरीतेरसम्भवादित्याह—*किञ्चेति*।

अत्रेदम्बोध्यम्—यदौदने पाकक्रियानिरूपितकर्मत्वस्यैव शाब्दविषयत्वमभिप्रेतं, न तु प्रधानक्रियानिरूपितकर्मत्वस्यापि तदौदनं पक्त्वा भुज्यते इत्यपि साधु। ओदनस्य भोजनकर्मताया आर्थिकत्वात्। यदातूभयकर्मत्वस्यैव शाब्दविषयत्वमभिप्रेतं, तदौदनपदाद् द्वितीया असाध्वेव उक्तव्यवस्थितेः। परन्त्वाख्यातवाच्यक्रियायाः प्राधान्यात् तां प्रत्येव क्त्वान्तोपस्थिताः सर्वाः क्रिया गुणीभवन्ति; न तु तासां परस्परविशेष्यविशेषणभावः। "गुणानां च परार्थत्वात्" इतिन्यायात्। एवञ्च 'स्नात्वा पीत्वा भुक्त्वा व्रजति, 'भुक्त्वा स्नात्वा व्रजति' इत्यविशेषेण प्रयोगाः।

तुमुनस्तादर्थ्यरूपमुद्देश्यत्वमपि द्योत्यम्। "क्रियार्थायां क्रियायाम्" इत्युक्तेः। तन्निष्कर्षश्च पूर्ववदेव तुन्प्रकृत्यर्थोपपदार्थयोस्तादर्थ्यवत् समानकर्तृकत्वादिकमपि सम्बन्धः। तथाच "हरिंद्रष्टुं याति" इत्यतो हरिकर्मकं भविष्यद्दर्शनोद्देश्यकं दर्शनकर्तृकर्तृकं यानमिति शाब्दधीः। अनयैव दिशा एधानाहारको व्रजतीति बोध ऊहनीयः॥ ६०॥

इति भूषणसारदर्प्पणे क्त्वाद्यर्थनिरूपणम्॥ १२॥



अर्थ—क्त्वा आदि प्रत्ययों के अर्थ का निरूपण करते हैं।

"अव्ययकृतो भावे" इस उक्ति के कारण तुमुन् आदि प्रत्यय प्रकृति के अर्थ में होते हैं। समानकर्तृकत्व आदि अर्थ इन प्रत्ययों के द्योत्य हैं ऐसी स्थितिमर्यादा है।

तुमादयः—तुमुन् आदि प्रत्यय प्रकृत्यर्थ अर्थात् धात्वर्थ भाव में होते हैं। आदि पद से क्त्वादि प्रत्ययों का संग्रह है। क्त्वादि प्रत्ययों का भाव अर्थ है इसमें प्रमाण कहते हैं—"अव्ययकृतो भावे" इस वार्तिक से :

शङ्का—(क्त्वादि प्रत्ययों के भावार्थक मानने पर समान कर्तृकत्वादि अर्थ का सम्भव न होने से) "समानकर्तृकयोः पूर्वकाले" इत्यादि सूत्रों की क्या गति—उपपत्ति होगी इसके उत्तर में कहते हैं—समानकर्तृकत्वादि। अर्थात् यह प्रत्यय का द्योत्य है वाच्य नहीं है।

तात्पर्य यह है कि—पाक और भोजन क्रियाओं में परस्पर विशेषण विशेष्य भाव के विना सर्वानुभव सिद्ध एकवाक्यता की अनुपपत्ति है। विशेषणविशेष्यभाव के विना भी एकवाक्यता मानने पर "भुङ्क्ते व्रजति" इत्यादि स्थल में भी एकवाक्यता की आपत्ति हो जायगी। इसलिये एकवाक्यता स्थल में दोनों क्रियाओं का विशेषण विशेष्यभाव निरूपक सम्बन्ध, जन्यत्व, सामानाधिकरण्य=एकरूपवृत्तित्व, पूर्वोत्तरभावः, एवं व्याप्यत्व आदि अनेक प्रकार का है। इस प्रकार "भोक्तुं पचति भुक्त्वा तृप्तः[1]" इत्यादि स्थल में भोजन जनक जो पाक क्रिया भोजन जन्य जो तृप्ति तदाश्रय इत्यादि बोध होता है।

---

१. "तृप्तः" यहाँ कर्ता में क्त होने से प्रत्ययार्थ आश्रय का प्राधान्य होगा।

जन्यत्व को संसर्ग मानने से ही जलपान का आनन्तर्य तृप्ति में रहने पर भी "पीत्वा तृप्तः" ऐसा प्रयोग नहीं होता। (पान से जन्य तृप्ति नहीं है) सामानाधिकरण्य (एकाश्रयवृत्तित्व) को भी संसर्ग मानने से समानकर्तृकत्व का भी लाभ अर्थात् हो जाता है। भुक्त्वा व्रजति इत्यादि स्थलों में पूर्वोत्तरभाव—पूर्वकालवृत्तित्व तथा उत्तर-कालवृत्तित्व का समुदाय रूप एवं सामानाधिकरण्य संसर्ग है। अतः भोजन समाना-धिकरण तथा उसके उत्तर काल में वृत्ति व्रजन=गमन क्रिया इस प्रकार का बोध होता है।

"अधीत्य तिष्ठति" "मुखं व्यादाय स्वपिति" इत्यादि का अध्ययन और व्यादान के अभाव काल में प्रयोग नहीं होने से जब जब इसकी स्थिति और स्वाप है तब तब अध्ययन और मुख का व्यादान है। अतः कालविशेष से अवच्छिन्न व्याप्यत्व के बोध से व्याप्यत्व और सामानाधिकरण्य संसर्ग उक्त प्रयोग में है।

एवञ्चेति—पूर्वकालत्व जन्यत्व आदि का वृत्ति के विना संसर्गतया भान होने से सूत्र द्वारा उनकी वाच्यता का लाभ नहीं होता है। इसलिये अव्यय के प्रकृतिभूत धातुओं के अर्थरूप क्रियाओं के संसर्ग का तात्पर्यग्राहकतारूप द्योतकत्व क्त्वादि प्रत्ययों को माना गया है। इसीलिये "समानकर्तृकयोः" इस सूत्र के भाष्य में "स्वशब्देनोपात्तत्वान्न" इस भाष्य प्रतीक को लेकर पौर्वापर्य काल के द्योत्य रहने पर क्त्वादि का विधान है। विषय अर्थात् प्रयोगघटक जिस किसी पद से बोध्य वाच्य पौर्वापर्य के होने पर नहीं होता यह भाव कैयट ने लिखा है।

यत्तु—किसी का विचार इस प्रकार है—

"समानकर्तृकयोः" इस सूत्र से क्त्वा प्रत्यय द्वारा समानकर्तृकत्व अर्थ का लाभ होता है। उसको क्त्वा प्रत्यय का वाच्य न मानने पर "ओदनं पक्त्वा अहं भोक्ष्ये" यहाँ तृतीया हो जायगी।

यदि कहें कि "भोक्ष्ये" इसमें तिङ् कर्ता में होने से कर्ता उक्त है। अतः तृतीया नहीं होगी तो यह ठीक नहीं है। भोजन क्रिया के कर्त्ता का अभिधान होने पर भी पचि क्रिया के कर्त्ता का अभिधान नहीं होने से तृतीया की आपत्ति हो जायगी। अनभिहित इसमें पर्युदास है (प्रसज्य प्रतिषेध नहीं है) पर्युदास मानने से ही "प्रासादे आस्ते" यहाँ प्रसादन क्रिया के अधिकरण का अभिधान होने पर भी अस्ति क्रिया के अधिकरण का अनभिधान होने से प्रासाद में सप्तमी होती है। यह भाष्य में स्पष्ट है। इसलिये क्त्वा प्रत्यय को कर्ता का वाचक मानना आवश्यक है।

यह कथन ठीक नहीं है—"समानकर्तृकयोः" इस सूत्र से समानकर्तृकत्व की वाच्यता प्रतीत नहीं होती। क्रियाओं के समानकर्तृक होने पर पूर्वकाल में क्त्वा प्रत्यय होता है यही अर्थ है। यदि यह सूत्र कर्ता में शक्ति प्रतिपादक होता तो समानकर्तरि ऐसा सूत्र का स्वरूप होता। तृतीया की आपत्ति तो नहीं दी जा सकती क्योंकि प्रधान तिङन्तार्थ क्रियानिरूपित कर्तृत्व शक्ति के अभिधान होने से गुणभूत पाकक्रियानिरूपित कर्तृत्वशक्ति भी अभिहित के समान हो जाती है। अतः प्रधान क्रिया के अनुरोध से ही अप्रधान में विभक्ति की प्रवृत्ति होती है। वाक्यपदीय में कहा है—

प्रधानेतरयोर्यत्र—जिस वाक्य में प्रधान और अप्रधान क्रियाओं से निरूपित दो शक्तियाँ पृथक्-पृथक् एक द्रव्य में रहती हैं वहाँ गुण=अप्रधान क्रिया निरूपित शक्ति

प्रधान क्रिया निरूपित कर्तृत्वादि धर्म का अनुसरण करती है। प्रधानक्रियानिरूपित शक्ति का प्रत्यय से अभिधान होने पर अप्रधानक्रियानिरूपित कर्तृत्वादि शक्ति अनभिहित होने पर भी अभिहित के समान प्रतीत होती है।

यत्तु इत्यादि से कथित पक्ष में दूसरा दोष यह है कि इस प्रकार क्त्वा प्रत्यय का कर्म अर्थ भी मानना होगा। क्योंकि "पक्त्वा ओदनो भुज्यते" यहाँ ओदन पचिधात्वर्थ का कर्म होने से प्राप्त द्वितीया का उपायान्तर से वारण नहीं हो सकता।

इति क्त्वाद्यर्थ निर्णयः

हिन्दी भाष्य—क्त्वा प्रत्यय के सम्बन्ध में विशेष वक्तव्य होने से इस प्रकरण का नाम क्त्वा से ही किया गया है। क्त्वा प्रत्यय का विधायक "समानकर्तृकयोः पूर्वकाले क्त्वा" यह सूत्र है। इसमें समान का अर्थ एक है तुल्य नहीं। अन्यथा भिन्न-भिन्न कर्ता-वाली क्रियाओं का कर्ता एक नहीं है किन्तु तुल्य तो है। इसलिये वहाँ भी क्त्वा प्रत्यय प्राप्त होगा। अतः समानकर्तृक से एक कर्तृक ही क्रिया की विवक्षा है। "समानकर्तृकयोः" इसमें द्विवचन अविवक्षित है। अतः अनेक क्रियाओं के पौर्वापर्य में भी क्त्वा प्रत्यय होता है। जैसे "स्नात्वा भुक्त्वा पीत्वा व्रजति।" यदि कहें कि यहाँ एक स्नानरूपा क्रिया ही पूर्व है अन्य भोजन पान क्रिया मध्य होने से सबसे पूर्व नहीं है। अतः क्त्वा प्रत्यय नहीं होगा तो ऐसा कहना ठीक नहीं है। प्रधान व्रजन ( गमन ) क्रिया के प्रति केवल पूर्वत्व विवक्षित होने से स्नान भोजन तथा पान क्रिया उससे पूर्व होने के कारण क्त्वा प्रत्यय होता है।

इस प्रकार एक ही कर्ता वाले धात्वर्थों के होने पर पूर्वकालावच्छिन्न ( पूर्वकालवृत्ति ) अर्थ के वाचक धातु से क्त्वा प्रत्यय होता है यह सूत्रार्थ है। क्त्वा के अर्थ की आकाङ्क्षा में "कर्तरि कृत्" इसके आधार पर कर्ता अर्थ प्राप्त होता है। परन्तु अव्ययकृत् भाव में होता है इस अर्थवाले "अव्ययकृतो भावे" इस वार्तिक से भाव में विधान होने से भावार्थक क्त्वा माना जाता है। समानकर्तृकत्वादि क्त्वा प्रत्यय से द्योत्य है वाच्य नहीं है यह भाव है।

पूर्वकाल की क्रिया और उत्तरकाल की क्रियाओं का परस्पर विशेषण विशेष्यभाव होने से ही एकवाक्यता होती है। पूर्वकाल की क्रिया अप्रधान और उत्तर काल की क्रिया प्रधान होती है। तिङन्तार्थमुख्यविशेष्यक बोध जनकत्व रूप एकवाक्यता के बिना भी क्त्वा प्रत्यय की साधुता मानने पर "भुङ्क्ते व्रजति" यहाँ पर भी क्त्वा प्रत्यय हो जायगा। अतः प्रधान और अप्रधान क्रियाओं की एकवाक्यता होने पर ही क्त्वा प्रत्यय होता है। क्रियानिष्ठ जो विशेषण विशेष्यभाव उसका निरूपक अर्थात् वह सम्बन्ध ( संसर्ग ) जो विशेष्यविशेषणभाव का जनक है वह कई प्रकार का है। जैसे [1]जन्यत्व सामाना[2]धिकरण्य ( एकाश्रय वृत्तित्व ) पूर्वोत्तर[3] भाव, व्याप्यत्व इत्यादि अनेक हैं। "भोक्तुं पचति" इससे जनकता सम्बन्ध से भोजन विशिष्ट पाकक्रिया "भुक्त्वा तृप्तः" तृप्ति से जन्यत्वविवक्षित है वहाँ पीत्वा तृप्तः ऐसा इष्ट है। इससे जन्यत्व सम्बन्ध से भोजन

१. जन्यत्व उपलक्षण है जन्यजनकभाव का।

२. सामानाधिकरण्य समानकर्तृकत्व रूप ही है। अतः समानकर्तृकत्व पृथक् द्योत्य नहीं है।

३. आनन्तर्य पूर्वोत्तरभाव ... रूप है।

विशिष्ट तृप्तिस्तदाश्रयः इस प्रकार का बोध होता है। संसर्गतया भान मानने से उक्त सम्बन्धों में किसी की शक्ति नहीं है। केवल क्त्वादि प्रत्ययों में उन सम्बन्धों के तात्पर्य ग्राहकत्वरूप द्योतकत्व है। जहाँ भोजनजन्यतृप्ति विवक्षित है? वहाँ "पीत्वा तृप्तः" यह प्रयोग नहीं होता है क्योंकि तृप्ति में पान जन्यत्व नहीं है। अत एव जन्यत्व का संसर्ग विधया भान माना है। सामानाधिकरण्य को सम्बन्ध मानने से भोजन अन्य में गमन दूसरे में होने पर "भुक्त्वा गच्छति" यह प्रयोग नहीं होता। सभी पूर्वोक्त संसर्ग सर्वत्र हों ऐसा नियम नहीं है।

"अधीत्य तिष्ठति" यहाँ अध्ययन और स्थिति एवं "मुखं व्यादाय स्वपिति" यहाँ मुख व्यादान और स्वाप दोनों एक ही काल में होने से पूर्वोत्तर भाव (आनन्तर्यरूप अव्यवहितोत्तरत्व) क्रियाओं में नहीं होने के कारण क्त्वा प्रत्यय नहीं होगा। अतः पूर्वोत्तरभाव सम्बन्ध यहाँ इष्ट नहीं है किन्तु [1]व्याप्यत्वरूप सम्बन्ध और सामानाधिकरण्य सम्बन्ध ये ही दो विवक्षित हैं। जब-जब स्थिति और शयन है तब-तब अध्ययन और मुख व्यादान है। इस प्रकार व्याप्यत्व बोध होने से क्त्वा प्रत्यय सिद्ध होता है।

पूर्व क्रिया का व्यवधान उत्तर क्रिया में क्षण मुहूर्तात्मक रहने पर भी अव्यवहित ही उत्तर क्रिया मानी जाती है।

अन्यथा भोजन के कुछ समय बाद जाने पर "भुक्त्वा व्रजति" यह प्रयोग नहीं होगा। तात्पर्य ही से व्यवधायक काल निश्चित किया जाता है। "मध्याह्ने भुक्त्वा रात्रौ भुङ्क्ते" इत्यादि स्थल में तात्पर्य वश से दोनों क्रियाओं के मध्यकाल को व्यवधायक नहीं माना जाता है। कहीं-कहीं मास भी व्यवधायक नहीं होता। जैसे "मार्गशीर्षे उद्वाह्य पौषे गृहं गतः" इत्यादि। वस्तुतः समानकर्तृकत्व की सर्वत्र शब्दबोध में प्रतीति है। जन्यत्व की प्रतीति क्वाचित्क है। पूर्वकाल विवक्षित है।

अवजानासि मां यस्मादतस्ते न भविष्यति।
मत्प्रसूतिमनाराध्य प्रजेति त्वां शशाप सा॥

मेरे अनादर के कारण मेरी सन्तान की अराधना बिना किये तुमको प्रजा नहीं होगी। यहां "आराधन" का कर्ता अन्य है और मुख्य क्रिया "भविष्यति" इसका कर्ता प्रजा होने से समानकर्तृकत्व नहीं है। अतः क्त्वा नहीं होगा। इसीलिये अन्य सम्बन्धों के समान समानकर्तृकत्व भी सार्वत्रिक नहीं है ऐसा कहना ठीक नहीं है। "मत्प्रसूतिमनाराध्य स्थितस्य" ऐसा अर्थ आक्षिप्त स्थितस्य के द्वारा हो जाने से प्रधान क्रिया स्थिति और आराधन दोनों क्रियाओं का कर्ता एक होने से समानकर्तृकत्व की अविवक्षा में ओई प्रमाण नहीं है। इसलिये क्त्वा प्रत्यय के उत्पन्न होने में समानकर्तृकत्व का रहना अनिवार्य है।

यत्तु—इस मत में—समानकर्तृकपद धर्मपरक होने से समानकर्तृकत्व का बोधक है। समान का एक अर्थ है। अतः एक कर्तृ कर्तृकत्व में शक्ति है। धर्मपरक मानने पर धर्म के एक होने से सूत्र में द्विवचन निर्देश असङ्गत हो जायगा यह शङ्का ठीक नहीं है। क्योंकि क्रियारूपधर्मी के द्वित्व का धर्म में आरोप करने से द्विवचन की उपपत्ति हो जायगी। पूर्व क्रिया का प्रथम कर्तृत्व में निरूपितत्व सम्बन्ध से अन्वय है। अतः "भोजन क्रिया निरूपित कर्तृत्वाश्रयाभिन्न कर्तृनिष्ठं व्रजनम्" ऐसा बोध होता है।

---

१. व्याप्यत्व नियत साहचर्य रूप है।
२. कर्ता [illegible] के होने से आश्रय की प्रधानता है।

क्त्वा की उक्त अर्थ में शक्ति मानने से "पक्त्वा अहं भोक्ष्ये" इस प्रयोग में क्त्वा से कर्ता के उक्त होने से "अहं" इसमें तृतीया नहीं हुई। यदि क्त्वा का कर्ता अर्थ नहीं माना जायगा तो अनुक्त कर्ता में तृतीया की आपत्ति हो जायगी।

शङ्का—भोक्ष्ये इसमें जो तिङ् है वह कर्ता में होने से कर्ता उक्त है। अतः तृतीया का आपादन युक्त नहीं है।

समाधान—इस वाक्य में दो कर्तृत्व शक्ति है। एक पचिक्रिया निरूपित और दूसरी भुजिक्रिया निरूपित। भुजिक्रियानिरूपित कर्तृत्व शक्ति का भुज धातु के उत्तर तिङ् से अभिधान होने पर भी पचिक्रियानिरूपित कर्तृत्व का अभिधान न होने से तृतीया की आपत्ति पूर्ववत् है। "अनभिहिते" इस सूत्र में "अनभिहिते" यह पर्युदास है। प्रसज्य प्रतिषेध मानने पर अभिहित में द्वितीयादि विभक्ति नहीं होती ऐसा अर्थ होने से तिङ् से कर्ता का अभिधान हो गया है। अतः द्वितीया नहीं होती। पर्युदास में अनभिहित कर्ता में तृतीया होने से पचिक्रिया निरूपित कर्ता अनभिहित है द्वितीया हो जायगी। अतः कर्ता को वाच्य मानना उचित है।

अत एव "प्रासादे आस्ते" यहां प्रासीदत्यस्मिन् इस विग्रह में अधिकरण में घञ् होने पर भी आसनक्रियानिरूपित अधिकरणत्व अनुक्त है। अतः सप्तमी होती है। यह किसी का मत है।

परन्तु उक्त मत ठीक नहीं है। यदि कर्ता क्त्वा प्रत्यय का अर्थ अभिमत होता तो सूत्र में समानकर्तरि ऐसा उल्लेख होना चाहिये था पर सूत्र में ऐसा निर्देश नहीं है।

कर्ता प्रत्ययार्थ न मानने पर जो तृतीया विभक्ति की आपत्ति दी है, वह भी ठीक नहीं है। प्रधान और अप्रधान भेद से दो प्रकार की जहां क्रिया रहती हैं, वहां प्रधानक्रिया निरूपित कर्तृत्वादि के अभिधान और अनभिधान के समान ही अप्रधान क्रिया का कर्ता आदि का भी अभिधान और अनभिधान समझना चाहिये।

अतः प्रकृत में प्रधान भोजन क्रिया के कर्ता का तदुत्तर प्रत्यय से अभिधान हो जाने पर पचिक्रिया का कर्ता भी अभिहित के समान हो जाने से तृतीया की आपत्ति नहीं हो सकती।

इसी आशय की "प्रधानेतरयोर्यत्र" इत्यादि हरिकारिका का उल्लेख है।

यद्यपि प्रधान और इतर-अप्रधान इन दोनों क्रियाओं से निरूपित कर्तृत्व कर्मत्वादि शक्ति भिन्न-भिन्न हैं। तथापि अप्रधानक्रियानिरूपित कर्तृत्वादिशक्ति प्रधानक्रियानिरूपित कर्तृत्वादि शक्ति का अनुरोध अर्थात् अनुसरण करती है। अर्थात् उक्तानुक्त की व्यवस्था प्रधान क्रिया के अनुसार है। प्रधानक्रियानिरूपित कर्तृत्वादिशक्ति का प्रत्यय से अभिधान होने पर अप्रधानक्रियानिरूपित कर्तृत्वादि का अभिधान तदुत्तर प्रत्यय से न होने पर भी प्रधान क्रिया के उत्तर प्रत्यय से अभिधान तथा अनभिधान होने पर उसका भी अभिधान तथा अनभिधान माना जाता है। यह सारांश है।

"पक्त्वा ओदनो मया भुज्यते" इत्यादि स्थल में पचिक्रियानिरूपित कर्मत्व का अभिधान पूर्वोक्त रीति के न मानने पर पचिक्रिया में सम्बन्ध करने पर ओदनपदोत्तर द्वितीया विभक्ति दुर्निवार हो जायगी। इस दोष के वारणार्थ क्त्वा का अर्थ कर्म भी मानना होगा। इसलिये पूर्वोक्त युक्ति ही ठीक है। इत्यलम्

इति क्त्वाद्यर्थ निर्णयः



# अथ स्फोटनिरूपणम्

सिद्धान्तनिष्कर्षमाह—

वाक्यस्फोटोऽतिनिष्कर्षे तिष्ठतीति मतस्थितिः ॥
साधुशब्देऽन्तर्गता हि बोधका न तु तत्स्मृताः ॥ ६१ ॥

यद्यपि वर्णस्फोटः, पदस्फोटः, वाक्यस्फोटः, अखण्डपदवाक्यस्फोटो, वर्णपदवाक्यभेदेन त्रयो जातिस्फोटा इत्यष्टौ पक्षाः सिद्धान्तसिद्धा इति वाक्यग्रहणमनर्थकं दुरर्थकञ्च, तथापि वाक्यस्फोटातिरिक्तानामन्येषामप्यवास्तवत्वबोधनाय तदुपादानम् । एतदेव ध्वनयन्नाह—०अतिनिष्कर्षे इति० ॥ इति मतस्थितिर्वैयाकरणानां महाभाष्यकारादीनाम् ।

तत्र क्रमेण सर्वान् तान् निरूपयन् वर्णस्फोटं प्रथममाह-*साधुशब्द इति* । साधुशब्दान्तर्गता वाचका न वेति विप्रतिपत्तिः । विधिकोटिरन्येषां, नेति वैयाकरणानाम् । साधुशब्दे 'पचति' 'राम' इत्यादिप्रयुज्यमानेऽन्तर्गतास्तिब्विसर्गादय एव; बोधकाः—वाचकाः । तेषामेव शक्तत्वस्य प्राग्व्यवस्थापितत्वात् न तु तैः स्मृता—लादयः स्वादयश्चेत्यर्थः ॥ ६१ ॥

इत्थं व्याकरणाविना गृहीतशक्तिकपदसमुदायादनासन्नादगृहीतार्थतात्पर्य्यकादयोग्यादनाकाङ्क्षाच्च शाब्दबोधादर्शनादासत्त्यादिकमपि शक्तिज्ञानजन्यपदार्थोपस्थित्या बोधे जननीये सहकारि । आसत्तिश्च—प्रकृतबोधानुकूलपदाव्यवधानम् । अस्ति च "पर्वतो वह्निमान्" इत्यत्र तादृशपदाव्यवधानम्, न तु "गिरिर्भुक्तं वह्निमान् देवदत्तेन" इति न ततो बोधः । अत एव "स्थाल्यां तण्डुलं पचति" इत्यत्र तण्डुलकर्मकस्थाल्यधिकरणकक्रियेति बोधे नाऽनासन्नता । तद्घटकसर्वेषां पदानां तादृशबोधानुकूलत्वात् । स्थाल्यां पचतीत्येतावन्मात्रबोधे तु तदनासन्नमेव । श्लोकादौ तु योजनावाक्यादेव बोधः, तद्भ्रमेणाऽनासन्नाद् बोधदर्शनात्तज्ज्ञानमेव हेतुरिति—सम्प्रदायः ।

नव्यास्तु—"मौनिश्लोकादन्वयबोधानुदेयप्रसङ्गान्नोक्ताव्यवधानमासत्तिः । आकाङ्क्षादिसत्वे तात्पर्य्यज्ञाने च सति व्यवहितादव्यवहिताच्च बोधदर्शनात्तज्ज्ञानविलम्बेन शाब्दाविलम्बाच्च, किन्त्विदं पदमेतत्पदेन सम्भूयाऽन्वयबोधं जनयत्वित्याकारकपदतात्पर्य्यरूपाभिसन्धापयित्रिच्छा सा, न तु वक्त्रिच्छा । मौनिश्लोकादौ दोषतादवस्थ्यात् । शुकवाक्ये तु भगवत्तात्पर्य्यमादायैव गतिरित्याहुः ।

वस्तुतस्तु सत्यर्थतात्पर्य्यज्ञाने पदतात्पर्य्यज्ञानविलम्बेन शाब्दबोधाविलम्बाद् वृत्त्या पदजन्यपदार्थानामव्यवधानेनोपस्थितिरेवासत्तिः—स्वरूपसत्यन्वयबोधे हेतुः । न हि पदार्थानामनुपस्थितानामन्वयधीः केनाप्यनुभूयते इति । अर्थतात्पर्यं त्विदं पदमे-

तस्मिन्नर्थेऽपरपदार्थान्वयं बोधयत्वित्यभिसन्धापयित्रिच्छा। संवादिशुकवाक्ये तु भगवत एव सा। विसम्वादिनि तु शिक्षयितुरेव। अस्य संशये व्यतिरेकनिश्चये चान्वयबोधात्तद्भ्रमेणान्वयबोधदर्शनाच्च तज्ज्ञानमप्यन्वयबोधे हेतुः। अधिकमग्रे वक्ष्यते।

शाब्दबोधे योग्यताया ज्ञानं कारणमिति बहवः। सा चैकपदार्थेऽपरपदार्थस्य यादृशसंसर्गवत्वं तादृशसंसर्गवत्त्वैव प्रकृतशाब्दबोधविषयसंसर्गवत्वमिति यावत्। अस्ति च 'पयसा सिञ्चति' इत्यत्र सेके पयःकरणकत्वस्य संसर्गः। अत एव करकाऽभिप्रायप्रयुक्त—'पयसा सिञ्चति' इति वाक्यं न योग्यम्। पयःपदार्थकरकायां सेककरणत्वाभावात्। यादृशेति विशेषणाच्च 'आकाशः शब्द' इति वाक्यं समवायसंसर्गमादाय नाभेदाऽन्वये योग्यम्। अयोग्येऽप्येतद् भ्रमेणान्वयदर्शनादेतज्ज्ञानस्यापि हेतुता।

ननु संसर्गस्य वाक्यार्थत्वेन तद्बाधात् प्रागनुपस्थित्या कथं तद्बोधस्य तत्र तत्त्वमिति चेद्? न योग्यताज्ञानस्य शाब्दबोधे निश्चयत्वेन हेतुतां ब्रूमो, येनोक्तदोषोऽवकाशमासादयेत्। किन्तु संशयनिश्चयसाधारणज्ञानत्वेन। तस्य च न दौर्लभ्यम्। 'पयसा सिञ्चति' इत्यादौ सेकः पयः करणको न वेति संशयात्मकस्य भूतले घटोऽस्तीत्यादौ च प्रात्यक्षिकनिश्चयरूपस्याऽपि तत्प्राक्सौलभ्यात्। स्वजन्यशाब्दबोधस्यैवान्वयबोधप्रतिबन्धकतयोक्तबाधात्तत्सम्भवात्।

केचित्तु लौकिकसन्निकर्षाजन्यदोषविशेषाजन्यतद्वत्ताबुद्धित्वावच्छिन्नं प्रति तदभाववत्ताज्ञानाभावस्य हेतुतया शाब्दबोधस्यापि तत्कार्यतावच्छेदकाक्रान्ततया अयोग्यताज्ञानसत्त्वे तदभावादेव शाब्दबोधवारणे कृतं योग्यताज्ञानस्य तद्धेतुतया। कार्यतावच्छेदककोटौ प्रत्यक्षान्यत्वनिवेशेनैव लौकिकप्रत्यक्षनिरासेऽपि घटाद्युपनीतभानसङ्ग्रहाय तद्विहायाजन्यान्तद्वयनिवेशः।

न च बाधनिश्चयाभावत्वापेक्षया संशयनिश्चयसाधारणयोग्यताज्ञानत्वेन हेतुत्वे लाघवमिति वाच्यम्। स्यादेवम्, यदि बाधाभावस्य शाब्दत्वं कार्य्यतावच्छेदकं कल्प्येत, किन्तु शाब्दबोधस्य बाधाभावकार्यतावच्छेदकाक्रान्ततयातद्दशायां तं प्रतिषेधामः। अत एव घटोऽभिधेय इत्यादावुक्तबाधाप्रसिद्धावपि न क्षतिः। तत्संसर्गावच्छिन्नतत्प्रकारकतद्विशेष्यकबुद्धित्वस्यैव तत्कार्य्यतावच्छेदकत्वात् घटाभावेऽभिधेयत्वप्रतियोगिकत्वभ्रमदशामादाय तदभावस्यापि प्रसिद्धेश्चेत्याहुः।

अत्र वदन्ति— न हि तद्विशिष्टबुद्धिसामान्ये बाधाभावः कारणं, किन्तु बाधावतारे इच्छासत्त्व आहार्य्यप्रत्यक्षोदयादिच्छाया उत्तेजकत्वानुरोधेन प्रत्यक्षस्यैव प्रतिबध्यतावच्छेदकत्वावश्यकतयोपनीतभानसाधारणप्रतिबध्यतायाः शाब्दबोधेऽसम्भवात्। न च तथाप्यनुमितिसाधारणप्रतिबध्यतायाः शाब्दबोधसाधारण्यं शङ्क्यम्। तत्साधारणस्य प्रत्यक्षान्यज्ञानत्वस्य प्रतिबध्यतावच्छेदकत्वे प्रत्यक्षान्यत्वयोर्मिथो विशेष्यविशेषणभावे विनिगमनाविरहेणानेकप्रतिबध्यप्रतिबन्धकभावापत्तेः। प्रतिबध्यतावच्छेदकगौरवापत्तेश्चानुमितित्वस्यैव तदवच्छेदकत्वस्याङ्गीकरणीयत्वात्। अतो बाधाभावस्य

स्वातन्त्र्येणैव शाब्दबोधं प्रति हेतुता वाच्या। तत्र चोक्तगौरवेण संसर्गरूपयोग्यता- ज्ञानस्यैव हेतुत्वमुचितम्।

अपि च शाब्दबोधे तद्वदन्योन्याभावतदभावव्याप्यवत्ताज्ञानादीनां प्रतिबन्धकत्व-कल्पनाऽपेक्षया लाघवाद् योग्यताज्ञानस्यैव हेतुत्वमुचितम्। किञ्च 'पयसा सिञ्चति' इति शाब्दसामग्रीकाले सेकः पयःकरणकत्वाभाववानिति मानसवारणाय तत्र शाब्द-बोधसामग्र्याः प्रतिबन्धकत्वकल्पने तत्र योग्यताज्ञानस्यावश्यकतया विपरीतज्ञानोत्तर-प्रत्यक्षे विशेषदर्शनस्य हेतुतया तदभावादेव तद्वारणात्। विशेषदर्शनसत्त्वे तु तदभाव-व्याप्यवत्तानिर्णयरूपप्रतिबन्धकत्वेन शाब्दसामग्र्या एवाभावेन तथा मानसे इष्टापत्तेः।

न च निर्णयं प्रत्येव विशेषदर्शनस्य हेतुतया शाब्दसामग्रीकाले मानससंशयवार-णाय शाब्दसामग्र्याः प्रतिबन्धकत्वे कल्पनीये संशयत्वमनिवेश्य सेकत्वाऽवच्छिन्नविशेष्य-कपयःकरणत्वाऽभावप्रकारकमानसत्वमेव तत्प्रतिबध्यतावच्छेदकमिति वाच्यम्। सेक-त्वावच्छिन्नविशेष्यकपयःकरणकत्वप्रकारकमानसे शाब्दसामग्रीप्रतिबन्धकत्वान्तरस्य कल्प्यतया तेनैव संशयवारणे तत्संशये प्रतिबन्धकत्वान्तराकल्पनात्।

न च विपरीतज्ञानोत्तरप्रत्यक्षे विशेषदर्शनस्य हेतुत्वसिद्धावेव योग्यताज्ञानस्य हेतु-त्वसिद्धिरिति वाच्यम्। गुरुभूतशाब्दसामग्री प्रतिबन्धकत्वकल्पनापेक्षया तद्धेतुत्व-कल्पनाया एवोचितत्वात्। अनयैव दिशेष्टसाधनत्वादिज्ञानानां प्रवृत्तौ हेतुत्वसिद्धि-रित्यलं परमतानुवर्णनेन।

घटः कर्मत्वमित्याधाराधेयभावेनान्वये निराकाङ्क्षवाक्याद् 'घटीया कर्मतेति बोधानुदयादाकाङ्क्षापि सहकारिणी। सा च यत्पदे यत्पदसमभिव्याहारप्रयुक्तं यद्वि-शेष्यकयत्संसर्गकयत्प्रकारकबोधजनकत्वं तत्पदे तत्पदनिरूपिताकाङ्क्षा। यथा घट-मानयतीत्यत्र घटपदे कर्मताविशेष्यकाधेयतासंसर्गकघटीया कर्मतेति बोधोपयिका अम् पदनिरूपिताकाङ्क्षा। तां विना घटः कर्मत्वमित्यत्र घटपदेन तादृशबोधाजननात्। एवं धातुपदेऽप्याख्यातनिरूपिताकाङ्क्षोह्या। अत एवानयनं कृतिरित्यत्र नानयना-नुकूला कृतिरिति बोधः धातावाख्यातासमभिव्याहारात्। इयमेवाकाङ्क्षा व्याकरणेन प्रतिपाद्यते। तथाच तत्तत्पदे तत्तत्पदपूर्वापरीभावरूपसमभिव्याहारः सेति फलति। तां विना यद्यप्युक्तानाकाङ्क्षे कर्मत्वपदेऽम्पदत्वभ्रमदशायां घटीया कर्मतेति बोधो-दयेन तज्ज्ञानं हेतुर्न तु स्वरूपसती सा।

न च जनितान्वबोधाद्वाक्यात् पुनरपि तादृशबोधापत्तिरुक्ताकाङ्क्षायास्तदानीम-प्यविकलत्वादिति वाच्यम्। प्रकृतान्वयबोधसमानाकारबोधानुपहितत्वस्यापि स्वरूप-सत आकाङ्क्षत्वेन जनितान्वयबोधस्थले तदभावेनापत्त्यसम्भवात्। तात्पर्यविषयत्व-रूपप्रकृतत्वेन बोधविशेषणाच्च। बोधद्वयं जायतामिति तात्पर्यसत्त्वेन जनितान्वय-द्वितीयबोधे निराकाङ्क्षत्वं "स्वसमाने"त्युक्तेश्च न जनितावान्तरबोधस्य महा-वाक्यार्थबोधे तत्त्वम्।

अत एव "अयमेति पुत्रो राज्ञः पुरुषोपसार्य्यताम्"
इत्यादौ राज्ञः पुरुषेण सहान्वयबोधजनने सर्वदा निराकाङ्क्षत्वम् ।

नव्यास्तु—यत्पदस्य यत्पदव्यतिरेकप्रयुक्ततात्पर्य्यविषयीभूतान्वयाननुभावकत्वं तेन सह तस्याकाङ्क्षा । 'अयमेति पुत्रो राज्ञः पुरुष' इति वाक्ये राजपुरुषसंसर्गप्रतीतीच्छयोच्चरिते राज्ञ इत्यस्य पुरुषेण साकाङ्क्षत्ववारणायान्वयबोधे तात्पर्यविषयत्वं विशेषणं पुरुषेणान्वये तात्पर्यसत्वे तु साकाङ्क्षत्वमपि । एवञ्च न तात्पर्य्यज्ञानस्य शाब्दबोधे पृथक् हेतुता । अगृहीतार्थतात्पर्य्यके निरुक्ताऽऽकाङ्क्षाज्ञानाभावादेवान्वयबोधापत्त्यभावादित्याहुः ।

एवञ्च शाब्दबोधात् प्रागवश्यक्लृप्ततत्तत्पदसमभिव्याहाररूपाकाङ्क्षयैवान्वयरूपवाक्यार्थभानोपपत्तौ वाक्यस्य तत्र शक्तिर्निष्प्रमाणेति नैयायिका वदन्ति ।

मीमांसकादयस्तु-वाक्यस्य तत्र लक्षणैव, न तु तत्र शक्तिरिति तन्मतं खण्डयितुं स्फोटनिरूपणमित्याशयेन मूलमवतारयति—*सिद्धान्तेति* । यद्वा ननूक्तं व्याकरणस्य प्रकृतिप्रत्ययेषु तत्तदर्थबोधकत्वशक्तिप्रतिपादकत्वमनुपपन्नम् । प्रकृतिप्रत्ययानां क्रमिकाशुविनाशिनानावर्णाऽऽत्मकतयाऽस्थिरत्वेन—अप्रत्यक्षतया तत्र शक्तिग्रहस्य कथमप्यसम्भवेन तत्प्रतिपादकस्यास्य शास्त्रस्याप्रामाण्यप्रसङ्ग इत्याशङ्कानिराकरणाय स्फोटनिरूपणमित्याशयेन मूलमवतारयन्नाह—

*सिद्धान्तनिष्कर्षमिति* । तथाचोपोद्घातसङ्गतिरत्रेत्यवधेयम् । तत्तन्मतनिराकरणं तु मूल एव सुव्यक्तम् । अष्टानां स्फोटानामाकरसिद्धतया तद्व्यावृत्त्यालाभ इत्याशयेनाह—*अनर्थकमिति* । निष्प्रयोजनकमित्यर्थः । *दुरर्थकमिति* । तदुपादाने वाक्यातिरिक्तानामसंग्रहापत्तेरिति भावः । समाधत्ते—*तथापीति* । अन्येषां वर्णादिपञ्चस्फोटानामित्यर्थः ।

तत्र स्फोटत्वं स्फुटत्यभिव्यक्तीभवत्यर्थोऽस्मादिति व्युत्पत्त्यार्थप्रकाशकत्वं, प्रकाशश्च ज्ञानम् । तथाचार्थनिष्ठविषयताप्रयोजकशक्तिमत्त्वं पर्य्यवस्यति । वर्णस्यैव तत्त्वाभ्युपगमे वर्णस्फोटः । पदादीनां तत्त्वाभ्युपगमे तु पदादिस्फोट इति व्यवहारः । *अवास्तवत्वेति* । वर्णस्फोटादीनामाकाङ्क्षानिवर्त्तकत्वाभावादवास्तवत्वं शास्त्रीयप्रक्रियानिर्वाहाय परं सिद्धान्ते तत्स्वीकारः । पारमार्थिकत्वं तु वाक्यस्फोटस्यैवेति भावः । *विप्रतिपत्तिरिति* । संशयीययावत्कोट्युपस्थापकं वाक्यमित्यर्थः । न तु संशयजनकं वाक्यमेव सा "परोक्षं ज्ञानं निश्चयात्मकमेवे"ति प्राचीनप्रवादेन संशयजनकत्वस्य वाक्ये असम्भवात् ।

वस्तुतस्तु संशयजनकवाक्यत्वमेव विप्रतिपत्तित्वम् । तत्तदभावसहचरितधर्मवद्धर्मिज्ञानस्यैव "समानाऽनेके"तिसूत्रेण विप्रतिपत्तेरप्याहत्यैव संशयहेतुत्वोत्कीर्त्तनादित्यवधेयम् । मूले असाधुशब्दान्तर्गतवर्णवाचकताविचारस्याप्रस्तुतत्वं मत्वाह—*साध्विति* । अत्र साध्वन्तर्गतवर्णत्वसामानाधिकरण्येन वाचकत्वादिसाधने तद्वाक्यस्य विप्रतिपत्तित्वाऽसम्भवः । नैयायिकैरपि [illegible] केषाञ्चिद् वाचकत्वाभ्युपगमात् । तादृश-

वर्णत्वावच्छेदेन वाचकत्वादिसाधने तु वैयाकरणानां परेषां विकरणेषु बाधश्चेत्याह— *तत्स्मृता इति* ।

ननु यथाश्रुते साधुशब्दान्तर्गता वाचकास्तदन्तर्गतवर्णस्मारिता नेत्यर्थलाभादेतद्वाक्यस्य विभिन्नधर्मिबोधकत्वाद्विप्रतिपत्तित्वस्यैवासम्भवः । एकधर्मिकविरुद्धकोटिकसंशयजनकस्यैव तत्त्वादतो व्याचष्टे सारे–*साधुशब्दान्तर्गता इति* । साध्वन्तर्गतवर्णस्मारिता इत्यर्थः । यथाश्रुते साध्वनन्तर्गत विपरीतानां पूर्वोक्तवर्णानां वाचकत्वस्य केनाप्यनभ्युपगमाद् बाधसिद्धसाधनयोरापत्तेः । तत्स्मारितत्वं च शास्त्रबोधितादेशादेशिभावनिमित्तनिमित्तिभावान्यतरसम्बन्धेन । तेन अस्यापत्यं 'इः' 'इयान्' इत्यादेर्ना संग्रहः ।

*विधिकोटिरिति* । समुच्चयव्यावृत्ता कोटिताख्या विषयता संशये आवश्यकीति सूचनायोक्तं—*कोटिरिति* । *अन्येषाम्*—नैयायिकानाम् । तैः 'लः कर्मणि' (पा० सू० ३।४।६९) "स्वौजसमौट्" (पा० सू० ४।१।२) इत्यादिविहितप्रत्ययानामेव वाचकत्वम्, तिब्विसर्गादीनां स्वादेशिस्मृतिद्वारा बोधकत्वमेव लिपिवदित्यभ्युपगमात् । तथाच साध्वन्तर्गतवर्णत्वावच्छेदेन मतभेदेनोभयसाधनान्नोक्तदोष इति भावः । यथाश्रुतमूलोक्तविप्रतिपत्तिमनुसृत्याह—*साधुशब्द इत्यादि* । ननु साध्वन्तर्गतवर्णानां बोधकत्वसाधनेऽपि न वाचकत्वसिद्धिरत आह–*बोधका वाचका इति* । *तस्यैवेति* । बोधकत्वस्यैवेत्यर्थः । *प्रागिति* । शक्तिनिरूपणावसर इत्यर्थः । बोधकत्वसिद्धौ च तदन्यथानुपपत्त्या पदार्थान्तररूपा शक्तिरपि सिद्धयेत्, तदभावे तु साऽपि नेति वाचकत्वसामान्याभावसिद्धिरिति भावः ॥ ६१ ॥

अर्थ—सिद्धान्तभूत निष्कर्ष लिखते हैं—अति निष्कर्षे=प्रमाणों से अवधारित संक्षिप्त विषय निष्कर्ष है । अतिशयित निष्कर्ष अति निष्कर्ष । इससे वाक्यस्फोट अवस्थित होता है यह मत है । साधु शब्द में अन्तर्गत अर्थात् श्रूयमाण प्रकृति और प्रत्यय बोधक हैं । साधु शब्द में अन्तर्भूत शब्दों से स्मृत स्थानी बोधक नहीं है ।

यद्यपि वर्ण [1]स्फोट, पदस्फोट वाक्य स्फोट अखण्ड पद स्फोट अखण्ड वाक्य स्फोट वर्ण जाति स्फोट पद जाति स्फोट तथा वाक्य जाति स्फोट के भेद से ये आठ प्रकार के स्फोट वैयाकरण सिद्धान्त से सिद्ध हैं । इसलिये कारिका में वाक्य शब्द का उपादान निरर्थक तथा अन्य स्फोट का असंग्राहक होने से दुष्ट फल वाला है । तथापि वाक्य स्फोट से अतिरिक्त वर्ण पदादि स्फोटों की अवास्तविकता प्रतिपादन के लिए वाक्यपद का उपादान है । "अति निष्कर्षे" इसके द्वारा यही ध्वनित होता है ।

मतस्थिति=वैयाकरण तथा महाभाष्यकारादिकों की । उनमें क्रम से सभी स्फोटों का निरूपण करते हुए पहले वर्ण स्फोट का निरूपण करते हैं । साधु शब्द इति । साधु

१. स्फुटति प्रकाशते अर्थोऽस्मात् इति स्फोटः अपादान में घञ् प्रत्यय है । अर्थबोधक शब्द को स्फोट कहते हैं । पदस्फोट वर्ण स्फोट आदि से तात्पर्य वर्ण से अभिव्यङ्ग्य पद से अभिव्यङ्ग्य स्फोट में है ।

कारणमात्रे वृत्तित्वेन पदवृत्तेर्निवेशः किं वा वाक्यवृत्ते,, किं वा वृत्तिसामान्यस्य ?। न तावदाद्यः। पदवृत्तिज्ञानजन्योपस्थितेः शाब्दहेतुत्वस्य सर्वैरेवाभ्युपगमात्। न द्वितीयः। वाक्यवृत्तेस्ततः प्रागसिद्धेः। अत एव न तृतीयः। किञ्च तव मते वाक्यशक्तिजन्योपस्थितेः शाब्दबोधात्मकत्वेन तस्मिंस्तद्विषयत्वासम्भवादपि नोक्तरीतिः साधीयसी। अपि च वाक्यवृत्तिज्ञानस्य शाब्दसामान्येन स्वातन्त्र्येण हेतुत्वं, यदा कदाचिद्विवरणादिना घटादिपदशक्तिज्ञानजन्यपदार्थोपस्थितिदशायां घटमानयेति वाक्यशक्तिमविदुष आकाङ्क्षादिवशाच्छाब्दबोधोदयेन व्यभिचारात्।

यद्यपि समभिव्याहाररूपाकाङ्क्षैव वाक्यमिति। तदपि न। तथा सति घटीयाकर्मतेत्यादिबोधे घटमानयेति वाक्यं साकाङ्क्षं, निराकाङ्क्षं च घटः कर्मत्वमिति सर्वसिद्धव्यवहारानुपपत्तिः। पदयोः समभिव्याहार इतिवत् पदयोर्वाक्यमिति व्यवहारप्रसङ्गश्चेति समभिव्याहृतपदानामेव वाक्यत्वमुपगन्तव्यम्। तथाच—समभिव्याहारस्य शाब्दबोधहेतुत्वेऽपि वाक्यस्य तत्त्वं दुरुपपादमेवेति क्व वाक्यशक्तिसिद्धिः। समभिव्याहारनिष्ठबोधजनकत्वग्रहवतो बोधात्तज्ज्ञानं हेतुरित्यपि रिक्तं वचः। अन्वयव्यतिरेकाभ्यां समभिव्याहारज्ञानस्यैव शाब्दधीहेतुत्वेन तन्निष्ठबोधजनकत्वज्ञानस्य हेतुताया एवाभावात्। न च तदपि सम्भवति। शाब्दबोधात् प्राक् संसर्गस्यैवानुपस्थितेः। सामान्यतस्तदुपस्थितावपि विशेषरूपेण भानाऽर्थे तात्पर्य्यज्ञानाद्यपेक्षणे च मूलशैथिल्यात् वाक्यशक्तेरेवासिद्ध्यापत्तिः वक्ष्यमाणरीत्या शाब्दबोधात् प्राक् तदुपस्थित्यभ्युपगमे वाक्यवृत्तिज्ञानजन्योपस्थित्यनन्तरं शाब्दबोधाभ्युपगमे वा शाब्दप्रामाण्यभङ्गापत्तिः। अनधिगतार्थग्रहकारणस्यैव प्रमाणत्वात्। अत एव सूत्रकृता "कृत्तद्धितसमासाश्च" (पा० सू० १।२।४६) इत्यत्र समासग्रहणं कृतम् वाक्यशक्तौ तु तद्वैयर्थ्यं स्पष्टमेव। "सामयिकः शब्दार्थप्रत्ययः" इति कणादोक्तेर्वाक्यशक्तिग्राहकानुशासनादेरभावेन तद्ग्रहाऽसम्भवाच्चेति वाक्यस्फोट आपातरमणीय एवेति पूर्वोक्तशक्तिग्रहप्रकारस्य शैथिल्यं मनसि निधाय तस्मिन् प्रकारान्तरं वक्तुमग्रिमग्रन्थ इत्याशयेनाह—*नन्विति*॥ *अपूर्वत्वात्*—शाब्दबोधात् प्रागनुपस्थितत्वात्।

ननु शाब्दबोधात् पूर्वं पदे प्रत्यक्षाद्युपस्थितपदार्थनिरूपितशक्तिग्रहः सुलभ एवेति, पदे सममिति मूलमनुपपन्नमत आशयं प्रकाशयति—*पद एवेति*। पदानामेवान्वितपदार्थे शक्तिरन्वयश्च सामान्यरूपेण ज्ञानम्। अत एव घटादिपदादन्वितघटाद्युपस्थितौ नियमेन तत्प्रतियोग्याकाङ्क्षा भवति—किमन्वितो घटः किमन्वितं कर्मत्वमित्याद्याकारा। सामान्यधर्मप्रकारकज्ञानस्य विशेषधर्मप्रकारकजिज्ञासाजनकत्वात्। विशेषरूपेण भाने त्वमादिपदसमभिव्याहारो नियामकोऽत एव तस्य शाब्दे भानम् पदवृत्तिविषयत्वात्। अशक्यस्यापि भानेऽतिप्रसङ्गात्। न चैवं घटमानयेत्यत्रेतरान्वितं कर्मत्वमिति रीत्यानेकधा संसर्गस्य भानापत्तिस्तत्तत्पदेभ्यस्तथाथोंपस्थितावप्याकाङ्क्षावशादेकधैव तद्भानसम्भवात्।

नचाकांक्षायास्तद्भाननियामकत्वावश्यकत्वे तत्र वृत्तिकल्पनाऽपार्थेति वाच्यम् । अशक्यभानभियैव तदभ्युपगमात् । तथाच पदशक्त्यैव संसर्गभानोपपत्तौ तत्र न वाक्यशक्तिः । पदत्वापेक्षया वाक्यस्य गुरुत्वाच्चेति तन्मतम् । तथाचान्विताभिधानमतेऽपि पदे वाक्यार्थशक्तिग्रहासम्भवः समान इत्यर्थः ।। *ज्ञातेति* ।। पदार्थानां प्रागुपस्थित्या तत्र पदार्थशक्तिग्रहसम्भवादिति भावः । *अज्ञातैवेति* । वृत्त्यभ्युपगमस्तु शाब्दे भानापत्त्यैवेति भावः ।। पदार्थवदिति सप्तम्यन्ताद्वतिः । उपमेये सप्तमीदर्शनात् ।। *वाक्यार्थेऽपि* । *संसर्गेऽपीत्यर्थः* । इदं च बोध्यत्वं शक्तिरित्यभिप्रेत्य ।। *तद्ग्रह*–शक्तिग्रहः । लक्षणशब्दस्य चिह्नादौ प्रसिद्धेः प्रकृतोपयोग्यर्थपरतया तं व्याचष्टे—* लक्ष्यत इति* ।। मूले—*अर्थे इति* ।। निरूपितत्वं सप्तम्यर्थः । तच्छब्दार्थे शक्तिज्ञानेऽन्वेतीत्यभिप्रेत्य व्याचष्टे—*पदेऽपीत्यादि* ।। *तद्ग्रह इति* । वाक्यार्थनिरूपितशक्तिग्रह इत्यर्थः ।

अयम्भावः—घटमानयेत्यादिवृद्धव्यवहाराद्यस्य पदे पदार्थशक्तिनिर्णयस्तस्य तद्वाक्यश्रवणे पदैः पदार्थोपस्थित्यादिसमवधाने मनसा तत्संसर्गोपस्थितिर्नानुपपन्ना । परन्तु मानसस्य प्रायः संशयात्मकस्यापि सम्भवात्तन्निश्चयार्थे शब्दाऽऽदरः । तत्र शक्तिग्रहहेतुलिङ्गादेर्निर्णायकस्य सत्त्वेन संशयत्वासम्भवादिति ।

ननु शब्दनिष्ठाशक्तिनिर्णयस्यैव शाब्दबोधे हेतुतावधारणेन तस्य शाब्दबोधात् प्रागुक्तरीत्याऽसम्भवेन वाक्यशक्तेः शाब्दबोधहेतुत्वं दुर्घटमेवेत्यत आह—*वस्तुतस्त्विति* । *तद्ग्रहः* । विशिष्टवाक्यार्थशक्तिग्रहः । तथा च शक्तिग्राहकशिरोमणिना व्यवहारेण पूर्वं वाक्य एव शक्तिग्रहेण तस्यैव शाब्दबोधहेतुत्वाऽवधारणात्तादृशवृत्तेश्च स्वाश्रयविषयकत्वस्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्योभयसम्बन्धेन वैशिष्ट्यस्येदानीन्तनवाक्यज्ञानेऽप्यक्षतत्वान्न वृत्तिज्ञानस्य शाब्दबोधे हेतुतायां व्यभिचारः । मध्ये वाक्यार्थोपस्थितेरनपेक्षणाच्च नोक्तदोषावसर इति भावः ।

ननु तर्हि पदस्फोटस्य निरालम्बनतापत्तिरत आह–*आवापोद्वापाभ्यामिति* । आनयनाऽपसारणाभ्यामेकपदोपादानापरपदानुपादानाभ्यामित्यर्थः । *तद्ग्रहः* । प्रत्येकपदे प्रत्येकपदार्थशक्तिग्रहः । तथा च प्रत्येकपदशक्तिसाचिव्येनाकाङ्क्षादिवशात् पदाद्वाक्यार्थशाब्दबोधस्तदा पदस्फोटो, यदा तु तन्निरपेक्षैव सा बोधं जनयति, तदा वाक्यस्फोट इति मतद्वयं पर्य्यवस्यतीति भावः ।

केचित्तु—उपस्थिताः पदार्थास्तदुपस्थितिर्वा शाब्दबोधहेतुर्नतु पदज्ञानमपि । तद्विनापि शाब्दबोधोदयेन व्यभिचारात् । तदुक्तम् ।

पश्यतः श्वेतमारूपं ह्रेषाशब्दं च शृण्वतः ।
खुरविक्षेपशब्दं च श्वेतोऽश्वो धावतीति धीः ।। इति ।।

श्लोकवा० वाक्याधिक० ३५८

तन्न । शब्दं विना जायमानस्य घटादिचाक्षुषस्यापि शाब्दत्वापत्तेः । तत्र पश्यामि न शाब्दयामीत्यनुव्यवसायान्न शाब्दत्वं यदि, तदा प्रकृतेऽपि समम् । उक्तप्रतीतेरनुमानेनैव निर्वाहात् । तत्र शाब्दप्रत्ययस्त्वसिद्ध एवेत्यादि स्वयमूह्यम् ।। ६६ ।।

अर्थ—सुबन्त तथा तिङन्त के चयं=समूह रूप वाक्य ( व्यङ्ग्य स्फोट ) में भी तत्=वाचकत्व है। इसको "हरेऽव" इत्यादि कारिका से कहते हैं।

'हरेऽव' इसको देखकर वाक्य स्फोट का निश्चय कीजिये। अर्थे=वाक्यार्थ निरूपित, विशेष रूप से शक्तिरूप सम्बन्ध का अग्रहण यदि है तो पद में भी पदार्थ निरूपित सम्बन्ध=शक्ति का अग्रहण समान ही है। लक्षणात्—मन से पद में पदार्थ निरूपित शक्ति का तत्=ग्रहण यदि होता हो तो वाक्य में भी उसी प्रकार वाक्यार्थ निरूपित शक्ति का ग्रहण हो सकता हैं॥ ६६॥

"हरेऽव" "विष्णोऽव" इत्यादि स्थलों में पदयोः=समुदाय के स्थान में "एङः पदान्तादति" इस सूत्र से पूर्वरूप घटित एकादेश होनेपर तद्विभागः=पूर्वोत्तर पदों के विभाग का ज्ञान सुलभ नहीं है। इस प्रकार प्रत्येक पद के ज्ञान न होने पर भी समुदाय=पद समुदाय रूप वाक्य की शक्ति के ज्ञान से शाब्दबोध उत्पन्न होता है। अतः वाक्य में शक्ति कल्पना आवश्यक है। एवञ्च=वाक्यशक्ति के समान, प्रकृति और प्रत्ययों में विशिष्य= सूत्र में उपात्तरूप से ज्ञायमान न होने पर भी समुदायव्युत्पत्त्या समुदाय की वाचकता के ज्ञान से शाब्दबोध होने के कारण तत्रापि=सुबन्त तथा तिङन्तरूप पदों में भी शक्ति का स्वीकार आवश्यक है।

पद स्फोट के दृष्टान्त से वाक्य स्फोट का साधन "वस्तुतः" इसके द्वारा करते हैं। पदों से पदार्थ बोध के समान वाक्य से वाक्यार्थ का बोध होता है। अतः पद में पदार्थ निरूपित शक्ति के समान वाक्य में वाक्यार्थ निरूपित शक्ति का स्वीकार करना आवश्यक है। प्रकृति और प्रत्यय के विभाग ज्ञान स्थल में पद स्फोट अन्यत्र वाक्यस्फोट है। इस प्रकार पद स्फोट और वाक्य स्फोट [1]व्यवस्थित है। अन्यथा वाक्य शक्ति के नहीं मानने पर घटकर्मक आनयन, जनक कृति इत्यादि स्थल में घटकर्मक आनयन का जनक जो कृति तद्विषयक बोधजनक वाक्य हो इस प्रकार के वाक्य विशेष्यक बोधजनकत्वप्रकारक ज्ञान से रहित व्यक्ति को भी घटकर्मकानयनानुकूल कृति का बोध होने लगेगा। वाक्य में शक्ति नहीं मानने पर 'घटमानय'–इस वाक्य से उपस्थित पदार्थ के समान ही घटः कर्मत्वम् आनयनम् और कृतिः इससे भी पदार्थ उपस्थित होने से तात्पर्य ज्ञान के रहने पर भी शाब्द बोध नहीं होता। घट कर्मकानयनानुकूल कृति इस प्रकार के बोध में घट वाचक प्रातिपदिक के आगे कर्म वाचक विभक्ति उसके उत्तर धातु तदुत्तर आख्यात का समभिव्याहार कारण है। इस कार्य कारण भाव के जानने वालों को बोध होने से तादृश कार्यकारणभाव ज्ञान के भी हेतु होने पर वाक्य स्फोट को सिद्धि हो जाती है। घट आदि पदार्थ बोध में घटादि पद निष्ठ बोधकतादि रूप शक्ति ज्ञान कारण है। इस प्रकार कार्यकारणभाव के समान ही विशिष्ट वाक्यार्थ बोध में=वाक्यार्थ विशेष घटकर्मकानयन जनककृति इत्याकारक बोध में ( घट प्रातिपदिकोत्तर अम् विभक्ति तदुत्तर धातु तदुत्तर आख्यात ) उक्त पूर्वापरीभूत पद समुदायरूप वाक्य शक्ति ज्ञान में भी कारणत्व की कल्पना होती हैं।

पदार्थ की उपस्थिति ( स्मृति ) का जनक उत्पादक जो ज्ञान ( शब्द ज्ञान ) इसका

---

१. यद्यपि व्यवस्थित शब्द से उक्त प्रकार की व्यवस्था की प्रतीति होती है। तथापि आवश्यक वाक्य स्फोट से उपपत्ति हो जाने से पद स्फोट की कल्पना आवश्यक नहीं है।

विषय जो शब्द ( साधु असाधु सभी ) तद्वृत्ति = उसमें रहने वाला जो ज्ञानकारणत्व बोधजनकत्व यही शक्ति है। ( शब्द में बोध कारणता शक्ति ) यही कथन युक्ति युक्त है। विषयता सम्बन्ध से शाब्दबोध सामान्य में विषयता सम्बन्ध से वृत्ति ज्ञान की हेतुता लाघव से मानते हैं। इसका विशेष विवेचन वृहद् वैयाकरण भूषण में किया गया है।

"वाक्यार्थस्य अपूर्वत्वात्" इति

वाक्यार्थ शाब्द बोध से पहले अज्ञात होने से उस अर्थ निरूपित शक्ति का ग्रहण कैसे होगा। ऐसी आशङ्का कर लिखते हैं-अर्थ इति।

वाक्य का अध्याहार है। यदि वाक्य का वाक्यार्थ निरूपित सम्बन्ध ज्ञान तत् तद् विशेष रूप से नहीं हो सकता। तो पद में भी पदार्थ निरूपित सम्बन्ध का अग्रहण ( अज्ञान ) समान है। पद में अन्वित पदार्थ निरूपित शक्ति मानने वाले अन्विताभिधान वादी के मत में भी अन्वय ( सम्बन्ध ) पूर्व में अज्ञात होने से तन्निरूपित पद शक्ति का ज्ञान भी उसी प्रकार असम्भव है।

यदि पदार्थांश निरूपिता पदशक्ति ज्ञात होकर और अंशभूत अन्वय निरूपिता शक्ति अज्ञात होकर ही शाब्दबोध की उपयोगिनी है ऐसी कुब्ज शक्ति को स्वीकार करें तो मेरे मत में भी वाक्य की अन्वयांश निरूपिता शक्ति अज्ञात होकर ही उपयोगिनी होगी इस प्रकार अज्ञात शक्ति की उपयोगितावाद का स्वीकार पूर्ववाद के तुल्य है।

यदि वृद्ध के व्यवहार के देखने वाले व्यक्ति को पद से पदार्थ की उपस्थिति के समान मन से सम्बन्ध निरूपित शक्ति का ग्रहण होता है तो उसी प्रकार वाक्यार्थ संसर्ग में भी मानस शक्ति ग्रहण होगा यहाँ भी समान है। इसी को "लक्षणात्" इत्यादि से कहते हैं। तर्क किया जाय जिससे वह लक्षण है। अर्थात् मन। अपि शब्द को पद के आगे समझना चाहिए, यदि पद में भी मन से शक्ति का ग्रहण है तो वाक्य में भी वाक्य-शक्ति का ग्रहण मन से मानिये।

वस्तुतः सम्पूर्ण अर्थ निरूपित विशिष्ट वाक्य शक्ति ग्रहण विशिष्ट वाक्य में ही होता है। आवाप ( निक्षेप ) और उद्वाप ( हटाना ) से प्रत्येक पद में शक्ति का ग्रहण होता है ऐसा समझना चाहिए ॥ ६६ ॥

हिन्दी भाष्य—युक्ति की समानता होने से क्रम प्राप्त वाक्य[2] स्फोट का निरूपण किया जा रहा है।

"हरे अव" "विष्णो अव" ( हे भगवानहरि हे विष्णु अव-रक्षा करो ) इन पदद्वयों के समुदाय को "एङः पदान्तादति" इस सूत्र से [3]आनुमानिक बुद्धिविपरिणामरूप

---

१. अज्ञात शक्ति अनुपयोगिनी होने से इस मत में अरुचि प्रकाशन के लिए अभ्युपगम शब्द का प्रयोग है।

२. "सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्विता" इस अमरकोश के अनुसार सुबन्त तिङन्त के समूह को वाक्य कहते हैं। जैसे रामो गच्छति। सुबन्त समूह और तिङन्त समूह अलग रहने पर भी वाक्य होता है। "रामेण गन्तव्यम्", "भवति पचति" ये दोनों क्रमशः उसके उदाहरण हैं।

३. हरे अव, विष्णो अव, इस प्रकार की बुद्धि के प्रसङ्ग में हरेऽव, विष्णोऽव ऐसी बुद्धि करनी चाहिये ऐसा ही सर्वत्र स्थान्यादेशभाव स्थल में शब्द की अनित्यता के परिहारार्थ माना जाता है।

आदेश होने से निष्पन्न उक्त रूप में पूर्वोत्तर पदों का विभाग सम्भव नहीं है। इसलिए प्रत्येक पद के ज्ञान न होने पर भी "हरेऽव" इत्यादि स्थल में समुदाय रूप वाक्य निष्ठ शक्ति के ज्ञान से ही शाब्द बोध उत्पन्न होता हैं। अतः वाक्य में शक्ति कल्पना आवश्यक है।

वाक्य शक्ति के समान पद में भी शक्ति मानते हैं। उदाहरण स्वरूप जहाँ सूत्र के उपात्तरूप से प्रकृति प्रत्यय का ज्ञान नहीं है वहाँ प्रकृति प्रत्यय समुदाय रूप सुवन्त या तिङन्त से प्रकृत्यर्थ विशिष्ट प्रत्ययार्थ के बोध होने से सुवन्त या तिङन्त रूप पद में शक्ति मानना उचित है।

सर्वप्रथम पदस्फोट की सिद्धि किये विना पदार्थसम्बन्ध रूप वाक्यार्थ हो ही नहीं सकता। अतः वाक्य शक्ति के दृष्टान्त से पद में वाचकत्व सिद्धि अयुक्त है। इस आशय से लिखा "वस्तुतः" इत्यादि। वास्तविकता इस प्रकार है—पदों से पदार्थ बोध के समान वाक्य से वाक्यार्थ बोध होता है। अतः पदों में पदार्थ शक्ति के समान वाक्य में वाक्यार्थ शक्ति है।

जहाँ पदार्थ की उपस्थिति से पद की शक्ति का ग्रहण होता है और पूर्वोत्तर पद का विभाजन नहीं हो सकता वहाँ पदद्वय समुदाय रूप वाक्य में शक्ति है, ऐसी व्यवस्था है। वस्तुतः वाक्य शक्ति ही स्वसिद्धान्त सिद्ध होने से पद स्फोट अनावश्यक है।

इसलिए भी वाक्यस्फोट को स्वीकार करना होगा। "घटमानय" ( घट को लाओ ) यहां घट, कर्म, आनयन और कृति इन पदार्थों की उपस्थिति से जिस प्रकार घट कर्म जनकानयन की कृति इस प्रकार का बोध होता है। उसी प्रकार घटः कर्मत्वम् आनयनम् और कृतिः इस वाक्य से भी पूर्वोक्त बोध होना चाहिए।

क्योंकि पदार्थोपस्थिति दोनों स्थलों में समान है। किन्तु तात्पर्य ज्ञान रहने पर भी पदार्थों की उपस्थिति से "घटमानय" इसके समान "घटः कर्मत्वम्" इत्यादि पूर्वोक्त वाक्य से शक्तिज्ञान रहित व्यक्ति को बोध नहीं होता। अतः वाक्य शक्ति आवश्यक है। जिसके विना जो कार्य नहीं होता उस कार्य के प्रति उसकी कारणता निश्चित है।

यदि कहें कि घट कर्मक आनयन जनककृति के बोध में घट रूप प्रातिपदिक से अव्यवहित उत्तर जो अम् उससे अव्यवहित उत्तर जो धातु तदुत्तर जो तिङ् इस प्रकार समभिव्याहार के कारण होने से एतादृश कार्यकारणभाव ज्ञान को भी पूर्वोक्त बोध में हेतु मानते हैं। इस प्रकार पूर्वोक्त समभिव्याहार रूप आकाङ्क्षा ज्ञान की हेतुता से उपपत्ति हो जाने के कारण वाक्यस्फोट अनावश्यक है यदि ऐसा कहें तो वाक्य स्फोट की सिद्धि अर्थात् वाक्य में वाचकता की सिद्धि हो गई। आकाङ्क्षा निष्ठ जो बोध हेतुता है वही वाक्य की शक्ति है। केवल नाम का भेद हुआ। आप के मत में तादृश आकाङ्क्षा ज्ञान, हमारे मत में वाक्य शक्ति ज्ञान कारण मानने से संज्ञा के भेद के अतिरिक्त और कुछ नहीं है।

यदि शाब्द बोध का हेतु जो अर्थ की उपस्थिति उसका जनक ही शक्ति है इस प्रकार की शक्ति पद में है न कि वाक्य में क्योंकि वाक्यशक्ति में अर्थोपस्थिति की जनकता नहीं है तो यह ठीक नहीं है। वाक्यार्थ विशेष के शाब्दबोध में अर्थ की उपस्थिति का कारण जो साधु या असाधु शब्दों का ज्ञान, उसका विषय जो शब्द उसमें वृत्ति अर्थात् रहने वाली जो बोध की कारणता वही शक्तित्व हैं। शाब्दबोध का हेतु जो अर्थ की उपस्थिति इसके सन्निवेश का कोई फल नहीं है। अतः वाक्य ज्ञान, शाब्द बोध हेतु उप-

स्थिति जनक न होने पर भी वाक्य में शक्ति मानने में कोई आपत्ति नहीं है। वाक्य शक्ति से उपस्थिति और शाब्दबोध एक ही होता है शाब्दबोध से उपस्थिति अतिरिक्त नहीं है।

एक सम्बन्धी का ज्ञान दूसरे सम्बन्धी का स्मारक होता है। अतएव हाथी देखने पर उससे सम्बद्ध महावत का या महावत के देखने से उसके सहचर हाथी का स्मरण होता है। इसीप्रकार शब्द के ज्ञान से उसके सम्बन्धी अर्थ के स्मरण होने से उसका शाब्दबोध में भान होता है। ऐसा मानने पर शब्द समवाय सम्बन्ध से आकाश में उत्पन्न होता है अतः शब्द के श्रवण से उसके समवायी आकाश का भी स्मरण होने से शाब्द बोध में उसका भान प्राप्त होगा। इसके निराकरण के लिए वृत्ति ( शक्ति लक्षणान्यतर ) ज्ञान जन्य उपस्थिति के विषय का ही शाब्द बोध में भान का नियम मानते हैं। घटादि पद से शक्तिद्वारा घटत्व तथा घट की ही उपस्थिति होने से आकाश का भान नहीं होता। इसी प्रकार संसर्ग का वाक्य से शाब्द बोध में भान होने के लिए वाक्यार्थ में वाक्यशक्ति आवश्यक है। अन्यथा आकाशादि के समान उसका बोध नहीं होगा।

विषयता सम्बन्ध से विषय की उपस्थिति = स्मृतिज्ञान विषय में रहेगी और शाब्द बोध भी विषयता सम्बन्ध से विषय में है। अतः कार्य और कारण एक स्थान ( विषय ) में ही है। समानाधिकरण का ही कार्यकारणभाव होता है। इस कार्यकारणभाव में विषय का तत्तत् नाम से निर्देश नहीं किया जाता। क्योंकि घटपदार्थ में उपस्थिति रहे और पट में शाब्दबोध हो ऐसा नहीं हो सकता क्यों कि व्यधिकरण में कार्यकारणभाव नहीं होता। विषयता सम्बन्ध से शाब्दबोध के प्रति विषयता सम्बन्ध से उपस्थिति कारण है। उपस्थिति विषयता सम्बन्ध से घट की है तो विषयता सम्बन्ध से शाब्द बोध घट का ही होगा। इस प्रकार के कार्य कारण भाव में विषय का नामतः निर्देश न होने से लाघव है। इस मत में तत्पुरुषीय का निवेश करना होगा। चैत्र की उपस्थिति से मैत्र को शाब्द बोध न हो जाय अतः तत्पुरुषीय शाब्द बोध के प्रति तत्पुरुषीय उपस्थिति को कारण मानना होगा। आत्मनिष्ठ प्रत्यासत्ति से कार्यकारण भाव मानने पर समवाय से उपस्थिति और शाब्दबोध एक आत्मा में ही होने पर कार्य कारण भाव हो सकता है भिन्न अधिकरण में नहीं। अतः तत्पुरुषीय प्रवेश इस पक्ष में नहीं करना होगा। किन्तु विषय का नाम से निर्देश[1] करना होगा।

अन्यथा अन्य विषय की उपस्थिति से अन्य विषय का शाब्द बोध की आपत्ति हो जायगी। तत्पुरुष की अपेक्षा विषय अधिक है। अतः तत्पुरुषीय प्रवेश की अपेक्षा विषय प्रवेश में गौरव होने से विषयनिष्ठ प्रत्यासत्ति से कार्यकारणभाव मानने में लाघव होने से इसी का यहाँ ग्रहण किया गया।

शङ्का—प्रकारतया विशेष्यतया वा भासमान पदार्थों के लिए वृत्ति जन्य उपस्थिति आवश्यक है। वाक्य से उत्पन्न शाब्द बोध में संसर्ग का प्रकारता से या विशेष्यता से भान नहीं होने से इसकी उपस्थिति वृत्तिज्ञान से अपेक्षित नहीं है।

समाधान—शाब्दबोध में भासमान पदार्थमात्र के लिए वृत्तिज्ञानजन्य उपस्थिति आवश्यक है।

---

१. तत्प्रकारक तद्विशेष्यक शाब्दबोध के प्रति तत्पदनिष्ट वृत्तिज्ञानाधीन तत्प्रकारक तद्विशेष्यक उपस्थिति कारण है।

विषयरूप विषयता के होने से विषयत्रैविध्य से विषयता की त्रिविधिता मानी जाती है। ऐसी दशा में संसर्गता रूप विषयता के भान में वृत्ति ज्ञान जन्य उपस्थिति कारण नहीं मानने पर वाक्यार्थ निरूपित शक्ति, वाक्य में सिद्ध नहीं होती है। ऐसा नैयायिकों का विश्वास है।

शङ्का—पद शक्ति से अभास्य और शाब्द-बोध के बाद ही भासित होने वाला जो सम्बन्ध है उसका वाक्यार्थ में वाक्य शक्ति द्वारा ग्रहण किस प्रकार होगा ? ज्ञात अर्थ में ही तन्निरूपित शक्ति का ज्ञान हो सकता है।

समाधान—वृत्ति ज्ञान से उपस्थित पदार्थों का तात्पर्य विषय सम्बन्ध से विशिष्ट पदार्थ का ज्ञान शाब्द-बोध है। घट पद से घट व्यक्ति तथा घटत्व जाति एवं विभक्ति से कर्मत्व, आनय इस पद से आनयनानुकूल कृति ( न्याय मत में ) इनकी उपस्थिति शक्ति ज्ञान से होती है। इस प्रकार घटनिष्ठ कर्मता निरूपक आनयनानुकूल कृति तदाश्रय देवदत्तादि इस बोध में निष्ठत्व निरूपकत्वादि सम्बन्ध का भान, वृत्ति ज्ञान जन्य न होने से शाब्दबोध में भान नहीं होगा।

अतः सम्बन्ध में भी शक्ति प्रभाकर मतानुयायी मीमांसकों ने मानी है। उसका स्वरूप इस प्रकार है—

अन्विते घटे घटपदम् शक्तम् अन्विते आनयने आनय पदम् शक्तम्।

यहाँ अन्वय पद सम्बन्ध सामान्य का बोधक मानने पर कहीं पदार्थ आनयन और कहीं दर्शन और कहीं गमन आदि अनेक प्रकार के होने से तथा सम्बन्ध भी कहीं निरूपकता कहीं स्वरूप कहीं आश्रयता आदि अनेक प्रकार के होने से अनन्त शक्ति हो जायगी। अतः सम्बन्ध सामान्य से अन्वित घट में घटपद की शक्ति मानते हैं। परस्पर तात्पर्य और आकांक्षा बल से सम्बन्ध विशेष का भान होता है। जिस प्रकार घटत्व और घट का समवायरूप सम्बन्धविशेष आकांक्षा से प्रतीत होता है उसी प्रकार वाक्यार्थ निरूपित वाक्यशक्ति, सम्बन्ध सामान्य की बोधिका है। विशेष सम्बन्ध की आकांक्षा बल से प्रतीति हो जायगी इस प्रकार दोनों पक्षों में समानता है। अनेक पदार्थों के सम्बन्ध में शक्ति न मानने पर शक्ति ज्ञान से अनुपस्थित सम्बन्ध सामान्य का भान नहीं होगा। यह वैयाकरणों का आशय है।

अन्वय निरूपिता पद शक्ति अज्ञात होकर तथा पदार्थांशनिरूपिता शक्ति ज्ञात होकर शाब्द बोध में जिस प्रकार उपयुक्त होती है उसी प्रकार वाक्य शक्ति भी अज्ञात होकर उपयोगिनी हो सकती है। वादाभ्युगम इस शब्द से उक्त पक्ष में अरुचि दिखायी गई है। सत् असत् के विवेक किये विना स्वीकार अभ्युपगम है। अज्ञात शक्ति का अनुपयोग होता है। अतः ऐसी शक्ति का उपयोग निर्मूल है। कुब्ज शक्तिवाद से अभिप्राय यह है कि-विकृत अङ्ग से जिस प्रकार कार्य का सम्पादन नहीं किया जा सकता अविकृत अङ्ग से ही कार्य होता है उसी प्रकार अज्ञात से बोध में उपकार नहीं हो सकता। पदार्थवत्[1] इसमें सप्तम्यर्थ में वति है।

---

१. पदार्थवत् = पदार्थेइव इस प्रकार "तत्र तस्येव" (५।१।११६) इस सूत्र से सप्तम्यन्त से वति प्रत्यय है। "वाक्यार्थे" इसमें सप्तमी देखने से उक्त कल्पना की गई है। इस पक्ष में बोधकत्वरूप शक्ति मानी गई है। बोधकत्व शक्ति तो पद और वाक्य में रहती है। पदार्थ या वाक्यार्थ में नहीं।

कारिका में लक्षण शब्द, "लक्ष्यते तर्क्यते अनेन" इस व्युत्पत्ति से मन का बोधक है।

एक व्यक्ति ने दूसरे व्यक्ति से "घटमानय" अर्थात् घड़ा ले आओ ऐसा कहा। दूसरा व्यक्ति घट को लाया इस व्यवहार से पहले वाक्य में ही शक्ति का ग्रहण होता है। इसके बाद "पटमानय" "घटमपसारय" इत्यादि व्यवहार से किसी पद के प्रक्षेप किसी के निक्षेप रूप आवापोद्वाप से पद में शक्ति का ग्रहण होता है। यहाँ पदार्थ निरूपित शक्ति से पदार्थोपस्थिति के अनन्तर मन से सम्बन्ध विशेष का बोध होता है उसी प्रकार वाक्यार्थ शक्ति का ग्रहण भी मन से हो जायगा। अतः समानता ही समानता है।

वस्तुतः व्यवहार से शक्ति का ग्रहण वाक्य में ही सर्वप्रथम होता है। प्रवृत्ति या निवृत्ति वाक्य से ही होती है। केवल "गौरश्वः शकुनिः" इस प्रकार के पदों के समूह से नहीं। अतः प्रवर्तक या निवर्त्तक वाक्य का ही व्यवहार होने से वाक्य शक्ति स्वीकार आवश्यक है। इसके बाद आवापोद्वाप से पद में शक्ति ग्रहण होता है। पूर्व में पदार्थ में शक्ति ग्रह तदनन्तर तत्प्रयुक्त पदार्थोपस्थिति होती है। उसके अनन्तर मन से उपस्थित सम्बन्ध में शक्तिग्रह के समान वाक्यार्थ निरूपित शक्तिग्रह वाक्य में होता है। इस प्रकार पूर्व में प्रतिपादन करने के बाद दूसरे प्रकार से "वस्तुतः" इत्यादि सन्दर्भ लिखा है। व्यवहार की सहायता से मन के द्वारा वाक्यार्थ में शक्ति का ग्रहण होता है। तदनन्तर आवापोद्वाप से तत्तत् पदों का तत्तदर्थ में शक्ति का ग्रहण होता है। यह भाव है ॥ ६६ ॥

इयमेव मीमांसकानां वेदान्तैकदेशिनां च गतिरित्याह—

सर्वत्रैव हि वाक्यार्थो लक्ष्य एवेति ये विदुः ॥
भाट्टास्तेऽपीत्थमेवाहुर्लक्षणाया ग्रहे गतिम् ॥ ६७ ॥

*भाट्टा इति* । तदनुयायिनां वाचस्पतिकल्पतरुप्रभृतीनामुपलक्षणम् ।

ननूक्तपक्षद्वयमनुपपन्नम्, उत्पत्तेरभिव्यक्तेर्वैकदाऽसम्भवेन उत्पन्नानामभिव्यक्तानां वर्णसमूहरूपपदज्ञानासम्भवात्; तथा च सुतरां तत्समूहरूपवाक्यज्ञानासम्भव इति चेद्? न।

उत्तरवर्णप्रत्यक्षसमये तस्मिन्नव्यवहितोत्तरत्वसम्बन्धेनोपस्थितपूर्ववर्णवत्त्वं, तथा तदुत्तरप्रत्यक्षकाले उपस्थितविशिष्टतद्वर्णवत्त्वं, तस्मिन् सुग्रहमिति तादृशानुपूर्वीघटितपदत्वस्येव वाक्यत्वस्यापि सुग्रहत्वात् ॥६७॥

इति पदवाक्यस्फोटनिर्णयः।



*उपलक्षणमिति* । त्वन्मते, 'गभीरायां नद्यां घोष' इत्यादौ प्रत्येकपदशक्त्या स्वशक्यसम्बन्धरूपलक्षणया वोक्तदिशाऽभीप्सितार्थान्वयबोधाऽसम्भवात्, स्वबोध्यसम्बन्धस्य लक्षणत्वाभ्युपगमेन वाक्यार्थमात्रे वाक्यलक्षणाङ्गीकारादिति भावः।

*पक्षद्वयमिति* । पदवाक्यभेदेन व्यवस्थितं स्फोटद्वयमित्यर्थः । अनुपपत्तिमेवाह—

*उत्पन्नानामिति* । वर्णानित्यतावादिमते वर्णानां योग्यविभुविशेषगुणत्वेन स्वोत्तरोत्पन्नगुणनाश्यत्वादेकदाऽवस्थानासम्भवः । तन्नित्यतावादिमते त्वाह—*अभिव्यक्तानामिति* । वर्णा नित्याः, किन्तु तदभिव्यक्तिरेवानित्या । वर्णोत्पादकत्वेनान्याभिमतानामेव कण्ठाद्यभिघातादीनां तदभिव्यञ्जकत्वाभ्युपगमात् । तथाचाभिव्यक्तेरपि योग्यविभुविशेषगुणतया स्वोत्तरोत्पन्नगुणनाश्यत्वाविशेषात् क्षणिकत्वात्तद्विशिष्टवर्णानामपि युगपदवस्थानासम्भव एवेत्यर्थः ।

नन्वस्तु वर्णानां युगपदनवस्थानं, किमस्माकमनिष्टमत आह–*वर्णसमूहेति* । वाक्यस्फोटकल्पेऽपि तदाह—*तथा चेति* । *ज्ञानासम्भव इतीति* । आशुविनाशिनां क्रमिकाणां मेलकाऽसम्भवादन्तिमवर्णोत्पत्तिकाले तदभिव्यक्तिकाले वा पूर्वपूर्ववर्णानां तावदभिव्यक्तानां वाऽवस्थानासम्भवेन तत्समूहरूपपदस्य वाक्यस्य वा तादात्म्येन प्रत्यक्षकारणस्याभावात् प्रत्यक्षस्यैवाऽसम्भवेन तत्रोक्तशक्तिग्रहस्य गगनकुसुमायमानत्वादित्याखण्डलार्थः ।

अभिव्यक्तिपक्षमादाय समाधत्ते—*उत्तरवर्णप्रत्यक्षेति* । *अव्यवहितोत्तरेति* । एतन्नये वर्णानां नित्यत्वेन सर्वेषामेव वर्णानामव्यवधानेन स्वाधिकरणक्षणोत्तरकालवृत्तित्वादव्यवस्थापत्त्या स्वस्वाभिव्यक्तिगतमेवाव्यवहितोत्तरत्वं वाच्यम् । तदारोपादेव वर्णेष्वव्यवहितोत्तरत्वव्यवहारः । अत एव तत्रोपस्थितेर्विशेषणतया निवेशः । तच्चाव्यवहितत्वे सत्युत्तरत्वम् । अव्यवहितत्वं च—स्वध्वंसानधिकरणक्षण' सम्बन्धित्वम् । तेन 'घटित घट' इत्यादौ नातिप्रसङ्गः । उत्तरत्वं तु स्वाऽधिकरणक्षणध्वंसाधिकरणसमयोत्पत्तिकत्वम् । तेन, 'पिव, मधुशीघ्रम्' इत्यादौ न "शीघ्रु" भागस्य पदत्वम् : अन्यनिरूपिताव्यवधानादेरन्यसम्बन्धत्वाभावेन स्वत्वस्य परिचायकतया प्रवेशान्नाननुगमशङ्काऽपि । उत्तरोत्तरवर्णोपस्थितेः पूर्वपूर्ववर्णोपस्थितिध्वंसानधिकरणसमयसम्बन्धित्वात्तदधिकरणलक्षणध्वंसाधिकरणत्वाच्च निरुक्तसम्बन्धेन तद्वत्त्वमविकलम् । इत्थञ्च पूर्वपूर्ववर्णांशेऽलौकिकस्य चरमवर्णांशे लौकिकप्रत्यक्षस्य सम्भवात्तत्राऽर्थे बोधकत्वशक्तेः सुग्रहत्वादुक्तपदवाक्यस्फोटसिद्धिर्निराबाधेति भावः ॥ ६७ ॥

इति भूषणसारदर्पणे पदवाक्यस्फोटनिरूपणम् ॥ १४ ॥



अर्थ—मीमांसक तथा कुछ वेदान्तियों की यही = स्फोट स्वीकार ही गति = उपाय है। वाक्य जन्य बोध स्थल में वाक्यार्थ अर्थात् संसर्ग लक्षणा बोध्य ही है। ऐसा जो लोग मानते हैं वे 'भाट्ट' अर्थात् कुमारिल भट्ट के मतानुयायी भी वाक्य लक्षणा ज्ञान के लिए इत्थमेव—स्फोट की रीति का ही अवलम्बन करते हैं ॥ ६७ ॥

भाट्ट यह पद, सर्वतन्त्र स्वतन्त्र वाचस्पति मिश्र एवं कल्पतरु प्रभृति का भी उपलक्षण है।

शङ्का—पद स्फोट तथा वाक्य स्फोट युक्ति युक्त नहीं है। एक काल में वर्णों की

  

उत्पत्ति और अभिव्यक्ति दोनों में एक का भी सम्भव नहीं होने से उत्पन्न या अभिव्यक्त वर्णों के समूहात्मक पद का ज्ञान नहीं होगा। इस प्रकार वर्णसमूह पद तथा पद-समूहात्मक वाक्य का ज्ञान असम्भव है।

समाधान—अग्रिम वर्ण के प्रत्यक्ष के समय उसमें पूर्वोच्चारितवर्णवत्त्व का अव्यवहितोत्तर सम्बन्ध से बोध होगा। इसी प्रकार उससे अग्रिम वर्ण के प्रत्यक्ष काल में उपस्थित प्रथमवर्ण विशिष्ट द्वितीय वर्णवत्त्व का तृतीयवर्ण में ज्ञान होना सुलभ है।

तादृश आनुपूर्वीघटित विशिष्टपदत्व के समान वाक्यत्व का ज्ञान भी सुलभ है ॥६७॥

इति "पदवाक्य-स्फोट-निर्णयः"

हिन्दी भाष्य—"गभीरायां नद्यां घोषः" गहरी नदी में घोष=अहिरों का बयान यह अर्थ उपपन्न नहीं होता। अतः तीर अर्थ का बोध कराया जाता है। नदी का तात्पर्य नदी के तीर से है। परन्तु तीर का शक्ति द्वारा बोध नहीं होता इसलिए शक्ति गम्य तीरार्थ नहीं हो सकता। दूसरा उपाय शक्यसम्बन्धरूप लक्षणा होने पर गभीर तीर का नदी के साथ अन्वय नहीं होगा। गम्भीर तीर नदी नहीं है। नदी में गभीरत्व की प्रतीति भी नहीं होगी। तीर गम्भीर होता भी नहीं है। इसलिये भी उसमें लक्षणा का सम्भव नहीं है यदि नदी पद की तीर में लक्षणा करें तो गम्भीर पदार्थ का प्रकृत्यर्थ के एक देश होने से नदी में अन्वय न होकर तीर में अन्वय होगा। वहाँ गम्भीरत्व का बाध है। गहराई (गभीरता) जल में होती है तट में नहीं यह प्रसिद्ध है। गभीरा और नदी इन दोनों पदों में से किसी एक को गभीर से अभिन्न जो नदी उसका तीर इसमें लक्षणा और दूसरे पद को उसमें तात्पर्य ग्राहक मान लेने से दोषोद्धार हो सकता है। पर किसकी लक्षणा और कौन तात्पर्य ग्राहक है। इसमें एक का निश्चायक प्रमाण न होने से उक्त कथन असङ्गत है।

गभीर से अभिन्न नदी की तीर में लक्षणा नहीं हो सकती क्योंकि एक-एक पदों में शक्ति होने से तद्बोध्य शक्य होने पर गभीरा भिन्न नदी इस अर्थ में पदद्वय की शक्ति न होने से तादृश अर्थ शक्यरूप नहीं होगा। उसके लिए लक्षणा के उक्तस्वरूप को त्यागकर स्वबोध्यसम्बन्धरूप उसका स्वरूप मानकर गभीर से अभिन्न नदी का बोधक "गभीरायां नद्यां" इस विशिष्ट की तीर में लक्षणा होती है। विशिष्ट पद की शक्ति न होने से उसका शक्य अर्थ नहीं होता किन्तु विशिष्ट पद का बोध्य तो होता ही है। अतः स्व पद से "गभीरायां नद्याम्" इन दोनों पदों का ग्रहण है। उनसे बोध्य गम्भीर रूप नदी इस अर्थ के साथ संयोग है तीर का इसमें लक्षणा है। इसी प्रकार वाक्यार्थ संसर्ग में वाक्य की लक्षणा इनके मत में भी मानी गई है।

शङ्का—वर्णों की अनित्यता पक्ष में वर्णों के शीघ्र विनाशी होने से क्रम से उत्पन्न वर्णों का मेल न होने के कारण अनेकवर्णसमूहात्मक पद तथा वाक्य की अनुपपत्ति से पदस्फोट एवं पदसमूहरूप वाक्यस्फोट की उपपत्ति नहीं होगी। जिस मत में वर्ण नित्य हैं उस पक्ष में वर्णों की अभिव्यक्ति मानी जाती है। वह भी शीघ्र ही विनाशी होने से अनित्य है। अतः अभिव्यक्त वर्णों का समूह भी नहीं बन सकता। इस प्रकार पदस्फोट और पदसमूहरूप वाक्य स्फोट इन दोनों की सिद्धि नहीं हो सकती।

समाधान—वर्ण नित्यता पक्ष में वर्णों के सदा वर्तमान होने से परस्पर पूर्वापरीभाव का सम्भव नहीं होने के कारण वर्णों की अभिव्यक्ति की उत्पत्तिगत अव्यवहितोत्तरत्व का वर्ण में आरोप समझना चाहिए। इस प्रकार अव्यवहितोत्तरत्व सम्बन्ध से अभिव्यक्त

पूर्ववर्णवत्त्व द्वितीय वर्ण में एवं उपस्थित पूर्ववर्ण विशिष्ट द्वितीयवर्णवत्त्व का तृतीय वर्ण में ज्ञात होना सुलभ है। इस प्रकार अन्तिम वर्ण का लौकिक और पूर्व वर्णों का अलौकिक प्रत्यक्ष होने से पद और वाक्य का प्रत्यक्ष सुलभ है। अत एव अर्थ निरूपित शक्ति का पद तथा वाक्य में ज्ञान होता है। इसलिये पद स्फोट तथा वाक्य स्फोट की सिद्धि में किसी प्रकार की बाधा नहीं है। यह भाव है।

अव्यवहितोत्तरत्व का अभिप्राय अव्यवहितत्व होता हुआ उत्तरत्व। अव्यवहितत्व = स्वध्वंसानधिकरणक्षणसम्बन्धित्वरूप है। अर्थात् प्रथम क्षण में ज्ञान उत्पन्न होता है द्वितीयक्षण में रहना तृतीय क्षण में नष्ट हो जाता है। विभु के योग्य विशेष गुण अपने से आगे उत्पन्न होने वाले गुण से नष्ट हो जाते हैं यह नियम[1] है।

अतः द्वितीय क्षण में उत्पन्न होने वाले ज्ञान से तृतीय क्षण में पूर्व ज्ञान का नाश हो जाता है। इसी प्रकार प्रथम क्षण में वर्ण उत्पन्न होगा द्वितीय क्षण में स्थित रहेगा तृतीय क्षण में नष्ट हो जायगा। प्रथम वर्ण के ध्वंस का अनधिकरण जो द्वितीय क्षण वही द्वितीय वर्ण की उत्पत्ति का क्षण है। अतः स्वध्वंसानधिकरण जो द्वितीय क्षण उसकी सम्बन्धिता द्वितीय वर्ण में होने से अव्यवहितोत्तरत्व स्पष्ट है। उत्तरत्व स्वध्वंसानधिकरणसमयोत्पत्तिकत्वरूप है, पूर्व वर्ण ध्वंस का अनधिकरण जो द्वितीय क्षण (क्योंकि द्वितीय क्षण पूर्व वर्ण की स्थिति का क्षण है) उसमें द्वितीय वर्ण की उत्पत्ति होती है। अतः ध्वंसानधिकरण समय में उत्पत्ति होने से द्वितीय वर्ण में उत्तरत्व स्फुट है।

शब्द नित्यता पक्ष में अभिव्यक्ति के अव्यवहितोत्तरत्व का वर्ण में आरोप कर अव्यवहितोत्तर का व्यवहार करना चाहिए। ग्रन्थ विस्तर के भय से अधिक नहीं लिखा गया है।

इति पदवाक्य स्फोट निरूपणम्



---

१. योग्यविभुविशेषगुणानां स्वोत्तरवर्तिगुणनाश्यत्वात्।

# अखण्डस्फोटनिर्णयः ।

इदानीमखण्डपक्षमाह—

पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च ॥
वाक्यात् पदानामत्यन्तं प्रविवेको न कश्चन ॥ ६८ ॥

पदे पचतीत्यादौ न वर्णाः, नातो वर्णसमूहः पदमिति शेषः । दृष्टान्तव्याजेनाह—*वर्णेष्विति* ॥ एकारौकारऋकारऌकारादिवर्णेष्ववयवाः प्रतीयमाना अपि यथा नेत्यर्थः : क्वचिदिवेत्येव पाठः । एवं वाक्येऽप्याह—*वाक्यादिति* ॥ पदानामपि वाक्याद्विवेको = भेदो नास्तीत्यर्थः ।

अयम्भावः—वाक्यं पदं चाखण्डमेव, न तु वर्णसमूहः । अनन्तवर्णकल्पने मानाभावात् । तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगनिष्ठं तत्तद्वर्णजनकताया व्यञ्जकताया वाऽवच्छेदकं वैजात्यमादायैव ककारो गकार इत्यादिप्रतीतिवैलक्षण्यसम्भवात् । स्पष्टं हि भामत्याम्—"तारत्वादि वायुनिष्ठं वर्णेष्वारोप्यते" इत्युक्तं देवताधिकरणे ।

नचैवं वायुसंयोग एव वाचकोऽपि किं न स्यादिति वाच्यम् । प्रत्यक्षोपलभ्यमानककारादेरेव वाचकत्वस्यानुभवसिद्धत्वात् । तथा च वाचकत्वान्यथानुपपत्त्या तदेवेदं पदं, तदेवेदं वाक्यं सोऽयं गकार इति प्रतीत्या च स्फोटोऽखण्डः सिद्धयति । एतेन गौरित्यादौ गकारौकारविसर्गादिव्यतिरेकेण स्फोटाननुभवाच्छ्रूयमाणवर्णानामेव वाचकत्वमस्त्वित्यपास्तम् । तेषां स्फोटातिरिक्तत्वाभावात् ।

यत्तु—वर्णानां प्रत्येकं वाचकत्वे प्रत्येकादर्थबोधापत्तिः । समुदायस्य तु क्रमवतामाशुतरोत्पन्नानां तथैवाभिव्यक्तानां वा ज्ञानमसम्भाव्यमेव । पूर्वपूर्ववर्णानुभवसंस्कारसहकारेणैकदा सनूहालम्बनरूपसकलज्ञानसम्भवस्तु सरोरसो राजाजरा नदींदीनादिसाधारण इत्यतिप्रसङ्ग इति स्फोट एवाखण्डो नादाभिव्यङ्ग्यो वाचक इति कैयटः । तत्तुच्छम् । पदज्ञानसम्भवस्येपपादितत्वात् : वर्णानां प्रत्येकं व्यञ्जकत्वं समुदितानां वेत्यादिविकल्पग्रासाच्च ।

अखण्डस्फोटनिरूपणेऽवसरस्य सङ्गतित्वं सूचयन्नाह—*इदानीमिति* । सखण्डस्फोटनिरूपणानन्तरमित्यर्थः । *अखण्डेति* । पदवाक्ययोरखण्डत्वं चाविद्यमानावयवकत्वम् । वर्णानामावयवाघटितत्वस्यापि सिषाधयिषितत्वादाह—*दृष्टान्तेति* । दृष्टान्तवाक्यस्येवादिघटितत्वनिवेशेन तदभावात् कथं वर्णेष्वित्यादेस्तत्त्वमित्याशङ्क्य यथाशब्दान्तर्भावेण मूलं व्याचष्टे—*यथेति* *इवेतीति* । अवयवा इवेत्यर्थः ।

तथा च यथाश्रुतस्यैव दृष्टान्तत्वं नानुपपन्नमिति । 'विचिर् पृथग्भावे' इति प्रत्युपसृष्टघनन्तभावसाधनप्रविवेकशब्दार्थः पृथग्भावो भेदे पर्य्यवस्यतीत्याशयेनाह-*भेद इति* ।

ननु पदादिप्रतीतौ तदवयवानां वर्णानामुपलभ्यमानत्वात् कथं तदसत्त्वमत आह—*अयम्भात्र इति* ॥ *अखण्डमेवेति* ॥ व्याख्यातार्थम् । एवकारव्यवच्छेद्यं स्पष्टयति-* न त्विति* ॥ *अनन्तेति* ॥ अनेकेत्यर्थः ॥ ननु 'ककारो, गकार' इति प्रतीतिरेव वर्णकल्पने मानम् । यदि च वर्णाभिव्यञ्जकत्वेनोत्पादकत्वेन वाऽभिमतवायुसंयोगविशेषाऽभिव्यक्तस्फोट एव कत्वादिना तादृशप्रतीतिविषय इति विभाव्यते, तदापि 'उत्पन्नः, ककारः नष्टः ककारः, इत्यादिप्रतीत्यनुपपत्तिः । स्फोटाऽतिरिक्तककारादीनां त्वयाऽनभ्युपगमात् । तस्य च नित्यत्वात् । व्यञ्जकनिष्ठाया उत्पत्तेस्तद्विषयत्वे सुखादीनामपि नित्यतापत्तिरत आह—*तत्तद्वर्णोत्पादकत्वेनेति* । वैजात्ये प्रमाणं दर्शयति-*वर्णजनकताया इत्यादि* । तथा च तादृशवैजात्यं समवायेन स्फोटांऽशे आदायारोप्योक्तप्रतीतिवैलक्षण्योपपत्तौ न तदनुपपत्तिरतिरिक्तककारादिवर्णसाधिका । नाप्युत्पन्नः क इत्यादिप्रतीतिस्तथा । 'सोऽयं क' इत्यभेदतत्प्रत्यभिज्ञारूपबाधकसत्त्वेन तादृशप्रतीतेर्भ्रमत्वात् । नाऽपि सुखादीनां नित्यतापत्तिः । तन्नाशकस्य स्वोत्तरवर्तियोग्यात्मविशेषगुणस्य जागरूकत्वादिति भावः ॥ *भामत्याम्* । तन्नामकवाचस्पतिग्रन्थे ॥ *आरोप्यत इतीति* ॥ एतदनुरोधेनैवादायेति पदमारोपपरतया व्याख्यातम् ॥ मतान्तरन्तु वक्ष्यते ॥

वायुसंयोगोऽपीत्यपिरेकाऽर्थे । कण्ठताल्वाद्यभिघातजवायुसंयोग एवेत्यर्थः । समवायस्यानारोपितस्य वाचकतावच्छेदकत्वे लाघवात् । तथाहि संयोगस्यैव काद्यात्मकत्वमस्त्वित्यर्थः ॥ समाधत्ते-*प्रत्यक्षेति* ॥ अमयाशयः-कादिवर्णानामुक्तसंयोगात्मकत्वेऽतीन्द्रियतापत्तिः । न च सेष्टा, अनुभवविरोधात् । नवोक्तकत्वस्यातीन्द्रियधर्मत्वेन कथं साक्षात्कारविषयत्वमिति वाच्यम् । सुरभिचन्दनमिति प्रतीतौ चक्षुरयोग्यस्यापि सौरभादेश्चाक्षुषविषयत्ववत्तस्यापि श्रोत्रग्राह्यत्वसम्भवात् । विषयबाधेन परं स्फोटांऽशे कत्वमितिप्रतीतेर्भ्रान्तित्वमिति ।

अन्ये तु—कादिप्रतीतिर्यदि स्फोटांशे कत्वादिकं समवायेनावगाहेत, तदा स्यात् तस्याऽभ्रान्तत्वसम्भावना, किन्तु स्वाश्रयाऽभिव्यङ्ग्यत्वसम्बन्धेनैव तदंशे वैजात्यम् । न च स्वाश्रयाऽभिव्यङ्ग्यत्वस्य सम्बन्धत्वे प्रमाणाभावः । कादिप्रतीतेरेव मानत्वात् । विशिष्टप्रतीतिनियामकविशेषो हि सम्बन्धः । अत एव 'लोहितः स्फटिक' इति बुद्धेः स्वाश्रयसंयोगस्य सम्बन्धतामामनन्ति । न च समवायविषयैव सा भ्रान्तिः । यथा कथञ्चित् तत्प्रतीतेः प्रमात्वोपपत्तौ भ्रमत्वकल्पनाया अन्याय्यत्वात्, अधिकमग्रे वक्ष्यत इत्याहुः ।

उपसंहरति—*तथा चेति* ॥ *वाचकत्वाऽनुपपत्त्येति* ॥ पदवाक्ययोर्वर्णसमूहरूपत्वे उक्तरीत्या वर्णानां युगपदवस्थानासम्भवेन वाचकत्वग्रहाऽनुपपत्त्येत्यर्थः। वर्णानामनित्यत्वे प्रत्यभिज्ञाऽनुपपत्तिः साऽप्यस्मन्नये नास्तीत्याह—*तदेवेद-मित्यादि* ॥ तद्व्यक्त्यभेदावगाहिपदाविशेष्यकप्रत्यभिज्ञानुपपत्त्या चेत्यर्थः ॥ उक्तरीत्या कथञ्चिच्छक्तिग्रहोपपादनेऽप्यनित्यवर्णघटितपदवाक्ययोरनित्यतया प्रत्यभिज्ञाऽनुपपत्तिर्दुष्परिहरैवेति भावः।

*एतेनेति* । प्रत्यभिज्ञानुपपत्तिसिद्धाखण्डस्फोटस्य वाचकत्वव्यवस्थापनेनेत्यर्थः। *अननुभवादिति* ॥ तथा च तत्रैव प्रमाणाभावेन वाचकत्वं दूरपराहतमिति भावः ॥ *तेषाम्*—गकारादिवर्णानाम् ॥ *स्फोटातिरिक्तेति* ॥ गत्वप्रकारकप्रतीतिविषयगादिस्फोटस्यैवास्माभिर्वाचकत्वाभ्युपगमादिति भावः। क्रमिकाणामपि स्थायिनां सहावस्थानादुक्तम्—*आशुतरेति* ॥ तृतीयक्षणवृत्तिध्वंसप्रतियोगिनामित्यर्थः। आशुतरविनाशिनां सहोत्पन्नानां समुदायसम्भवादुक्तम्—*क्रमवतामिति* ॥ *असम्भाव्यमेवेति* ॥ प्रत्यक्षे तादात्म्येन विषयस्य हेतुतया समूहरूपविषयस्यैवाऽभावादिति भावः ॥

*पूर्वपूर्वेति* ॥ ननु वर्णनित्यतावादिमते तृतीयक्षणवृत्तिध्वंसप्रतियोगिनां तेषां प्रत्यक्षस्यैवासम्भवात् कथं तज्जन्यसंस्कारस्य सहकारितासम्भवः। तथाहि—कादिप्रतीतिः ककारादौ विशेषणतया कादित्वमवगाहते। विशिष्टबुद्धौ विशेषण ज्ञानस्य हेतुतया ककाराद्युत्पत्तिर्द्वितीयक्षणे निर्विकल्पकमभ्युपेत्य तृतीयक्षणे विशिष्टज्ञानं वाच्यम्। तच्च न सम्भवति।

सम्बद्धं वर्तमानं च दृश्यते चक्षुरादिना।

इति वृद्धोक्तेः। प्रत्यक्षे विषयस्य कार्य्यसहभावेन हेतुतया तृतीयक्षणे तद्वर्णरूपविषयस्याभावात्। न च ककाराद्युत्पत्तिक्षणोत्पन्नकत्वादिस्मृत्यैव द्वितीयक्षणे एव सविकल्पसम्भव इति वाच्यम्। एवमपि प्राथमिकविशिष्टबुद्धेर्दुरुपपादत्वादितिचेद्?

अत्र वदन्ति। संसारस्यानादितया बालस्य स्तनपानप्रवृत्तिहेत्विष्टसाधनत्वस्मृतेरिव प्राथमिककत्वादिविशिष्टबुद्धिजनकस्मृतेः सम्भवान्न तदनुपपत्तिः। ककाराद्युत्पत्त्यनन्तरं ककारीयगकारवृत्तिविशिष्टबुद्धेरेव च तादृशकल्पने मानमिति।

अन्ये तु प्रतियोगितासम्बन्धेन योग्यविभुविशेषगुणनाशं प्रति स्वसामानाधिकरण्य स्वाव्यवहितपूर्ववृत्तित्वोभयसम्बन्धेन यदि सामान्यतस्तादृशविशेषगुणस्य कारणता स्यात्तदा ककारादिप्रत्यक्षाऽनुपपत्तिः प्रसज्येतापि, सैव न। अन्तिमशब्दनाशे सुषुप्तिप्राक्कालोत्पन्नज्ञानादिनाशे च व्यभिचारात्। किन्तु विजातीयगुणनाशे वैजात्यं चरमशब्दादिव्यावृत्तमिव प्राथमिकविशिष्टबुद्धिविषयवर्णव्यावृत्तमपि। नच तादृशवैजात्ये मानाभावः। नाश्यतावच्छेदककोटिप्रविष्टतयैव तत्सिद्धेः। तथाचान्तिमशब्दनाशेन द्वितीयक्षणस्थैव तादृशवर्णनाशेऽपि न तृतीयक्षणस्थतद्व्यक्तित्वेन

हेतुत्वकल्पनान्न तृतीयक्षणस्थायिनस्तस्य प्रत्यक्षानुपपत्तिरुक्तहेतुहेतुमद्भावस्वीकारेऽपीत्याहुः ।

*अतिप्रसङ्ग इति* । सरःशब्दघटकसकाराकाररेफविसर्गानुभवजन्यसंस्कारे रसबोधापत्तिरित्यर्थः । *नादाभिव्यङ्ग्य इति* । ध्वन्यन्तर्गतवर्णाभिव्यङ्ग्य इत्यर्थः । *अखण्डः*–वर्णाघटितः । उपपादितत्वादित्यस्य सखण्डस्फोटनिरूपणावसर इति शेषः । तादृशप्रत्यक्षस्यान्तिमवर्णांशे लौकिकस्यातीतवर्णांशेऽलौकिकस्य सरो रसइत्याद्यनतिप्रसक्तस्योपपादितत्वादित्यर्थः । अतिरिक्तस्य वाचकत्वे दूषणमाह–*वर्णानामिति* । *विकल्पग्रासादिति* । प्रत्येकव्यञ्जकत्वे आद्यवर्णादेव तदभिव्यक्तिसम्भवे इतरोच्चारणवैयर्थ्यापत्तेरतिप्रसङ्गाच्च । समुदायस्य तूक्तरीत्या दुरुपपादकत्वेन तद्व्यञ्जकत्वस्याप्यसम्भवदुक्तिकत्वादित्यर्थः ।

कैयटाऽनुयायिनस्तु—पूर्वपूर्ववर्णकाले चेद् द्वितीयादिवर्णोत्पत्तिः सम्भवेत् ! तदा स्यादपि कथञ्चिद्भवदुक्तरीत्या पदवाक्यप्रत्यक्षनिर्वाहः । सैव न, किन्तु यावद्गकारे वाग् वर्तते न तावदौकारे । येनैव यत्नेनैको वर्ण उच्चार्य्यते । तेनैव विच्छिन्ने वर्णे उपसंहृत्य तं यत्नमन्यमुपादाय द्वितीयः प्रवर्त्तते" इति, "परः सन्निकर्षः" ( पा० सू० १।४।१०४ ) इति सूत्रस्थभाष्यप्रामाण्यात् पूर्ववर्णविनाशानन्तरं यत्नान्तरेण द्वितीयवर्णाऽभ्युपगमात् ।

किञ्च भवन्मते वर्णप्रत्यक्षस्यैवाऽनुपपत्तिः । तेषामुच्चरितप्रध्वंसित्वेन तदुत्पत्तेरभिव्यक्तेर्वा क्षणिकत्वेनातीन्द्रियक्षणावच्छिन्नत्वात् । तथाच "इको यणचि" ( पा० सू० ६।१।७७ ) इत्यादिसूत्रोपयोगिनोऽयं पूर्वोऽयं पर इति प्रत्यक्षविषयार्थकेदंशब्दाभिलप्यमानपौर्वापर्यस्य व्यवहारस्यासम्भवः । एवं नष्टविद्यमानयोः सम्बन्धिनोरव्यवहितोत्तरत्वस्य सम्बन्धताया वक्तुमशक्यतयाऽपि पूर्वोक्तरीत्या पदप्रत्यक्षानुपपत्तिः । अपिच गृहीतशक्तिकस्यैव बोधकत्वमितिनियमेनोच्चारणभेदाद्भिन्नेषु शक्तिग्रहासम्भवः । आनुपूर्व्यास्तत्तत्कालघटिताव्यवहितोत्तरत्वघटितत्वेनाऽननुगतत्वाच्छक्ततावच्छेदकत्वासम्भवात् । अखण्डस्फोटाऽङ्गीकारे तु तत्तद्वर्णोपाध्यवच्छिन्ने तस्मिन् पौर्वापर्य्यादिव्यवहारविषयत्वस्य सूपपादत्वान्नोक्ताऽनुपपत्तिः । तस्य चाऽनुपूर्व्यन्तर्गतसमस्तवर्णा एव यद्यभिव्यञ्जकास्तथापि चरमवर्णाभिव्यक्त एव स बोधहेतुरिति नोक्तविकल्पस्याऽप्यवसर इत्याहुः ।

अर्थ—अब अखण्ड स्फोटपक्ष का निरूपण करते हैं—

पद में वर्ण नहीं है एवं वर्णों में अवयव नहीं है। वाक्य से पदों का किसी प्रकार का विवेक भेद नहीं है।

पद=पचति आदि में वर्ण नहीं हैं। अतः एव वर्ण समूहरूप पद नहीं हो सकता। दृष्टान्त के व्याज से "वर्णेषु" इत्यादि का कथन है। एकार औकार ऋकार आदि वर्णों में अवयवों के प्रतीयमान होने पर भी जिस प्रकार अवयव नहीं है। ( उसी प्रकार पद में वर्ण भी नहीं हैं ) किसी पुस्तक में "क्वचिदिव" ऐसा पाठ है। अर्थात् वर्णेषु अवयवा

इव ऐसी कारिका है। तब इसकी व्यवस्था दृष्टान्तपरक होगी। पदों का भी वाक्य से भेद नहीं है। भाव यह है कि—वाक्य और पद क्रमशः पद समूह तथा वर्ण समूहात्मक नहीं है किन्तु अखण्ड ही हैं। अनन्त वर्णों की कल्पना में कोई प्रमाण नहीं है। उन वर्णों की उत्पत्ति का जनक जो वायु संयोग उसमें रहनेवाला जो वर्णजनकता या व्यञ्जकता का अवच्छेदकत्व गत्व आदि वैजात्य उसका स्फोट में आरोप मानकर ही "ककार गकार" इत्यादि प्रतीति की विलक्षणता सिद्ध हो जायगी अतिरिक्त वर्ण मानना व्यर्थ है। भामती[1] के देवताधिकरण में यह स्पष्ट है कि वायु निष्ठ तारत्व मन्दत्व धर्म वर्णों में आरोपित है।

शङ्का—इस प्रकार वायु संयोग को ही क्यों वाचक नहीं मानते।

समाधान—श्रावण प्रत्यक्ष से उपलब्ध ककारादि में ही वाचकत्व अनुभव से सिद्ध है। अनित्य अनेक वर्णों के युगपदवस्थान न होने से उनके समूहरूप पद तथा वाक्य की सिद्धि न होने के कारण वाचकत्व (ज्ञान) तथा यह वही पद है यह वही वाक्य है यह वही गकार है इस प्रकार की प्रत्यभिज्ञा की अनुपपत्ति से अखण्ड स्फोट की सिद्धि होती है।

"गौः" इत्यादि स्थल में गकार औकार तथा विसर्ग से अतिरिक्त स्फोट का अनुभव नहीं होने से श्रूयमाण वर्णों को ही वाचक मानना चाहिए ऐसा कथन अनादरणीय है क्योंकि गकार आदि वर्ण स्फोट से भिन्न नहीं है। वायुसंयोगनिष्ठ गत्वादि के द्वारा स्फोट का ही गकारात्मकरूप से भान होता है।

प्रत्येक वर्ण[2] को वाचक मानने पर प्रत्येक से अर्थबोध की आपत्ति होगी। यदि समुदाय को मानें तो तृतीयक्षण में नष्ट होने वाले क्रम से उत्पन्न अथवा अभिव्यक्त वर्णों के समुदाय का ज्ञान असम्भव ही है। पूर्व वर्णों के अनुभव जन्य संस्कार की सहायता से एक समय में समूहालम्बन—गकार औकार विसर्ग इत्येकसमूह विषयक (तत्तत्पद घटक) सकल वर्ण का ज्ञान हो सकता है परन्तु (अनुभूत का स्मरण अनुभव) क्रम से ही नहीं होता अतः "सर" "रस" "नदी" "दीनः" इत्यादि स्थलों में क्रम की समानता न होने पर भी अक्षरों की समानता है। सकार अकार रेफ विसर्ग के संस्कार से उत्पन्न वर्ण समूह का सरः रसः इन दोनों में समान ज्ञान होने से दोनों शब्दों में पर्यायता का प्रसङ्ग हो जायगा। इसलिए ध्वनिगत वर्णों से अभिव्यङ्ग्य अखण्डस्फोट को मानना चाहिए। ऐसा कैयट का मत है। यह मत भी अमान्य है। पद के ज्ञान की उपपत्ति पहले की जा चुकी है। प्रत्येक वर्ण या वर्णों का समुदाय व्यञ्जक है। इस प्रकार संशय से आक्रान्त भी यह मत है।

हिन्दी भाष्य—जिस प्रकार एकार में अ तथा ऋ में रेफ की प्रतीति होने पर भी वे उनके अवयव नहीं माने जाते है। उसी प्रकार पदों में वर्णों की प्रतीति होने पर भी वे उनके अवयव नहीं है। इसी प्रकार वाक्य के पद अवयव नहीं है। कारिका में इव पद का अध्याहार या पाठ मान करके व्याख्या की गई है। अत एव अखण्ड पद तथा अखण्ड वाक्य से व्यङ्ग्य स्फोट सिद्ध होता है।

प्रत्येक वर्ण का उत्पादक पृथक्-पृथक् वायु संयोग है। कण्ठताल्वादि स्थान में वायु

---

१. षड्दर्शन टीकाकृत् श्रीवाचस्पति मिश्रकृत शाङ्करभाष्य की टीका।

२. वर्णों के आशुविनाशी होने से उनका समूह नहीं हो सकता।

संयोग होने से स्फोट की अभिव्यक्ति होती है। उस वायु संयोग में विविध प्रकार का कत्व खत्वादि रूप वैजात्य=असाधारण धर्म है। उसी का स्फोट में समवाय सम्बन्ध से आरोप होने से उसमें ककार खकारादि की प्रतीति होती है।

शङ्का—ककार उत्पन्न होता है इस प्रकार की प्रतीति अनुभव सिद्ध होने से कत्व खत्वादि रूप से प्रतीयमान स्फोट अनित्य हो जायगा।

समाधान—यह वही अकार है इत्यादि अभिन्न की प्रत्यभिज्ञा से उसकी उत्पत्ति-प्रतीति भ्रममूलक ही मानी जायगी।

इस प्रकार वायुसंयोगगतकत्वखत्वादि रूप असाधारण धर्म का समवाय से स्फोट में आरोप होने से प्रतीति की विलक्षणता उपपन्न होने के कारण अतिरिक्त वर्णों की सत्ता नहीं है।

शङ्का—वायु संयोग निष्ठ कत्व खत्वादि धर्म को स्फोट में आरोप कर आरोपित कत्वादि को वाचकतावच्छेदककल्पना की अपेक्षा अनारोपित कत्वादि को वाचकतावच्छेदक मानने में लाघव होने से वायुसंयोग को वाचक मानना चाहिए।

समाधान—वायु संयोगरूप ककार आदि को मानने पर वायु संयोग अप्रत्यक्ष होने से ककारादि का भी प्रत्यक्ष नहीं होगा। ककार आदि का श्रावणप्रत्यक्ष अनुभव सिद्ध होने से उसकी परोक्षता नहीं मानी जा सकती।

शङ्का—अतीन्द्रिय वायु संयोग में रहने वाले कत्वादि का स्फोट में आरोप होने पर भी कान से प्रत्यक्ष नहीं होगा।

समाधान—जिस प्रकार सुरभि चन्दनम् (सुगन्धित चन्दन है।) यहाँ इस चाक्षुष प्रत्यक्ष में सुगन्ध नेत्र का विषय न होने पर भी ज्ञानलक्षणा प्रत्यासत्ति से चक्षु का विषय हो जाता है उसी प्रकार व्यञ्जकगत कत्वादिधर्म श्रावणप्रत्यक्ष का विषय हो जायगा।

तदभाववान् में तत्प्रकारक ज्ञान अयथार्थ होता है। अतः कत्वादि की प्रतीति स्फोटांश में भ्रम है।

किसी का विचार ऐसा है कि समवाय से कत्वादि धर्म स्फोट में नहीं है किन्तु स्वाश्रयाभिव्यङ्ग्यत्व सम्बन्ध से अर्थात् स्व=पद से कत्वादि का ग्रहण है। उसका आश्रय वायुसंयोग उससे अभिव्यङ्ग्य स्फोट होता है। अतः एतादृश सम्बन्ध से कत्व खत्वादि स्फोट में रहने के कारण विषय के बाध प्रयुक्त भ्रमत्व नहीं है। ककारादि प्रतीति से ही इस सम्बन्ध की कल्पना होती है। इसलिए "लाल स्फटिक" यहाँ जपा नामक फूल की लालिमा स्फटिक में स्वाश्रयसंयोग सम्बन्ध से प्रतीत होती है। इस सम्बन्ध से प्रतीति की यथार्थता सिद्ध होने से स्फोटांश में भी भ्रम कल्पना अनुचित है।

वर्णों के तृतीय क्षण में विनाशी होने से इनका समूहात्मक पद तथा पदसमूहरूप वाक्य अनुपपन्न है। अतः वाचकता की एवं वर्णों के विनाशी होने से तद्व्यक्ति के साथ अभेदका अवगाहन करने वाली "वही पद है" "वही वाक्य है" तथा "वही ककार है" इसप्रकार की प्रत्यभिज्ञा की अनुपपत्ति से नित्य अखण्ड स्फोट की कल्पना आवश्यक है। स्फोट नित्य होने से वाचक तथा वही ककार इत्यादि प्रत्यभिज्ञा उपपन्न होती है।

कैयट की स्फोट साधन प्रकिया इस प्रकार है—घट पट आदि में यदि प्रत्येक वर्ण को

वाचक माना जाय तो प्रत्येक वर्णों से अर्थ का बोध होना चाहिये। यदि कहें कि वर्णों का समूह वाचक है तो ऐसा कहना असम्भवग्रस्त है। वर्णों की प्रथम क्षण में उत्पत्ति द्वितीय क्षण में स्थिति तृतीयक्षण में उसके द्वितीयक्षणोत्पन्न वर्णान्तर से नाश होजाता है इसलिए वर्णों की एक क्षण में स्थिति न होने के कारण इनका समूह नहीं हो सकता। इसी प्रकार वर्ण नित्यतावादियों के मत में वर्ण की उत्पत्ति न होकर अभिव्यक्ति होती है। अभिव्यक्ति भी अनित्य होने से अभिव्यक्त वर्णों का समूह नहीं हो सकता। अतः वर्ण समूह वाचक नहीं है। समूहालम्बन ज्ञान उसको कहते हैं जिस ज्ञान का विषय समूह हो। आलम्बन शब्द का विषय में तात्पर्य है। यद्यपि अनुभव ( प्रत्यक्षादि ज्ञान रूप ) से जन्य संस्कार आत्मा में होता है। उद्बोधक पदार्थों के द्वारा संस्कार के उद्बोधन से स्मरण रूप ज्ञान उत्पन्न होता है। उनके सहयोग से घकारादि वर्णों के समूह का ज्ञान असम्भव नहीं है। तथापि इस प्रकार समूहालम्बन रूप तत्तत्पद घटक सकल वर्णो का ज्ञान रसः सरः नदी दीन इत्यादि स्थलों में भी सकार अकार रकार अकार एवं विसर्ग की स्थिति 'सरः' इसके समान रसः इसमें भी है। वर्णों के क्रमिक सन्निवेश में भेद होने पर भी स्वरूप से अक्षर समान है। उसी प्रकार जरा राजा नदी दीन इन पदों में भी अक्षरों का स्वरूप और संख्या भी समान है। जिस क्रम से अनुभव हो उसी क्रम से स्मरण हो ऐसा नियम नहीं है। लोक में व्युत्क्रम से अर्थात् पहले की घटना का बाद में, बाद की घटना का पहले स्मरण देखा जाता है। अतः अनुभव के क्रम से स्मृति के होने में प्रमाण नहीं है।

यदि कोई कहे कि स्मरण तथा अनुभव ज्ञान दोनों में अन्यत्र क्रम का नियम नहीं है। केवल वर्णों के अनुभवस्मरण में क्रम नियम है तो इस कल्पना में प्रमाण न होने से समीचीनता नहीं है। अतः जितने वर्णों का समूह अनुभव जन्य संस्कार की सहायता से ज्ञान का विषय सरः नदी इसमें है उतना ही दीनः रसः आदि में भी है। कम और अधिक का ज्ञान नहीं है। ऐसी दशा में सरः रसः इत्यादि पदों से समान अर्थ बोध होना चाहिए। समान अर्थ बोधक होने से पर्यायता दोनों शब्दों में प्राप्त होगी। इस प्रकार पूर्वोक्त युक्तियों से वर्ण या उनका समूह वाचक नहीं हो सकता। अपितु नाद से अभिव्यङ्ग्य अर्थात् नाद=ध्वनि तद्गत वर्णों से अभिव्यक्त वर्णावयव से रहित ही वाचक रूप में सिद्ध होता है।

स्फोट सिद्धि का यह प्रकार ठीक नहीं है। उत्तरवर्ण के प्रत्यक्ष समय में अव्यवहितोत्तरत्वसम्बन्ध से उपस्थित पूर्व-पूर्व वर्णवत्त्व अग्रिम वर्ण में इस प्रकार अन्तिम वर्ण का श्रावण प्रत्यक्ष से, पूर्व वर्णों का ज्ञानलक्षणा प्रत्यासत्ति से पद ज्ञान का उपपादन किया जा सकता है।

कैयटमत में भी प्रत्येक वर्ण को व्यञ्जक मानने पर एक वर्ण से ही स्फोट की अभिव्यक्ति हो जाने से अन्य वर्णों का उच्चारण व्यर्थ है। समुदाय की व्यञ्जकता का अभिव्यक्ति के भी अनित्य होने से अभिव्यक्त वर्णों का समुदाय दूरापास्त होने के कारण उसका प्रश्न ही कहाँ है।

मञ्जूषाकार कैयट मत का समर्थन इसप्रकार करते हैं—नष्ट और वर्तमान का पूर्वापरीभाव कालिक सम्बन्ध से अतिरिक्त सम्बन्ध से नहीं होता। नष्ट और विद्यमान पुरुष में "अयं पूर्वः" "अयं परः" ऐसा कालकृत व्यवहार होने पर भी अव्यवहितोत्तरत्व सम्बन्ध से ऐसा व्यवहार नहीं देखा जाता है।

यदि किसी प्रकार पद प्रत्यक्षता का उपपादन मान भी लिया जाय तो भी विद्यमान

पदार्थ ही किसी का आश्रय होता है। इसलिए नष्ट घटपटादि जलादिका आधार नहीं होता। अतः वृत्त्याश्रयता अनुपपन्न है।

शङ्का—नष्ट घटादि पद में वृत्त्याश्रयता यद्यपि अनुपपन्न है तथापि पूर्व कालावच्छेदेन वृत्त्याश्रयता अनुपपन्न नहीं है। अतीतघट में भी पूर्वकालिक रूपाश्रयत्व माना जाता है।

समाधान—घट पूर्व में रहता है। अतः तात्कालिक रूपाश्रयता मानी जाती है। यहाँ तो वर्ण समुदायात्मक पद पहले भी नहीं था। अतः उसमें वृत्त्याश्रयत्व की उपपत्ति नहीं हो सकती।

पूर्ववर्ण की स्थिति तथा अन्य वर्ण की उत्पत्ति यदि एक काल में होती तो अव्यवहितोत्तरत्व सम्बन्ध से पूर्व वर्णवत्व उत्तरवर्ण में माना जा सकता था। किन्तु "परः सन्निकर्षः संहिता' इस सूत्र में भाष्यकार ने लिखा[1] है कि–पूर्व वर्ण के नाशानन्तर दूसरे यत्न से वर्णान्तर का उच्चारण होता है। इस पक्ष में तृतीय क्षण में पूर्व वर्ण का विनाश एवं उत्तर वर्ण की उत्पत्ति होने से पूर्व वर्णवत्व उत्तर वर्ण में असम्भव होने से पदप्रत्यक्ष भी सम्भव नहीं है। इन्हीं दोषों के कारण अन्य मत उपेक्षणीय है तथा कैयटोक्त पक्ष आदरणीय है। ( इनके मत में नाना प्रकार से रञ्जन साधन द्रव्य से ओत प्रोत विविध वर्णों से उपरक्त पटादि के भान के समान उच्चारित वर्णों के क्रमानुसार वायु संयोग से जन्य जो ध्वनि तद्गत वर्ण निष्ठकत्व खत्वादि से रूषित स्फोट की अभिव्यक्ति होती है। उसी में वाचकत्व है। इस प्रकार उच्चारणक्रमानुसार भिन्न-भिन्न रूप से अभिव्यक्त स्फोट में शक्ति ज्ञान होने से सरः रसः इन दोनों में समानार्थकत्व का प्रसङ्ग नहीं हुआ। वर्णों की समानता रहने पर भी क्रमिक वर्णों से अभिव्यक्त स्फोट में आरोपित रूप समान नहीं है। अत एव किसी पर्यायघटक वर्णों से अभिव्यक्त स्फोट में शक्ति ग्रह से अन्य पर्यायघटक वर्णों से शक्तिग्रह के बिना बोध नहीं होता। शक्ति ग्रह होने पर ही बोध होता है। पर्यायान्तराभिव्यक्त आरोपित रूप भिन्न होने से उसमें शक्ति ग्रह नहीं होता। जिस प्रकार रत्न के बार-बार परीक्षण करने पर उसकी विशुद्धता का ज्ञान होता हैं। एक बार देख लेने मात्र से नहीं होता उसी प्रकार पूर्व-पूर्व वर्णों से अभिव्यक्ति होने पर भी अन्तिम वर्ण से अभिव्यक्त स्फोट बोधक होता है। ऐसा भी कहते हैं।

ननु त्वन्मतेऽप्येष दोषः । तत्तद्वर्णोत्पादकत्वेनाभिमतवायुसंयोगानां प्रत्येकं व्यञ्जकत्वं समुदितानां वेति विकल्पस्य सम्भवादिति चेद् ? उच्यते—प्रत्येकमेव संयोगा अभिव्यञ्जकाः, परन्तु केचिद् गत्वेन, केचिदौत्वेन, केचिद्विसर्गत्वेनानेकैः प्रकारैः। अत एव वर्णानां तदतिरेकास्वीकारोऽप्युपपद्यते।

एवञ्चाव्यवहितोत्तरत्वसम्बन्धेन घवत्त्वं टकारे गृह्यते। एतादृशपदज्ञानकारणताया अविवादात् ः परं स्वव्यवहितोत्तरत्वं स्वज्ञानाधिकरणक्षणो-

---

१.यावद् गकारे वाग्वर्तते न तावदौकारे येन यत्नेन एको वर्ण उच्चार्यते तेनैव विच्छिन्ने तस्मिन् वर्णे उपसंहृत्य तं यत्नमन्यमुपादाय द्वितीयः प्रवर्तते इति।

त्पत्तिकज्ञानविषयत्वं वाच्यम्। अत एव घज्ञानानन्तरटज्ञानविषयत्वरूपानुपूर्वीत्यादिनैयायिकवृद्धानां व्यवहारः। एवञ्च न कश्चिद्दोषः।

एतेन पर्य्यायस्थलेष्वेक एव स्फोटो, नाना वा? नाद्यः। घटपदे एव गृहीतशक्तिकस्य कलशादेर्बोधप्रसङ्गात्। न च तत्पर्यायाभिव्यक्ते शक्तिग्रहाऽवश्यम्भावेन तत्तत्पर्य्यायगतशक्तिग्रहहेतुताया उचितत्वात्। तथा सति शक्तिग्रहत्वेनैव हेतुत्वे लाघवाच्च। अन्यथा तत्पर्य्यायाभिव्यञ्जकगतशक्तिग्रहत्वेन तत्त्वे गौरवात्। न द्वितीयः। अनन्तपदानां तेषां शक्तिं चापेक्ष्य क्लृप्तवर्णेष्वेव शक्तिकल्पनस्य लघुत्वादिति परिमलोक्तमपास्तम्। पर्य्यायेष्वनेकशक्तिस्वीकारस्य सर्वसिद्धत्वात् तदवच्छेदकानुपूर्व्याः प्रागुपपादनादिति दिक्।

शब्दकौस्तुभे तु वर्णमालायां पदमिति प्रतीतेर्वर्णातिरिक्त एव स्फोटः। अन्यथा कपालातिरिक्तघटाद्यसिद्धिप्रसङ्गश्चेति प्रतिपादितम्॥ ६८॥

ननु वायुसंयोगानां प्रत्येकमभिव्यञ्जकत्वाभ्युपगमेऽपि गौरित्यत्र घत्वेन टत्वेन च स्फोटोऽभिव्यज्येतेत्यत आह—*परन्त्विति*। तथाच विलक्षणवायुसंयोगस्य गत्वप्रकारकस्फोटाभिव्यञ्जकत्वाभ्युपगमान्नोक्तदोष इति भावः। *अत एवेति*। विलक्षणवायुसंयोगस्य तत्तद्रूपेण स्फोटाभिव्यञ्जकत्वाऽभ्युपगमादेवेत्यर्थः। *तदतिरेकाऽस्वीकार इति*। तत्तत्संयोगादेव कत्वादिप्रकारककारप्रतीत्युपपत्तौ स्फोटातिरिक्त तत्कल्पने मानाभावादिति भावः।

ननु "सरो" "रस" इत्यादावतिप्रसङ्गस्तदवस्थ एव, सत्वादिरूपेणाभिव्यञ्जकवायुसंयोगानामुभयत्र तौल्यादत आह—*एवञ्चेति*। *घवत्त्वमिति*। तथा चौपाधिकभेदमादाय तस्मिन्नेव टकारात्मके घत्वप्रकारकप्रतीतिविषयाव्यवहितत्वग्रहविषये यथा घटपदव्यवहारविषयता तथा रात्मके स्फोटे सत्वप्रकारकप्रतीतिविषयाव्यवहितत्वग्रहे सरः पदव्यवहारविषयतेति न सर आत्मकस्फोटस्य रसरूपतेति भावः।

ननु तव मते गकारादिवर्णस्य नित्यस्फोटरूपतया नित्यत्वेन तद्ध्वंसाऽधिकरणक्षणाऽनुत्पत्तिकत्वविशिष्टतदधिकरणक्षणोत्पत्तिकत्वरूपाऽव्यवहितोत्तरत्वासम्भवात् कथमुक्तप्रकारसम्भवोऽत आह—*परं त्विति*। तथाच वर्णानां नित्यत्वेऽपि तदभिव्यक्तेरनित्यत्वस्य सांख्यानामपि सम्मतत्वेन तदव्यवहितोत्तरत्वस्य वर्णान्तराभिव्यक्तावबाधेन तदादाय घटादिपदप्रत्ययोपपत्तिरिति भावः। *अत एवेति*। अभिव्यक्तिनिरूपिताऽव्यवहितोत्तरत्वस्यानुपूर्वीव्यवहारनियामकत्वादेवेत्यर्थः।

नवीनैस्तथानभ्युपगमादाह—*वृद्धेति*। *एतेनेति*। आनुपूर्व्यवच्छिन्नवर्णात्मकस्फोटस्य वाचकत्वव्यवस्थापनेनेत्यर्थः। अपास्तमित्यनेनाऽन्वयि। *स्फोट इति*। वाचकत्वेनाऽभिमताखण्डपदार्थ इत्यर्थः। *नाद्य इति*। नैक इत्यर्थः।

"तदभिन्नाभिन्नस्य तदभिन्नत्वनियमात्" अर्थात् गकार से अभिन्न स्फोट है इससे अभिन्न हकार है। क्योंकि गकारात्मक स्फोट से हकार स्फोट भिन्न नहीं है। स्फोट एक है। अतः गकार हकार की अभिन्नता स्वतः प्राप्त होती है।

यह गकार है हकार नहीं है ऐसी प्रतीति का सर्वथा विलय हो जायगा। इसमें कारण स्फोट की एकता है।

शङ्का—स्फोट के एक होने पर भी कत्व खत्वादि विरुद्ध धर्मों के आरोप द्वारा भेद प्रतीति के कारण गकार हकार की एकत्वप्रतीति नहीं होगी।

समाधान—आरोपित कत्व खत्वादि धर्म स्फोट में मानने पर वर्णनित्यतावादी के मत में वर्णनित्य ओर एक होने से अनेक व्यक्तियों में समवाय सम्बन्ध से रहने वाली जाति कत्वादि नहीं हो सकती किन्तु गकारादिवर्णरूप ही गत्वादि हैं। अथवा धर्म धर्मिओं का अभेद माना गया है। अत एव कत्वादि ककारादिवर्णरूप ही है। इस प्रकार कत्वादि वर्णरूप होने से प्रतीति का निर्वाह हो जाता है। और अतिरिक्त स्फोट कल्पना प्रयुक्त गौरव भी नहीं है।

यदि गत्वादि का स्फोट में आरोप नहीं माना जायगा तो गकारादि की प्रतीति अनुपपन्न हो जायगी। क्योंकि गत्वादि स्फोट धर्म नहीं होने से तद्विशिष्ट प्रतीति दुर्लभ है। वायुसंयोगवृत्ति अथवा ध्वनिवृत्ति वैजात्य के आरोप से गकारादि विशेष्यक गत्वादि प्रकारक वोध नहीं हो सकता। वाधक के विना प्रतीति आरोपित नहीं हो सकती। अत एव भ्रमात्मक भी नहीं हो सकती।

अथवा वायुसंयोग को ही गकारादिरूप मान लें। वायु के प्रत्यक्ष नहीं होने पर भी तद्गत धर्म = स्पर्श का त्वगिन्द्रिय के द्वारा प्रत्यक्ष सर्वानुभव सिद्ध है। अतः अतीन्द्रिय वृत्ति धर्म, साक्षात्काराविषय होता है ऐसा नियम नहीं होने से अतीन्द्रिय वायु के संयोगरूप गकारादि का प्रत्यक्ष हो जायगा।

शङ्का—संयोग के प्रत्यक्ष में सभी संयोगाश्रय का प्रत्यक्ष होना आवश्यक माना जाता है। इसीलिये घटाकाश संयोग का प्रत्यक्ष नहीं मानते। क्योंकि संयोग का आश्रय आकाश अप्रत्यक्ष है। इस रीति से वायु के अप्रत्यक्ष होने से तत्तत्स्थानों के साथ वायु का संयोग अप्रत्यक्ष है। इस प्रकार से गकारादि का प्रत्यक्ष नहीं होगा।

समाधान—बाह्यद्रव्यग्राहक इन्द्रिय द्वारा जायमान प्रत्यक्ष के प्रति यावदाश्रय का प्रत्यक्ष होना आवश्यक है। वायु के साथ कण्ठताल्वादिका संयोग आन्तर है बाह्य नहीं है। अतः पूर्वोक्त दोष का अवकाश नहीं है।

एवं ध्वनिवृत्तिगत्वादिका स्फोट में आरोप मानकर उसकी प्रत्यक्षात्मक प्रतीति वैयाकरण मानते हैं। उसी प्रकार यहाँ भी समझना चाहिये। यह प्रतिबन्दी उत्तर है। ऐसा न मानने पर गत्वादि की स्फोटधर्मकल्पना गगनकुसुम के समान हो जायगी।

इससे यह सिद्ध होता है कि स्फोट से अतिरिक्त वर्ण हैं। किन्तु वे गौरव के कारण वाचक नहीं हैं।

जिस प्रकार आनन्त्य और व्यभिचार के कारण व्यक्ति में शक्ति नहीं मानी गई। उसी प्रकार वाचकता भी उक्त दोष से व्यक्ति में नहीं मानी जायगी किन्तु जाति में वाचकत्व है। हरिपदमात्र में यह हरिपद है इत्याकारक समानप्रतीति होने से एवं जहाँ-जहाँ हरि की उपस्थिति है वहाँ सर्वत्र हरिपदज्ञान के रहने से उसकी उपस्थिति के प्रति हरिपद ज्ञान की कारणता सिद्ध होती है। इस प्रकार ज्ञाननिष्ठ कारणता का

अवच्छेदक पद, तन्निष्ठावच्छेदकता का अवच्छेदक पदत्वजाति की कल्पना आवश्यक है।

शङ्का—जाति की अभिव्यक्ति के लिये वर्णों की आनुपूर्वी अवश्य कल्पनीय है। इस प्रकार "अवश्यक्लृप्त नियत पूर्ववर्तितारूप" कारणता का अवच्छेदकत्व के निर्वाह हो जाने के कारण आनुपूर्वीविशिष्ट पदज्ञान की हेतुता अनावश्यक है।

समाधान—मिट्टी के अवयवसंयोगविशेष से घट की अनुगत (घट-घट इत्याकारक) प्रतीति हो जाने से घटत्वजाति की भी सिद्धि नहीं होगी।

शङ्का—रेफ अकार सकार तथा विसर्ग से घटित रस और सर इन दोनों में समानता होने के कारण रसत्व विशिष्ट रस का उपस्थापकतावच्छेदक एवं सरत्वविशिष्ट सर का उपस्थापकतावच्छेदक इनमें से दोनों को विनिगमनाविरह से दोनों में माना जायगा। इसलिये उभय स्थल में उभय का बोध प्राप्त होगा।

समाधान—कारिका में "तु" शब्द निर्धारण अर्थ में है। यद्यपि "सरः" "रसः" इन में वर्णों की समानता है तथापि इनका सन्निवेश (आनुपूर्वी) का भेद है। अव्यवहितोत्तरत्वसम्बन्ध से रविशिष्टसत्वरूपानुपूर्वी रसोपस्थापकतावच्छेदक जाति के व्यञ्जक होने से तादृश आनुपूर्वी सरः इसमें नहीं होने के कारण रसत्वविशिष्ट रस के बोध का आपादन नहीं हो सकता।

कारिका में "तार" और "मन्द" शब्द तारत्व और मन्दत्व का बोधक है। जिस प्रकार वर्णनित्यता वादी के मत में विजातीय वायु ताल्वादि के अभिघात के द्वारा तारत्व मन्दत्व रूप से वर्णभेद प्रतीत होता है, उसीप्रकार व्यञ्जक आनुपूर्वी के भेद से जाति भेद और उसीसे अर्थ भेद होता है ॥ ७१ ॥

ननु जातेः प्रत्येकं वर्णेष्वपि सत्त्वात् प्रत्येकादर्थावबोधापत्तिः स्यादित्यत आह—

अनेकव्यक्त्यभिव्यङ्ग्या जातिः स्फोट इति स्मृता ॥
कैश्चित् व्यक्तय एवास्या ध्वनित्वेन प्रकल्पिताः ॥७२॥

अनेकाभिर्वर्णव्यक्तिभिरभिव्यक्तैव जातिः स्फोट इति स्मृता। योगार्थतया बोधिकेति यावत्। एतेन स्फोटस्य नित्यत्वात्सर्वदार्थबोधापत्तिरित्यपास्तम्।

अयम्भावः—यद्यपि वर्णस्फोटपक्षे उक्तदोषोऽस्ति; तथापि पदवाक्यपक्षयोर्न। तत्र तस्या व्यासज्ज्यवृत्तित्वस्य धर्मिग्राहकमानसिद्धत्वादिति। कैश्चिद् व्यक्तयो ध्वनय एव ध्वनिवर्णयोर्भेदाभावादित्यभ्युपेयन्त इति शेषार्थः।

उक्तं हि काव्यप्रकाशे—"बुधैर्वैयाकरणैः प्रधानीभूतस्फोटरूपव्यङ्ग्यव्यञ्जकस्य शब्दस्य ध्वनिरिति व्यवहारः कृतः" इति ॥ ७२ ॥

वर्णजातिस्फोटमभिप्रेत्य शङ्कते, सारे—*नन्विति* ॥ *जातेरिति* ॥ अर्थबोधकजातेरित्यर्थः ॥ *प्रत्येकमिति* ॥ पदान्तर्गत[illegible]र्थः। एवमग्रेऽपि ॥

*अर्थबोधापत्तिरिति* ॥ तदभिव्यञ्जकवर्णसत्त्वादिति भावः ॥ *योगार्थतयेति* ॥ स्फुटत्यर्थोऽस्मादिति वक्ष्यमाणावयवव्युत्पत्त्येत्यर्थः ॥ *एतेनेति* । तत्पदघटकयावद्वर्णाभिव्यक्तजातेर्वाचकत्वाङ्गीकारेणेत्यर्थः । *सर्वदा* । पदाश्रवणेऽपि । *अपास्तमिति* । जातेः सनातनत्वेऽप्युक्तस्थले व्यञ्जकासमवधानात्तदभिव्यक्त्यभावेन बोधस्यापादयितुमशक्यत्वादिति भावः ॥

ननु वर्णजातिस्फोटपक्षे पद्घटकयावद्वर्णगतजातीनामेवार्थबोधकत्वमुपगन्तव्यम् । तत्र चान्यवर्णगतजातेरन्यवर्णानभिव्यङ्ग्यत्वात्तत्तद्वर्ण एवाभिव्यञ्जको वाच्यः । तथा चोक्तदोषस्तदवस्थ एवेत्यत आह—*अयम्भाव इति* ॥ *उक्तदोष इति* ॥ तथाच दुष्टत्वात् स पक्षो नाश्रयणीय इति भावः ॥ *तत्रेति* ॥ पदे वाक्ये च ॥ *तस्याः*—पदत्वादिजातेः ॥ *व्यासज्यवृत्तित्वस्येति* ॥ पर्याप्त्याख्यविलक्षणसम्बन्धेन वृत्तित्वस्येत्यर्थः ।

ननु जातेः समवेतत्वस्यैव सार्वत्रिकतया कथमेतस्याः पर्य्याप्तत्वमत आह—*धर्मिग्राहकेति* ॥ धर्मवती जातिस्तद्ग्राहकं मानं पदस्य वा वाक्यस्य वा वाचकत्वाऽनुपपत्तिस्तत्सिद्धत्वादित्यर्थः । प्रत्येकवर्णविश्रान्तजातेर्वाचकत्वस्योक्तदूषणकवलितत्वेनासम्भवाद्वाचकत्वानुपपत्त्या कल्प्यमाना पदत्वादिजातिर्यदि पुनः प्रत्येकं विश्रान्ता स्यात्; तदा तत्सिद्धिरेव न स्यात् वाचकत्वाऽनुपपत्तेरपरिहारादतस्तत्साधकमेव तत्पर्य्याप्तत्वसाधकम् , एवं चानेकव्यक्त्यभिव्यङ्ग्येत्यस्यानेकव्यक्तिपर्याप्तेत्यर्थ इति भावः ।

वस्तुतस्तु घटादिप्रत्येकव्यक्त्यैक्ये घट इति सर्वसिद्धप्रतीत्या व्यवहारेण च सिद्ध्यतु घटत्वादेः प्रत्येकमात्रवृत्तित्वम् । न ह्येकवर्णे घटपदादिव्यवहारो; येन पदत्वादेः प्रत्येकवृत्तिता स्यात्, किन्तु पटशब्दे पदं न प्रकार इति वैपरीत्यमिति तादृशजातेः पर्य्याप्तत्वमावश्यकम् । पदत्वं न पर्य्याप्तं जातित्वादित्यनुमानं त्वप्रयोजकमनुकूलतर्काभावादिति विभावनीयम् ।

इदं पुनरिहावधेयम्—अनेकव्यक्त्यभिव्यङ्ग्येत्यस्यानुपूर्व्यवच्छिन्नवर्णाभिङ्ग्येत्यर्थः । नाऽतः सरो रस इत्यादौ अर्थभेदबोधाऽनुपपत्तिः । एवञ्च पूर्वोक्तार्थस्यैवाऽयं प्रपञ्चः । आनुपूर्वीवर्णयोर्विशेषणविशेष्यभावव्यत्यासः परं व्यतिरिच्यते । अत एवाऽग्रिमग्रन्थसङ्गतिरिति । व्यज्यतेऽनयेति व्युत्पत्त्या व्यक्तिपदार्थो वर्ण इत्यभिप्रेत्याह—*ध्वनिवर्णयोरिति* । वर्णानां ध्वनिनैयत्यादभेदोपचारोऽत एव पस्पशायाम् "अथ गौरित्यत्र कः शब्द" इति प्रश्ने "लोकेऽर्थबोधकत्वेन गृहीतो ध्वनिर्वर्णात्मकः समूह" इत्यर्थकम् "अथवा प्रतीतपदार्थको ध्वनिः शब्द" इत्युक्तमिति भावः । *शेषार्थ इति* । प्रकृतकारिकोत्तरार्द्धार्थ इत्यर्थः । वर्णेषु ध्वनिव्यवहारे सम्मतिमाह—*उक्तं हीति* । *काव्यप्रकाश इति* ।

"इदमुत्तममतिशयिनि व्यङ्ग्ये वाच्याद् ध्वनिर्बुधैः कथितः" ।

इति वृत्तिव्याख्यावसर इति शेषः । *स्फोटरूपव्यङ्ग्येति* ॥ स्फोटरूपं यद् व्यङ्ग्यं, तद्व्यञ्जकवर्णात्मकशब्दस्येत्यर्थः ॥ ७२ ॥

अर्थ—प्रत्येक वर्णों में जाति के होने से प्रत्येक वर्ण से बोध की आपत्ति होगी। इसके समाधानार्थ कारिकार्द्ध लिखी गई है—

"अनेकव्यक्तयभिव्यङ्ग्येति"—अनेक वर्णों से अभिव्यक्त जाति को स्फोट मानते हैं। स्फुटति अर्थोऽस्मात् (जिससे अर्थ की प्रतीति होती है) इस व्युत्पत्तिलभ्य अर्थ से स्फोटशब्द बोधकपरक है। इससे स्फोट के नित्य होने से सर्वदा अर्थ बोध का प्रसङ्ग हो जायगा यह कथन निरस्त हो गया। (अभिव्यक्ति सदा नहीं रहती यह भाव है) ॥७३॥

पूर्वोक्त शङ्का का निरासप्रकार "अयं भावः" इससे लिखते हैं। यद्यपि वर्णस्फोट पक्ष में उक्त दोष की सम्भावना है। तथापि पद एवं वाक्य स्फोट में इसकी लेशतः भी सम्भावना नहीं है। पद और वाक्य स्थल में पदत्वादि जाति का व्यासज्यवृत्तित्व अर्थात् पर्याप्तिसम्बन्ध से वृत्तित्व, धर्मिग्राहकप्रमाण से सिद्ध है। ध्वनि और वर्ण का भेद न होने से दोनों अभिन्न हैं। कारिका के उत्तरार्ध का यह आशय है।

काव्यप्रकाश में ऐसा उल्लेख मिलता है कि विद्वान् वैयाकरणों ने प्रधानस्फोटरूप व्यङ्ग्य के व्यञ्जक शब्द का ध्वनि से व्यवहार किया है ॥ ७२ ॥

हिन्दी भाष्य—तत्पदघटक सकल वर्णों से स्फोट अभिव्यक्त होने पर ही जाति स्फोट को वाचक माना गया है। स्फोट के सदा रहने पर उसकी अभिव्यक्ति कादाचित्क होने से सर्वदा अर्थबोध का प्रसङ्ग प्राप्त नहीं है।

"इदमुत्तममतिशयिनि व्यङ्ग्ये" इस पद्य की व्याख्या के अवसर पर "*काव्यप्रकाश*" में कहा है–विद्वान् वैयाकरणों ने स्फोटाभिव्यञ्जक शब्द को ध्वनि शब्द से व्यवहार किया है। इससे सिद्ध होता है कि ध्वनि और वर्ण में परस्पर भेद नहीं है।

कारिका में व्यक्ति शब्द व्यज्यते अनया इस व्युत्पत्ति के द्वारा वर्ण परक है। "कः शब्दः" इस प्रसङ्ग में "प्रतीतपदार्थको ध्वनिः शब्दः" ऐसा महाभाष्यकार ने पस्पशाह्निक में भी लिखा है।

शङ्का—वर्णजातिस्फोट पक्ष में पदगत प्रत्येक वर्णगत जाति को अर्थबोधक मानना होगा। उसमें अन्य वर्णगत जाति का अन्य वर्ण व्यञ्जक नहीं होने से तत्तद् वर्ण ही तत्तद् जाति का व्यञ्जक होगा। इस प्रकार प्रत्येक वर्ण से अर्थ बोध की आपत्ति पूर्ववत् बनी हुई है।

समाधान—वर्णजातिस्फोट पक्ष में यह दोष है किन्तु पद और वाक्य स्फोट पक्ष में उक्त दोष की सम्भावना नहीं है। पदत्व तथा वाक्यत्व जाति पर्याप्तिसम्बन्ध से प्रत्येक वर्ण में नहीं है किन्तु समुदायभूत पद तथा वाक्य में है। अतः उक्त दोष नहीं है।

शङ्का—घटत्वादिजाति समवायसम्बन्ध से प्रत्येक घट में मानी जाती है। इस रीति से समवेतत्व ही जाति में सर्वत्र प्रसिद्ध होने से व्यासज्यवृत्तित्व का कथन असङ्गत है।

समाधान—धर्मिग्राहकप्रमाण = धर्मी, जातिरूपपदार्थ इसका ग्राहक = साधक जो मान = प्रमाण = पदत्व और वाक्यत्व के अर्थबोधकत्व की अनुपपत्ति इस प्रमाण से व्यासज्यवृत्तित्व की सिद्धि है। अर्थात् पदत्व और वाक्यत्व भी यदि प्रत्येक वर्ण में विश्रान्त होगा तो वर्णसमुदाय (पद) गत जाति, समवाय से प्रत्येकवृत्ति होने से

समुदाय में अर्थवाचकत्व की अनुपपत्ति परिहार के लिये पदत्वादि जाति की कल्पना की गई है। इसके स्वीकार करने पर भी यदि प्रत्येक में इसकी कल्पना मानी जायगी तो उक्त अनुपपत्ति परिहार के लिये की गई पदत्वादि जाति की कल्पना व्यर्थ हो जायगी। इसके मानने पर भी उक्त आपत्ति का परिहार नहीं हुआ। अतः पदत्व और वाक्यत्व जाति का व्यासज्यवृत्तित्व सिद्ध होता है ॥ ७२ ॥

ननु का सा जातिस्तत्राह—

सत्यासत्यौ तु यौ भागौ प्रतिभावं व्यवस्थितौ ॥
सत्यं यत्तत्र सा जातिरसत्या व्यक्तयो मताः ॥ ७३ ॥

प्रतिभावं प्रतिपदार्थम्। सत्यांशो जातिः, असत्या व्यक्तयः। तत्तद्व्यक्तिविशिष्टं ब्रह्मैव जातिरिति भावः। उक्तञ्च कैयटेन—"असत्योपाध्यवच्छिन्नं ब्रह्मतत्त्वं द्रव्यशब्दवाच्यमित्यर्थः" इति। "ब्रह्मतत्त्वमेव शब्दरूपतया भाति" इति च।

कथं तर्हि, 'ब्रह्मदर्शने च गोत्वादिजातेरप्यसत्त्वादनित्यत्वं "आत्मैवेदं सर्वम्" इति श्रुतिवचनात्' इति कैयटः सङ्गच्छताम्। अविद्या (आविद्यिको आविद्यि) धर्मविशेषो वेति पक्षान्तरमादायेति द्रष्टव्यम् ॥ ७३ ॥

नन्वेतावता प्रबन्धेन पदत्वादेर्जातित्वस्य तद्वाचकत्वस्य च व्यवस्थापनमफलं, पुरुषार्थाऽनुपयोगित्वादित्याशङ्क्य समाधानपरतया मूलमवतारयति—*ननु का सेति*। सा वाचकत्वेनाभिमता जातिः केति योजना। *सत्यांश इति*। सत्यत्वं कालत्रयावाध्यत्वं, तद्विपरीतमसत्यत्वम्। पर्य्यवसितार्थमाह—*तद्व्यक्तीति*। तद्व्यक्त्युपलक्षितमित्यर्थः। परमार्थब्रह्मणा व्यक्तीनां वैशिष्ट्यासम्भवात्। अत एव जगत्कर्तृत्वादीनां तदुपलक्षणत्वमामनन्तीति बोध्यम्। *जातिरिति*। तद्व्यवहारविषय इत्यर्थः। *असत्योपाधीति*। व्यक्तीनामुपाधित्वं च, वस्तुत एकस्या अपि नानाप्रतीतिजनकत्वं तदवच्छिन्नं तदुपलक्षितमित्यर्थः। *द्रव्यशब्देति*। गवादिशब्देत्यर्थः। गुणगतजातेरनङ्गीकारादथवा द्रव्यात्मको यश्शब्दस्तद्वाच्यमित्यर्थः। मीमांसकैः शब्दस्य द्रव्यत्वोपगमात्। *शब्दस्वरूपतयेति*। श्रुत्यात्मकशब्दरूपतयेत्यर्थः। "द्वे ब्रह्मणी वेदितव्ये" इति श्रुतेः।

अयमाशयः—"तस्मादेतस्माद्वा आत्मन आकाशः सम्भूत" इत्यादितैत्तिरीयकश्रुतौ ब्रह्मणो जगदुपादानत्वश्रवणादुपादेयस्य चोपादानाभिन्नत्वस्य लोकप्रसिद्धत्वान्नामार्थयोरपि स्वाभिन्नोपादानाभिन्नत्वेन परस्पराभिन्नत्वे सुस्थे पृथक्प्रतीयमानजगतो, "नेह नानास्ति" इति श्रुत्या बाधे दृढे, बाधितार्थप्रतीतेरधिष्ठानसत्तैकनियम्यत्वेनावशिष्यमाणब्रह्मणः सद्रूपस्य साक्षाज्ज्ञातुमशक्यतयोपलक्षणीभूतरूपनामनिरूपणद्वारा तज्ज्ञानाय शास्त्रस्योपयोग इति। *कथमिति*। सङ्गच्छतामित्यनेनान्वितम्। पूर्वापरविरोधादिति भावः। मिथ्याज्ञानरूपायास्तज्जन्यसंस्काररूपाया

जातित्वासम्भवादाह—*आविद्यक इति* । अविद्याकल्पित इत्यर्थः । *धर्मविशेष इति* । अत्राऽवृत्तिवारणाय—*धर्मेति* । तद्व्यक्तित्वादिवारणाय—*विशेषेति* । तथाच मतभेदेनाऽर्थद्वयस्याप्याकरस्थितत्वान्न पूर्वापरविरोध इति भावः ।

वस्तुतस्तु गवाद्युपाध्यवच्छिन्नसत्तात्वमेव गोत्वादिव्यवहारनियामकम् अद्वैतदर्शने च गवादेरवच्छेदकस्याभावान्न सत्ताया विशिष्टसत्तात्वं, तदानीं निर्द्धर्मत्वेनैवावस्थानादित्यर्थपरतयाऽपि विरोधः सुपरिहर इति बोध्यम् ॥ ७३ ॥

अर्थ—वह कौन सी जाति है—प्रत्येक पदार्थ में असत्य और सत्य ये दो भाग अवस्थित हैं । उनमें सत्यभाग जाति और असत्य भाग व्यक्ति है ।

"प्रतिभावम्" इसका अर्थ प्रति पदार्थ है । सत्यांश = जाति और असत्यांश = व्यक्ति है । तत्तद् व्यक्ति विशिष्ट ब्रह्म ही जाति है । जैसा कि कैयट ने कहा है—असत्य उपाधि रूप से अवच्छिन्न = उपलक्षित ब्रह्मतत्त्व द्रव्य शब्द = गवादि शब्द का वाच्य है । अथवा मीमांसक मत में शब्द द्रव्य है । अतः द्रव्य रूप जो शब्द उससे वाच्य है और ब्रह्मतत्त्व ही शब्द स्वरूप से भासित होता है ।

शङ्का—"सम्पूर्ण जगत् ब्रह्मस्वरूप ही है" इति श्रुति के अनुसार गोत्वादि जाति की भी परमार्थतः सत्ता नहीं है । अत एव अनित्य है । इस कैयट के वचन का पूर्वोक्त वचन के साथ विरोध होने से उक्तार्थ की सङ्गति कैसे होगी ।

समाधान—अविद्या[1] अथवा अविद्या कल्पित धर्म विशेष, गोत्वादि जाति है । ब्रह्मस्वरूप जाति नहीं है । इस पक्षान्तर से विरोध परिहार करना चाहिये ॥ ७३ ॥

हिन्दी भाष्य—वाचकत्व रूप से अभिमत जाति का स्वरूप "सत्यासत्ये" इस कारिका से कहते हैं—तत्तत्पदार्थों में दो भाग है । इसमें एक अंश सत्य है । दूसरा असत्य है । असत्य अंश को व्यक्ति और सत्य अंश को जाति कहते हैं । अर्थात् तत्तद् व्यक्ति से उपलक्षित ब्रह्म, जाति स्फोट है । असत्य व्यक्ति वैशिष्ट्य पारमार्थिक ब्रह्म के लिये अनुपपन्न है । अतः उक्त वैशिष्ट्य का उपलक्षितत्व अर्थ में तात्पर्य है । अत एवं जगत्कर्तृत्वादि धर्म से उपलक्षित माना गया है ।

तमेव सत्यांशं स्पष्टयति—

इत्थं निष्कृष्यमाणं यच्छब्दतत्त्वं निरञ्जनम् ॥
ब्रह्मैवेत्यक्षरं प्राहुस्तस्मै पूर्णात्मने नमः ॥ ७४ ॥

अयम्भावः—"नामरूपे व्याकरवाणि" इति श्रुतिसिद्धा द्वयी सृष्टिः । तत्र रूपस्येव नाम्नोऽपि तदेव तत्त्वम् । प्रक्रियांशस्त्वविद्याविजृम्भणमात्रम् ।

उक्तञ्च वाक्यपदीये—

शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते ।
समारम्भात्तु भावानामादिमद् ब्रह्म शाश्वतम् ॥ इति ॥

द्वि. का. २३७

---

१. अविद्या = मलिनसत्त्वप्रधाना, ब्रह्माश्रिता, अनिर्वचनीया आवरण-विक्षेपोभय-शक्तिसमन्विता ब्रह्मज्ञाननाश्या शास्त्रे प्रसिद्धा ।

ब्रह्मैवेत्यनेन, "अत्रायं पुरुषः स्वयं ज्योतिः" "तमेव भान्तमनुभाति सर्व्वम्" "तस्य भासा सर्वमिदं विभाति" इति श्रुतिसिद्धं स्वपरप्रकाशत्वं सूचयन् स्फुटत्यर्थोऽस्मादिति स्फोट इति यौगिकस्फोटशब्दाभिधेयत्वं सूचयति । निर्विघ्नप्रचारायान्ते मङ्गलं स्तुतिनतिरूपमाह—*पूर्णात्मने इत्यादिना* ॥ ७४ ॥

यद्यप्यविशेषेण वाक्यविषयेऽखण्डवाक्यतज्जातिरूपस्फोटद्वयमुक्तं, तथापि नादात्मकस्फोटकल्पे शास्त्रस्य पुरुषार्थे परम्परयोपयोगित्वमन्तिमकल्पे तु साक्षादेवेति तस्यैव मुख्यत्वमित्याशयेन मूलमवतारयति--*तमेवेति* । "अयमात्मा" "तत्सत्यम्" इत्यादिश्रुतिसिद्धं यत्सत्यं तत्र सा जातिरित्यनेनोक्तमेवेत्यर्थः । मूले, *इत्थमिति* । पूर्वोक्तप्रकारेण अध्यस्तवाचकत्वेभ्यः प्रकृत्यादिभ्यः पृथक् क्रियमाणम् । अत एव–*निरञ्जनम्* । उपाधिविनिर्मुक्तम् । अत एवाक्षरमविनाशि ।

"यस्तु सर्वेषु भूतेषु नश्यत्सु न विनश्यति ।"

इति स्मृतेः । सोपाधिकस्यैव विनाशप्रतियोगित्वात् । शब्दतत्त्वं, शब्दपदं रूपस्याप्युपलक्षणम् । तेन, नामरूपोपादानं यत्तद् ब्रह्मैवेति विशेषणसङ्गतैवकारेण ब्रह्मतादात्म्याऽभावरूपे विशेषणाऽयोगव्यवच्छेदे शब्दतत्त्वरूपान्वयितावच्छेदकव्यापकत्वं बोध्यते । *प्राहुः* । प्रकर्षेण कथयन्ति । ब्रह्माऽभेदेन जानन्तीति यावदिति तदर्थः । तत्र शब्दोपादानत्वस्य तन्त्रान्तरे गगनादौ प्रसिद्धेः कथं ब्रह्मणस्तदुपादानत्वमित्याशङ्कायामाह—*अयम्भाव इत्यादि* । *नामरूपेति* । "अनेन जीवेनात्मनाऽनुप्रविश्य नामरूपे व्याकरवाणि" इति श्रुतिसिद्धेत्यर्थः । *द्वयीति* । नामरूपात्मकद्वयवयवसमूहरूपेत्यर्थः । *तत्रेति* । सृष्टिद्वयमध्ये । *रूपस्येवेति* । आकाशाद्यात्मकार्यस्येवेत्यर्थः । *नाम्न इति* ॥ तद्वाचकशब्दस्यापीत्यर्थः । *तदेव*—ब्रह्मैव । तत्त्वमुपादानमित्यर्थः । "तस्माद्वेतस्माद्वा आत्मन" इत्यादिश्रुतेः । शब्दतन्मात्राकाशोपादानत्वे पर्य्यवसानाद् द्वयोरप्युपादानं ब्रह्मैव । अत एव तयोः परस्परमभेदसिद्धिः स्वोपादानब्रह्माभिन्नत्वात् । न च ब्रह्मणो जगदुपादानत्वे विकारित्वाऽऽपत्तिः । जगदेतद्विवर्त्तते' इति वदता मूलकृतैव समाहितत्वात् । तथाच व्यावहारिकप्रातिभासिकपदार्थनिरासेन श्रुत्या ब्रह्मैव परिशेषीक्रियते इति प्रागुक्त एवाऽर्थः ।

ननु नानात्वस्य सर्वथैव मिथ्यात्वे कथं स प्रत्ययो लोकानामत आह—*प्रक्रियांशस्त्विति* । प्रकृतिप्रत्ययपञ्चकोशादिव्यवहारांशस्त्वित्यर्थः । *अविद्येति* । मलिनसत्त्वाज्ञानविलास एवेत्यर्थः । तथाच ब्रह्माऽतिरिक्तत्वेनाऽसत्यानामपि तेषां पार्थक्येन प्रतीतिरधिष्ठानाऽज्ञानकृतैवेति । न यावदधिष्ठानाज्ञानं तावत् तन्निवृत्तिरिति भावः । यद्वा ननु तादृशब्रह्मज्ञाने कथं शास्त्राणामुपयोगोऽत आह--*प्रक्रियांश इति* । प्रकृतिप्रत्ययादिव्युत्पादनं त्वित्यर्थः ॥ *अविद्येति* । तथाच पञ्चकोशादिन्यायेन शास्त्राणामुपयोगो, न तु तज्ज्ञाने साक्षादुपयोग इति भावः । *अविद्यैवोपवर्ण्यते इति* । वाक्यपदीयाऽनन्तरम्—

उपायाः शिक्ष्यमाणानां बालानामुपलालनाः । द्वि० का० २३८
असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहते ॥

इति श्लोकः । "समारम्भात्तु भावानामित्यस्य" पूर्वार्द्धन्तु—

घटादिदर्शनाल्लोकः परिच्छिन्नोऽवसीयते ॥ इति ॥

तदर्थस्तु यथा घटादिकं दृष्ट्वा लोको विश्वप्रपञ्चः परिच्छिन्नः किञ्चिन्निष्ठ-कारणतानिरूपककार्य्यतावत्त्वेनानुमीयते, एवं भावानामाकाशादीनाम् । *समा-रम्भादिति* । सम्यगारम्भो जननं यस्मात् । भावप्रधानश्च निर्देशः । तदुत्पत्ति-हेतुत्वादित्यक्षरार्थः । भावोपादानत्वादिति यावत् । तादात्म्येन वा हेतुः । *समा-रम्भादिति* । शाश्वतं नित्यमपि ब्रह्म आदिमत्सकारणमिवाऽवसीयत इत्यनुषज्ज्यते । परिणाम्युपादानत्वे तस्मिन्नभ्युपगम्यमाने विकारित्वप्रसङ्गशङ्का । वस्तुतो न तत्प्रस-क्तिर्विवर्त्तोपादानताया एवाङ्गीकाराद्रज्ज्वादौ प्रातिभासिकभुजङ्गस्येवेति भावः । "अनादि ब्रह्म शाश्वतम्" इति पाठस्त्वन्यतरविशेषणोपादानवैयर्थ्यापत्त्या नादरणीयः।

ननु नादेऽपि ब्रह्मव्यपदेशस्य प्रायशो दर्शनात् पुरुषार्थानुपयोगितदभेदज्ञानसम्पादन-वैयर्थ्यमत आह—*ब्रह्मैवेति* । तथाच प्रकृते ब्रह्मपदस्य स्वप्रकाशरूपब्रह्मपरत्वान्नो-क्तानुपपत्तिरिति भावः । "तमेव भान्तम" इत्यस्य—

"न तत्र सूर्यो भाति न चन्द्रतारकं नेमा विद्युतो भान्ति कुतोऽयमग्निः" इति पूर्वार्द्धम् । श्रुतीत्युपलक्षणम्—

यदादित्यगतं तेजो जगद्भासयतेऽखिलम् ।

इत्यादिस्मृतेरपि । *स्वपरप्रकाशकत्वमिति* । तत्र परप्रकाशकत्वे मान-मुक्तम् । स्वप्रकाशकत्वं च स्वभिन्नाप्रकाश्यत्वे सति प्रकाश्यत्वम् स्वात्मकनित्यज्ञान-विषयत्वमिति यावत् । "नित्यं विज्ञानमानन्दं ब्रह्म" इति श्रुत्या ब्रह्मणो नित्यज्ञाना-नन्दस्वरूपत्वप्रतिपादनात् । प्रकृतश्रुतिः

स्वयमेवात्मनाऽऽत्मानं वेत्सि त्वं पुरुषोत्तम ।

इति स्मृतिश्च स्वप्रकाशत्वे, पराप्रकाश्यत्वे च "न तद्भासयते सूर्य्य" इत्यादि स्मृतिश्च मानमधिकमन्यत्राऽनुसन्धेयम् । *सूचयतीति* । स्फोटस्वप्रकाशपदयोः पर्य्यायत्वं बोधयतीत्यर्थः । तथाच जातिस्फोटवादिमते उपाधिनिरासद्वारा शब्दब्रह्मणः स्वप्रकाशत्वरूपेण पुरुषार्थोपयोगिनि ज्ञाने व्याकरणस्योपयोग इति सिद्धम् । नाद-स्फोटवादिमते यथोपयोगस्तथोपपादितं प्राक् । *निर्विघ्नेति* । अप्रतिबद्धस्वग्रन्थ-प्रचारार्थमित्यर्थः ॥ *अन्ते* । ग्रन्थावसाने । *मङ्गलमिति* ॥ नत्यात्मकं तदि-त्यर्थः । "मङ्गलादीनि मङ्गलान्तानि मङ्गलमध्यानि च शास्त्राणि प्रथन्ते" इति भाष्य-कारोक्तश्रुतेरिति भावः । पूर्णत्वमखण्डानन्दत्वमप्रतिहतेच्छत्वं वा तेन रूपेण तन्नतिश्च स्वीयग्रन्थप्रचारेच्छाविषयसिद्धय इति बोध्यम् ॥ ७४ ॥

अर्थ—सत्यांश का स्पष्टीकरण करते हैं—"इत्थम्" इति—

पूर्वोक्त प्रकार से वाचकत्व के अध्यस्त होने के कारण प्रकृति आदि से पृथक् किया गया उपाधिशून्य और अविनाशी शब्दतत्त्व को ही ब्रह्म कहते हैं। उस अखण्डानन्द ब्रह्म को नमस्कार है ॥ ७४ ॥

"नामरूपे व्याकरवाणि" (नाम और रूपवाचक और आकार) इन दोनों की व्याकृति स्पष्टीकरण, इस श्रुति से नाम रूप की सृष्टि कही गई है। सृष्टिद्वय में रूप के समान नाम का भी उपादान कारण ब्रह्म है। प्रकृति और प्रत्यय का विभाग अविद्या का विलासमात्र है। वाक्यपदीय में भी लिखा है।

शास्त्रों में प्रक्रिया भेद=प्रकृति प्रत्यय तथा अन्य प्रकार के व्युत्पादन द्वारा अविद्या का ही वर्णन किया गया है। "भावानाम्"=आकाशादि भावों की ("समारम्भात्"= सम्यगरम्भो=जननं यस्मात्) उत्पत्ति के हेतु होने से ब्रह्म सकारणक के समान प्रतीत होता हुआ अनादि है।

यहाँ ब्रह्म इस पद से "यह पुरुष स्वयं ज्योतिः"=स्वयं प्रकाश है। इसी के प्रकाशमान होने पर सभी प्रकाशित होते हैं। इसी के प्रकाश से सब भासमान होते हैं। इत्यादि श्रुतियों से सिद्ध स्वप्रकाशत्व[1] एवं पर का प्रकाशकत्व की सूचना देते हुये अर्थ की जिससे प्रतीति हो वह स्फोट है इस प्रकार यौगिकशब्द के द्वारा स्फोट के अर्थ को सूचित करते हैं ॥ ७४ ॥

हिन्दी भाष्य—प्रकृति और प्रत्यय की कल्पना आध्यासिक होने से उससे पृथजभूत शब्द अविनाशी निरञ्जन=उपाधि से शून्य ब्रह्मस्वरूप ही है। उस पूर्णस्वरूप अखण्डानन्दरूप परामात्मा को नमस्कार है। अखण्डानन्द ही ब्रह्म की पूर्णता है। मङ्गलादीनि मङ्गलान्तानि मङ्गलमध्यानि च शास्त्राणि प्रथन्ते" इस महाभाष्य के अनुसार अन्त में मङ्गल का आचरण किया गया है ॥ ७४ ॥

अशेषफलदातारमपि सर्वेश्वरं गुरुम् ॥
श्रीमद्भूषणसारेण भूषये शेषभूषणम् ॥ ७५ ॥

इति श्रीमत्पदवाक्यप्रमाणपारावारीणधुरीणरङ्गोजिभट्टाऽऽत्मज-
कौण्डभट्टकृते वैयाकरणभूषणसारे स्फोटवादः ॥

समाप्तोऽयं ग्रन्थश्च।



ज्ञात्वा श्रीफणिवाक्यजालमतुलं नैयायिकोक्तीरपि
मीमांसानयमाकलय्य च मया सम्यक् कृते दर्पणे ॥
अस्मिन् भूषणसारतां बुधजनः सोत्कण्ठमालोकतां
यन्निश्वासमलीमसो न मुकुरस्तत्त्वार्थबोधक्षमः ॥ १ ॥

१. अवेद्य होकर अपरोक्ष व्यवहार का विषय। संसार की सभी वस्तु अन्य के द्वारा प्रकाशित होती है परन्तु सत्यज्ञानानन्दात्मक ब्रह्म का स्फुरण किसी अन्य से सापेक्ष नहीं है। अतः इसको स्वयं प्रकाश कहा गया है। विशेष तत्त्वप्रदीपिका आदि में देखिये।

आसीत् कूर्मगिरौ धरासुरवरः श्रीवल्लभः कोविदो
वेदान्तेषु विनोदमञ्जरिरिति ख्याताऽस्ति यन्निर्मितिः ।।
तत्सूनुर्हरिवल्लभः समकरोत्सद्युक्तिमण्युज्ज्वलं
श्रीमद्भूषणसारदर्प्पणमिमम्भोदाय विद्यावताम् ।। २ ।।

उत्प्रेक्षितार्थो हि न मोदहेतवेऽभ्यस्तो भृशं सोऽपि बुधां तथैव ।।
इत्याकलय्योभयमत्र युक्तिप्रमाणसिद्धं समुदाहृतं मया ।। ३ ।।

सर्वोऽप्यर्थो बुधैः स्पृष्टो यद्यपीह तथापि मे ।
सत्सन्दर्भांशवितता ममता केन वार्य्यते ।। ४ ।।

इति श्रीमत्कूर्माचलाभिजनोत्प्रभातीयोपनामकश्रीवल्लभाऽऽत्मजहरि-
वल्लभविरचिते भूषणसारदर्प्पणे स्फोटवादः समाप्तः ।।



अर्थ—समग्र फलों के दाता को भी सब के स्वामी तथा श्रेष्ठ शेषभूषण = भगवान् भूतभावन शङ्कर तथा महर्षि पतञ्जलि को "वैयाकरणभूषणसार" इस ग्रन्थ से विभूषित करता हूँ ॥ ७५ ॥

हिन्दी भाष्य—शेष विभूषण = शेषश्च विश्च शेषवी । विशब्द पक्षि वाचक होने से गरूड परक है। शेष और गरूड भूषण अर्थात् शय्या तथा वाहन रूप हैं जिसके ऐसे भगवान विष्णु का भी "शेषविभूणष" पद से ग्रहण किया जा सकता है। दर्पण तथा काशिका में इस श्लोक की व्याख्या उपलब्ध नहीं है। अतः यह क्षेपक प्रतीत होता है। या सरलता के कारण व्याख्यात नहीं है ॥ ७५ ॥

उत्पत्ति-स्थिति-संहार-कारणं जगतो मतम् ।
शिवं शिवकरं भक्त्या-नमामि क्षेमहेतवे ॥ १ ॥
चतुरग्निनभश्चक्षु ( २०३४ ) मिते वैक्रमवत्सरे ।
दीपावल्यां तिथौ पूर्तिं कृतिरेषाऽगमन्मम ॥ २ ॥
"माधुसूदन[1] व्याख्यायाः" गीतायाः "शाबरस्य" च ।
"न्यायपुष्पाञ्जलेः" टीकां रचयामास यः सुधीः ॥ ३ ॥

---

१. गीता की मधुसूदनीव्याख्या का विशद हिन्दी में व्याख्यान, शाबभाष्य की कल्यकालिका नाम की संस्कृत में टीका ( तर्क पादान्त ) न्यायकुसुमाञ्जलि की संस्कृतटीका एवं बृहदारण्यकवार्तिकसार का भाषानुवाद आदि आपकी प्रकाशित कृतियाँ हैं।

ख्यातो मे जनको महामहवता[1] सूपाधिनालङ्कृतो।
जिह्वाग्रे सरसा सदा विलसिता शास्त्रार्णवोद्भासिनी॥
वाणी यस्य विपक्षपक्षदलने दक्षा जयश्रीः पुरः।
सोऽयं सार्थं "कृपालुयुग्"[2] "हरिहरः" कृत्याऽनया प्रीयताम्॥४॥

गङ्गोत्तुङ्गतरङ्गभङ्गखिदा नीलाम्बुधाराधरा।
कालिन्दी, भयतोऽपगाऽन्तरजला यस्मिन् स्थले सङ्गता॥
दूरे दक्षिणतोऽब्जयोजनमिते यत् "पण्डितानां पुरम्"।
तस्मिन् ब्राह्मणमात्रशुभ्रनिलयग्रामेऽभवन्मे जनिः॥५॥

श्रीमद्रामनिरञ्जनाभिधमहाविद्यालये पाटने[3]
श्रेष्ठिश्रीलमुरारकाञ्चित महावीरादि[4]भी रक्षिते।
प्राचार्यस्य महत्पदं बहुतिथं निर्वाह्य कालोचितम्
हिन्दी-भाष्यसथानुवादमकरोत् श्री ब्रह्मदत्तो मुदे॥६॥

पटना (पाटलिपुत्र)स्थ श्रीरामनिरञ्जनदासमुरारका संस्कृत महाविद्यालय के
भूतपूर्व प्राचार्य विद्यावाचस्पति श्रीब्रह्मदत्तद्विवेदी से कृत
भाषानुवाद एवं हिन्दीभाष्य परिपूर्ण हुआ।



१. महामहोपाध्याय सर्वतन्त्र स्वतन्त्र पं० हरिहर कृपालु द्विवेदी।
२. विद्यादगारमागारमपगाभापगामपि इति द्विरूपकोशः।
३. पटनास्थ।
४. सेठ श्रीमहावीरप्रसाद मुरारका श्रीकमलाप्रसाद मुरारका श्रीशङ्करलाल मुरारका श्रीमाणिकलाल मुरारका श्रीजगदीशप्रसाद मुरारका श्रीविनोदकुमार मुरारका श्रीबलदेव प्रसाद मुरारका श्रीबनवारीलाल मुरारका आदि।

